॥ श्रीः ॥

व / ४५

# संक्षेपशारीरकस्य

प्रथमोऽध्यायः ।

लोकोत्तरबुद्धिविद्यावैभवशालि-
श्रीसर्वज्ञमुन्युपनिबद्धः ।

विश्वविख्यातविद्यश्रीमधुसूदनसरस्वतीतर्कोद्भा-
सितसारसंग्रहाख्यव्याख्यारत्नभूषितः ।

विलक्षणतर्कविचक्षणसमीक्षणाय श्रीबा-
बूगोविन्ददासगुप्तेन स्वकीये, का-
शिके काशिकायन्त्रालये मु-
द्रयित्वा प्रचारितः ।

तेनैव काशीस्थराजकीयप्रधानपाठालयाध्यापकश्रीद्वि-
वेदहरिनाथमनीषिप्रदर्शितरीतिमनुरुन्धानेन
श्रीबाबूभगवानदासस्यानुजस्य साहा-
य्यात् परिशोधितः संस्कृतश्च ।

सं० १९४४. अनन्तचतुर्दश्याम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

# संक्षेपशारीरकस्य

प्रथमोऽध्यायः ।

लोकोत्तरबुद्धिविद्यावैभवशालि-
श्रीसर्वज्ञमुन्युपनिबद्धः ।

विश्वविख्यातविद्यश्रीमधुसूदनसरस्वतीतर्कोङ्का-
सितसारसंग्रहाख्यव्याख्यारत्नभूषितः ।

विलक्षणतर्कविचक्षणसमीक्षणाय श्रीबा-
बूगोविन्ददासगुप्तेन स्वकीये का-
शिककाशिकायन्त्रालये मु-
द्रयित्वा प्रचारितः ।

तेनैव काशीस्थराजकीयप्रधानपाठालयाध्यापकश्रीद्वि-
वेदहरिनाथमनीषिप्रदर्शितरीतिमनुरुन्धानेन
श्रीबाबूभगवानदासस्यानुजस्य साहा-
य्यात् परिशोधितः संस्कृतश्च ।

सं० १९४४. अनन्तचतुर्दश्याम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

# ॥ सटीकसंक्षेपशारीरकस्योपक्रमः ॥

शिवदेव्यास्तपोमूर्त्तेर्मातुः पादाब्जजन्मनः ।
पितुः श्रीविश्वनाथस्य कर्णाँल्लेढ्वादरान् मुहुः ॥

सत्त्वादिलेशमवलम्ब्य विभाति लोकः
सत्त्वादिमानवृतदुःखजडोऽपि यस्य ॥
पूर्णः सुखामृतमहोदधिरेष विश्व-
माप्लावयन्निजरसैरमृतीकरोतु ॥ १ ॥

यो विश्वमेतदखिलं कृपयोद्दधार
वेदान् विभज्य तदुपोद्बलितैः स्ववाक्यैः ॥
आख्यानकैः सुविततैर्मधुरैः स कृष्ण-
द्वैपायनो विजयतेऽतिपुराणवाक्यः ॥ २ ॥

रत्नानि वेदपुरुषस्य शिरःकिरीट-
संभूषणानि निजसूक्तिमयानि तेषु ॥
सद्युक्तिवीचितरलीकृतभारतादि-
वाक्सागरेषु विततान्यचिचीषतासौ ॥ ३ ॥

प्रत्येकमध्यायचतुष्टयस्थैः
पादैश्चतुर्भिस्सुदृढीकृतेषु ॥
सूत्रेषु भूतेषुशरैर्मितेषु
प्रोवाय निष्कृष्य ततः स तानि ॥ ४ ॥

काले गते बहुतिथेऽथ विलुण्ठितानि
श्रुत्यर्थविप्लवनसाहसमाश्रयद्भिः ॥
बौद्धादिभिः पुनरमूनि समुद्दिधीर्षुः
श्रीशङ्करो भुवि दयोदधिराविरासीत् ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजमतच्युतिदेहनिपातना-
न्यतरमाहवभङ्गपणं दिशन् ॥
विततवादकथासमरे परान्
व्यजयताऽजयतां प्रथयन्निजाम् ॥ ६ ॥
इति विजित्य दिशो दश शिष्यतां
गतवतः करुणावरुणालयः ॥
बुधसुरेश्वरपद्मपदादिका-
न्निजधियाऽजधिया समयोजयत् ॥ ७ ॥
इत्थं स वेदान्तमतं पृथिव्यां
सम्यग् व्यवस्थाप्य न सन्तुतोष ॥
कालक्रमेणास्य पुनर्विनाश-
माशङ्कमानो विजितान्यमानः ॥ ८ ॥
ततोऽन्यगाच्छिष्यगणैः प्रशिष्यै-
र्वृतो विविक्तं बदरीवनं सः ॥
अद्यापि यत्रासुभृतां हिताय
वृषाकपी मूर्त्तिषु सन्निधत्तः ॥ ९ ॥
गत्वाथ तत्रात्मनिवासयोग्यं
विचिन्त्य देशं सह शिष्यमुख्यैः ॥
उवास कालं चिरमात्मतत्त्वं
तान् बोधयन् वेदशिरःप्रतिष्ठम् ॥ १० ॥
अथैकदा तानुपदेक्ष्यमाणः
परं हितं वाक्यमिदं जगाद ॥
भवद्भिरेवं क्रियतां यथैत-
च्चिरं न लुप्येद् भुवि वेदतत्त्वम् ॥ ११ ॥
अतिप्रयत्नेन मया भवद्भिः
समुद्धृतं यन्निगमान्तरत्नम् ॥
तन्नास्तिकैः साहसिकैर्मनाक्ते
पुनर्विलुण्ठेरत पुरेव नूनम् ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मीमांसकंमन्यमुखाः स्वकीयै-
स्तर्कैर्यथा वेदशिरो हरन्ति ॥
निजोक्तिषु श्रौतवचो नयन्त-
स्तथा न ते नास्तिकजैनमुख्याः ॥ १३ ॥
नात्यन्तिकं स्वर्गसुखं सुखं तद्
यागादिजन्यं विषयोपरक्तम् ॥
शुद्धात्मरूपं श्रुतितोऽनुमानात्
सुषुप्तिकालानुभवाच्च नित्यम् ॥ १४ ॥
को नाम जन्तुर्विषयैः सुखी स्या-
दित्यप्यगूढं सुधियां तथापि ॥
अनन्तजन्मार्जितवासनाया
जह्त्यसूंस्ताननुधावमानाः ॥ १५ ॥
तद्भ्रान्तिशान्त्यै न समर्थमन्यद्
वेदान्तशास्त्राद् विधिना गृहीतात् ॥
ततस्तु तस्मिन् परिलुखिते स्या-
ज्जगत्समुद्रस्तरिहीन एषः ॥ १६ ॥
न ग्रन्थबन्धनमृते परिरक्षितं तत्
स्यादित्यवश्यमतिमञ्जुलवाग्विलासान् ॥
ग्रन्थांस्तनुध्वमतिविस्तरतादिहीना-
नात्मेपकक्षदहनोत्तरवह्निगर्भान् ॥ १७ ॥
श्रुत्वा गुरोस्त उपदेशमिमं प्रहृष्टा
मूर्ध्नाऽग्रहीषत गुरोरनुशासनं तत् ॥
ईशोऽपि तान् समुपदिश्य मनो न्ययुङ्क्त
स्वं ब्रह्मसूत्रमुखभाष्यनिबन्धनाय ॥ १८ ॥
ततो गुरुर्वत्सरपञ्चकेन
सूत्रादिभाष्यं निबबन्ध येन ॥
अद्यापि संसारसमुद्रपारं
गच्छन्ति सन्तो दृढसेतुनेव ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरेश्वराद्या अपि तर्कवीथी-
विलासगम्भीरतरान्निबन्धान् ॥
गुर्वङ्घ्रिसेवाप्तमतिप्रसादा
वितेनिरे वार्त्तिकतोटकादीन् ॥ २० ॥

अथैकदा संसदि सन्निविष्टः
शिष्यप्रशिष्यादिविभूषितायाम् ॥
आनाय्य तत्तद्रचितान्निबन्धान्
प्रावर्त्ततैषां सदसद्विचारे ॥ २१ ॥

स्वकीयभाष्याण्यपि तत्र धृत्वा
विचार्य तत्त्वानि विलोक्य तेषाम् ॥
श्रीशङ्कराचार्य उवाच हृष्टो
महात्मनोंश्चित्सुखमुख्यशिष्यान् ॥ २२ ॥

सर्वेऽपि यूयं कृतबुद्धयोऽतो
भवन्निबन्धा उपमानशून्याः ॥
अत्युत्तमास्तत् प्रचरन्तु लोके
येनान्ध्यमेतस्य निराक्रियेत ॥ २३ ॥

सर्वानतिक्रम्य विराजिते तु
लोकोत्तरं ह्यद्यनिबन्धरत्नम् ॥
संक्षेपशारीरकनामधेयं
सर्वज्ञनाम्ना मुनिना प्रणीतम् ॥ २४ ॥

धन्यो मुनिर्यस्य मतिः समस्तं
वेदान्ततत्त्वं करबिल्वतुल्यम् ॥
करोति पद्यैरतिमञ्जुलैस्तत्
कथं न्यबध्नात् सुखमन्यथैवः ॥ २५ ॥

मीमांसार्णवपारदृक् सुयशसा शुभ्रश्चरित्रेण यो
मोहध्वान्तविनाशनोज्ज्वलतनुः सन्मानसैकाश्रयः ॥
सूरिस्वान्तसरोजसंघरसिको मङ्गल्यमूर्त्तिर्नृणां
सोऽयं विश्वसुखप्रदो विजयते सर्वज्ञनामा मुनिः ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्राम्भोधिकुतर्ककर्कशचलद्वीचिच्छटासम्मिल-
न्मीमांसाद्वयकूलकेलिरसिकामोदैकसौधोपमम् ॥
अन्यूनानतिरिक्तवर्णमधुरालापावलीतोरणं
तेनेदं रचितं सदा विजयतां संक्षेपशारीरकम् १ ॥ २७ ॥

शास्त्राम्भोधिवितर्कदामविधृतप्रामाण्यसन्थानज-
क्षोभोद्भूतमणिप्रमेयखचितश्लोकाग्रयूपावृतम् ॥
वैराग्याङ्गणसज्जशुद्धशयनप्रान्तस्थधीदीपकं
शालाध्यायचतुष्टयं गुरुकृपाद्वाराहंणादर्शकम् २ ॥ २८ ॥

श्रद्धाभङ्गनिवारणीयविविधासत्तर्कवज्रोपमो-
द्गच्छद्दन्तकरीन्द्रतार्किकमुखानिर्भेद्यदुर्गावृतम् ॥
सन्तोषामृतपूर्णवृत्तितटिनीतीरप्रदेशस्थितं
मीमांसोपनिषत्प्रधानवनितासंरुद्धबाह्याजिरम् ३॥ २९ ॥

शब्दाद्रिश्रुतिकूटसंस्थितमहावाक्योच्चवंशोल्लसत्-
सदुक्तिध्वजवेपनाहितमहावादीन्द्रहृत्कम्पनम् ॥
आकाङ्क्षादिघनद्रुसंकुलवनावासप्रहृष्टद्विजो-
त्तंसाद्वैतरुतप्रधानपटहापूर्णावनीमण्डलम् ४ ॥ ३० ॥

सर्वत्वैकरसात्मजादिविषयक्लेशावहत्वेक्षणो-
द्यानप्रोद्गतशान्तिकुञ्जनिहितस्वातन्त्र्यसत्कुट्टिमम् ॥
आनन्दाम्बुमहाह्रदस्थविकसद्धृत्पद्मकेलिप्रिय-
स्वच्छाचारमनीषिहंससरसारावप्रमोदावहम् ५ ॥ ३१ ॥

सद्युक्तिप्रतिपद्यमन्त्रगणप्रच्छन्नमीलद्बहि-
र्द्वारोद्घाटनकौतुकाकुलधियोऽद्वारेक्षणास्तार्किकाः ॥
यत्रागार इव स्थितं न ददृशुर्वेदान्तरत्नं महद्
धूमान्धीकृतबुद्धयस्तु सुतरां वृद्धाश्च मीमांसकाः ॥ ३२ ॥

यद्यप्यसदुदाहृतश्रुतिशतग्रन्थ्यात्मभाष्याभिध-
ग्रन्थानद्धसुसूत्रबन्धनदृढां वेदान्तरत्नावलीम् ॥
नैते तर्ककुठारिणः श्लथयितुं शक्तास्तथापि क्व चि-
च्छून्ये च्छिन्द्युरलं स्वशून्यहृदयालोकाय तां दुर्बलात् ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एते यद्यपि चित्सुखादिकलिता ग्रन्था अतीवोत्तमाः
किन्त्वेषामतितर्कमूढविषयाः के चिद् भृशं कर्कशाः ॥
के चिद् वेदशिरःप्रमेयबहुलास्तर्कं विना दुर्बलाः
सर्वे ते न समर्पयन्त इतरग्रन्थानपेक्षाः फलम् ॥ ३४ ॥
एतत्त्वन्यनिबन्धगन्धविधुरानप्यर्पयत्यात्मनो
मेयं सम्यगितीदमेव सुबृहच्छारीरकाख्योचितम् ॥
मद्भाष्यं तु न तावदर्थगतये पर्याप्तमित्याहृयं
लोके धारयितुं समर्हति निजं संक्षेपशारीरकम् ॥ ३५ ॥
इत्थं तं विमृशन्तमद्वयमतिं श्रीशङ्करस्वामिनं
प्रोवाचातिविनीततानतशिराः सर्वज्ञनामा मुनिः ॥
नेदं गुर्वतिलङ्घनोत्थितमहापापं श्रयेन्नामतो-
ऽप्येवं विश्वगुरो यथा कुरु दयामस्मिन्निबन्धे लघौ ॥ ३६ ॥
एवं प्रार्थित ऊचिवानतितरां तुष्टो गुरुः शङ्करो
नाम्ना यद्यपि लोक एष भविता संक्षेपशारीरकः ॥
स्वीयैरन्यनिबन्धदुर्लभतरैरोजःप्रसादादिभिः
सर्वानेव गुणैस्तथापि बृहतो ग्रन्थान् विजेष्यते ॥ ३७ ॥
इत्युक्त्वा स सभां व्यसर्जयदमूञ् छिष्यप्रशिष्यावृता-
मेवं सन्तनुताऽपरानपि बहून् ग्रन्थानिति प्रब्रुवन् ॥
तेऽप्याज्ञां प्रणिपत्य शङ्करगुरोरादाय मूर्ध्ना ययुः
स्वस्वस्थानमसावपि प्रमुदितः स्वावासमेवाजगौ ॥ ३८ ॥
कालेऽथातिगते कियत्यपि जनाँल्लोके प्रसिद्धोऽप्ययं
ग्रन्थो मन्दमतीन् क्रमादवरतो नो बोधयेदात्मनः ॥
सर्वं ह्ययमिति प्रबुद्धमतिभिः श्रीमन्नृसिंहादिभिः
पर्यायोहितपञ्चपाधिकलसद्व्याख्याभिरुद्द्योतितः ॥ ३९ ॥
तासु श्रीमधुसूदनेन मुनिना टीका कृता सा गुणैः
स्वैः शारीरकसारसंग्रह इति प्रख्यातनाम्नी पराः ॥
सर्वा आक्रमतान्यदुर्लभतरैरित्यादृता सूरिभि-
र्लोके सम्प्रचचार तर्कतरलासत्पक्षविध्वंसनी ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धन्यः श्रीमधुसूदनो मुनिवरो योऽद्वैतसिद्ध्यादिभिः
सद्ग्रन्थैर्नवक्रतर्कचपलान् मूकान् व्यधात् स्वैर्नवैः ॥
सत्तर्कैर्निगमोत्तमाङ्गविधृताद्वैतप्रतिष्ठापकै-
र्वेदान्ताकथनीयवस्तुनिरतस्वान्तांस्तु वाग्म्युत्तमान् ॥ ४१ ॥
तस्यैषा प्रतिवर्णयन्त्रणगणानुद्वास्य सद्युक्तिभिः
प्रोन्नीढश्रुतिमौलिमान्यविषयालोकैः पुनाना जगत् ॥
शुद्धा ब्रह्मपरायणा निजपदन्यासैर्मनोहारिणी
धीराणामपि योगिनां विजयते टीकामयी भारती ॥ ४२ ॥
सव्याख्यानमनुत्तमेपृविषयश्रौतप्रमाणादिक-
प्रख्यानात् परपूरुषार्थरसिकप्रेक्षावतामीप्सितम् ॥
यद्यप्येतदथापि पुस्तकवरप्राप्तिं विना नो बहून्
कांश्चिल्लेखनशोधनादिविषयायासप्रियांस्तोषयेत् ॥ ४३ ॥
इत्यालोच्य नितान्तसंस्कृतवचोग्रन्थप्रचारप्रियः
श्रीमान् वैश्यकुलोद्भवः स्थिरमतीन् गोविन्ददासो बहून् ॥
एतत्तत्त्वविदो बुधान् सुखयितुं स्वीये मतः प्रख्यधान्
मुद्रायन्त्र इदं चिरं प्रथयितुं संमुद्रन विद्वत्प्रियः ॥ ४४ ॥
एतत्पुस्तकशोधनादिविषये साहाय्यमाचक्रिरे
चत्वार्य्यब्दशतात् पुरा विलिखितान्यादर्शभूतान्यतः ॥
संशुद्धानि सुपुस्तकानि मिलितान्येतस्य शुद्धिं बुधा
जानीयुः स्वयमप्यवेत्य मनसा पूर्वापराद्यन्वयम् ॥ ४५ ॥
श्रीपूर्णाश्रमदण्डिनो बुधवरस्याद्यं सुशुद्धं लिपे-
र्मीमांसाद्वयमर्मभेदनिपुणेनानेकधा शोधितम् ॥
विद्वच्छ्रीहरिकृष्णशर्मसुधिया द्वैतीयिकं धीमता
यः सारस्वतवंशभूसुरमणिः शीलोदधिर्धार्मिकः ॥ ४६ ॥
अन्त्ये द्वे हरिनामदाससुधिया संशोधिते पुस्तके
प्राक् शुद्धे अपि नैजबुद्धिविभवादालोक्य भूयोऽपि यः ॥
पञ्चायत्तमठप्रतिष्ठिततमोदासीनसाधुः सदा
लोकानामुपकार एव मतिमान् कालं निनीषत्यहो ॥ ४७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तश्रीयुतवैश्यवंशतिलकेनायोजितोऽत्राप्यहं
यं कञ्चिन्निरवाहयं निजधिया कार्यप्रबन्धं लघुम् ॥
तस्मिन् यत्र ममास्युतैकमतयः संशोधकादेश्च तदु
भूयः संस्खलनं भवेद् भ्रमकृतं क्षाम्यन्तु बुद्ध्वा निजम् ॥ ४८ ॥
किन्त्वैतत्स्खलनं स्वबुद्धिविभवादालोच्य संशोध्य स-
न्मित्रारातिगणोचितैकमनसो धीराः समस्तं जगत् ॥
पश्यन्तो निजमात्मतुल्यमथ वा कुर्वन्तु सर्वं श्रमं
सर्वेषां फलशालिनं निजधियेत्यभ्यर्थनं तेषु मे ॥ ४९ ॥
आशासे च समस्तविश्वजननीं शक्त्यात्मिकां काशिका-
यन्त्रागारमतिप्रसादमधुरैः सव्येतरैरुक्षितम् ॥
पीयूषोदधितृक्कटाक्षपृषतैर्दुर्गां स्वपार्श्वस्थितं
रक्षन्तीं स्वसरोवरोत्तरमुखैर्वातैः पवित्रीकृतम् १ ॥ ५० ॥
सर्वेषां मतिरेवमेव सततं लोकोपकारप्रिया
धीराणां च विशेषतः सुकृतिनां सच्छ्रीमतामेधताम् ॥
येनाज्ञानमहातमिस्रपतिते लोकेऽखिलेऽहर्निशं
विद्याबोधविवेकशोधितजगद्दीपावलिर्द्योतताम् २ ॥ ५१ ॥
इत्यद्रिराजतनयामथ वा दिनेशं
विष्णुं शिवं गजवराननमाश्रयाशम् ॥
यद्वाऽखिलान्तरगतं निजबोधरूपं
श्रीकाशिकेश्वरमनिर्वचनीयरूपम् ३ ॥ ५२ ॥
आवेद्यं यदिह वृत्तमिदं निबध्य
तत्रापि या च्युतिरमूं सुधियः क्षमन्ताम् ।
सम्प्रार्थयेऽहमिति

यन्त्रगृहप्रधानाध्यक्षो द्विवेदकुलजो
बुधरामनाथः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



॥ श्रीः ॥

सटीकसंक्षेपशारीरकम् ॥

अनृतजडविरोधिरूपमन्त-
त्रयमलबन्धनदुःखताविरुद्धम् ॥
अतिनिकटमविक्रियं मुरारेः
परमपदं प्रणयादभिष्टवीमि ॥ १ ॥

श्रीगणेशाय नमः ॥

सत्यं ज्ञानमनन्तमद्वयसुखं यद्ब्रह्म गत्वा गुरुं
मत्वा लब्धसमाधिभिर्मुनिवरैर्मोक्षाय साक्षात्कृतम् ॥
जातं नन्दतपोवनात्तदखिलानन्दाय वृन्दावने
वेणुं वादयदिन्दुसुन्दरमुखं वन्देऽरविन्देक्षणम् ॥ १ ॥
श्रीरामविश्वेश्वरमाधवानां
प्रणम्य पादाम्बुजपुण्यपांसून् ॥
तेषां प्रभावादहमस्मि योग्यः
शिलापि चैतन्यमलब्ध येभ्यः ॥ २ ॥
पूर्वाचार्यवचो विचार्य निखिलं सत्संप्रदायाध्वना
हित्वोच्छृङ्खलमार्गमागमगिरां तात्पर्यपर्याप्तितः ॥
विच्छिद्यार्थविभागतः प्रकरणान्युद्भिद्य तत्त्वं रहः
कुर्वे संप्रति सारसंग्रहमिमं संक्षेपशारीरके ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हित्वा हेयमुपादेयमुपादाय विचारतः ॥
प्रायेण पूर्वटीकानामिहार्थः प्रकटीकृतः ॥ ४ ॥
विशेषाद्विश्ववेदस्य प्रत्यग्विष्णोश्च बुद्धयोः ॥
व्याख्यानं श्रद्धयालेखि गुरूणां तौ हि नो गुरू ॥ ५ ॥

तत्र श्रीमच्छारीरकशास्त्रस्य तात्पर्यविषयीभूते मुमुक्षुजिज्ञास्ये निर्विशेषे ब्रह्मणि बोधनीये प्रासङ्गिकमुमुक्षुजिज्ञास्यसविशेषब्रह्मोपासनावाक्यानेकविधविचारविक्षिप्ततया दुरवबोधतामाकलय्य तद्विक्षेपपरित्यागेन मुमुक्षुजिज्ञास्यं निर्विशेषं ब्रह्म शास्त्रतात्पर्यविषयीभूतमनायासेन मुमुक्षुबोधाय संक्षेपशारीरकाख्येन श्लोकग्रन्थेनाविश्चकार करुणया श्रीसर्वज्ञात्माचार्यः। अत एव मुमुक्ष्वजिज्ञास्यसविशेषब्रह्मप्रासङ्गिकविचारपरित्यागरूपसंक्षेपविशिष्टं निर्विशेषब्रह्मविचारात्मकं शारीरकशास्त्रमेवैतदिति संक्षेपशारीरकमिति समाख्यास्य युक्तैव। तत्रादौ श्लोकचतुष्टयं श्रीमच्छारीरकशास्त्रस्याद्यचतुःसूत्रीस्थानीयम्। तत्र हि प्रथमसूत्रे ब्रह्मविद्याधिकारी शुद्धस्त्वंपदार्थो जिज्ञास्यब्रह्माभेदान्वययोग्यः प्रतिपादितः। तयोर्भेदे हि स्वनिष्ठकर्तृत्वाद्यध्यासरूपबन्धनिवृत्तिकामस्य मुमुक्षोर्ब्रह्मणि जिज्ञासा न स्यात् अन्यज्ञानादन्यत्राध्यासनिवृत्तेरनुपपत्तेः तस्मात्तयोरनन्यत्वमेव। द्वितीये सूत्रे च जगत्कारणत्वप्रदर्शनव्याजेन तत्पदार्थोऽपि शुद्धस्त्वंपदार्थाभेदान्वययोग्यस्तटस्थस्वरू-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पलक्षणाभ्यां प्रतिपादितः। चतुर्थसूत्रे च तयोरैक्यमैका-
न्तिकं प्रतिपादितम्। एतावदेव शास्त्रस्य प्रमेयं त्वंपदा-
र्थस्तत्पदार्थोऽखण्डवाक्यार्थश्चेति। एतत्प्रमाणं तु तत्त्व-
मस्यादिवेदान्तमहावाक्यरूपं शास्त्रं तच्चोक्तम्। शास्त्र-
योनित्वादिति तृतीयसूत्रे। अत्रार्थक्रमस्य पाठक्रमाद्ब-
लवत्त्वात्तृतीयचतुर्थसूत्रयोर्व्यत्यासो द्रष्टव्यः। प्रमेये हि
कथिते किमत्र प्रमाणमिति जिज्ञासायां प्रमाणं कथ-
नीयं नान्यदाप्राप्तकालत्वात्। एवमिहोचितक्रमे-
णैव त्वंपदार्थस्तत्पदार्थस्तदैक्यं चेति प्रमेयप्रतिपादना-
र्थास्त्रयः श्लोकाः प्रमाणप्रतिपादानर्थस्तु चतुर्थश्लोकः।
एतावता हि शास्त्रस्य विषयप्रयोजनसंबन्धाः प्रतिपा-
दिता भवन्ति प्रत्यग्ब्रह्मणोरेकत्वमेव हि विचारपुरःसरा-
द्वेदान्तवाक्यप्रमाणाद्विज्ञातं प्रयोजनं शास्त्रस्य एतदे-
वोपेयम्। उपायस्तु द्विविधो विषयस्त्वंपदार्थस्तत्पदा-
र्थश्चेति तस्य चाज्ञातत्वमात्रेण वेदान्तप्रमाणविषय-
त्वम्। अज्ञातत्वमिथ्याविज्ञातत्वाभ्यां विचारविषयत्व-
मिति विवेकः। पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य प-
दार्थद्वयरूपविषयकथनपुरःसरं वाक्यार्थरूपप्रयोजन-
कथनं क्रमेण कृतम्। चतुर्थेन तु शास्त्रेण समं तयोः
संबन्धः प्रतिपादितः। एतावता हि संक्षेपेण कृत्स्न-
शास्त्रार्थसमाप्तिः परापरविद्ययोः पर्यवसानात्। त-
था च श्रुतिः। द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वदो यजुर्वेद इत्यादिना षडङ्गवेदचतुष्टयात्मकं शब्दब्रह्मापरविद्याविषयत्वेन व्याख्याय अथ परा यया तदक्षरमधिगम्यते इत्यादिना परं ब्रह्म परविद्याविषयं दर्शयति । स्मृतिश्च । द्वे ब्रह्मणी वेदितव्ये शाब्दं ब्रह्म परं च यदित्यादि । उत्तरग्रन्थस्त्वस्यैव प्रपञ्च इति द्रष्टव्यम् । संग्रहविवरणाभ्यां शिष्यबोधस्योद्देश्यत्वात् तत्र सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुत्यनुसारेण नपुंसकलिङ्गशब्दप्रयोगेण प्रथमः श्लोकः सेयं देवतैक्षतेत्यादिश्रुत्यनुसारेण स्त्रीलिङ्गशब्दप्रयोगेण द्वितीयः श्लोकः स एष इह प्रविष्ट एष त आत्मान्तर्याम्यमृत इत्यादिश्रुत्यनुसारेण पुल्लिङ्गशब्दप्रयोगेण तृतीयः श्लोकः। एतेन सर्वेऽपि ब्रह्मप्रतिपादकाः शब्दा व्याख्याताः । अक्षरार्थस्तु ॥ मुरारेर्जगदुपद्रवकारिमुराद्यसुरसंहरणाज्जगत्पालयितुः । श्रीविष्णोर्जगत्कारणमायासत्त्वांशप्रतिबिम्बचैतन्यात्मनोऽन्तर्यामिणः परमं मायाकल्पितजगत्कारणत्वादिशून्यत्वेन सर्वोत्कृष्टं बिम्बभूतं पदं स्वरूपमुपाधेः प्रतिबिम्बपक्षपातित्वेन बिम्बे स्वधर्माकल्पकत्वात्। बिम्बेश्वरपक्षेऽज्ञानप्रतिबिम्बितजीवचैतन्यप्रतियोगितया बिम्बत्वेन व्यवह्रियमाणस्य विष्णोः परमं पदं बिम्बप्रतिबिम्बकल्पनाशून्यं निरुपाधिस्वरूपं बिम्बे तमोनिपतितप्रतिबिम्बेत्यादिनेश्वरस्य द्वैरूप्यं वक्ष्यति । परमत्वं चापर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मत्वापादकोपाधिराहित्येन । पदत्वं चाविद्यातिरोधानापनयाय सर्वपदनीयत्वेन स्वरूपस्य द्रष्टव्यम् । तद्विष्णोः परमं पदमिति श्रुतेः । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मेति श्रुतेश्च । अत्र षष्ठ्यन्तप्रथमान्ताभ्यां तत्पदस्य वाच्यं लक्ष्यं च त्वंपदलक्ष्याभिन्नान्वययोग्यं दर्शितम् । अत्र च हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावक इतिस्मृतेः। सर्वोपद्रवकारिमुराद्यसुरारित्वेन भगवत्स्मरणरूपं मङ्गलमाचरन् तत्पदाभिष्टवलक्षणं मङ्गलान्तरमाचरति । अभिष्टवीमीति । अभितः स्तौमीत्यर्थः । तुरुस्तुशम्यमः सार्वधातुक इत्यनेन विभाषयेडागमः । अत्र निर्विशेषब्रह्मणि गुणविशिष्टगुण्यभिधानलक्षणायास्स्तुतेरसम्भवात्स्तवीमीति निदिध्यासनेनाभितः प्रत्यगभिन्नतया आभीक्ष्ण्येन वा तदेकाग्रोऽस्मीत्यर्थ इति केचित् । तत्स्तुतिरूपं तत्स्वरूपनिरूपणपरं ग्रन्थं करोमीत्यर्थ इत्यन्ये आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा इति टीकोक्तेरकल्पितधर्मस्य क्वाप्यनुपपत्तेः कल्पितसत्यत्वादिधर्मपुरस्कारेण गुणकथनरूपा स्तुतिर्मुख्यैव निर्गुणेऽपि वस्तुनि सम्भवतीति तु तत्त्वम् । अतोऽस्थाने निदिध्यासनप्रतिज्ञा ग्रन्थकारणारम्भप्रतिज्ञामुख्यवृत्तिसंभवे जघन्यवृत्तिकल्पना च निरस्ता । एतादृशभगवत्स्तुतौ च तद्भक्तिरेवासाधारणं कारणमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्याह । प्रणयादिति । प्रणयः परा प्रीतिर्भक्तिरित्यर्थः। सा हि स्वरसतः परमानन्दरूपे परमात्मनि समुल्लसन्ती धारासन्ततिरूपा मनोवृत्तिर्भागवती भक्तिरित्युच्यते । तया चाविघ्नेन सत्त्वशुद्धिज्ञानप्राप्त्यादिद्वारे परं निःश्रेयसं लभ्यते यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः इति श्रुतेः । भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तमिति स्मृतेः । ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेति योगसूत्राच्च । निर्गुणेऽपि ब्रह्मणि भक्तिरुपपद्यत इति व्याख्यातं भगवद्गीतासु चतुर्विधा भजन्ते मामित्यादिना अभिष्टवे प्रकृष्टनयानपेक्षणाद्रूढिभङ्गदोषाच्च न प्रकृष्टो नयः प्रणय इति व्याख्यानमुपायदेयम्। तत्र निर्विशेषे वस्तुनि जगत्त्वेन जीवत्वेन परमेश्वरत्वेन च प्राप्तां विक्रियां निषेधत्यविक्रियमिति । जगति जन्माद्या विक्रियाः जीवे जाग्रदाद्या ईशे सृष्टाद्या विक्रिया मायया प्रसक्ता निर्विशेषे वस्तुनि सर्वथा न सम्भवन्तीति तदविक्रियम् । एतेन सर्वविकारशून्यत्वात्सर्वेन्द्रियाग्राह्यतारूपा सूक्ष्मता सर्वोपाधिसंबन्धशून्यतारूपा नित्यमुक्तता च दर्शिता। एवं सामान्यतः सर्वविक्रियाशून्यतामुक्त्वा विशेषेणाप्याह । अनृतेत्यादिना । अत्रानृतविरोधि परमार्थसत्यमबाध्यम् । जडविरोधि स्वप्रकाशं ज्ञानम् । रूपं सर्वानुस्यूत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्मात्रम् । अन्तत्रयविरुद्धम् । अन्तानां देशकालवस्तुपरिच्छेदानां यत्त्रयं तद्विरुद्धं देशपरिच्छेदो ह्यत्यन्ताभावस्तदप्रतियोगित्वेन विभु कालपरिच्छेदौ च ध्वंसप्रागभावौ तदप्रतियोगित्वेन नित्यम् । वस्तुपरिच्छेदश्चान्योऽन्याभावः तदप्रतियोगित्वेनाद्वितीयम् । एतेन प्रपञ्चधर्माणामनृतत्वजडत्वव्यावृत्तरूपत्वाविभुत्वानित्यत्वसद्वितीयत्वानां व्यावृत्तिः सिद्धा । मलबन्धनदुःखताविरुद्धमिति जीवधर्माणां व्यावृत्तिः । मलः कर्तृत्वभोक्तृत्वरागादिलेपोऽशुद्धिस्तद्विरुद्धं कर्तृत्वादिलेपशून्यं शुद्धं बन्धनं धर्माधर्मतत्फलसंबन्धस्तद्विरुद्धं मुक्तं दुःखताविरुद्धं परमानन्दरूपं न तु तदाश्रयः । नापि दुःखरूपस्तदाश्रयो वा जीवो हि रागादिमलैर्धर्माधर्मादिबन्धनेन सुखदुःखाश्रयत्वेन च प्रसिद्धः । अतिनिकटमितीश्वराद्व्यावृत्तिः । वादिभिर्हि पराग्रूपः परोक्ष एवेश्वरः कल्पितः । इदं त्वतिनिकटं साक्षादपरोक्षं प्रत्यगात्मस्वरूपमत्यव्यवहितमित्यर्थः एतेन सत्यं ज्ञानमनन्तं ब्रह्म॥ तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं नित्यं विभुं सर्वगतं सुसूक्ष्मं विमुक्तश्च विमुच्यते न वर्द्धते कर्मणा नो कनीयान् शुद्धमपापविद्धमेष एव परम आनन्दः । यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः अयमात्मा ब्रह्म न जायते म्रियते वा विपश्चित् निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्ज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमित्याद्याः श्रुतयोऽसत्यत्वादितत्तद्भ्रमापोहेनाखण्ड
प्रत्यगभिन्नं ब्रह्म मुमुक्षुजिज्ञास्यं प्रतिपादयन्ति । न तु
सत्यत्वादिरूपेण तस्य निर्विशेषत्वेन सर्वधर्मानाधारत्वा
दिति प्रतिपादितं भवति। सर्वविशेषणानां समुच्चयमे
न श्लोकेन वक्ष्यति । नित्यः शुद्धो बुद्धमुक्तस्वभाव इत्या
दिना ।अत्र प्रथमं नगणद्वयवता पुष्पिताग्राख्येन छन्
सार्द्धसमेन कविरीत्यापि मङ्गलमाचरितम्। अकारादि
पदचतुष्टयोपन्यासश्च श्लोकग्रन्थकरणकौशलप्रदर्शना
य। प्रणवप्रथमावयवोच्चारणेन मङ्गलातिशयाय च
अ इति ब्रह्म । अकारो वै सर्वा वागिति च श्रुतेः ॥ १ ॥

स्वाज्ञानकल्पितजगत्परमेश्वरत्व-
जीवत्वभेदकलुषीकृतभूमभावा ॥
स्वाभाविकस्वमहिमस्थितिरस्तमोहा
प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥२॥

एवं जिज्ञास्यब्रह्मप्रदर्शनेन प्रथमसूत्रार्थो दर्शितोऽतः प-
रं द्वितीयसूत्रार्थः प्रदर्श्यते । पूर्वत्र जगद्धर्माणां जीवध-
र्माणामीश्वरधर्माणां चापवादो दर्शितः स चाध्यारो-
पमन्तरेण न संभवति । प्रसक्तस्यैव प्रतिषेधार्हत्वादि-
त्यभिप्रेत्याध्यारोपमाह । स्वाज्ञानेति। स्वस्य स्वस्मिन्य-
दज्ञानं स्वाश्रयविषयकमविद्यामायाशब्दितमनादिभा-
वरूपमनिर्वाच्यमावरणविक्षेपशक्तिमदज्ञानन्तेनावरण-
शक्त्यात्मस्वरूपभानन्तिरोधाय विक्षेपशक्त्या कल्पितान्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यस्तानि यानि जगत्परमेश्वरत्वजीवत्वानि तैरनुयोगि-
त्वेन प्रतियोगित्वेन च तन्निमित्तो जीवजगद्भेदो जीवप-
रमेश्वरभेदो जीवपरस्परभेदो जगत्परस्परभेदो जगत्पर-
मेश्वरभेदश्चेति यः पञ्चविधो भेदस्तेन च कलुषीकृतोऽकलु-
षोऽपि कलुषः कृतोऽध्यारोपितदोषेणासत्कल्पतोमापा-
दितो भूमा बाहुल्यं यस्य स तादृक्कलुषीकृतभूमा भावः
सद्भावो यस्याः सा तथा । जगज्जडत्वात्स्वरूपेणैव
कल्पितम् । जीवेश्वरौ तु चैतन्यरूपत्वात्स्वरूपेण
सत्यौ केवलमेकस्मिन्नेव चैतन्ये बिम्बप्रतिबिम्बादि-
भावेन जीवत्वमीश्वरत्वं च कल्पितमिति बोधयितुं द्व-
योः प्रयोगः । चितेर्भावो न कलुषीकृतः सर्वभासकत्वेन
सर्वदा प्रकाशमानत्वात् किन्तु तत्तद्भेदकल्पनया तद-
परिच्छिन्नत्वरूपो भूमैव कलुषीकृतः । पूर्णत्वेनाप्र-
काशमानत्वात् । तदुक्तं वार्तिके । तस्यैकमपि
चैतन्यं बहुधा प्रविभज्यते । अङ्गारकितमुत्पाते
वारिराशेरिवोदकमिति । भूम्नो भाव इति व्याख्यान-
मनुपादेयं बहोर्भावस्य भूमशब्दवाच्यत्वेन भावशब्द-
वैयर्थ्यापत्तेः । कलुषीकरणेन किं भूमा नाशितो ने-
त्याह । स्वाभाविकेति । भूम्नः कलुषीकरणं हि परि-
च्छिन्नत्वारोपमात्रं न तु स्वरूपहानिः । आरोपेण
वस्तुसत्तानपायात् । यत्र यदध्यस्तं तत्कृतेन दोषेण
गुणेन वाणुमात्रेणापि स न सम्बध्यत इति न्याया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त् । स्वाभाविकी नित्यसिद्धाध्याससहस्रेणाप्यप
तुमशक्या स्वमहिमस्थितिः स्वरूपादप्रच्युतिर्यस्याः
तथा तथापि सर्वाध्यासकारणस्याज्ञानस्यानारोपि
तत्वात्तेनैव द्वितीयेनाद्वितीयत्वरूपो भूमा कलुषः
त इत्यत आह । अस्तमोहेति । अस्तोऽध्यस्तोऽप
मार्थसन्मोहोऽज्ञानाख्यो यस्यां सा तथा । अज्ञान
ध्यासस्याप्यज्ञानमूलत्वादनादित्वाच्च नात्माश्रयादि
षप्रसङ्गः । तदुक्तं वार्तिके । अविद्यास्तीत्यविद
यामेवासित्वा प्रकल्प्यते । ब्रह्मदृष्ट्या त्वविद्येयं
कथं चन युज्यत इति । ननु अज्ञानाध्यासस्य कि
धिष्ठानं न जीव ईश्वरो वानयोरध्यासपरिनिष्पन्न
नान्योन्याश्रयात् । नापरस्तदनिरूपणादित्याशङ्क्या
ह । प्रत्यक्चितिरिति । प्रतीची जीवेश्वरविभागरहि
ता चितिः स्वप्रकाशज्ञप्तिः सा भुवनस्याज्ञानसहित
स्याध्यस्तस्याकाशादिप्रपञ्चस्य विवर्त्तस्य योनिरज्ञा
नद्वारोपादानम् । एकैव योनिर्न द्वितीयसापेक्षाऽसत्य
त्वेनाज्ञातत्वेन च तस्या एवाधिष्ठानत्वोपपत्तेः । त
था च वक्ष्यति । आश्रयत्वविषयत्वभागिनी निर्विभा
गचितिरेव केवलेति । वार्तिकं च । आन्स्यात्कार्या
देव स्याद्यदाद्यं प्रति कारणमिति । सा च विजय
परमार्थसत्यस्वप्रकाशपरमानन्दरूपत्वेन सर्वोत्कृष्ट
भवति । अतस्तां प्रत्यस्मि प्रणत इति ध्वन्यते । तस्मा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवमध्यारोपसम्भवादनृतजडविरोधीत्यादिना तदपवादो युक्त एव । भुवनैकयोनिरिति तटस्थलक्षणं प्रत्यक्चितिरिति स्वरूपलक्षणमिति विवेकः । एतेन मिथ्याप्रपञ्चोपादानत्वेन तत्पदवाच्यनिरूपणाज्जन्माद्यस्य यत इति व्याख्यातम् ॥ २ ॥

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं
प्रक्षीणकारणविकारविभागमेकम् ॥
चैतन्यमात्रपरमार्थनिजस्वभावं
प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥ ३ ॥

एवं त्वंपदार्थं तत्पदार्थं च विषयमुक्त्वा प्रयोजनकथनाय वाक्यार्थमाह । प्रत्यगिति । प्रत्यञ्चमिति त्वंपदार्थः । अच्युतमिति तत्पदार्थः । एकमिति तयोरगौणमैक्यं वाक्यार्थः । तमहं श्रवणादिपरिपाकवशात् स्थितप्रज्ञो नित्यं सर्वदा प्रणतोऽस्मि देहेन्द्रियादिप्रतिभासावस्थायां प्रह्वीभावेन पूजयामि । ननु कथमेकत्वं मुख्यं सत्यज्ञानाद्यपुनरुक्तानेकशब्दप्रतिपाद्यत्वादित्यत आह । चैतन्येति । वाच्यार्थे भेदप्रतिभासेऽपि चैतन्यमात्रस्यैव परमार्थानौपाधिकस्वभावस्य लक्ष्यत्वान्नैकवाक्यविरोध इत्यर्थः । चैतन्यमात्रमेवपरमार्थोऽत्यन्ताबाध्यः परमानन्दरूपत्वेन परमप्रयोजनरूपो वा निजोऽनुपाधिकः स्वभावः स्वरूपं यस्य तमित्यक्षरार्थः । ननु जीवस्य कार्यकारणादिविभागव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वेन सद्वितीयत्वादीश्वरस्य च परोक्षत्वेन पराक्त्वात्क
थं तयोरैक्यमिति तत्राह । प्रक्षीणेति । असत्येति च
प्रक्षीणः प्रज्ञानेन बाधितः प्रमातृत्वकर्तृत्वभोक्तृत्वा
दिरूपः कारणविकारविभागो हेतुफलसन्तानो मा
याकाशादिप्रपञ्चो वा यस्मिंस्तं निर्विभागं संसारदशा
यामपि परमार्थतो द्वैतरहितमित्यर्थः । एवमसत्य
सर्वथा बाधितः पराग्रूपेणाहमितिव्यपदेशानर्हत्वे
प्रत्यग्रूपाद्भेदो यस्मिंस्तं साक्षादपरोक्षमित्यर्थः । प्र
तीचोऽद्वितीयाच्युताभेदबोधफलं प्रक्षीणेति । अच्यु
तस्यापरोक्षप्रत्यगभेदबोधफलमसत्येति विवेकः । ३
नु प्रक्षीणकार्यकारणविभागस्य प्रमातृत्वादिशून्यस
प्रमाणाभावादसिद्धिः । प्रमाणाभ्युपगमे च कार्यका
रणविभागापत्तिरित्याशङ्क्याह । प्रत्यक्प्रमाणकमि
ति । प्रत्यक्स्वरूपमेव प्रमाणं यस्मिंस्तं स्वप्रकाशचै
तन्यरूपतया स्वभिन्नमानानपेक्षं स्वत एव सिद्धमि
त्यर्थः । एतेनाखण्डवाक्यार्थकथनात्तत्तु समन्वयादि
ति व्याख्यातं । वसन्ततिलकावृत्तम् ॥ ३ ॥

औत्पत्तिकी शक्तिरशेषवस्तु-
प्रकाशने कार्यवशेन यस्याः ॥
विज्ञायते विश्वविवर्तहेतो-
र्नमामि तां वाचमचिन्त्यशक्तिम् ॥ ४ ॥

एवं त्वंपदार्थस्तत्पदार्थोऽखण्डवाक्यार्थश्चेति शा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तस्य प्रमेयमुक्तम् । अधुना तत्प्रमाणं वेदान्तवाक्यं दर्शयितुं निखिलवेदाभिमानिनीं वाग्देवतां प्रणमति । औत्पत्तिकीति । शास्त्रयोनित्वादिति सूत्रे हि प्रथमेन वर्णकेन ब्रह्मणो वेदोपादानत्वं द्वितीयेन तु वर्णकेन ब्रह्मणि तस्य प्रामाण्यं दर्शितं तदुभयमप्यनेन प्रदर्श्यते । विश्वः सर्वोऽपि प्रपञ्चो विवर्तोऽतत्त्वतोऽन्यथाभावः । कारणसत्तया सत्तावान् । कारणप्रकाशेन च प्रकाशवान् यस्य स सर्वसत्तास्फूर्तिप्रदः परमात्मा विश्वविवर्तः स एव हेतुरुपादानं यस्याः सर्वप्रकाशशक्तिमत्परमेश्वरोपादानकत्वेन सर्वप्रकाशनफलयोगिन्याः अखिलवस्तूनामिक्षुक्षीरादिमाधुर्यादीनामपि प्रकाशने नानाविधाभिर्वृत्तिभिरौत्पत्तिकी अकृत्रिमा शक्तिः प्रतिपादकतारूपा प्रतिपत्तिरूपकार्यवशेन वृद्धव्यवहारेषु विज्ञायते तर्ककुशलैर्यस्या वेदलक्षणाया वाचस्ताम् । कथमेतस्या ईदृशं सामर्थ्यमिति चिन्तयितुमशक्या शक्तिः प्रभावो यस्यास्तामहं नमामीति सर्वप्रकाशनशक्तिमत्परमेश्वरोपादानत्वं वेदस्य सर्वप्रकाशनसामर्थ्ये हेतुरिति प्रथमवर्णकार्थः । शेषः परार्थः । न शेषोऽशेषः सर्वपुरुषार्थस्तादृशं सर्वशेषिभूतं वस्तु परमार्थसद्ब्रह्म तत्प्रकाशने तदाकारवृत्त्युत्पादनेन तदज्ञानावरणापनये यस्या वेदलक्षणाया वाचः औत्पत्तिकी शक्तिः कार्यवशेन ब्रह्मसाक्षात्काराख्यकार्यलिङ्गेन विज्ञा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यते । कीदृश्याः विश्वविवर्तस्य कृत्स्नप्रपञ्चस्य हेतोः कारणभूतायाः एत इति वै प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजा इति छान्दोग्यब्राह्मणश्रुतेः । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय इति । नाम रूपञ्च भूतानां कर्मणाञ्च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति च मनुस्मृतेः । शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्यामिति सूत्रे श्रुतिस्मृती एवैते प्रत्यक्षानुमानशब्दाभ्यामुक्ते । ननु यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति सर्ववागगोचरत्वश्रुतेः कथन्तादृशे ब्रह्मणि वाचः शक्तिरिति तत्राह । अचिन्त्यशक्तिमिति । तां नमामीति च पूर्ववत् । यथा च लक्षणया वा मुख्यवृत्त्या वोभयाभावेऽपि स्वत एव षड्विधतात्पर्यलिङ्गोपेतोपनिषन्निर्विशेषमपि ब्रह्म बोधयति । तथा विस्तारेण स्पष्टतरमुपरिष्टात्तत्प्रदर्शयिष्यते । तदेवं निर्विशेषे ब्रह्मणि वेदान्तवाक्यमेव प्रमाणमिति द्वितीयवर्णकार्थः । एवं प्रत्यग्ब्रह्मैक्याख्यविषयेण समं प्रतिपाद्यप्रतिपादकलक्षणः संबन्धो वेदान्तानां दर्शितः वेदान्तवच्चतुर्लक्षणमीमांसाख्यशास्त्रस्य शास्त्रवत्तत्प्रकरणस्यास्येति द्रष्टव्यम् । इन्द्रवज्रोपेन्द्रवज्रोपजाति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्तम् । चतुःसूत्र्यर्थकथनेन मङ्गलम् ॥ ४ ॥

आरम्भाः फलिनः प्रसन्नहृदयो यश्चेत्तिरश्चामपि
नो चेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः ॥
विश्वैश्वर्यमतो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः
सोऽयं विश्वहिते रतो विजयते विघ्नेश्वरो विश्वकृत् ॥ ५ ॥

अथ विघ्नेश्वरं प्रसादयति । आरम्भा इति । यश्चे-त्प्रसन्नहृदयोऽनुग्राहकस्तदा तिरश्चामपि सुग्रीवहनुम-त्प्रभृतीनामारम्भा अभिमतक्रियोद्यमाः फलिनः फला-व्यभिचारिणः सातिशयफला वा भवन्ति । नित्ययोगे-ऽतिशायने वा तद्धितः । नो चेत्प्रसन्नहृदयस्तदा विश्व-सृजो ब्रह्मणोऽपि किमुतान्येषामलमत्यर्थमपि ये फलो-पायविषया उद्यमास्ते विफलतां व्यर्थतां यान्ति । ब्र-ह्मणोऽप्यभिमतभङ्गो वत्साहरणादौ स्मर्यते । अत एव-मन्वयव्यतिरेकाभ्यां विश्वस्मिन्नैश्वर्यं निग्रहानुग्रहसा-मर्थ्यं विश्वप्रभोः सर्वप्रशासितुर्भीषास्माद्वातः पवत इ-त्यादिश्रुतिसिद्धस्य यस्यैव निरङ्कुशमप्रतिहतमभूत्सोऽयं विश्वकृद्विघ्नतदभावादिकृत्स्नप्रपञ्चकृद्भगवानेव विघ्नेश्वरः श्रीगणेशरूपेणावतीर्णो विजयते सर्वोत्कर्षेण वर्तमा-नोऽस्माननुगृह्णात्वित्यर्थः । तस्याभक्तविघ्नकारिणोऽ-पि भक्तविघ्ननिवारणायावतारे हेतुर्विश्वहिते रत इति कृपैव तस्यावतारे कारणमित्यर्थः । तस्य सर्वान्प्रत्ये-करूपत्वेऽपि तद्भजनाभजनयोरेव विषमफलस्वभाव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वान्न वैषम्यनैर्घृण्यप्रसङ्ग इति भावः । शार्दूलविक्री-
डितम् ॥ ५ ॥

वाग्विस्तरा यस्य बृहत्तरङ्गा
वेलातटं वस्तुनि तत्त्वबोधः ॥
रत्नानि तर्कप्रसरप्रकाराः
पुनात्वसौ व्यासपयोनिधिर्नः ॥ ६ ॥

अतः परं सूत्रभाष्यकारवार्तिककारान्गुरुपूर्वक्रमेण पूजयति त्रिभिः । तत्र रत्नाकररूपकेण भगवन्तं व्यासं विष्णववतारं सूत्रकारं प्रथमगुरुं स्तौति । वाग्विस्तरा इति । व्यास एव पयोनिधिः महत्त्वपवित्रत्वगम्भीरत्वस्वच्छत्वादिसाम्यात्तस्य च पयःस्थानीया वेदा एव द्रष्टव्याः । वाचां तरङ्गोक्तेर्व्यासशब्देन वेदव्यसनगुणोपन्यासाच्च । दृष्टमात्राः पुनन्त्येते राजा भिक्षुर्महोदधिरिति स्मृतेः । स नः पुनातु पापमलरहितान्करोत्वित्युक्तम् । यस्य वेदपयसः श्रीव्यासपयोधेर्वाचो वेदलक्षणाया ये विस्तरास्तत्तच्छाखाभेदास्त एव बृहन्तस्तरङ्गाः । विस्तरबृहच्छब्दाभ्यां संक्षिप्ता वाक् सूक्ष्मतरङ्गा इति द्योतितं वेलायास्तीरस्य तटं प्रान्तदेशस्तस्यैव तरङ्गवेगावसानभूमित्वाद्वस्तुनि ब्रह्मात्मैक्ये तत्त्वबोधः । शिष्याणामिति शेषः । सूत्रकारस्य वाक्प्रवृत्तेः शिष्यज्ञानार्थत्वेन तत्सिद्धावेवोपरतिसिद्धेर्युक्तं तस्य तटत्वम् । पदार्थसिद्धौ पदार्थद्वयशोधने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यार्थनिर्णये तदुपयुक्तप्रमेयस्थितिषु च ये तर्काणां प्रसरणप्रकारास्त एव उपादेयत्वस्वप्रकाशत्वादिसाम्याद्रत्नानि । एतेन रत्नानां पद्मरागेन्द्रनीलादिविविधवैलक्षण्यवत्तर्काणामपि विविधवैलक्षण्यं सूचितम् । यच्छब्दस्य तच्छब्दसापेक्षत्वादसाविति स इत्यर्थः । इन्द्रवज्रोपेन्द्रवज्रोपजातिः ॥ ६ ॥

वक्तारमासाद्य यमेव नित्या
सरस्वती स्वार्थसमन्विताऽऽसीत् ॥
निरस्तदुस्तर्ककलङ्कपङ्का
नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥ ७ ॥

सत्संप्रदायेन भाष्यकर्तारं शङ्करावतारं श्रीशङ्कराचार्यं प्रणमति । वक्तारमिति । यमेव व्याख्यातारमासाद्य नित्या सरस्वती वेदलक्षणा निरस्ता निर्मूलिता दुष्टतर्का एव मालिन्यहेतुत्वात् कलङ्काश्च तन्मग्नानां पुनरुत्थानासंभवात्पङ्काश्च यस्याः सा सर्वदुस्तर्कदोषनिरासेन स्वतात्पर्यविषयीभूतार्थसमन्वितत्वेन प्रकटाऽऽसीत्तं शङ्करं सर्वकल्याणकरं भगवदवतारत्वेन सर्वपूजितपादपद्मं नमामीति संबन्धः । जैमिन्यादिभिर्हि कर्मकाण्डमेव स्वार्थसमन्वितं कृतमुपनिषदस्तु स्वार्थात्प्रच्याविताः कैश्चिच्च भेदविलयवादिभिरुपनिषदः स्वार्थसमन्विताः कृताः कर्मकाण्डं तु स्वार्थात्प्रच्यावितम् । भगवता व्यासेन च विविदिषावाक्यं विचा-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्यता यद्यपि कर्मकाण्डब्रह्मकाण्डयोस्तुल्यमेव प्रामाण्यमङ्गीकृतं तथापि तावन्मात्रेण न स्वार्थसमन्वितता कैश्चित्तत्सूत्रं व्याचक्षाणैर्भर्तृप्रपञ्चादिभिर्भेदादेरवेदार्थस्य वेदार्थत्ववर्णनाच्छ्रीमद्भगवत्पूज्यपादैस्तु व्यावहारिकत्वेन कर्मकाण्डप्रामाण्यप्रवृत्त्यादि व्यवस्थाप्य वेदान्तानां तात्त्विकशुद्धाद्वैतपरत्वं व्यवस्थापितमिति स्वार्थसमन्वितत्वं कृत्स्नवेदस्य संपन्नमिति महिमातिशयं दर्शयितुं यमेवेत्येवकारः प्रयुक्तः। उपजातिः ॥ ७॥

यदीयसंपर्कमवाप्य केवलं
वयं कृतार्था निरवद्यकीर्तयः ॥
जगत्सु ते तारितशिष्यपङ्क्तयो
जयन्ति देवेश्वरपादरेणवः ॥ ८ ॥

इदानीं स्वगुरुं वार्तिककारं पूजयति। यदीयेति देवेश्वरस्य सुरेश्वराचार्यस्य ते पादरेणवो जयन्ति सर्वोत्कर्षेण वर्तन्ते तान्प्रत्यस्मि प्रणत इत्यर्थः। येषां पादरेणवोऽपि सर्वोत्कृष्टास्तेषामुत्कर्षः केन वक्तुं शक्यत इत्यभिप्रायः। सुरपदस्थाने देवपदप्रयोगः साक्षाद्गुरुनामाग्रहणाय गुरोर्नाम न गृह्णीयादिति स्मृतेः।कीदृशास्ते तारिताः संसारसमुद्रपारं गमिताः शिष्यपङ्क्तयोऽस्मदादिशिष्यसमूहो यैः पांसुभिस्ते तथा येषां पादरेणवोऽपि शिष्यांस्तारयन्ति ते स्वयं तारयन्तीति किमु वक्तव्यम्।यदीयानां यत्संबन्धिनां पवनादीनामपि संपर्कं संबन्-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केवलमवाप्य साधनान्तरशून्या अपि वयं सर्वेऽपि तच्छिष्याः कृतार्थाः कृतप्रयोजना ब्रह्मसाक्षात्कारेण जीवन्मुक्ताः जगत्सु लोकेषु च सद्ग्रन्थकरणाध्यापनादिना निरवद्यकीर्तयो निर्मलयशसो वयमिति महाफलावान्तरफलकीर्तनम्। अतः सर्वथा ते नमस्या एवेत्यभिप्रायः। वंशस्थम् ॥ ८ ॥

गुरुचरणसरोजसन्निधाना-
दपि वयमस्य गुणैकलेशभाजः ॥
अपि महति जलार्णवे निमग्नाः
सलिलमुपाददते मितं हि मीनाः ॥ ९ ॥

गुरुस्तुतिशेषत्वेन ये प्रस्तारिते आत्मनः कृतार्थत्वनिरवद्यकीर्तित्वे ताभ्यां प्राप्तमात्मन औद्धत्यमपाकरोति। गुरुचरणेति। अनेककल्याणगुणार्णवस्य गुरोश्चरणसरोजयोर्महासौभाग्यशालिनोः सन्निधानादनेकगुणार्पणयोग्यादपि वयं तच्छिष्याः सर्वेऽप्यस्य गुरोर्गुणैकलेशमेव भजामो न तु बहुतरं स्वायोग्यत्वात्। स्तुतावेकवचनमपि प्रयोज्यमित्यस्येति न विरुध्यते स्वायोग्यत्वेन बहुप्राप्तव्यसन्निधानेऽप्यल्पग्रहणे दृष्टान्तमाहापि महतीति। चतुःषष्टिलक्षयोजनविस्तृततयातिविपुले शुद्धोदाख्ये सप्तमे समुद्रे निमग्नाः कात्स्न्र्येन तत्सम्बद्धा अपि मीनाः सलिलं मितमल्पमेवोपाददते गृह्णन्ति। स्वायोग्यत्वेनेति लोकप्रसिद्धमित्यर्थाऽन्तरन्यासः ॥ ९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तो गुरोश्चरणयोर्निकटे निवासा-
न्नारायणस्मरणतश्च निरन्तरायः ॥
शारीरकार्थविषयावगतिप्रधानं
संक्षेपतः प्रकरणं करवाणि हृष्यन् ॥ १० ॥

एवमल्पज्ञत्वेन ग्रन्थकरणाशक्तौ प्राप्तायामाह । शक्त इत्यादिना । गुरोश्चन्दनवृक्षस्येवान्यत्र स्वगुणसञ्चारणसमर्थस्य निकटे निवासाच्छक्तोऽहमिति कारणपौष्कल्यं दर्शयित्वा महत्यारम्भे विघ्नबाहुल्यसम्भवादभावमाह । गुरोर्नारायणस्मरणतः तद्रूपादाशीर्वादाच्च निरन्तरायो निर्विघ्नोऽहमतो गुरुचरणसमीपवासात्पादसंवाहनादिसमये तत्तत्प्रश्नैरप्रतिपत्तिविप्रतिपत्तिनिराकरणेन शास्त्रार्थज्ञानरूपसामग्रीसम्भवाद्गुरुनारायणस्मरणतश्च निखिलविघ्ननिवृत्तिसम्भवाद्ग्रन्थकरणानुकूलसकलोपकरणसंपत्त्या हृष्यन्हर्षम्प्राप्नुवन्प्रकरणं शास्त्रैकदेशसम्बद्धं शास्त्रप्रयोजनापेक्षया प्रयोजनातिशययुक्तं ग्रन्थविशेषं करवाणि कुर्याम् । शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चित इति विष्णुधर्मोत्तरस्मरणात् । शरीरमेव कुत्सितत्वाच्छरीरकं तत्र भवः शारीरको जीवस्तस्य तत्त्वमधिकृत्य कृतो ग्रन्थश्चतुर्लक्षणशारीरकमीमांसालक्षणोऽपि शारीरकः । शारीरं जीवं ब्रह्मतया कायतीति वा तस्यार्थः प्रयोजनं विषयश्च यस्य तत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था। अवगतिरज्ञाननिवर्तिका निर्गुणब्रह्मविद्या सैव प्रधानं विचार्यत्वेन तात्पर्यविषयीभूतं यस्य तच्च तच्चेति कर्मधारयः। अनेन शास्त्रैकदेशसम्बन्धो दर्शितः। संक्षेपत इति सगुणविद्याविचारबाहुल्यपरित्यागरूपेण संक्षेपेणेति शास्त्रात्प्रयोजनान्तरं दर्शितं प्रागेव विवृतमेतत् गुरुप्रशंसापूर्वकं ग्रन्थारम्भप्रतिज्ञा ॥ १० ॥

पदवाक्यमाननिपुणा निपुणं
विमृशन्त्विदं प्रकरणं मनसा ॥
गुणदोषनिर्णयनिमित्ततया
प्रथिता हि पण्डितजना जगति ॥ ११ ॥

ननु स्वस्येवान्यस्यापि मूलशास्त्रादेव तदवगतिसम्भवात्किमनेनेत्याशङ्क्य स्वस्य विद्याशुद्धिरसाधारणं प्रयोजनमित्याह। पदवाक्येति। अथ वा गुरुप्रशंसया गुरुव्यतिरिक्तेषु विद्वत्सु अनादरात्तैरपरिगृहीतोऽयं ग्रन्थो न प्रचरेदित्यभिप्रेत्य तानपि संमानयति। पदवाक्येति। पदनिपुणा वैयाकरणा वाक्यनिपुणा मीमांसका माननिपुणास्तार्किकास्तेषां तद्विचारकुशलत्वात् इदं प्रकरणं पदतो वाक्यतो मानतश्च निपुणमवधानेन मनसा स्वबुध्या विमृशन्तु विचारयन्तु निपुणं मनसेति विशेषणाभ्यामनवधानं परप्रत्ययं च वारयति। प्रार्थितानां तेषां गुणदोषनिर्णयाय प्रवृत्तौ कारुण्यमेव हेतुरित्याह। गुणदोषेति। तथा चोक्तं कविना। आपरि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत इति ग्रन्थनिर्माणमात्रं मदधीनं विशुद्धिस्तु निर्मत्सरविद्वदधीनेत्यर्थः ॥ ११ ॥

विद्वांसो यदि मम दोषमुद्गिरेयु-
र्यद्वा ते गुणगणमेव कीर्तयेयुः ॥
तुल्यं तद्बहु मनुते मनो मदीयं
कष्टं तद्बत मनुते यदाह मन्दः ॥ १२ ॥

नन्वस्माभिर्निपुणं विमृशद्भिः दोषकीर्तने क्रियमाणे तव दुःखमेव स्यादित्याशङ्क्याह । विद्वांस इति । निर्मत्सरा विद्वांसो गुणदोषपरीक्षका यदि मम ग्रन्थे दोषं हानाय कथयेयुर्गुणगणं चोपादानाय कथयेयुः , तद्दोषकथनं गुणकथनं च तुल्यं सममेव बहु मनुते आदरेणाङ्गीकरोति मम मनो न तु वाङ्मात्रम् । दोषकीर्तने हि सति तन्निवारणान्निर्दोषो ग्रन्थः शुद्धः स्यादित्यभिप्रायेण दोषकीर्तनं ग्रन्थशुद्धिरूपगुणपर्यवसानाद्गुण एवेति महाननुग्रह इत्यभिप्रायः । यस्तु मन्दो मात्सर्यग्रस्तो दोषगुणविवेचनासमर्थश्च सोऽविचार्यैव यद्यन्ध इव चित्रस्य गुणं दोषं चाह तदपि तुल्यमेव कष्टं दुःखं मनुते बतेति खेदे बह्विति पाठे बहु कष्टं मनुत इत्यन्वयः मनो ममेति शेषः । तदुभयस्यापि ग्रन्थविशुद्ध्यप्रयोजकत्वादित्यर्थः ॥ १२ ॥

महामहिम्नामपि यश्चिकीर्षति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वभावसंशुद्धतरं तिरो यशः ॥
सनूनमाच्छादयितुं प्रवर्तते
विवस्वतो हस्ततलेन मण्डलम् ॥ १३ ॥

नन्वस्माभिर्निपुणं विचार्य निर्दोषत्वेन निश्चितेऽपि ग्रन्थे कश्चिदतिमत्सरी दोषमुद्भावयतीति चेत्तदास्माकं महदयशो भवेत्तव च ग्रन्थशुद्धिर्न भवेदित्याशङ्क्याह । महामहिम्नामिति । प्रसिद्धयशसां दोषगुणपरीक्षणक्षमाणां विदुषां भवद्विधानां निर्मत्सरत्वेन मानकुशलत्वेन च स्वभावतः संशुद्धतरमतिनिर्मलं परग्रन्थनिर्दोषत्वापादनरूपं यश आरोपितदोषोद्भावनेन यस्तिरश्चिकीर्षति तिरोभावयितुमिच्छति स जगन्मण्डलव्यापिप्रकाशस्य विवस्वतो मण्डलं लक्षयोजनविस्तृतं हस्ततलेनात्यल्पेन तदसम्बद्धेनाच्छादयितुं प्रवर्तते नूनमिति सर्वथैवासम्भावितमिदं यथा तद्वदसम्भावनीयं कर्तुमिच्छन्सर्वलोकोपहास्य एव भवति । अतो भवतां विशुद्धज्ञानानां मम च भवदादृतग्रन्थस्य न कापि क्षतिरित्यर्थः । विद्वन्माहात्म्यखलतुच्छते दर्शिते ॥ १३ ॥

पुरुषापराधमलिना धिषणा
निरवद्यचक्षुरुदयापि यथा ॥
न फलाय भर्त्तृविषया भवति
श्रुतिसम्भवापि तु तथात्मनि धीः ॥ १४ ॥

ननु शारीरकार्थविषयमवगतिप्रधानं प्रकरणं कर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाणीत्युक्तं तन्नोपपद्यते । शारीरकमीमांसाया एव प्र-
योजकाभावेनासंगतत्वात् । शिष्यजिज्ञासितसन्दि-
ग्धार्थनिर्णयाय भगवता निरस्तसमस्तैषणेनाथातो ब्र-
ह्मजिज्ञासेत्याद्यारब्धव्यम् । शिष्यस्य च ब्रह्मण्यत्य-
न्तानुपलब्धे जिज्ञासा वा सन्देहो वा कथं भवेत् ।
धर्मिज्ञानसाध्यत्वात्तयोः । तच्च निर्विशेषे ब्रह्मणि न
प्रत्यक्षादिना सम्भवति । रूपादिहीनत्वात्तस्य अद्वितीये
तस्मिन्लिङ्गासम्भवाच्चाद्वयमेव हि ब्रह्म मुमुक्षुं प्रति
शारीरकेण विचार्यते । सगुणब्रह्मविचारस्य प्रासङ्गिक-
त्वात् । नापि वेदान्तात्तज्ज्ञानम् । विचारात्पूर्वं तत-
स्तदयोगात् । अन्यथा विचारवैयर्थ्यात् । न चापात-
ज्ञानं विचारं विनापि भवतीति वाच्यम् । तस्यैवानि-
रूपणात् । निःसामान्यविशेषे ब्रह्मणि सामान्यविषय-
स्य तस्यासम्भवादपरोक्षे ब्रह्मणि परोक्षज्ञानरूपस्य त-
स्यायोगात् । अतः शिष्यस्य जिज्ञासासम्भवादजिज्ञा-
सितार्थनिर्णये प्रेक्षावतः प्रवृत्त्ययोगादसङ्गतैव शारी-
रकमीमांसेति तदर्थविषयमिदं प्रकरणं सुतरामसङ्गतमि-
त्याशङ्क्य विचारात्प्रागपि वेदान्तादेवाधिकारिणो वि-
दितपदतदर्थस्य निर्विशेषब्रह्मसाक्षात्काररूपं ज्ञानं भ-
वत्येव तच्च श्रोतुरसम्भावनाविपरीतभावनादिचित्त-
दोषैः प्रमाणमप्यप्रामाण्यशङ्काकलङ्कितमित्यनभ्यासद-
शापन्नजलज्ञानवत्फलाय न भवतीति ततो विचारप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योजिका शिष्यस्य जिज्ञासोपपद्यत इति नोक्तासांगत्यमित्यभिप्रेत्य सदृष्टान्तमाह चतुर्भिः । पुरुषापराधेति । पुरुषस्य प्रमातुरसम्भावनादिलक्षणेनापराधेन मलिना अप्रामाण्यशङ्कया कलङ्किता । न तु प्रमाणस्यापराधेन तस्य दृष्टान्ते दार्ष्टान्तिके च निर्दोषत्वात् । ननु निर्दुष्टप्रमाणजन्यं ज्ञानमप्रामाण्यशङ्कावशादध्यासं न निवर्तयतीति क्व दृष्टमित्याशङ्क्य दृष्टान्तमाह । निरवद्येति । भर्तुर्नाम कश्चित्कस्य चिद्राज्ञोऽत्यन्तं वल्लभो ब्राह्मणो राजोपजीविभिर्मात्सर्याद्विष्यमाण आसीत्स कदाचिद् दैवयोगाल्नेत्रे पिधायारण्ये क्षिप्तश्चिरं तत्र स्थितो दैवयोगेनारण्यकैः सह पुरसमीपमागतोऽपि विद्वेषिराजकीयावरुद्धपुरमार्गः पुरं प्रवेष्टुं न शशाक राजा च भर्तुर्मृतः प्रेतो जात इति तैः प्रबोधितः सन्तथैव निश्चयमकरोत । दैवात्कदाचिद्बहिर्गतो बाह्योपवने तं दृष्ट्वापि ब्रह्मराक्षसं मेन इति । पुरुषं सोम्य गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेदित्यादिश्रुतिमूला ग्रन्थकर्तृदेशप्रसिद्धिर्यथा भर्तुविषया निर्दोषचक्षुर्जनिता प्रमाणभूतापि मतिर्मृतो भर्तुर्द्रष्टुमयोग्य एव किन्तु प्रेत एवायं दृश्यत इत्यसम्भावनाविपरीतभावनारूपपुरुषदोषेणाभिभूता भर्तुरेवायमिति निश्चयफलाय पर्याप्ता न भवति तथा निर्दोषवेदान्तमहावाक्यजन्या प्रमाणभूताप्यहं ब्रह्मास्मीति धीर्वेदान्ता



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मपरा न भवन्त्येवाद्वितीयं ब्रह्म न सम्भवत्येव संसार्यसंसारिणोरैक्यं न सम्भवत्येवेत्यसम्भावनाविपरीतभावनारूपपुरुषदोषाभिभूता, विचारात्प्रागज्ञानादिनिवृत्तिफलाय न पर्याप्ता भवतीत्यर्थः ॥ १४ ॥

पुरुषापराधविगमे तु पुनः
प्रतिबन्धकव्युदसनात्सफला ॥
मणिमन्त्रयोरपगमे तु यथा
सति पावकाद्भवति धूमलता ॥ १५ ॥

मानमेययोरुपनिषद्ब्रह्मणोर्निर्दोषत्वात्परिशेषात्प्रमातृदोष एव फलप्रतिबन्धक इति शास्त्रीयेण विचारेण तस्यापगमे सत्यप्रामाण्यशङ्कारूपप्रतिबन्धाभावात् पुनस्तस्मादेव निर्दोषवेदवाक्यात्सफला धीरुदेति यथा भर्त्तुर्दुर्जनैररण्ये प्रक्षिप्तो जीवन्नेव पुनरागत इत्युपपत्त्या भर्त्तुर्ज्ञानाप्रामाण्यशङ्काकारणपुरुषापराधविगमे सति तद्विषया भर्त्तुरेवायमिति सफला धीरुदेतीत्याह। पुरुषापराधेति । अत्रानुरूपं दृष्टान्तान्तरमाह । मणीति । तुशब्दोऽवधारणे । मणिमन्त्रयोर्धूमोत्पत्तिप्रतिबन्धकयोरपगमे सत्येव लताकारो धूम उद्भवति पावकात्सदा धूमजननसमर्थान्नान्यथा यथा तथेहापीत्यर्थः ॥ १५ ॥

पुरुषापराधविनिवृत्तिफलः
सकलो विचार इति वेदविदः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनपेक्षतामनुपरुध्य गिरः
फलवद्भवेत्प्रकरणं तदतः ॥ १६ ॥

भवतु पुरुषापराधविगमात्सफला धीस्तावता विचारशास्त्रस्य किमागतमित्यत्राह । पुरुषेति । सकल इति । धर्मविषयो ब्रह्मविषयश्चेत्यर्थः । वेदविदः शबरस्वामिप्रभृतयः आहुः धर्मजिज्ञासासूत्रव्याख्यायामर्थादिति शेषः । तेषामेतदभिप्राये प्रमाणमाह । अनपेक्षतामिति । प्रथमतन्त्रे ह्यौत्पत्तिकसूत्रे लोके शब्दस्य प्रमाणान्तरमूलस्यैव प्रामाण्यात्तदभावेऽनाप्तवाक्यवद्वेदाप्रामाण्यमाशङ्क्यानाप्तवाक्यस्याप्रामाण्यं न मूलाभावकृतं किं तु दुष्टपुंमूलतया दुष्टत्वेन स्वभावप्रयुक्तप्रामाण्यप्रतिबन्धाद्वेदे तु पदपदार्थसंबन्धस्य नित्यतया तत एव वाक्यार्थसंबन्धेऽन्यानपेक्षणाद्वेदस्वरूपस्यापौरुषेयत्वाच्च न पुरुषमूलतेत्यनपेक्षत्वेन स्वतःप्रामाण्यमुक्तम् । तद्यदि विचारादिकमपेक्ष्य वेदोऽर्थं प्रतिपादयेत्तर्हि सापेक्षतया तस्यानपेक्षत्वं बाधितं स्यादिति सर्वोऽपि विचारः प्रतिबन्धनिवृत्तिमात्रहेतुरिति सर्ववेदवित्संमतमित्यर्थः । गिरो वेदस्यानपेक्षतामर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादित्यत्र प्रतिपादितामनुपरुध्याबाधित्वा सकलो विचारः पुरुषापराधविनिवृत्तिफल इति वेदविद आहुरिति संबन्धः । विचारस्य प्रतिबन्धनिवृत्तिसाधनत्वे फलितमाह । फ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लवदिति । अत इति प्रतिबन्धनिरासित्वाभ्युपगमादित्यर्थः । प्रकृष्टं करणं निर्माणं यस्य विचारशास्त्रस्य तदित्यर्थः।अथवा उक्तरीत्या शारीरकारम्भे निर्दुष्टे सति तदर्थाविष्करणाय प्रकृतप्रकरणं फलवदित्यर्थः ॥ १६ ॥

पुरुषापराधशतसंकुलता
विनिवर्तते प्रकरणेन गिरः ॥
स्वयमेव वेदशिरसो वचना-
दथ बुद्धिरुद्भवति मुक्तिफला ॥ १७ ॥

प्रतिबन्धनिवृत्तेरहेतुत्वे स्वतोऽपुरुषार्थत्वे च कथं तन्निष्ठं प्रकरणं फलवदित्याशङ्क्य विवक्षितकार्यविरोधिनि तदनुत्पादस्याग्रिमसमयसंबन्धप्रयोजके प्रतिबन्धके सति समर्थात्कारणसहस्रादपि कार्याऽनुदयाद्दर्शिताग्रिमसमयसंबन्धाभावसंपादकतयान्यथासिद्धोऽपि प्रतिबन्धकाभावः कार्येण स्वोत्पत्तयेऽपेक्ष्यते इति प्रकरणं तन्निष्ठमपि फलवदित्याह । पुरुषापराधशतेति । शास्त्रेणैव प्रतिबन्धस्य निरस्तत्वात्किं प्रकरणेनेत्याशङ्क्य पुरुषदोषाणामनन्तत्वादावृत्तिरसकृदुपदेशादिति न्यायेन तत्सार्थक्यमुक्तम् शतेति गिरो वेदलक्षणायाः शास्त्रलक्षणायाश्च स्वयमेव इतरासहकृतादेव अथ प्रतिबन्धनिवृत्त्यनन्तरं मुक्तिफला विद्या वेदशिरसो वाक्यादुद्भवति । अभ्यासदशायां केवलाच्चक्षुष इव जलज्ञानमतो न सापेक्षत्वमित्यर्थः । पुरुषा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पराधाकुलत्वं चाप्रामाण्यशङ्कैवेत्युक्तं जिज्ञासापूर्वकविचारहेत्वापातज्ञानोपपादनम्।प्रमिताक्षरावृत्तम्॥१७॥

स्वाध्यायवन्नकरणं घटते विचारो
नाप्यङ्गमस्य परमात्मधियः प्रसूतौ ।
सापेक्षतापतति वेदगिरस्तथात्वे
ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तम् ॥१८॥

नन्वन्वयव्यतिरेकाभ्यां तात्पर्यज्ञानं वाक्यार्थज्ञानहेतुः शक्तिज्ञानवत्तच्च विचाराधीनमिति चेत्तत्राह । स्वाध्यायवदिति । स्वशाखागतवेदवाक्यवदित्यर्थः । घटते युज्यते अस्य स्वाध्यायस्य किं विचारो वेदान्तवाक्यवत्तदर्थज्ञाने करणम् उताङ्गं नाद्यः प्रत्यक्षादिवद्विचाराख्यप्रमाणस्याप्रसिद्धत्वात्तर्करूपस्य तस्य प्रमाणानुग्राहकत्वेन स्वतोऽप्रमाणत्वाद्वाक्यकरणकज्ञानस्य करणान्तरानपेक्षत्वाज् ज्ञानान्तरस्य चासत्त्वात् । द्वितीये च न प्रोक्षणादिवदाग्नेयादेर्वेदस्य विचारः स्वरूपोपकार्यङ्गं तद्वदत्र श्रुत्यादिविनियोजकाभावात्स्वाध्यायस्वरूपस्य स्वतःसिद्धत्वेन तत्रानुपयोगाच्च। अस्तु तर्हि प्रयाजादिवत्परमात्मज्ञानोत्पत्तावारादुपकार्यङ्गम् । तदुक्तम् । इतिकर्तव्यताभागं मीमांसा पूरयिष्यतीति प्रमाणानामनुग्राहकस्तर्क इति च तन्न प्रयाजादिभिराग्नेयादिषु फलानुकूलशक्तिवद्वेदे तत्त्वसाक्षात्कारजननानुकूलशक्तेराधानाभावात्।न हि वाक्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यौत्पत्तिकार्थप्रकाशनशक्त्याद्यतिरेकेण विचाराधी किंचिदस्ति तदङ्गत्वावेदकप्रमाणाभावस्योक्तत्वाच्च । क रणोपकारस्य शक्त्यादिज्ञानेनैव सिद्धेश्च उभयत्र सा धारणं प्रागुक्तं दूषणं स्मारयति । सापेक्षतेति । आ पततीतिच्छेदः।तथात्वे विचारस्य करणत्वेऽङ्गत्वे वा तत्सापेक्षत्वापतनं न युक्तं प्रागुक्तन्यायेनेत्यर्थः॥ १८॥

व्युत्पन्नस्य हि बुद्धिजन्म सहसा वाक्यश्रुतौ दृश्यते
वाक्यार्थे न ततोस्ति बुद्धिजनने मीमांसनव्यापृतिः।
तेनार्थात्करणादिभावभजने मीमांसनस्याश्रिते
वेदार्थप्रमितौ तु वेदवचसः सापेक्षतायास्यति ॥१९॥

यत्तु तात्पर्यज्ञानं नियतान्वयव्यतिरेकाभ्यां वाक्या र्थज्ञाने कारणं शक्तिज्ञानादिवत्तच्च विचाराधीनमि विचारस्याङ्गत्वमिति तत्राह । व्युत्पन्नस्येति । सहसा झटिति विनैव तात्पर्यज्ञानाभावनिमित्तविलम्बं व्यु त्पन्नस्य शक्त्यादिज्ञानवतो वाक्यस्य श्रुतौ श्रवणे तत नियतान्वयव्यतिरेकाभावात् । मीमांसनस्य तात्पर्यज्ञा नस्य तदर्थविचारस्य च वाक्यार्थबुद्धिजनने न व्या पृतिर्नोपयोग इत्यर्थः । एतदुक्तं भवति न हि तात्प र्यज्ञानं नियमेन वाक्यार्थज्ञानात्पूर्वं संभवति । गवा नयनादिवाक्यश्राविणां तज्ज्ञाननैयत्याभावात् । न हि तदा तात्पर्यव्याप्तलिङ्गज्ञानं तेषामस्ति समभिव्या हारमात्रस्य अहो विमलं जलं नद्याः कच्छे महिषश्चरती

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यत्रानन्वितयोर्नदीकच्छुयोरपि दर्शनेन तदलिङ्गत्वात्। न च यत्रैकवाक्यत्वन्तस्य वाक्यस्य विशिष्टार्थे तात्पर्य-मिति वाच्यन्तस्यापि प्रतारकवाक्यादौ व्यभिचारात्। एकवाक्यताज्ञानादेव नियतार्थज्ञानसंभवेन तात्पर्य-ज्ञानस्य तत्रोपयोगाभावाच्च अर्थवादादेः प्रतीयमाना-र्थे तात्पर्याभावनिश्चयेऽपि तद्गतपदशक्त्यादिस्वारस्येन विशिष्टार्थप्रतीतेश्च न तात्पर्यज्ञानं तत्र कारणं नाना-र्थपदप्रयोगादपि तत्तत्पदार्थोपस्थितियोग्यताद्यनुरो-धेन कदाचित्कस्य चिदर्थस्य प्रतीत्युपपत्तेश्च। न हि तत्र सर्वपदार्थस्मरणं नियमेनास्ति। यत्रास्ति तत्र यो-ग्यतादिज्ञानमस्तीति चेत्। युगपत्तावदर्थज्ञानमस्तु किं तात्पर्यज्ञानेन तत्तत्संसर्गघटिततात्पर्यज्ञानस्य तत्त-त्संसर्गात्मकवाक्यार्थबोधात्प्रागनुपपत्तेश्च न तात्पर्य-ज्ञानस्य तत्र हेतुत्वं संभवतीति। नन्वात्मा वा अरे द्र-ष्टव्यः श्रोतव्य इत्यादिना ज्ञानोद्देशेन श्रवणादिवि-धानात्कथं तस्य तदहेतुत्वं तत्राह। तेनेति। येन कार-णेन विचारोऽङ्गतया करणतया वा न वाक्यार्थज्ञानोप-योगी तेनेत्यर्थः। अर्थादनुपपत्त्या करणादिभावभज-ने उद्देश्यज्ञानविशेष्यांश इति शेषः। वेदार्थप्रमितौ जनयितव्यायामायास्यतीति पदम्। श्रुतौ द्रष्टव्यपदेन नात्मज्ञानमात्रमुद्दिश्यते आपातात्मज्ञानस्य प्रागेवो-त्पन्नत्वात्। किं त्वप्रतिबद्धमात्मदर्शनमेवं च तदुद्दे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेन विहितो विचारो विशेषण एव पर्यवस्यति ज्ञानमात्रस्य प्राक्सिद्धस्य तत्साध्यत्वानुपपत्तेरिति श्रुतितोऽपि न विचारस्य ज्ञानं प्रति हेतुत्वमिति प्रागुक्तैव गतिरिति भावः ॥ १९ ॥

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं
जीवेश्वरत्वजगदाकृतिभिर्मृषैव ॥
अज्ञानमावरणविभ्रमशक्तियोगा-
दात्मत्वमात्रविषयाश्रयताबलेन ॥ २० ॥

एवं विचारात्पूर्वमापातप्रतिपन्नं ब्रह्म मुमुक्षुभिर्जिज्ञास्यं विचारश्च प्रतिबन्धकनिवृत्तिमात्रेणार्थवानित्युक्तम् । नन्वेवमपि जिज्ञास्यं ब्रह्म दृश्यं चेद्घटवदानात्मत्वान्न मुमुक्षुजिज्ञास्यं स्यात्स्वप्रकाशं चेत्तर्हि यथावत्प्रकाशमानतया न जिज्ञास्यत्वम् न हि स्पष्टं प्रकाशमाने जिज्ञासा भवति । न च स्वप्रकाशमप्यज्ञानावृतं न यथावत्प्रकाशत इति वाच्यमहमिति ज्ञानस्यैवात्मयाथात्म्यविषयत्वात् । ब्रह्मणस्तदविषयत्वे चानात्मताप्रसङ्गः । स्वप्रकाशे आत्मनि ज्ञानसाध्यप्रयोजनस्य विनापि विचारं संभवेन विचारानर्थक्यं च । किं चात्मज्ञानमात्रं न विचारप्रयोजनं तस्य सुखदुःखनिवृत्त्यन्यतरत्वाभावात् । तत्साध्यं चान्यत्स्वर्गादिवन्न मुमुक्षोरभिलषितं संसारात्मकानर्थश्च संश्लेषेन्न ज्ञानान्निवर्त्यः । असंश्लेषेन्नितरामतो विषयप्रयो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनाभावान्नेदं प्रकरणमारब्धव्यमिति तत्राह। आच्छाद्येति। आवृत्येत्यर्थः। अज्ञानमनादिभावरूपं ज्ञानापनोद्यं वक्ष्यमाणं संस्फुरत्स्वप्रकाशतया निरंशतया च यथावत्प्रकाशमानमप्यद्वयानन्दब्रह्मस्वरूपमाच्छाद्य विक्षिपति विविधं तत्स्वरूपविपरीतप्रपञ्चभावमापादयति। वैविध्यमेवाह। जीवेत्यादिना। तृतीयेत्थम्भावे। तथा च स्वप्रकाशस्याप्यात्मस्वरूपब्रह्मणः अविद्यया यथावदप्रकाशमानत्वाज्जिज्ञास्यत्वमुपपद्यते। प्रयोजनं च जीवेश्वरत्वादिभेदकल्पनानिवृत्तिरस्तीति काकदन्तसमं न ब्रह्मेत्याशयः। प्रपञ्चस्य ज्ञानापनोद्यत्वमाह। मृषेति। एतेनाद्वयानन्दब्रह्मस्वभावस्य कथं तद्विपरीतरूपतेति निरस्तम्। शुक्तिकादेरिवाज्ञानाद्रजतादिभाववदात्मनः प्रपञ्चभावस्याप्यज्ञानकल्पिततया मृषात्वान्न कोऽपि दोष इति भावः। मृषात्वं च सदसद्विलक्षणत्वमिति न सदादिपक्षोक्ता दोषाः। सदसदात्मत्वव्यावृत्तय एवेत्युक्तम्। नन्वज्ञानस्य सत्यत्वे कथं तत्कृतविक्षेपस्य मृषात्वं मिथ्यात्वे वा कथं तस्याच्छादकत्वं लोके सत्यस्यैव तद्दर्शनादित्याशङ्क्य मृषाप्यज्ञानमर्थक्रियाकारितयाच्छादयति विक्षिपति च तत्कारित्वे च सत्यत्वं न प्रयोजकमसम्प्रतिपत्तेः। किं त्वाच्छादनाद्यनुकूलशक्तिमत्त्वं तच्च मृषात्मकेऽपि स्वप्नदृष्टे दृष्टमाच्छादकस्य लोकेऽपि सत्यत्वमसम्मतमित्याशयेनाह।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आवरणविभ्रमशक्तियोगादिति । आवरणशक्तिविक्षेपशक्तिभ्यां योगादित्यर्थः । आवरणशक्तिर्नास्त्यद्वयं ब्रह्म न प्रकाशत इति व्यवहारयोग्यतावरणं तत्प्रयोजकशक्तिः । विक्षेपशक्तिस्त्वहं कर्ता भोक्तेत्यादिभ्रमजननशक्तिरित्यर्थः । नन्वज्ञानमपि शक्तिमच्चेत्परकीयप्रधानान्न विशेष इत्यत आह । आत्मत्वेति । आत्मत्वं सदखण्डचैतन्यं तन्मात्रमेवाश्रयो विषयश्च यस्य तस्य भावस्तत्ता तद्बलेनेत्यर्थः । अज्ञानस्य ह्यात्माश्रयविषयत्वमेव परकीयप्रधानाद्बलं शक्तिद्वयाश्रयत्वप्रयोजकं न तु स्वत इति प्रधानाद्विलक्षणमित्यर्थः ॥२०॥

प्रत्यक्त्वमात्रविषयाश्रयताबलेन
प्रत्यक्स्वरूपमपिधाय पराग्विवर्तैः ॥
प्रत्यञ्चमद्वयमशेषविशेषहीनं
विक्षिप्य तिष्ठति तदग्रहणं मृषैव ॥ २१ ॥

नन्वात्मनोऽज्ञानावृतत्वे प्रकाशायोगात्कथं ततोऽज्ञानान्तःकरणादिभानं न ह्यप्रकाशमानज्ञानाद्विषयप्रकाशी भवति तत्राह । प्रत्यक्त्वेति । विषयपदमत्राविवक्षितं चैतन्यमात्रं यो विषयः तदाश्रयताबलेनेत्यर्थः । अथ वा वक्ष्यमाणरीत्या अधिष्ठानावरणस्य विक्षेपहेतुत्वम् । एवं चोभयमपि हेतुरिति तदुपादानं प्रत्यक्स्वरूपं प्रत्यगात्मनोज्ञानादिसाधकचैतन्यांशमपिधायानाच्छाद्य प्रत्यञ्चं पराग्विवर्तैः जीवत्वादिविवर्तैः विक्षिप्य ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्ठतीति सम्बन्धः । अज्ञानं हि स्वाश्रयावभास्यं न जानामीति तदनुभवात् । अवभासकं च प्रकाशमानमेवेति तदाश्रयचैतन्यमनावृतम् । एवं चाज्ञानं तदाश्रयत्वादेव तदाच्छादकं न भवतीत्यभिप्रेत्यैवमुक्तं तदा चाज्ञानादिभानमविरुद्धं चैतन्यं नास्तीति व्यवहारादर्शनेन तद्योग्यतारूपमावरणं नास्तीति भावः । तर्ह्यज्ञानं ब्रह्मततोऽन्यः स्यादिति नेत्याह । अद्वयमिति । तर्हि कथं प्रकाशमानस्याप्रकाशमानत्वमित्याशङ्क्य उक्तं तावत्प्रकाशमानत्वे प्रमाणम् । एवं जीवेश्वरत्वाद्यध्यासाधिष्ठानतया तत्राप्रकाशमानत्वं च वाच्यम् । विशेषावरणं विनाध्यासायोगादित्यभिप्रेत्य प्रत्यञ्चं जीवत्वादिभिर्विक्षिपतीत्युक्तम् । यद्यपि चैतन्यमात्रमेव ब्रह्म तथापि तदावृतमनुभूयते । तच्च वक्ष्यमाणविधया अविरुद्धमिति । मास्तु तर्हि जीवत्वादेस्तत्राध्यासस्तत्राह । अशेषेति । तथा च निर्विशेषे जीवत्वाद्यवभासोऽध्यासं विना न सम्भवतीति तस्य तत्रारोपो वक्तव्य इत्यर्थः ॥ २१ ॥

> प्रत्यक्षलिङ्गवचनानि हि दर्शयन्ति
> निर्दुःखनित्यसुखविग्रहतां प्रतीचः ॥
> निर्दुःखनित्यसुखविग्रहभून्नि नास्मिन्
> संभाव्यते हशि पुरोदितमल्परूपम् ॥ २२ ॥

ननु यथा साङ्ख्यमते प्रकृतिः पुरुषाश्रयत्वविषय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वमन्तरेण जगदुत्पादयति एवमज्ञानमप्यस्तु, किं त-
स्य प्रत्यगाश्रयत्वविषयत्वकल्पनया। न चाध्यस्तम-
ज्ञानं तत्कार्यं चेति ततोऽस्य वैलक्षण्यमिति वाच्यम्।
तदध्यासस्यैवाद्याप्यसिद्धेरित्याशङ्क्यात्मनि प्रपञ्चस्या-
ध्यासं दर्शयिष्यंस्तदर्थं प्रथमं तस्य तत्र वस्तुतोऽस-
म्भवं तदर्थं च प्रमाणसिद्धमात्मस्वरूपं दर्शयति। प्र-
त्यक्षेति। एतानि वक्ष्यमाणानि द्रष्टव्यानि। निर्दुःख-
नित्यसुखविग्रहतामिति भूम्नश्चैतन्यस्योपलक्षणम्।
अन्यथानुवादे तत्कीर्तनायोगात्। ततः किं तत्राह।
निर्दुःखेति। निर्दुःखादिस्वरूपेऽस्मिन् चैतन्याद्वयात्मनि
अनृतजडेत्यादिनोक्तमल्पं रूपं न सम्भाव्यते। वस्तु-
तः कथमपि न सम्भवतीत्यर्थः। अहङ्कारप्रमुखो जड-
प्रपञ्चो न तावदात्मनोऽन्यत्र सिध्यति,आत्मन एव त-
दुपादानतया वक्ष्यमाणत्वात्। कार्यस्योपादानादन्य-
त्रावस्थित्यनुपपत्तेः तत्सत्तास्फूर्त्ययोगाच्च न ह्यात्मा-
तिरिक्तमपि किञ्चित्सम्भवति, नाप्यात्मनि सम्बन्धा-
न्तरेण तस्य वृत्तिः सम्भवति निरवयवेऽसङ्गे सम्बन्धा-
न्तरासम्भवात्। तादात्म्यं च वास्तवं विरुद्धयोर्न स-
म्भवति, तद्विरुद्धरूपं चात्मनः प्रत्यक्षादिसिद्धमिति न
कथमप्यात्मनि प्रपञ्चस्य वस्तुतः सम्भव इति भावः ॥२२॥

प्राज्ञे सुखं समनुभूय समुत्थितः सन्
सर्वप्रकारविषयप्रतिपत्तिशून्ये ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुप्तोऽहमत्र सुखमित्यनुसन्दधानः
सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ॥ २३ ॥

प्रतिज्ञातमर्थमुपपादयन्प्रथमं प्रत्यक्षेणात्मनो निर्दुःखनित्यसुखतां दर्शयति । प्राज्ञ इति । यद्यपि सुखप्रत्यक्षमात्रमात्मस्वरूपसुखमेव विषयीकरोति तथाप्यन्यथासिद्धिशङ्काशून्यतया निर्दुःखत्वादिसिध्यर्थं च सौषुप्तिकं प्रत्यक्षमुदाहृतं यस्मिन्नेकीभूतः सुषुप्त्यवस्थायां जीव उपाधिकालुष्याभावात्प्रकृष्टप्रज्ञो भवति तस्मिन्प्राज्ञाभेददशायामित्यर्थः । समनुभूय स्पष्टमनुभूयान्यथा सुषुप्त्यर्थं कस्यापि प्रवृत्तिर्न स्यात् । ननु तदपि सुखं जन्यमेव किं न स्यात्तत्राह । सर्वप्रकारेति । स्मृतिरूपा अनुभवरूपा वा या विषयप्रतिपत्तिः तच्छून्ये सुषुप्तेः सर्वविशेषज्ञानोपरमरूपत्वाद्विषयज्ञानं विना सुखजन्मासम्भवात् न तदात्मन्यन्यत्सुखमस्तीत्यर्थः। अत्र देशे काले वा सुखमिति क्रियाविशेषणम् । अनुसन्दधानः स्मरन्नर्थात्तदेव सुखमित्याशयः तस्यानुसन्धानात्स्वरूपचैतन्यस्य सौख्यं निर्दुःखनित्यसुखात्मत्वं यद्यपि सुखमहमस्वाप्समिति स्मृतिर्न निर्दुःखत्वं न वा नित्यत्वं तस्य विषयीकरोतीति तद्बलात्प्राज्ञसुखस्य निर्दुःखत्वादि न सिध्यति तथापि सुषुप्त्यवस्थायामनुभूयमानसुखबलान्निर्दुःखतात्मनः सिध्यति, अत एवोत्थितस्य निर्दुःखमस्वाप्समितिव व्यहारः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुषुप्तिकालीनसुखसामर्थ्यादेव तस्य नित्यत्वमपि सि-
ध्यतीति प्राज्ञसुखप्रत्यक्षसामर्थ्यादात्मा निर्दुःखनित्य-
सुखमिति ॥ २३ ॥

सर्वं यदर्थमिह वस्तु यदस्ति किञ्चित्
पारार्थ्यमुज्झति च यन्निजसत्तयैव ॥
तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञा-
स्तत्प्रत्यगात्मनि समं सुखतास्य तस्मात् ॥२४॥

एवमनुमानेनाप्यात्मनः सुखात्मत्वसिद्धौ तस्य नि-
र्दुःखनित्यतापि सिध्यतीत्यभिप्रेत्यात्मा सुखाभि-
सुखलक्षणवत्त्वाद्वैषयिकसुखवद्यद्यल्लक्षणवत्तत्तदात्मकं
यथा गवादीत्यनुमानमाह । सर्वमिति । प्राचुर्याभिप्रा-
मेतत् यदर्थं यत्सम्बन्धितया प्रीतिविषयः न तु तद्धे-
रित्यर्थः आत्मसुखस्याजन्यत्वात् । इह जगति वस्तु य-
दस्ति किञ्चित् एतदपि प्राचुर्याभिप्रायं पारार्थ्यमन्यप्र-
युक्तप्रीतिविषयत्वं यदिष्यमाणमिति शेषः । निजसत्त-
या स्वस्वरूपेण सुखमिति वर्णयन्तीति सम्बन्धः । व्या-
प्तस्य हेतोः पक्षधर्मतामाह । तत्प्रत्यगात्मनीति । स-
वैषयिकसुखतुल्यमस्तीति वार्थः । निगमयति । सुखते-
ति । तस्मादुक्तहेतोः, अत्र यदिष्यमाणं पारार्थ्यमुज्झ-
ति निजसत्तया यदिष्यमाणं तद्वा सुखमितिलक्षणं वि-
वक्षितम् । एतदुपपादनाय सर्वमित्याद्युक्तंदुःखादि-
सुखसाधने चातिव्याप्तिवारणाय दलद्वयम् । ननु पुत्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिवत्सुखमपि मम सुखं भूयादित्यात्मार्थमेव काम्यत इति कथं पारार्थ्यमुज्झतीति तन्न । न हि पुत्रादिनैवात्मनः सुखेनापीष्टं किञ्चिज्जायते येन सुखं तदर्थं भवेत् न च सुखमात्मसम्बन्धितयैवाभिलाषास्पदमात्मसम्बन्धित्वस्य दुःखादिसाधारणस्य सुखप्रीत्यप्रयोजकत्वात् न चात्मसुखत्वं तत्र प्रीतिनिमित्तमिति वाच्यं लाघवेन सुखत्वमात्रस्यैव तथात्वात्सुखं चैकमेवेति नातिप्रसङ्गः न च कथं तर्हि मम सुखं भूयात् इत्यभिलाष इति वाच्यं मम प्रत्यक्षसुखं भूयादिति हि तथा काम्यते सुखव्यक्तेरेकत्वेन व्यावर्त्याभावात् प्रत्यक्षं त्वज्ञातब्रह्मसुखादिव्यवच्छेदकमिति तदेव ममेति विशिष्यत इति नोक्तदोषः अहङ्कारशबलात् ममताधिकरणात्केवलं सुखमन्यदिति मदीयत्वमपि प्रतीयमानमस्त्येव परं तु तत्कामनाप्रयोजकं न भवतीति भावः ॥ २४ ॥

प्रेमानुपाधिरसुखात्मनि नोपलब्धः
स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ॥
प्रेयः श्रुतेरपि ततः सुखतानुमानं
नैयायिकोऽपि न हृगात्मनि निन्हुवीत ॥ २५ ॥

किं च आत्मा सुखमनौपाधिकप्रेमगोचरत्वात् यन्नैवं तन्नैवं यथा दुःखादीत्यनुमानान्तरमाह । प्रेमेति । अनुपाधिरिति । अन्याप्रयुक्त इत्यर्थः । असुखात्मनि सु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वव्यतिरिक्ते प्रत्यगात्मनि निष्कृष्टाहङ्कारतत्साक्षिचै
तन्ये क्रमेरपीति बहुलदुःखप्राणिनामप्यात्मनि प्रेमा दृ
श्यते किमु वक्तव्यं विशिष्टात्मनामिति द्योतितम्। ऊ
मीणामपि स्वदुःखपरिहाराय धावनादिदर्शनेनास्त्ये
स्वदुःखे द्वेषः स च तदात्मनि तेषां प्रेमाभावे नोपपद्य
ते उदासीननरदुःखद्वेषादर्शनादिति भाव-। ननु कृमी
णामन्येषां वात्मनि कथं स भवेत्सिद्धे तदयोगादित्या
शङ्क्य सर्वानुभवसिद्धः कथं स निराकार्य इत्याह। नि
त्यसिद्ध इति। सदानुभवसिद्ध इत्यर्थः। दृश्यते हि
नपुत्रादौ सिद्धेऽपि पित्रादेस्तत्साध्योपकारमप्रतिस
धतोऽपि प्रेमा एवमात्मन्यपि निरतिशयसुखरूपे स
विरुध्यत इत्यर्थः। किं च तदेतत्प्रेयः पुत्रात्प्रेय वित्ता
त्यादिश्रुतितोऽप्यात्मनि नित्यसिद्धे स सिद्ध इत्याह
प्रेयःश्रुतेरिति। तत इति व्याप्तस्य हेतोः पक्षध
त्वादित्यर्थः। नैयायिकोऽपीति। अपिशब्दान्मीमां
सकादिरपि नैयायिको ह्यनुमानस्य द्वे अङ्गे व्याप्ति
पक्षधर्मता चेत्याहेति स्वाभिमताङ्गयुक्तम् आत्म
सुखतानुमानं न निह्नुवीत न निराकुर्यात् किमु व
क्तव्यं श्रुतिप्रधानो मीमांसकादिरिति भावः। न च
त्मनि दुःखित्वग्राहकप्रत्यक्षबाधः दुः खित्वादेरुपाधि
र्मतया दृगात्मनि सुखतानुमानस्य ततो भिन्नविषयत्वा
दित्याह॥ दृगात्मनीति॥ २५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनन्दविग्रहमपास्तसमस्तदुःखं
वस्तुस्वभावपरिवर्जितसर्वभेदम् ॥
आत्मानमध्ययनविध्यनुसारिणस्तं
प्रत्यक्षतः श्रुतिशिरःसु समामनन्ति ॥ २६ ॥

प्रत्यक्षलिङ्गवचनानीति श्लोकोक्तं प्रत्यक्षमनुमानं च दर्शितम्, इदानीं वचनशब्दितां श्रुतिमपि तत्राह । आनन्दविग्रहमिति । आनन्दस्वरूपमित्यर्थः । अपास्तसमस्तदुःखमिति तस्य प्रेक्षावन्मुमुक्षूपादेयत्वं द्योतितम् । ननु सद्वितीये जीवे नाल्पे सुखमस्तीति सुखनिषेधात्कथं तस्यानन्दरूपत्वमिति तत्राह । वस्तुस्वभावेति । यद्यपि जीवस्वरूपं सप्रपञ्चं प्रतीयते, तथापि यत्र नान्यत्पश्यति नान्यच्छृणोतीत्यादिश्रुतिसिद्धमद्वयं ब्रह्मैव तस्य वास्तवं स्वरूपमिति नासावल्पः, तथा च न सुखनिषेधश्रुतेरयं विषय इति भावः । ननु स्वर्गकामादिवाक्यात्सुखवत्त्वमेवात्मनो गम्यते न सुखरूपत्वमिति तत्राह । अध्ययनेति । अध्ययनविधिर्हि स्वाध्यायशब्दोपस्थितकृत्स्नस्वशाखाया अध्ययनं विधत्ते न तु कर्मकाण्डमात्रस्य । एवं चाधीतोपनिषत्काः साधनचतुष्टयसम्पन्नास्तद्गतानि न लिप्यते लोकदुःखेन बाह्यः योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, विज्ञानमानन्दं ब्रह्म एषोऽस्य परम आनन्दः, यो वै भूमा तत्सुखमित्यादीनि प्रत्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षवाक्यानि आनन्दात्मप्रतिपादकानि आमनन्ति प- ठन्ति । पठ्यमानवेदान्तवाक्यान्निर्दुःखनित्यसुखविग्रहं हग्रूपं भूमानमात्मानमवगच्छन्तीत्यर्थः । अथ वा वे- दोषरा वेदान्ता इति मतेन तेषामर्थशून्यत्वात्तत आन- न्दाद्यसिद्धिमाशङ्क्याध्ययनविधेर्दृष्टार्थत्वात्कर्मवाक्य- वत्तेषामप्यर्थवत्त्वं दुरपह्नवमित्याह । अध्ययनेति। यः प्रत्यक्षानुमानाभ्यां सिद्धस्तमात्मानमानन्दविग्रहमि- ति सम्बन्धः । एतदुक्तं भवति । उक्तं तावदनृतजडविरो- धीत्यत्रात्मा जडाहङ्कारविलक्षणश्चिद्रूप इति । ननु स- त्यमुक्तं तदेवानुपपन्नं ज्ञानस्यानित्यत्वादिति चेन्न। ज्ञा- नपदवाच्यवृत्तेरनित्यत्वेऽपि तदाश्रयसाक्षिचैतन्यस्य त- दभावात् । तथाहि । अस्ति तावद्देवदत्तादेः सुखदुःखा- दिसाक्षात्कारः, स च घटादिसाक्षात्कार इव चक्षुरादि- ना केन चित्करणेन न साध्यते, तत्र प्रमाणाभावात् । न च सुखाद्युपलब्धिः सकरणिका क्रियात्वादिति तत्कार- णं मनः सिध्यतीति वाच्यम् । तत्क्रियात्वस्यासिद्धेः । न च साक्षात्कारत्वात्तत्सिद्धिः । तस्य नित्यत्वेऽप्युपपत्तेः । किं च सुखाद्युत्पत्तिसमयभाविनस्तज्ज्ञानस्य तदा वि- षयासक्तमनोजन्यत्वमनुपपन्नम् । न च द्वितीयक्षण एव सुखादिज्ञानमिति वाच्यम् । प्रमाणाभावात्, प्रथमक्षणेऽ- ज्ञातसुखसत्त्वे प्रमाणप्रयोजनयोरभावाच्च, द्वितीयक्षणेऽ- पि सुखाद्युत्पादकमनःसंयोगस्यान्यथासिद्धतया ततस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ज्ञानासम्भवाच्च । न वा विषयासमवायिकारणस्य ज्ञानासमवायिकारणत्वं क्व चिद् दृष्टम्, संयोगान्तरकल्पने चासमवायिकारणनाशेन नष्टसुखादेरनुभवासम्भवाच्च। कथं तर्हि सुखज्ञानमुत्पन्नं विनष्टमित्यनुभव इति चेन्न तावत्सुखादिस्थितिसमये तज्ज्ञानस्योत्पत्तिविनाशानुभवोऽस्ति येन ज्ञाने पृथगुत्पत्त्यादि सिध्येत्। सुखादुत्पत्त्यादिदशायां तदनुभवस्य तदुत्पत्त्यादिविषयतयान्यथासिद्धत्वेन तदसाधकत्वात्, तस्मात्सुखाद्युपलक्षिततदनुभवस्य दुःखादिसमयेऽपि स्थितेस्तदुत्पादककरणाऽनिरूपणात्सुखादिविशिष्टतदुत्पत्त्यादेरन्यथासिद्धत्वान्नास्त्येव सुखानुभवोत्पत्त्यादिरेवं तद्भेदानुभवस्यापीत्यबाधितलाघवात् सुखदुःखादिविषयानुभव एक एव स एव पुरुषान्तरस्यापि सुखादिसाधक इति जगन्मात्रसाधकं चैतन्यमेकं तस्यैव घटादेरपि प्रकाशकत्वात्स चात्मैव श्रुतिसिद्धस्तदभेदस्य बाधकाभावादिति चिद्रूप एव आत्मा। एवमुक्तानुमानेन तस्यानन्दत्वसिद्धावानन्दस्य दुःखविरोधित्वेन निर्दुःखत्वमात्मनोऽनित्यत्वायोगेन नित्यत्वं च सिद्धमिति निर्दुःखनित्यचित्सुखविग्रह आत्मा, एवं सर्वस्य प्रपञ्चस्य दृश्यतया वक्ष्यमाणन्यायाच्चानिर्वचनीयत्वसिद्धौ सजातीयादिभेदशून्योऽपीत्युक्तात्मसिद्धिः। एतच्च वेदान्तवेद्यसमस्तस्वरूपोपलक्षणतयोक्तं तत्र कथं जडप्रपञ्चस्य व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तुतः सम्भव इति। कथं तर्हि एतदनुभवः, अध्यासात्। असम्भावितस्यानुभवसिद्धस्याध्यासनियमात् ॥ २६॥

अध्यस्तमल्पवपुरस्य न वास्तवं तत्
प्रत्यक्पराग्द्वयमिदं हि परस्परस्मिन् ॥
अध्यस्ततां प्रति समर्थमबोधमात्र-
मन्योऽन्यरूपमिथुनीकरणे निमित्तम् ॥ २७॥

ननु प्रपञ्चो नाध्यस्तो बाधकाभावान्न च शुक्ति-रजतादिवद्बाधोऽस्तीत्याशङ्क्य तदध्यस्तताग्राहकं प्रमाणमेव तद्बाधकमित्याह। अध्यस्तमिति। आरोपितमित्यर्थः। बाह्याध्यात्मिकप्रपञ्चोऽध्यस्तो न वास्तव इति वा परिच्छिन्नत्वाच्छुक्तिरजतादिवदित्यभिप्रेत्याह अल्पवपुरिति। अस्यात्मनोऽल्पं वपुरिव वपुर्यथा प्रसिद्धं वपुः स्वातिरिक्तमात्मानं स्वस्वरूपेण निरूपयदवच्छिनत्त्येवमहङ्कारादिरपि सच्चिद्रूपमात्मानं स्वोरूपेण भासयतीति वपुः। एतच्चाध्यस्तत्वोपोद्बलनार्थोक्तम्। ननु सन्घट इत्यादिप्रतीतिविरोधान्नेदमनुमानं साध्वित्याशङ्क्य निरधिष्ठानाध्यासायोगात्सच्चिद्रूपात्मन एव तदधिष्ठानत्वं वाच्यम्। ततश्च सत्यानृतात्मत्वात्प्रपञ्चस्य तत्र सद्बुद्धिरन्यथा सिध्यतीत्याशयेनाह तत्प्रत्यक्पराग्द्वयमिति। तत् अल्पवपुः प्रत्यक्पराग्द्वयसमुदायात्मकमित्यर्थः। न चाप्रयोजकत्वम्। प्रपञ्चविलक्षण आत्मनि प्रपञ्चात्मताया असम्भवस्योक्तत्वात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वध्यस्तमपि शुक्तिरजतादि सत्यमेवेत्यत्राह । न वास्तवमिति । उक्तरीत्या तस्यानिर्वचनीयत्वसाधनादित्यर्थः । अथ वा नन्वधिष्ठानाध्यस्यमानांशद्वयोल्लेखित्वं भ्रमस्य दृष्टमहमिति प्रत्ययस्त्वेकरूपो दृष्टमात्रविषयः कथमध्यास इत्याशङ्कयाह । तत्प्रत्यक्परागिति । अनुभवेऽपि निपुणं निरूप्यमाणे दृग्दृश्यात्मना प्रत्यगंशः परागंशश्च भासते तस्य चेदमनिदंरूपस्य तप्तायःपिण्डवद्विरुद्धोभयरूपत्वादध्यासं विनैकत्वबोधासम्भवादेतदुभयं परस्परस्मिन्परस्परात्मत्वेनाध्यस्ततां प्रति योग्यमित्यर्थः । ननु प्रत्यक्पराचोः सादृश्याभावाद्विशुद्धे चात्मनि दोषस्याप्यसम्भवादारोप्यस्य च पूर्वमननुभवेन संस्काराभावात् कथं परस्पराध्यास इत्यत आह । अबोधमात्रमिति । स्फुरतोऽपि तत्त्वानवबोधः सर्वत्राध्यासपुष्कलकारणं स चात्मन्यनुभवसिद्धश्चेत्कात्र विसामग्रीत्यर्थः । अन्योऽन्येति । अन्योऽन्यार्थाध्यासे मिथुनीकरणे चेत्यर्थः। प्रत्यक्पराग्रूपं ह्यन्योऽन्यात्मकमन्योऽन्यधर्मवच्चाध्यस्तं तस्य मिथुनीकरणं नाम ज्ञानाध्यासस्तदुभयावच्छिन्नमेकं ज्ञानमिति यावत्। असंसर्गाग्रहनिबन्धनत्वानभ्युपगमादित्युभयत्राज्ञानमेव निमित्तमिति भावः। ततश्च प्रत्यगज्ञानमेव बुद्ध्याद्यात्मना तदुभयोपरक्तज्ञानात्मना च परिणममानमहमिति साक्षिविषयः,तदुक्तम्,अविद्यैव बाह्यदोषापेक्षया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजताद्याकारेण साक्षिचैतन्यस्य रजतावच्छेदकज्ञाना
भासाकारेण च परिणममाना स्वकार्येण सह साक्षिवि
षयत्वमापद्यत इति। अयमर्थः। दुष्टेन्द्रियस्य शुक्तिसंनि
कर्षादिदमिति प्रमाणवृत्तिर्भवति, तत्प्रतिफलितशुक्त्य
वच्छिन्नचैतन्यनिष्ठशुक्तित्वाज्ञानं रागसंस्कारादिसचि
शुक्त्या सह मिथ्यातादात्म्यापन्नरजतात्मना परिणम
ते, इदमाकारवृत्त्यवच्छिन्नचिन्निष्ठशुक्तिविषयत्वाज्ञा
तु ज्ञानसंस्कारसहकृतं साक्षिरजतसम्बन्धापादकरजत
ज्ञानात्मना, तच्च जडत्वान्न स्वविषयसाधकमिति सवि
लासाज्ञानं साक्षिविषय इति । अत्र केचित्। किं रजत
ज्ञानात्मकाऽविद्यावृत्त्या, तया विनापीदमाकारवृत्त्यभि
व्यक्तसाक्षिणैव रजतप्रतिभासोपपत्तेः, अध्यस्तरजता
प्रमाणागम्यत्वेनावरणरहितत्वात् , आवरणाभिभवा
चिदुपरागार्थं वा वृत्तेरन्यत्र स्वीकारात्,अत एव ज्ञानसु
खादौ न वृत्त्यन्तरमुपेयते तेषामनावृतचैतन्याध्यस्तत्वा
देव भानसम्भवादन्यथा वृत्तावपि वृत्त्यन्तरापेक्षायामन
वस्थापत्तेः,नापि संस्कारार्था वृत्तिः, रजतविशिष्टचिदं
शेनैव सुखादाविव तज्जननात्,न चार्थनाशजसंस्कारस्
स्मृत्यहेतुत्वाद्व वृत्तिसिद्धिः;सुखादावेव तत्कल्पनात्, वृ
त्त्यन्तरापेक्षया धर्मकल्पनामात्रत्वेन लघुत्वाच्च,न च ज्ञान
संस्कारस्यार्थाहेतुत्वम्,अन्वयव्यतिरेकाभ्यामिहैव तत्क
ल्पनात्, अत एव प्रातीतिकं रजतम्,दोषादेरप्यावश्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करजतोत्पादेनैवार्थवत्त्वमिति वदन्ति। अत्रोच्यते। अनावृतचैतन्या व्यस्ततामात्रस्य जडभानप्रयोजकत्वेऽनुमेयवह्न्यादेरभानापत्तिः, तत्र विषयगतावरणभङ्गानङ्गीकारात्। कथं तर्हि तत्र वह्निभानम्, अनुमानरूपवृत्त्यान्तःकरणावच्छेदेन वह्निविषयकाज्ञानापसरणात्। वह्निमहं न जानामीत्यनुभवेन वह्नावात्मनि चाज्ञानसाधनात्तदन्यतरावरणभङ्गस्य च वह्निव्यवहारहेतुत्वमिति वक्ष्यते। ततश्च तदाकारवृत्तिविषयत्वमेवास्वच्छतामसेषु भानप्रयोजकमास्थेयम्। स्वच्छान्तःकरणसुखादिभाने च वृत्तिं विनापि तदाकारत्वसंभवाच्चित्प्रतिविम्बाश्रयत्वमपीति जडप्रतिभासे द्वय्येव गतिः। चैतन्यं हि यदाकारवृत्तौ प्रतिविम्बते तद्भासयति प्रतिबिम्बाश्रयं च वृत्त्यादिकं तथा दर्शनात्। न च क्व चिद्व वृत्तिः क्व चित्प्रतिविम्बाश्रयत्वं तन्त्रमित्यननुगमः। सर्वजडप्रतिभासानुगतं हि चैतन्याकारत्वमेव प्रयोजकं ब्रूमः। चैतन्यं यदाकारं भवति तत्प्रतिभासत इत्यर्थः। चैतन्यस्य तदाकारत्वं न स्वतोऽसङ्गत्वात्। किं तु क्व चित्प्रतिविम्बात्क्व चित्तदाकारवृत्तिसंबन्धादित्यन्यदेतत्। तत्र सात्त्विकान्तःकरणतद्धर्मेषु प्रतिविम्बात् तामसेषु तदाकारवृत्तिसंबन्धादेवेति कुतो रजताकारवृत्तिं विना तद्भानम्। न चाध्यस्तरजतस्य अस्वच्छतामसस्य चित्प्रतिविम्बाश्रयत्वमभ्युपगन्तुं युक्तमस्वच्छरजतसंस्कारसंस्कृताऽवि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्यारब्धत्वेनास्वच्छत्वादिति सिद्धाऽविद्यावृत्तिः । न
परोक्षे तदाकारवृत्तिरपरोक्षे त्वनावृतचिदध्यस्तत्वं
न्त्रमस्तु । मैवम् । सामान्यसामग्रीं विना विशे
सामग्र्या अहेतुत्वेन तत्राप्यस्वच्छतामसमात्रभानहे
वृत्तिविषयत्वस्यापरिहार्यत्वात्।किं च रजतस्य वि
यावच्छिन्नसाक्षिभास्यत्वे अहं रजतवानिति प्रती
स्यान्न त्वहं रजतज्ञानवानिति । किं च त्वन्मतेऽर्थ
स्कारस्य स्मृतिहेतुत्वं ज्ञानसामग्र्या अर्थहेतुत्वं चाक्
कल्प्यमिति गौरवम्। प्रातीतिकत्वं च प्रतीतिकाला
कालासत्त्वं न तु प्रतीतिजन्यत्वं संस्कारादेरपि प्राती
कत्वापत्तेः । न च साक्षिकालान्यकालः संभवती
विद्यावृत्तिरेव तत्प्रतीतिः।ननु तवाप्यविद्यावृत्ते रज
विषयत्वाद्धीवृत्तेश्चेदंमात्रविषयत्वादिष्टपुरोवर्तिविशि
विषयं वृत्त्यन्तरप्रवर्तकं कल्प्यमिति गौरवमिति चेव
एकावच्छिन्नजलदर्पणयोरेकमुखप्रतिबिम्बवदेकताप
सत्यमिथ्यावस्तुद्वयेऽप्येकप्रतिभासाभ्युपगमेन शुक्त्यभे
पन्नरजतस्फुरणस्य फलस्यैकत्वात् प्रवृत्त्युपपत्तेरि
संक्षेपः ॥ २७ ॥

सादृश्यधीप्रभृति न त्रितयं निमित्त-
मध्यासभूमिषु जगत्यनुगच्छतीदम् ॥
ब्राह्मण्यजातिपरिकल्पनमात्मनीष्टं
जात्या न साम्यमुपलब्धमिहास्ति किं चित्॥२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सादृश्यज्ञानादेरध्यासहेतुत्वं व्यभिचारेण निरस्यति । साहृश्यधीति । सर्वाध्यासाननुगतत्वान्न हेतुत्वाभिमतमेतत्त्रितयं साहृश्यधीदोषसंस्कारात्मकमध्यासनिमित्तमित्यर्थः । साहृश्यधियो व्यभिचारस्थानमाह । ब्राह्मण्येति। ब्राह्मणोऽहमिति जात्यध्यास आत्मनि सर्वैरिष्यते, अन्यथा ब्राह्मणो यजेत ब्राह्मणो न हन्तव्य इति विधिनिषेधव्यवस्थानुपपत्तिः, तत्र च न साहृश्यमस्तीत्यर्थः । ननु सोऽपि त्रितयनिमित्तोऽध्यासत्वादिति नेत्याह । जात्येति । आत्मनि हि जात्या साहृश्यमनुपलब्धिबाधितम्, द्वयोरपि गुणक्रियावयवशून्यत्वान्न तस्य प्रतिमेतिश्रुतेश्चेत्यर्थः। ततश्च रजताद्यध्यासेष्वार्थिकं तत्त्रयं न त्वध्यासमात्राङ्गमिति भावः ॥ २८ ॥

भूयस्त्ववत्तनुगुणावयवक्रियाणां
सामान्यपूगवपुरुक्तमिहाभियुक्तैः ॥
सादृश्यवस्तु न चिदात्मनि किं चिदत्र
जात्यादिभिः सह निरीक्षितमस्ति ताहक् ॥२९॥

नन्वत्रापि प्रमेयत्वादिना सादृश्यमस्तीत्याशङ्क्य न तादृक्साहृश्यमध्यासप्रयोजकमतिप्रसङ्गात्, किन्तु भूयोऽवयवगुणादिसाम्यम्, न चैतयोस्तदस्तीत्याह। भूयस्त्ववदिति। एतच्च सामान्यपूगवपुषो विशेषणम्, गुणावयवादीनां बहूनामनेकसामान्यात्मकमित्यर्थः। अथ वा इह गोगवयादावभियुक्तैर्जैमिन्यादिभिः सामान्यपूगात्मकं साहृ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्यवस्तूक्तमित्यन्वयः। कासां व्यक्तीनामित्यत्राह। भूय-स्त्वत्रतीनां गत्रादितनुगतगुणावयवक्रियाणामिति। गुणानां शुक्लत्वदीर्घत्वादीनि सामान्यान्यवयवानां पादपृष्ठत्वादीनि क्रियाणां गमनभक्षणचर्वणत्वादीनि तेषां पूसमूह एव वपुर्यस्य। नन्विति पाठे गुणादीनां भूयस्त्साहश्यं वस्तूक्तमिति स्वार्थे वतिर्व्याख्येयः। नन्वाकाशवत्सर्वगतश्च नित्य इति वैदिकप्रयोगादध्यासानुपपत्त्या चात्मन्यपि किं चित्साहश्यं कल्प्यमित्याशङ्क्याहनेति। अत्र चिन्मात्रात्मनि न ताहगपि साहश्यं किंचिदस्तीत्यर्थः। न च नित्यत्वसर्वगतत्वाद्यपि जातिसाहश्यम्, अनुवृत्तकारणात्मिकाया जातेरनित्यत्वाज्जतावदृत्तेरसर्वगतत्वाच्चेति भावः ॥ २९ ॥

विषयकरणदोषान्न भ्रमः संविदि स्या-
दपि तु भवति मोहात् केवलादेवमेव ॥
भगवति परमात्मन्यद्वितीये विचित्रा
द्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ ३० ॥

दोषस्य व्यभिचारस्थलमाह। विषयेति। विषयदोषःसाहश्यादिः, करणदोषः काचादिः, तत्र संविदि प्रमाणफले घटादिज्ञाने यः परेषां वेद्यत्वादिभ्रमः स तावद्विषयदोषात्करणदोषाद्वा न संभवति, संविदः स्वप्रकाशत्वेनाविषयत्वात्करणागोचरत्वाच्च। अस्तु प्रमातृदोषादेवेति चेत्तर्हि दोषान्तरासंभवात् प्रमात्रभिव्यक्तान्मोहा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवेति वक्तव्यं तच्चास्मदिष्टमेवेत्याह। अपि त्विति। तत्र मोहमात्रजत्वसिद्धौ तद्वत्प्रकृतेऽपि मोहैकनिमित्तता साधनीयेत्याह। एवमिति। यथा संविदि वेद्यत्वादिधीर्भ्रमस्तथा परमात्मनि द्वैतबुद्धिरपि यतो भ्रान्तिस्ततोऽज्ञानहेतुरस्त्वित्यन्वयः। अज्ञानजत्वं संभावयति। विचित्रेति। भिन्नाभिन्नत्वसदसत्त्वादिविचारासहत्वेनानिर्वचनीयेत्यर्थः। भ्रान्तिसाधकमाह। अद्वितीये द्वयमतिरिति। अतस्मिंस्तद्बुद्धिरित्यर्थः। इयमिति साक्षिसिद्धत्वमाह। भगवतीत्यनेन महामहिमत्वात्प्रपञ्चरचनासामर्थ्यं सूचितम्। अस्त्विति समर्थने लोट्। अज्ञानजत्वं शक्यसमर्थनमित्यर्थः। एवं सादृश्यधीदोषयोर्व्यभिचार उक्तः। संस्कारोऽपि व्यभिचारी शुक्तिरजतादिवैशिष्ट्यस्य प्रागनुभूतस्यापि भ्रमविषयत्वादिति स्पष्ट...त्वोक्तम्॥ ३०॥

संसिद्धधा सविलासमोहविषये वस्तुन्यधिष्ठानगीर्नाधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान्संभ्रमः॥
केषां चिन्महतामनूनतमसां निर्बन्धमात्राश्रयादन्योऽन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति॥ ३१॥

इदानीं परस्पराध्यासे सत्यात्मनोऽप्यनात्मन्यध्यस्तत्वेन बाध्यत्वान्निरधिष्ठानं सच्छून्यं जगत्स्यादित्याशङ्क्याज्ञानस्य बाधावधेरनध्यस्तस्य च शिष्यमाणत्वान्नोक्तदोष इत्यभिप्रेत्याह। संसिद्धधेति। विलसति व्यक्तीभवति मोहोऽनेनेति विलासो मिथ्यारजतादिः। त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य यतः सविलासाज्ञानावृते वस्तुनि शुक्त्यादावधिष्ठा-
नसंज्ञा प्रसिद्ध्यां, अधितिष्ठति ह्येतं सकार्यो मोह इति
स च नाध्यस्तोऽतोऽयमस्थानेऽविषये शून्यत्वापादनसं-
भ्रम इत्यर्थः । ननु यद्राधारमारोप्यं भासते तदधिष्ठा-
तच्चारोप्येऽध्यस्तमेवान्यथा परस्पराध्यासो न स्यादि-
त्यत आह । नाधार इति । अध्यस्तस्याधारत्वेन भा-
समाने शुक्तीदमंशे नाधिष्ठानगीरित्यर्थः । किं चा-
वले संसृष्टतयाध्यस्तोऽधिष्ठानांश आधारः । तदुक्तम्
अतद्रूपोऽपि तद्रूपेणारोप्यबुद्धौ स्फुरन्नाधार इति ।
चासावधिष्ठानं भवितुमर्हति, परस्पराश्रयात्, अधिष्ठा-
सत्यध्यासोऽध्यासे सत्यधिष्ठानमितीति भावः । य-
द्वा अन्योऽन्याध्यासे निरास्पदं सच्छून्यं जगत्स्यादि-
तर्केण केषांचिद्वादिनं जेतुं महानयं संभ्रम उत्साहोऽस्था-
ने न युक्तमित्यर्थः । संभ्रमे हेतुमाह । महतामिति
अनूनं तमोज्ञानं येषां तेषां मध्ये महतां शून्यवादि-
नां निर्बन्धः परमतखण्डने श्रद्धातिशयः । यद्वा निरा-
स्पदमिदं चोद्यं निर्विषयमित्यर्थः ॥ ३१ ॥

अधिष्ठानमाधारमात्रं यदि स्यात्
प्रसज्येत सत्यं तदा चोद्यमेतत् ॥
न चैतत् सकार्यस्य मोहस्य वस्तु-
न्यधिष्ठानगीर्गोचरे लोकसिद्धा ॥ ३२ ॥

नन्वधिष्ठानमेवाधारस्तदाश्रयविषयाज्ञानकार्यस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यस्तस्यान्याधारत्वायोगादतः कथमुक्तरीत्या शून्यतो-द्धार इत्याशङ्क्याह । अधिष्ठानमिति । यन्निष्ठतया मिथ्यारजतादि भासते सोऽधिष्ठानसामान्यांश आधार इत्युक्तं तन्मात्रमेव चेदधिष्ठानं स्यात्सत्यं शून्यता प्रसज्येत न तु तथेत्यर्थः । यतः सकार्यमोहविषये विशेषांश एवाधिष्ठानगीर्लोकसिद्धा तद्बोधादेव हि भ्रमो निवर्तते तेन य एव लौकिका इति न्यायेन तथैव शास्त्रेऽपीति नोक्तदोष इत्यर्थः। अत्र केचित्,अध्यस्तमेव हीति न्यायाद्भ्रमविषय इदमंशः सत्येदमंशाद्भिन्नः स चाविद्यावृत्तिगोचरो बाध्यः , शुक्तीदमंशस्तु प्रमाणवृत्तिगोचरो न बाध्यः, न चेदन्ताद्वयविवेकापत्तिः , विवेचकस्य शुक्तित्वादेरावृतत्वात्तद्विवेकाग्रहस्याध्यासहेतुत्वाच्च, न चाविद्यावृत्त्या शुक्तीदन्ताऽभेदेनैव रजतं बोध्यतां किं मिथ्येदन्तयेति वाच्यम् , प्रमाणवृत्त्यविद्यावृत्त्योर्विरुद्धयोरेकत्र कार्येऽप्रवृत्तेः , न चाविद्यावृत्तेर्नेदन्त्वं विषयः, रजतप्रतीतिरिदमि प्रथत इत्यादिविरोधादिति वदन्ति।तन्न, उक्तरीत्या शुक्तीदन्तासंसर्गाध्यासेनैवेदं रजतमित्यध्यासोपपत्तौ मिथ्येदन्त्वकल्पने मानाभावाद्गौरवात्किं चेत्युत्तरश्लोकविरोधाच्च। अध्यस्तमेव हीति स्वरूपेण संसृष्टतया वाध्यस्तमेव भ्रमविषय इत्यर्थः । प्रमाणवृत्त्यविद्यावृत्त्योरेकस्फुरणेनैककार्यत्वस्योपपादितत्वात् । चित्सुखाचार्यैरपीदन्तासंसर्गोऽ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्यनिर्वचनीय इत्युक्तं नेदन्त्वमिति दिक् ॥ ३२ ॥

किं चानृतद्वयमिहाध्यसितव्यमिष्टं
स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम् ॥
सत्यानृतात्मकमिदं मिथुनं मिथश्चे-
दध्यस्यते किमिति शून्यकथाप्रसङ्गः ॥ ३३ ॥

इदानीमाधारावष्टम्भेनापि सत्यानृतमिथुनीकरण
तया संसर्गबाधेऽप्याधारस्वरूपाबाधाच्छून्यतापत्ति
पहस्तयति । किं चेति । इहान्योऽन्याध्यासे यद्यनृतद्व
यमेव परस्परात्मतयाध्यसितव्यमिष्टं स्यात्तदा शून्य
प्रसज्येत द्वयोरपि बाध्यत्वात् । न चैवं किं तु स
प्रत्यक्,अनृतं परागर्थः स्वरूपतोऽप्यध्यस्तत्वात्,तयो
थोऽध्यासश्चेत्, प्रतीचः पराक्संसृष्टत्वाकारेण बाध्यत्वे
पि स्वरूपेण सत्यत्वान्न शून्यप्रसङ्ग इत्यर्थः ॥ ३३ ॥

इदमर्थवस्त्वपि भवेद्रजते
परिकल्पितं रजतवस्त्विदमि ॥
रजतभ्रमेऽस्य च परिस्फुरणा-
न्न यदि स्फुरेन्न खलु शुक्तिरिव ॥ ३४ ॥

नन्वन्योऽन्याध्यास एव किं प्रमाणमित्याशङ्क्या
ङ्काराध्यासस्यास्फुटत्वात्प्रसिद्ध एव रजताध्यासे तं
थमं साधयति । इदमर्थेति । रजतं तावदिदमि शुक्त्या
दावध्यस्तमिति सम्प्रतिपन्नमेव, इदमंशोऽपि रजतेऽध्य
स्त इति साध्ये हेतुमाह । रजतभ्रम इति । भ्रान्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भासमानत्वाद्रजतवदित्यर्थः । व्यतिरेके शुक्तिविशेषांशवदित्यर्थः । यद्वा यदीदन्त्वमनध्यस्तं स्यान्न भ्रमे स्फुरेच्छुक्तिवदिति तर्क उक्तः। रजते पुरोवर्तित्वलक्षणेदन्त्वास्फुरणे तदर्थिप्रवृत्तिरपि न स्यादिति निगर्वः ॥३४॥

रजतप्रतीतिरिदमि प्रथते
ननु यद्वदेवमिदमित्यपि धीः ॥
रजते तया सति कथं न भवे-
दितरेतराध्यसननिर्णयधीः ॥ ३५ ॥

एवमर्थाध्यासेऽनुमानमुक्त्वा ज्ञानाध्यासेऽध्यक्षं प्रमाणयति। रजतेति। एकैवेदं रजतमिति धीस्तत्र यथा रजतस्येदमा तादात्म्यं भासत एवमिदमोऽपि रजततादात्म्यमित्यनुभव एवात्रेतरेतराध्यासे मानमित्यर्थः॥ ३५ ॥

अध्यस्तमेव हि परिस्फुरति भ्रमेषु
नान्यत् कथं चन परिस्फुरति भ्रमेषु ॥
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकानुपलम्भनेन ॥ ३६ ॥

उक्तानुमानमूलभूतां व्याप्तिं प्रकटयति। अध्यस्तमेव हीति। अध्यस्तस्यैव भ्रमे स्फुरणादिदमंशोऽप्यध्यस्त इति साधितमित्यर्थः । ननु सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायादनध्यस्तोऽपीदमंशः प्रथतामिति नेत्याह । नान्यदिति । अन्यत्स्वरूपेण संसृष्टतया वा अनध्यस्तमित्यर्थः । धर्मिण्यभ्रान्तमिति च धर्मिस्वरूपे अ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भ्रान्तं न तु संसर्गोऽपीत्यर्थः । कथं न स्फुरतीति चेद्-
नुभवबाधादेवेत्याह । भ्रमेष्विति । सर्परजतमरीचिद्वि-
चन्द्रादिभ्रमेष्वनध्यस्तानां रज्जुत्वादीनां स्फुरणानुपल-
म्भादित्यर्थः ॥ ३६ ॥

इतरेतराध्यसनमेव तत-
श्चितिचेत्ययोरपि भवेदुचितम् ॥
रजतभ्रमादिषु तथावगमा-
न्न हि कल्पना गुरुतरा घटते ॥ ३७ ॥

ननु रजतादिभ्रमे द्वैरूप्यावभासादस्तु परस्पराध्या-
सो न त्वहमध्यासे तत्र द्वैरूप्यानवभासादित्याशङ्क्य त-
द्दृष्टान्तेनात्रापि साधनीयमित्याह । इतरेति । चिति-
चेत्ययोर्योऽयमहमित्यध्यासः सोऽपि ततोऽध्यासत्वादे-
हेतोरितरेतराध्यासः स्याद्रजताध्यासवदन्यथाध्यासद्वै-
रूप्यकल्पनानुचिता स्यादित्यर्थः । अत एवाहमुपल-
इत्यहमि चैतन्यानुभवः । व्याप्तिं स्मारयति । रजतेति
प्रकारान्तरेण कल्पनागौरवमाह । न हीति । द्वैरूप्याव-
भासश्चात्रापि विवेकिनामस्त्येवेति भावः । चित्रादिशब्द-
वच्चाहंशब्दस्य शबलवाचित्वान्न शब्दद्वयप्रयोगः ॥ ३७ ॥

अनुभूतियुक्त्यनुमितित्रितया-
दितरेतराध्यसनसिद्धिरतः ॥
चितिचेत्यवस्तुयुगलस्य न चेत्
वितयस्य बाधनमिहापतति ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपपादितमितरेतराध्यासं सोपपत्तिकमुपसंहरति । अनुभूतीति । अस्मात्पूर्वोक्तानुभवयुक्त्यनुमानरूपात्त्रितयाच्चितिचेत्ययुगलेतरेतराध्याससिद्धिः, अन्यथा त्रितयस्यापि बाधापत्तेरित्यर्थः ॥ ३८ ॥

सदृशसांशपराग्विषयेषु चेद्
भवति दोषवशाज्जगति भ्रमः ॥
भवतु तत् सकलं वदितुं वयं
तदुपचारवशाद् दृशि शक्नुमः॥ ३९ ॥

नन्वज्ञातत्वे सादृश्यादिरहितस्य निरंशस्य प्रतीचो विषयिणः कथमध्यासाधिष्ठानत्वं लोके सदृशसावयवपराग्विषयाणामेव शुक्त्यादीनामधिष्ठानत्वदर्शनादिति शङ्कते । सदृशेति । कथं चित्सादृश्यादिसंपादनेन प्रौढ्या परिहरति । भवत्विति । उपचारो व्यवहारः, तत्सामर्थ्याच्चिद्रूपेऽप्यात्मनि तत्सर्वं सुवचमित्यर्थः । तथाह्यन्तःकरणस्य देहेन्द्रियापेक्षया प्रत्यक्त्वं स्वच्छत्वं चास्ति चैतन्यसादृश्यम् । सांशत्वमपि चैतन्यस्याविद्यावशादखण्डस्यापि जीवत्वब्रह्मत्वाद्यात्मकमस्ति । पराक्त्वमपि साभासान्तःकरणे तदविविक्तत्वेन स्पष्टीभावाद्विषयतामिवापन्नस्य शक्यमुत्प्रेक्षितुमनादित्वाच्च पूर्वपूर्वापेक्षया सर्वमिदमुत्तरोत्तराध्यासे शक्यसमर्थनमिति भावः॥३९॥

अपि च भाष्यकृदेव तदब्रवीद्
विषयताद्युपचारसमाश्रयात् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वत्रचसैव न तावदिति ब्रुवन्
सकलमात्मनि विभ्रमसिद्धये ॥ ४० ॥

उक्तपरिहारस्यापसिद्धान्तत्वशङ्कामपनयति । अपि चे-ति । न तावदस्मत्कल्पितोऽयं परिहारः किं तु भाष्यकृदेवोपचारमाश्रित्य सर्वमिदं विश्वमात्मनि विभ्रमसिद्ध्यर्थमब्रवीदित्यर्थः । न च भाष्यकृदुक्तिरनुपलब्धिबाधितेत्याह । स्वत्रचसेति । कण्ठरवेणैव न त्वभिप्रायगत्येत्यर्थः । भाष्योक्तिमाह । न तावदिति । अध्यासभाष्ये कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणामित्याक्षिप्य न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वादिति ब्रुवन्नित्यर्थः । अस्मत्प्रत्ययोऽन्तःकरणं तत्राभिव्यक्तः सन्विषय इव भवति स ह्यविद्यायामाभासाविवेकेन सूक्ष्मप्रतिबिम्बात्मना प्रविष्टोऽस्पष्टोऽपि प्रत्युपाधौ साभासान्तःकरणे स्थूलप्रतिबिम्बात्मना प्रविष्टः सञ्छीतभानौ स्वर्भानुवदभिव्यक्तः स्वप्रकाशोऽपि स्पष्टीभावमात्रेणोपचारादस्मत्प्रत्ययविषय इत्युच्यते ॥ ४० ॥

अपरोक्षरूपविषयभ्रमधी-
रपरोक्षमास्पदमपेक्ष्य भवेत् ॥
मनसः स्वतो नयनतो यदि वा
स्वपनभ्रमादिषु तथा प्रथितेः ॥ ४१ ॥

एतच्चाभ्युपेत्योक्तम्, वस्तुतस्त्वपरोक्षाध्यासेऽधिष्ठान

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परोक्ष्यं तन्त्रं न तु सादृश्यादीत्याह। अपरोक्षेति। अपरोक्षरूपाऽपरोक्षविषया च भ्रमधीरपरोक्षाधिष्ठानमात्रमपेक्षते न त्वारोप्याधिष्ठानयोरैकेन्द्रियग्राह्यत्वसादृश्यादिकमपि, व्यभिचारादित्यर्थः। नन्विन्द्रियागोचरस्यात्मनोऽपरोक्षत्वमपि दुर्घटमित्याशङ्क्याह। मनस इति। यदि वेति व्यवस्थार्थम्, क्व चिन्मनसः क्व चित्स्वतः क्व चिच्चक्षुरादित इत्यर्थः। क्वेदमवधारितमित्यत्राह। स्वपनेति ॥ ४१ ॥

स्वतोऽपरोक्षा चितिरत्र विभ्रम-
स्तथापि रूपाकृतिरेव जायते ॥
मनोनिमित्तं स्वपने मुहुर्मुहु-
र्विनापि चक्षुर्विषयं स्वमास्पदम् ॥४२ ॥

नन्वात्मभिन्नस्य स्वतोऽपरोक्षत्वाभावात्तादृशोऽध्यासः क्व संप्रतिपन्न इत्याशङ्क्यात्मनि चैवं विचित्राश्च हीति न्यायसिद्धत्वात्स्वप्नभ्रम इत्याह। स्वत इति। चितिस्तावद् ग्राहकान्तराभावात्स्वसत्तायां संशयादिराहित्यात्स्वयंज्योतिष्ट्वश्रुतेश्च स्वतोऽपरोक्षा, रूपादिहीनतया सादृश्यादिशून्या स्वप्नभ्रमाधिष्ठानम्। तथाप्यत्र चितौ स्वप्ने निद्रादोषाद्रूपाद्याकार एव भ्रमश्चक्षुर्विषयं मनोनिमित्तं वा रूपवदधिष्ठानं विनापि पुनःपुनर्जायते, स हि स्वप्नो भूत्वेति श्रुतेः। यद्वा चक्षुरादिव्यापारोपरमात्कथं रूपाकृतिरित्यत्राह। मनोनिमित्तमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति । मनोगतरूपादिवासनानिमित्तमित्यर्थः । स्वप्ने तैजसजीवभोग्यत्वेन वासनापुञ्जशेषस्य मनसोऽवस्थानात् । अत्रेदं विचारणीयं किं ब्रह्मचैतन्यं स्वप्नभ्रमाधिष्ठानम्, उत जीवचैतन्यमिति । आद्ये व्यावहारिकः सन्नज्ञातसत्ताकः स्वप्नप्रपञ्चः स्यात् । अन्त्येऽपि किं जागरे तस्य बाधः किं वा लय इति । अत्र वदन्ति । अवस्थात्रयाविष्टं ह्यात्मचैतन्यं भवति, स्थूलान्तःकरणोपहितं जागरे, वासनाविशिष्टान्तःकरणोपहितं स्वप्ने । सुषुप्तौ च सूक्ष्मतदुपहितम्, इति । तत्र जाग्रदवस्थोचितं चैतन्यं स्वप्नभ्रमाधिष्ठानम्, जागरादौ चाहं चैत्र इतादृगधिष्ठानबोधात्तद्बाधः । एवं च स्वप्नस्य जाग्रत्प्रपञ्चवैलक्षण्यं सति प्रमातरि बाध्यत्वं वक्ष्यमाणमुपपद्यते । स्वप्नान्ते सुषुप्तिश्चेत् स्वप्नसृष्टेर्लय एव, तदभिप्रायेण च वक्ष्यति क्षीणे तु तत्र लयमेतीत्यादीति न पूर्वोत्तरविरोधः । बुद्ध्याद्युपहितजीवरूपं हि तत्सृष्ट्वा तदेवानुप्राविशदित्यादिश्रुतेरीश्वरकल्पितत्वेन व्यावहारिकत्वाच्छुक्त्यादिवदधिष्ठानत्वयोग्यम्, तन्निष्ठाश्च जीवकल्पिताज्ञानावस्थाः स्वप्नभ्रमोपादानभूता अहं चैत्र इत्यादिजाग्रद्बोधेन बाध्यन्ते, शुक्तिज्ञानेनेव रजतोपादानाज्ञानावस्था इति । न चैवं सत्यहं गजोऽहं नील इति स्वप्नाकारापत्तिरिति वाच्यम् । न हि स्वप्नः सर्वोऽपि तादात्म्याध्यासः किं तु जाग्रत्संस्कारानुसारात्क्वचि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था कश्चित्तु संसर्गाध्यासोऽहं राजायं गजो मम क्षेत्र-मिति तदाकारदर्शनादिति । तदिदमापातरमणीयम् । तथा हि । न तावदीशकल्पितस्थूलान्तःकरणोपहितं चैतन्यं स्वप्नकालेऽस्ति यत्तदधिष्ठानं स्यात्,नापि तज्ज्ञानं जागरादिजन्यं स्वप्नभ्रमबाधकं भवितुमर्हति, तद्धि किं साक्षिज्ञानमविद्यावृत्तिरन्तःकरणवृत्तिर्वा । नाद्यौ, तयोरज्ञानानिवर्तकत्वेनाबाधकत्वात् । नान्त्यः, अन्तःकरणवृत्तेरज्ञातबोधत्वादन्तःकरणस्य चाज्ञातसत्तानभ्युपगमेन प्रमाणावेद्यत्वात् स्वस्मिंश्च स्ववृत्तेरसंभवादित्यलमसद्ग्रहेण । केचिदवच्छिन्नानवच्छिन्नसाधारणं चिन्मात्रं स्वप्नाधिष्ठानमाहुः, तन्न साधारणचिन्मात्रस्य परस्परविरोधे हीत्यादिन्यायेन दुर्निरूपत्वादेव नोपपद्यत इति किं प्रपञ्चेन । शरीरावच्छिन्नं चैतन्यं तदधिष्ठानमित्यपरे । तदतिस्थवीयः । न हि जागरादौ शरीरबोधं विना स्वप्नानिवृत्तिः, घटज्ञानादपि तन्निवृत्तेः । अन्ये त्वाहुरन्तःकरणोपलक्षितं चैतन्यमधिष्ठानमिति, तन्मते शुद्धचित एवाधिष्ठानत्वाज्जागरे स्वप्नस्य न बाधः स्यात्तथा च सति प्रमातरि बाध्यत्वं नोपपद्यते।तस्मादनुपहितचैतन्यं जाग्रत्प्रपञ्चाधिष्ठानम्,तदुपहितं तु स्वप्नप्रपञ्चाधिष्ठानमिति वृद्धाः। एवं च जागरादाववश्यकजाग्रद्वस्तूपहितचिद्गोचरप्रमाणवृत्त्या सति प्रमातरि स्वप्नबाध उपपद्यते। तत्र चाधिष्ठानतावच्छेद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कं घटत्वाद्येव,जाग्रदुपहितत्वमुपलक्षणं सर्वनामशब्दै
बुद्धिस्थत्ववत्। तथा च जाग्रदनुभूतवस्तूपहितमेव ब्र-
ह्मचैतन्यमिन्द्रियोपरमात्तथात्वेनाप्रथमानमुपाधेस्तट-
स्थत्वात्स्वरूपमात्रेण प्रथमानन्निद्रादोषजाग्रत्संस्कारा-
दृष्टसहकृताज्ञानेन सूक्ष्मप्रपञ्चात्मना विवर्तमानं स्वैनै-
व भासते अस्य लोकस्य सर्वावतो मात्रामुपादायेति
श्रुतेः। अत्र तिरोहितजाग्रदुपाधिविशेषस्य चैतन्यमा-
त्रस्य स्वतोऽपरोक्षस्फुरणमेवाधिष्ठानसामान्यज्ञानमज्ञा-
तोपाधेश्चोपहितानवभासादधिष्ठानतावच्छेदकजाग्रद्घ-
टाद्याकारधिया बाधः। मूलाज्ञानाकार्यत्वादविद्यातिरि-
क्तदोषजन्यत्वाच्च स्वप्नस्य न व्यावहारिकतेति दिक् ॥४

मनोऽवगम्येऽप्यपरोक्षताबलात्
तथाम्बरे रूपमुपोल्लिखभ्रमः ॥
सितादिभेदैर्बहुधा समीक्ष्यते
यथाक्षिगम्ये रजतादिविभ्रमः ॥ ४३ ॥

आरोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वस्य व्यभिचा
वक्तुं मनःप्रमाणत्वाभ्युपेत्यवादेन मानसे नभ
चाक्षुषाध्यासं दर्शयति । मनोऽवगम्येऽपीति । म
नसापरोक्षेऽप्यम्बरेऽधिष्ठानेऽपरोक्षतामात्रसामर्थ्याच्छु
नभो नीलं नभ इति नानारूपोल्लेखी भ्रमो द
श्यतेऽतो नोक्तनियम इत्यर्थः । एवं स्वतोऽपरो
मनोऽपरोक्षे च स्वप्नभ्रमनभोनैल्यभ्रमानुदाहृत्य नयन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यस्योदाहरणमाह । यथाक्षिगम्य इति । व्याख्यातम् । ननु नाकाशो मानसो बाह्यत्वान्मनसो बहिरस्वातन्त्र्याद-पि तु साक्षिवेद्य एवेति चेन्न। बाह्यस्य प्रमाणेनैव ज्ञातत-या साक्षिवेद्यत्वात्, नभसश्च बहिरिन्द्रियागोचरस्य मा-नसत्वमन्तरेणाज्ञाततयैव भानप्रसङ्गात्तदुक्तम् । ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षत इति । कथं तर्हि सुखा-देः कल्पितरजतादेश्च ज्ञातत्वेनानुभव इति चेत्, तेषा-मान्तरत्वेनानावृतत्वाद्बाह्यस्य तु नभसो घटादिवदा-वृतत्वेनावरणभङ्गाय प्रमाणापेक्षणान्मनोवेद्यत्वमग-त्याभ्युपेयम् । न च तस्य बहिरस्वातन्त्र्यम्, मनसा ह्ये-व पश्यतीत्यादिश्रुत्या बाह्यानामपि मनोवेद्यताया दर्शितत्वात्, बहिरस्वातन्त्र्योक्तिश्च केवलमनोविषया। न चानर्पिताकारं मनः साक्षात्कारसमर्थमिति चक्षुरेव त-त्राकारार्पकमुपेयम् । ननु कथं नीरूपे नभसि चक्षुषः प्र-वृत्तिस्तस्य रूपपुरस्कारेणैव द्रव्येषु प्रवृत्तेरिति चेत्, सत्य-मेतन्न स्वीयरूपपुरस्कारेणेत्यत्र किंचिन्नियामकमस्ति, पीतः शङ्खो रक्तः स्फटिक इत्यन्यरूपद्वारापि चक्षुःप्रवृत्ति-दर्शनात् । न च तत्र रूपवृत्तेः शौक्ल्यस्यैवाभिभवो न रूपस्येति वाच्यम् । तथाप्युद्भूताभिभूतरूपस्पर्शस्य सु-वर्णस्याचाक्षुषत्वप्रसङ्गात्ततश्चालोकादिरूपोपहिते नभ-सि तद्द्वारापि चक्षुःप्रवृत्त्यविरोधः । अप्रत्यक्षेऽपि ह्याका-श इति भाष्यं तु रूपानुपधानकालाभिप्रायं परमतेन वा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चान्यरूपद्वारापि रूपवत्त्येव चक्षुःप्रवृत्तिर्गौरवादुद्- भूतरूपं गृह्णदेव चक्षुः प्रवर्तते न तूद्भूतरूपवत्त्येवेति। अस्तु तर्हि चाक्षुषमेव नभ इति चेन्न। अरूपिद्रव्यत्वा- न्महत्त्वे सत्युद्भूतरूपवत्त्वस्य द्रव्यचाक्षुषत्वे तन्त्रत्वात् ततश्चात्र रूपद्वारकचक्षुरर्पिताकाशाकारमन वृत्तिविष- यत्वे नीलत्वाद्यारोप इति भावः। एवं तमोऽपि मानस- मालोकं विना रूपिग्रहे चक्षुषोऽसामर्थ्यादिति संक्षेपः॥

ज्ञातेऽपि तावति ततोऽनतिरिक्तरूपेऽ-
प्यज्ञानतः स्फुरणमस्फुरणं च दृष्टम् ॥
दूरस्थयोर्ननु वनस्पतिवस्तुनोस्तद्-
भेदो न दृष्टिविषयोऽवगते च ते नः ॥ ४४ ॥

तथापि ज्ञातसामान्यांशमज्ञातविशेषांशमधिष्ठा- नं न चात्मनो निरंशस्य तत्संभव इत्याशङ्क्याभेदेऽपि ज्ञाताज्ञातत्वसंभवमुपपादयति । ज्ञातेऽपीति । ता- वति तन्मात्रे तदभिन्न इत्यर्थः। ईदृशे वस्तुनि ज्ञातेऽप्य- ज्ञानवशात्तस्यैव स्फुरणमस्फुरणं च दृष्टमित्यर्थः। कु- दृष्टमित्यत्राह । दूरस्थयोरिति। दूरस्थे वनस्पति- एकोऽयं वनस्पतिरिति भ्रमो भवति तत्र चानवस्था- भयादन्योऽन्याभावप्रतियोगिप्रमाणयोरनिरूपणाच्च दस्य वनस्पतिरूपानतिरेकात्तत्स्फुरणेऽपि भेदास्फु- रणं दृष्टमित्यर्थः। ते वनस्पतिवस्तुनी नोऽस्माकमवग- ते तयोर्भेदस्तु तदभिन्नोऽपि न दृष्टिविषय इत्यर्थः। न-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु तत्रापि वनस्पतित्वेन स्फुरणं भेदत्वेनास्फुरणं तच्च भिन्नमेवेत्याशङ्क्याह । तत इति । शब्दान्तराभिलप्यत्वेन भेदेऽपि स्वरूपेणाभिन्नमेव भेदरूपं वनस्पतिरूपादित्यर्थः,इतश्च ज्ञातस्याज्ञातत्वं न विरुद्धं त्वदुक्तमर्थं न जानामीत्यर्थे भासमान एव तदज्ञानानुभवात् ज्ञानवदज्ञानस्यापि विषयनिरूप्यत्वात्सविषयके च विषयस्यैव विशेषणत्वात् ज्ञानस्य च विशेषणत्वात् । न च तत्र ज्ञातसामान्यांश एवाज्ञाननिरूपकस्तस्य प्रमाणावगतस्याज्ञानाविषयत्वात् परन्तुक्लिस्थविशेषस्याशक्यज्ञानत्वात् । कथं विशेषणत्वमिति चेन्न । अज्ञाततया साक्षिवेद्यत्वाविरोधात् । आवृतचितेरज्ञानाविरोधस्यानुभवसिद्धत्वाच्च, परैरप्यनभ्यासदशायां ज्ञातेऽपि जलादौ संशयाभ्युपगमादिति दिक् ॥ ४४ ॥

यत्रापि दैवगतितोऽस्त्यतिरिक्तभावो
रूपात्प्रतीतिविषयादितरत्र रूपे ॥
तत्राप्यबोधघटनां प्रति नाङ्गभाव-
स्तस्यातिरिक्तवपुषोऽपुनरुक्तरूपात् ॥ ४५ ॥

ननु शुक्त्यादौ ज्ञाताज्ञातांशयोरियं शुक्तिरिति शब्दद्वयवाच्यत्वेन भेददर्शनान्नैकस्य ज्ञाताज्ञातत्वमित्याशङ्क्य तत्र सन्नप्यंशभेदस्त्वप्रयोजक इत्याह । यत्रापीति । यत्रापि शुक्त्यादौ प्रतीतादिदंरूपादितरत्राप्रतीते विशेषांशे दैवाद् भेदो विद्यते तत्रापि तस्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदस्यापुनरुक्तशब्दवाच्यादिदंरूपादतिरिक्तवपुषः शु-
क्त्यादेरज्ञाततां प्रति नाङ्गत्वमित्यर्थः ॥ ४५ ॥

शुक्तीदमंशात् पृथगप्रतीता
त्रिकोणता स्यान्ननु वस्तुवृत्त्या ॥
तथापि तत्स्थं न पृथक्त्वमिष्टं
तदप्रबुद्धत्वनिमित्तभूतम् ॥ ४६ ॥

इदन्त्वशुक्तित्वधर्मभेद एव ज्ञाताज्ञातत्वावच्छेद
इति चेन्नेत्याह । शुक्तीदमंशादिति । अप्रतीता त्रि-
कोणता शुक्तित्वं यद्यपि प्रतीताच्छुक्तीदन्त्वाद्वस्तु
पृथक् तथापि तत्स्थं पृथक्त्वं तस्याः शुक्तितायाः अ-
प्रतिबुद्धत्वे निमित्तं नेष्टमिति सम्बन्धः ॥ ४६ ॥

यतः प्रपश्यन्नपि भेदिनः स्वं
वनस्पते रूपमभिन्नमस्मात् ॥
न भेदमस्य प्रतिपद्यतेऽक्ष्णा
वनस्पतेः पार्श्वगतात्परस्मात् ॥ ४७ ॥

कथं नेष्टमिति चेदुक्तव्यभिचारादेवेत्याह । यत इ-
ति । यस्माद् भेदवतो वनस्पतेः स्वं रूपं प्रपश्यन्न-
स्माद्वनस्पतेः सकाशादभिन्नं पार्श्वस्थाद्वनस्पतेः सका-
शादस्य भेदमक्ष्णा न प्रतिपद्यते स्वतो धर्मधर्म्यभेदे-
ज्ञाताज्ञातत्वदर्शनात्तद्भेदोऽप्रबुद्धत्वानङ्गमित्यर्थः ॥४७॥

समत्यभिज्ञनयनोत्थधियो घटादेः
स्वाभाविकात्स्ववपुषोऽनतिरिक्तरूपः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थेमाप्रबोधविषयो विषयत्वमेती-
त्यङ्गीकृतं ननु मितेऽपि घटादिकेऽर्थे ॥ ४८ ॥

स्वभिन्नभेदवादिमतेऽपि ज्ञातस्याज्ञातत्वमविरुद्ध-मित्याह । सप्रत्यभिज्ञेति । मितेऽपि प्रमाणान्निश्चितेऽपि घटाद्यर्थे तस्यैव घटादेः स्वाभाविकात्स्ववपुषः स्वरूपादनतिरिक्तः स्थेमा स्थिरत्वमभेदः पूर्वमप्रबुद्धोऽपि सप्रत्यभिज्ञस्य पुंसो नयनोत्था या धीः सोऽयं घट इति प्रत्यभिज्ञात्मिका तस्याः पश्चाद्विषयो भवतीति सर्वैरप्यङ्गीकृतमित्यर्थः । अथ वा प्रत्यभिज्ञा संस्कारः तत्सहितनयनोत्थधिय इत्यर्थः । न हि स्थैर्यं नाम कश्चिद्गुणः क्रिया धर्मान्तरं वा, अपि तु वस्तुस्वरूपमेव पूर्वापरकालसम्बन्धं निमित्तीकृत्य स्थेमोच्यते । एवं च क्षणिकवादिनां प्रत्यक्षेऽपि घटादौ तदभिन्नस्थैर्याज्ञानं चेत् ज्ञानसाम्राज्यसीमनि प्रतीचि ज्ञातेऽज्ञानाविरोध इति किमु वक्तव्यमिति भावः ॥ ४८ ॥

एवं स्फुरत्यपि दृगात्मनि तत्स्वरूपे-
णास्फूर्तिभाजि परिकल्पिततोपपन्ना ॥
स्वाज्ञानतो जगदिदं परमेश्वरोऽसौ
जीवोऽहमित्यपि विभागवतोऽल्पकस्य ॥ ४९ ॥

एवं च निरंशस्यापि सिद्धमात्मनोऽधिष्ठानत्वमित्युपसंहरति । एवमिति । प्रत्यगनिदंरूपेण स्फुरत्यपि चिदात्मनि नित्यमुक्ताद्वयानन्दरूपेणास्फूर्तिभाजि अ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धिष्ठाने स्वाज्ञानमात्रदोषादल्पकस्याहङ्कारादेरध्यस्तता प्रागुक्तयुक्तिभिरुपपन्नेत्यर्थः। अल्पकं रूपं विशिनष्टि। जगदिति। इदमिति साक्षिसिद्धत्वादसाविति परोक्षत्वाद्विभागो नानात्वं तद्वत इत्यर्थः। यद्यपि स्फुरति चिदात्मनि नास्ति न भातीति व्यवहारयोग्यतालक्षणमावरणं नास्ति विरोधात्। तथापि तदत्यन्ताभिन्नेऽप्यद्वयानन्दरूपेऽनुभूयमानत्वादेव तदङ्गीक्रियं न ह्यज्ञानावृतत्वं तद्वेष्टितत्वं येन विरोधः स्यात्किं तूक्तव्यवहारयोग्यत्वमेवेति भावः॥ ४९॥

अल्पं रूपं बन्धनं प्रत्यगात्मा
बद्धोऽनेन स्वच्छचैतन्यमूर्त्तिः॥
स्वात्माज्ञानं कारणं बन्धनेऽस्य
स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्तिः॥ ५०॥

एवमल्परूपस्याध्यस्तत्वे साधिते बन्धतदनर्थत्वतत्कारणमुक्तितदर्थत्वतत्कारणात्मकं षट्कं सिद्धमित्याह। अल्पं रूपमिति। अल्पं परिच्छिन्नं कर्तृत्वादि रूप्यत इति रूपं यन्नामरूपकर्मात्मकं तदस्य भूमं बन्धनमिव बन्धनमित्यर्थः। ननु कुतोऽस्याल्परूपस्यानर्थत्वमित्याह। बद्ध इति। अनेन ह्यल्परूपेण धर्मधर्म्यध्यासात्मकेनात्मा बद्धो निगडितः। स्वच्छोऽप्यस्वच्छ इव विज्ञोऽप्यज्ञ इवानन्दोऽप्यशनायादिविविधदुःखदावदहनप्रदीप्तशिरा इवानिशं बम्भ्रमीति। न

कूटस्थासङ्गचिदेकरसः सन् कथमयमीदृशीं दशामापन्न इत्यत्राह । स्वात्माज्ञानमिति । स्वाश्रयविषयाज्ञानमेवास्यात्मनो बन्धकारणं नान्यदित्यर्थः । नन्वीदृशस्य सहजमोहान्धकूपमग्नस्य विवशस्य कुतो बन्धविच्छित्तिः स्यादित्यत्राह । स्वात्मेति । स्वात्मनोऽद्वयानन्दब्रह्माभेदेन यज् ज्ञानं तत एवास्य समूलबन्धनिवृत्तिरित्यर्थः । तस्या उपादेयत्वमाह । मुक्तिरिति । सा हि मुक्तिरखिलानर्थनिर्मुक्तपूर्णानन्दावाप्तिरूपत्वात् परमपुरुषार्थ इत्यर्थः ॥ ५० ॥

अज्ञानमप्यविदुषोऽस्य न तु स्वतोऽस्ति
चैतन्यनिर्विकृतिताद्वयताविरोधात् ॥
अज्ञातताप्यनवबोधनिबन्धनैव
नात्माश्रयत्वमपि चोदयितव्यमत्र ॥ ५१ ॥

नन्वनादिभावरूपस्याज्ञानस्य ब्रह्मवदेव निवृत्त्यसम्भवात्कुतस्तन्निवृत्तिरूपा मुक्तिः फलमित्याशङ्क्य तस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वं साधयति । अज्ञानमपीति । तथाहि, अज्ञस्य स्वात्मन्यज्ञानान्वयः किं स्वाभाविकः कल्पितो वा । नाद्य इत्याह । न त्विति । कुत इत्यत्राह । चैतन्येति । स्वभावत आत्मन्यज्ञानमस्ति चेद्वस्तुभूतं स्यात्, न च स्वप्रकाशचिदात्मके वस्तुतोऽज्ञानं वर्तितुमर्हति । प्रकाशतमसोर्विरोधात् । तथाऽज्ञानमात्मधर्मश्चेत्स्वयं विनश्यदात्मानं विकुर्यात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपयन्नपयन्धर्मो विकरोति हि धर्मिणमिति न्यायात्त-
थाऽज्ञानस्य वस्तुत्वे द्वैतापत्तिरिति चित्त्वनिर्विकारत्वा-
द्वयत्वश्रुतिविरोध इत्यर्थः। द्वितीयमङ्गीकरोति। अ-
ज्ञाततापीति। अपिस्त्वर्थः। तथात्वे हि मध्यन्दिन-
लोकमण्डले कौशिकादिकल्पितान्धकारवदविरोधः स्या-
दिति भावः। नन्वेवमज्ञानेनैवाज्ञानकल्पनायामात्मा-
श्रयत्वमिति नेत्याह। नात्मेति। अनादि ह्यज्ञान-
ज्ञानतन्त्वमज्ञातत्वमप्यनादीति क्वात्माश्रय इति भाव-
यद्वा अत्रानिर्वचनीयवादे नानुपपत्तिर्दूषणमिति भा-
वः। केचित्तु सत्कार्यासत्कार्यवादिनोरभिव्यक्तावुत्प-
त्तौ च नात्माश्रयश्चेत्किमु मायावादिन इत्यर्थमाहुः॥५१॥

> द्वारं तमोऽन्वयमपेक्ष्य दृशा हि दृश्यं
> सङ्गच्छते सकलमत्र न नो विवादः॥
> मोहोऽपि दृश्यवपुरत्र च सम्वदध्वे
> तस्मात्तदन्वयनिमित्तमपीह मोहः॥ ५२॥

अज्ञानादेवाज्ञानकल्पने प्रमाणमाह। द्वारमिति।
आत्मन्यज्ञानसम्बन्धोऽज्ञानकृतो दृग्दृश्यसम्बन्धत्वा-
द्घटज्ञानसम्बन्धवत् प्रसाध्याङ्गकत्वाद्व्याप्तिसूचनार्थो हि
शब्दः। अयमर्थः। यस्मादसङ्गया दृशा सकलमेव दृ-
श्यं घटादि सम्बध्यमानमज्ञानसम्बन्धं द्वारीकृत्याध्या-
सिकेन तादात्म्येनैव सम्बध्यते, अन्यस्य संयोगसम-
वायादेरशक्यनिरूपणत्वादिति वक्ष्यति न सङ्गो ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पि च संयुतिस्तयोरित्यादि, आत्मनोऽनात्मना योगो वास्तवो नोपपद्यत इति च वार्त्तिकं तस्मान्नात्र व्याप्तौ विवदितव्यमित्यर्थः। हेत्वसिद्धिमुद्धरति। मोहोऽपीति। अहमज्ञ इत्यनुभवादित्यर्थः। अत्र चेति। व्याप्तौ विवादो न तु हेतोः पक्षधर्मत्वे इत्यर्थः। ततश्चात्रापि मोहनिमित्तत्वमिति निगमयति। तस्मादिति ॥५२॥

संविद्धुरं वहति तद्विषयोपयुक्तां
स्वात्मन्यपि स्वरसतः स्वकरूपसिद्धेः।
कार्यप्रपञ्चपरिकल्पनमात्ममोहान्
मोहप्रकल्पनमपीति तथोपपन्नम् ॥ ५३ ॥

ननु कथं प्रपञ्चकल्पनोपक्षीणस्याज्ञानस्य स्वकल्पकत्वमपीत्याशङ्क्य स्वपरनिर्वाहकस्वभावत्वादित्याह। संविदिति। यथा हि प्रमाणफलभूता संवित्स्वविषयघटादिसिद्धौ स्वसिद्धौ चोपयुक्तां धुरं तद्विषयाज्ञानसंशयादिनिवृत्तिभावं वहत्युभयमपि साधयतीत्यर्थः। एवमज्ञानादेव प्रपञ्चकल्पनमज्ञानकल्पनं चोपपन्नमित्यर्थः। ननु संवित्संविदन्तरवेद्यैव स्वस्य स्वविषयत्वासम्भवादित्याशङ्क्याह। स्वरसत इति। संविदन्तरवेद्यत्वेऽनवस्थानात्स्वसत्तायां संशयादिराहित्यात्स्वव्यवहारे परानपेक्षैव संविदित्यादुरुक्तप्रायम् ॥५३॥

आत्मा प्रसाधयति वेद्यपदार्थजातं
स्वात्मानमप्यवगतिक्षमशक्तियोगात् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वाज्ञानमेवमिदमात्मपरप्रक्लृप्तौ
शक्तं भवेदिति न किं च न दौस्थ्यमस्ति ॥५४॥

संवित्स्वप्रकाशत्वे विप्रतिपन्नं प्रति निदर्शनान्तरमाह । आत्मेति । यथा वेद्यं घटादिकं स्वं चावगतिसमर्थज्ञानाख्यगुणयोगात्साधयति, आत्मकार्यव्यवहारसहकारित्वात्, ज्ञानं शक्तिरित्युक्तम् । एवमज्ञानमपि शक्तिवशात्स्वपरकल्पकं स्यादित्यर्थः ॥ ५४॥

भेदं च भेद्यं च भिनत्ति भेदो
यथैव भेदान्तरमन्तरेण ॥
मोहं च कार्यं च बिभर्ति मोह-
स्तथैव मोहान्तरमन्तरेण ॥ ५५ ॥

नन्वात्मनोऽज्ञानाख्यशक्तिमत्त्वादस्तु स्वपरसाधकत्वमज्ञानस्य तु परशक्तिभूतस्य शक्त्यन्तराभावादज्ञानान्तरमेवाज्ञानसाधकमुपेयमेवञ्चानवस्थेत्याशङ्क्य रदृष्टैयव दृष्टान्तान्तरमाह । भेदं चेति । यथैव भेदोऽन्योन्याभावो भेद्यं घटपटद्वयं मिथो भिन्नं साधयति । आत्मानमपि भेदं घटादेर्भेद्यात्सकाशाद्भिनत्ति न तु स्वप्रतियोगिकं भेदान्तरमपेक्षते । अनवस्थानात्तथा मोहोऽपि मोहान्तरं विना मोहं तत्कार्यं च कल्पयतीत्यर्थः ॥ ५५ ॥

ब्रह्मज्ञानं सूत्रयन् सूत्रकारो
बन्धोत्पत्तेर्हेतुविध्वंसनाय ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतत्सर्वं सूचयामास तस्मा-
देतत्सर्वं भाषते भाष्यकारः ॥ ५६ ॥

एवं भाष्योक्ते बन्धमिथ्यात्वे साधिते यदि शास्त्रारम्भोपोद्घात आदावध्यासः, किमिति सूत्रकृतोपेक्षित इत्याशङ्क्य सूत्रेष्वेव हि तत्सर्वमिति न्यायादसौत्रस्य भाष्यविषयत्वायोगादर्थगत्या सूत्रित एवेत्याह । ब्रह्मज्ञानमिति । अथातो ब्रह्मजिज्ञासेति मुमुक्षोर्ब्रह्मजिज्ञासोपदेशादधिकारिविशेषणस्य मोक्षस्य बन्धहेत्वज्ञानध्वंसात्मकस्य ब्रह्मज्ञानं साधकमिति सूचयन्,बन्धस्य सत्यत्वे ज्ञाननिवर्त्त्यत्वानुपपत्तेः, एतत्सर्वं पूर्वोक्ताध्याससाधनप्रबन्धं मुनिः सूचयामासेत्यर्थः। तेन नासूत्रितार्थवर्णनं भाष्यकृत इत्याह । तस्मादिति । ननु ज्ञानमध्यस्तस्यैव निवर्त्तकमिति नायं नियमः , पूर्वज्ञानस्योत्तरज्ञानेनेच्छायाः स्वविषयज्ञानेन शोकस्य सुहृद्दर्शनेन पापस्य सेतुदर्शनेन विषस्य गरुड़ध्यानेन प्रवृत्तिप्रागभावस्य प्रवर्त्तकज्ञानेन निवृत्तिदर्शनादिति चेन्न । तत्त्वज्ञानत्वेन निवर्त्तकत्वस्य विवक्षितत्वात्, उत्तरज्ञानादेस्तु विरोधिगुणत्वेन सिद्धित्वेन सुहृज्ज्ञानत्वेन विहितक्रियात्वेन प्रवृत्तिसामग्रीत्वेन यथायथं निवर्त्तकत्वात् । प्रकृतेऽप्यात्मज्ञानत्वेनैव निवर्त्तकत्वमिति चेन्न । अहमिति ज्ञानादपि बन्धनिवृत्त्यापत्तेः । अहं ब्रह्मास्मीति ज्ञानमेव निवर्त्तक-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिति चेत्तदेव हि तत्त्वज्ञानम्, आत्मानं चेद्विजानी-
यादयमस्मीति पूरुष इत्यादिश्रुतेः । तत्त्वज्ञानत्वेन
निवर्त्तकत्वं च न निवर्त्त्यस्य मिथ्यात्वं विना निर्वह-
ति। तथा हि। न तावद् बुद्ध्यादिप्रपञ्चोपहितब्रह्मज्ञानं
तत्त्वज्ञानं भवति, ब्रह्मणो वस्तुतस्तथात्वाभावात्
किन्तु विशुद्धब्रह्मज्ञानम्, विशुद्धिश्च प्रपञ्चराहित्यम्,
च सत्यप्रपञ्चाश्रये तदानीमेव तद्राहित्यं वर्त्तते,
चावर्त्तमानस्य साक्षात्कारविषयत्वसंभवः , येना
भाविनीं निष्प्रपञ्चतामवगाहेत । अस्तु प्रपञ्चोपा
नत्वेन ज्ञानमेव तत्त्वज्ञानमिति चेन्न । मृदादेस्तथा
त्वेन ज्ञानेऽपि घटाद्यनिवृत्तेः, दृष्टविपरीतस्य चा
ल्पनात् । तस्मात्प्रपञ्चसत्त्वकालेऽपि ब्रह्मणि निष्प्र
ञ्चत्वप्रमा वाच्या, सा च न प्रपञ्चमिथ्यात्वं विनेति
तथापि कथं सप्रपञ्चे प्रपञ्चराहित्यं तद्वृत्ति तदत्यन्
भावासत्त्वादिति चेन्न । तत्समसत्ताकस्यैव तदत्यन्त
भावस्य तद्वृत्त्यवृत्तेर्व्यावहारिकस्य च प्रपञ्चस्य स्वका
ऽपि ब्रह्मणि पारमार्थिकात्यन्ताभावाविरोधात्, अत
त्रैकालिकनिषेधस्य परमार्थदृष्टरजताभावविषयत्वमुक्त
विवरणे । शुक्तौ परमार्थत्वेन दृष्टं यन्मिथ्यारजतं तत्
तियोगिकाभावात्मकाधिष्ठानविषयत्वं हि तदर्थो
तु लौकिकापणस्थरजताभावविषयत्वम् । लौकिकस्य
त्र निषेध्यत्वे मिथ्यात्वापत्तेः, नेह नानेति श्रुत्या दृश्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानप्रपञ्चस्य ब्रह्मणीव शुक्तौ प्रतीयमानरजतस्यैव तत्र त्रैकालिकाभावप्रतीतेश्च । घटस्य तदभावाभावत्ववच्चाधिष्ठानस्य भावस्याप्यध्यस्तनिरूपिताभावत्वं न विरुध्यते । केचित्तु रजतस्य परमार्थत्वाकारेण प्रतियोगिमति यस्त्रैकालिकाभावस्तत्परोऽयं ग्रन्थः, परमार्थत्वस्य व्यधिकरणत्वे च प्रतियोगिनो मिथ्यात्वमपि सिध्यतीति व्याचक्षते । सर्वथाऽप्युपपन्नः प्रपञ्चकालेऽपि ब्रह्मणि प्रपञ्चाभाव इति संक्षेपः ॥ ५६ ॥

तस्मादध्यस्तमेतत्सकलमपि दृशौ भूमरूपातिरिक्तं
रूपं स्वाज्ञानमात्रादिति भवति परब्रह्मधीवाऽप्रमेतत् ॥
ईशित्रादिप्रभेदप्रतिहतिफलकज्ञानदौस्थ्यापनुत्त्यै
श्रीमच्छारीरकार्थप्रकटनपटुताशालि शास्त्रं विदध्मः॥५७॥

अध्यासवर्णकमुपसंहरन्सम्भावितविषयप्रयोजनत्वाच्छास्त्रारम्भं निगमयति । तस्मादिति । एतत्प्रत्यक्षं सकलमपि कर्तृत्वभोक्तृत्वादि स्वाज्ञानमात्रादेव दोषाद् दृशौ चिदात्मन्यध्यस्तम् । कुत इत्याह । भूमेति । भूमरूपे हि ब्रह्मणि अल्परूपं परत्र परावभासत्वादध्यस्तमेव सम्भवतीत्यर्थः । ततः किमित्यत आह । इतीति । अध्यस्ततासिद्धौ च परब्रह्मधीवाध्यत्वं सूत्रितं सिद्धं भवतीत्यर्थः । तेन विषयादिसम्भवात् श्रीमच्छारीरकार्थब्रह्मात्मैक्यस्य यत्प्रकटनमपराधापनयनेन स्फुटीकरणं तत्र यत्पटुत्वमुपपत्तिबाहुल्यं त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुक्तं शास्त्रं समासव्यासाभ्यां चतुर्लक्षणीनयसंग्रहा-च्छास्त्रकल्पं प्रकरणं कुर्म इत्यर्थः । तन्निर्माणफल-माह । ईशित्रादीति । जीवेशादिभेदाध्यासप्रतिहति-फलकवाक्योत्थज्ञानस्य यद् दौःस्थ्यं प्रतिबन्धात्फलपर्य-न्ततारहित्यं तन्निराकर्तुमित्यर्थः ॥ ५७ ॥

मीमांसितव्यमनयैव सदद्वितीयं
मीमांस्यमेव च सदात्मतयानयैतत् ॥
ज्ञातं प्रयोजनमनेन यथेदमस्या-
स्तन्नान्तरीयकतया च तमोनिवृत्तिः ॥ ५८ ॥

अगतार्थवर्णकमवतारयिष्यन्ननु यदि ब्रह्मान्यत-सिद्धं किं तद्विचारेण, अथासिद्धं न शक्यं विचारयितुम्, वेदान्तादापातप्रतिपन्नं विचार्यमिति चेत्, केयमा-पातप्रतिपत्तिः, न पदजन्या, ब्रह्मपदे व्युत्पत्त्यभावा-त्,अत एव न तत्समभिव्याहृतवाक्यजन्या,किं चिद्ब्रह्मा-स्तीति प्रतिपत्तिः सेति चेन्न, तस्या बुभुत्सामात्रहे-तुत्वेन विचाराहेतुत्वात्,अतो न ब्रह्म विचार्यम्, न च बन्धनिवृत्तिस्तत्फलमित्यादावाक्षिप्य समाधत्ते। मीमां-सितव्यमिति। न तावदन्यतः सिद्धमेव ब्रह्मेह विचार्य-म्, तस्योपनिषदन्यमानागोचरत्वात्, अतोऽद्वितीयं स-दविचारितान्महावाक्यात्सम्मुग्धोपस्थितमनयैव मीमां-सया मीमांसितव्यमखण्डानन्दात्मना ज्ञातव्यम्, औपनिषदत्वेन तद्विचारस्यैव तन्निश्चायकत्वौचित्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मपदस्य बृहत्पदार्थानुगमेन सर्वानुवृत्तसत्तास्फुरणात्मनि व्युत्पन्नत्वादात्मशब्दस्य च यच्चाप्नोति यदादत्त इति प्रत्यगर्थ एव प्रसिद्धेस्तयोरैक्यस्य विचार्यत्वसम्भवात्तद्दर्शयति। मीमांस्यमेवेति। सत आत्मत्वेनाज्ञानादनया मीमांसया तदेवात्माभेदेन मीमांस्यं नान्यन्नियोगादीत्यर्थः। नन्वस्तु ब्रह्मात्मैक्यं विचार्यत्वाद्विषयः फलासिद्धिस्तु तदवस्थैवेत्याशङ्कयाह। ज्ञातमिति। अनेन प्रागुक्तेन यथास्या मीमांसाया इदमेव प्रत्यगभिन्नमद्वयानन्दं ब्रह्म ज्ञातं सत्प्रयोजनं भवतीत्यर्थः। नन्वेवं बन्धनिवृत्तिर्न फलं स्यात्ततः प्रागुक्तविरोध इत्यत आह। तन्नान्तरीयेति। ब्रह्मात्मबोधे सति तमोनिवृत्तेरर्थसिद्धत्वेन पृथग्व्यापारानपेक्षत्वात्तुलोन्नमनवन्न सापि पृथगुद्देश्यतया फलमित्यर्थः। ननु तमोनिवृत्तेरधिष्ठानमात्रत्वेन आत्माभिन्नायाः प्रागपि सत्त्वात्कथं ज्ञानसाध्यत्वमिति चेन्न। यस्मिन्सत्यग्रिमक्षणे यत्सत्त्वं यदभावे चाभावस्तस्यैव तत्साध्यत्वात्। अस्ति च ज्ञाने सत्यग्रिमक्षणेऽज्ञाननिवृत्तिरूपात्मसत्त्वं तदभावे चाज्ञाननिवृत्त्यभावोऽज्ञानम्। आत्मनोऽज्ञानाभावत्वेऽज्ञानस्यापि तदभावरूपत्वादिति। अस्तु तमोऽत्यन्ताभावस्तमोनिवृत्तिस्तस्यानादित्वेन ब्रह्माभेदयोग्यत्वात्, न तमोध्वंसस्तस्य प्रतियोग्यसमानकालत्वादिति चेन्न। प्रतियोगिसमसत्ताक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यैव तस्य तदसमानकालत्वमित्युक्तत्वादिति दिक्। अथ वा ननु कथं निरतिशयं सुखमेव पुरुषार्थः, अ विद्यानिवृत्तेरपि तथात्वादित्याशङ्क्याद्वैतानन्दब्रह्म वाप्त्यर्थं ब्रह्मणि प्रतिपाद्यमाने तदविद्यानिवृत्तिर तोऽनुद्देश्यापि ज्ञानसामर्थ्याद्भवतीति न तत्परम योजनमिति भावेनाह । तन्नान्तरीयकतयेति । नन द्वितीयं सद्ब्रह्माविचारितान्महावाक्यादापातप्रतिपन्न नयैव मीमांसितव्यमखण्डानन्दात्मना ज्ञातव्यमित्यु क्तम्, जैमिन्यादीनां कृत्स्नस्य वेदस्य किं केन कथमि त्यंशत्रयविशिष्टार्थभावनाख्यपुम्प्रवृत्तिरूपक्रियापरत्वा वगमेनाक्रियार्थानां धर्मप्रमितिजननरूपप्रयोजनशून्य त्वेन लौकिकवाक्यत्वमाशङ्क्य शिष्टैरध्ययनविधिपरि हीतत्वेन विधिनैकवाक्यत्वेन सिद्धार्थानामपि प्रयोज वत्त्वेन लक्षणयापि क्रियापेक्षितस्तुत्यादिबोधित्वे प्रामाण्यवद्वेदान्तानामपि विध्यपेक्षितकर्तृस्तावकत्वे ज्ञानविधिशेषत्वेन वा आत्मब्रह्मप्रतिपादकत्वेन चार्थ्यत्वस्याभिप्रेतत्वादिति चेन्न । जैमिन्यादेरक्रिया र्थानां क्रियाप्रतिपादकत्वेन प्रामाण्यवर्णनं कर्मका ण्डप्रकरणस्थसिद्धबोधिवाक्याभिप्रायेण न भिन्नप्रकर णस्थवेदान्ताभिप्रायेण तेषामकर्त्रात्मबोधकत्वेन कर्मा पेक्षितकर्तृस्तावकत्वासम्भवात् कर्त्रतन्त्रे ज्ञाने विध्यस म्भवेन तच्छेषतया ब्रह्मप्रतिपादकत्वासम्भवाच्च ॥५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च गतार्थमिदं प्रतिभाति नो
न हि विधेः पदमात्मसमीक्षणम् ॥
न खलु यागददातिजुहोतिवत्
पुरुषतन्त्रमिहात्मनिदर्शनम् ॥ ५९ ॥

ननु जैमिन्यादेरित्थमाशयवर्णनमयुक्तम्, तेन सर्ववेदार्थविचारस्य कृतत्वात्, अन्यथा धर्मजिज्ञासासूत्रस्याथातःशब्दविरोधात्, अथ शब्देन हि कृत्स्नशाखाध्ययनानन्तर्यं स्वविचारस्य दर्शयति, वेदान्तानामविचार्यत्वे च तदध्ययनानन्तर्यस्य स्वविचारे किं प्रयोजनम्, एवमतःशब्देन कृत्स्नवेदस्य स्वार्थे प्रामाण्यं दर्शयति, तदप्येवं सत्यनुपपन्नं स्यात्ततो वेदान्तानां जैमिन्यादिभिरेव विचारितत्वाद्बादरायणादिभिस्तन्न विचारणीयमिति तत्राह । न च गतार्थमिति । गतो विचारपूर्वकं ज्ञातोऽर्थो यस्य वेदान्तविचारशास्त्रस्य तत् । किं वेदान्तगम्यमद्वयं ब्रह्म तच्च जैमिन्यादिभिर्निरूपितमित्युच्यते । किं वा कार्यमेव वेदान्तानामप्यर्थः तच्च जैमिनिना निरवशेषं निरूपितमितीदं शास्त्रं गतार्थमिति । न तावदाद्यः । तत्र तदप्रतीतेः, साध्यरूपधर्मन्यायेन सिद्धब्रह्मणो निर्णयासम्भवात्, धर्मजिज्ञासासूत्रे धर्मस्यैव विचार्यत्वेन प्रतिज्ञातत्वाच्च । न चाथातःशब्दानुरोधेन धर्मशब्देन वेदार्थमात्रं लक्ष्यतामिति वाच्यम् । अन्यथासिद्धाथातःशब्दानुरोधेन विचा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्यमाणतया अनन्यथासिद्धप्रधानाभिधायिधर्मशब्दस्य लक्षणायोगात् । अध्ययनविधिर्हि कृत्स्नशाखाध्ययनं विधत्ते न त्वेकदेशाध्ययनमात्रमतोऽध्ययनविधिप्रयुक्तया न कर्मकाण्डमात्राध्ययनं सम्भवति । एवं च वेदान्ताध्ययनं यद्यपि न कर्मविचारोपयोगि तथाप्येव विधिप्रयुक्ततया तस्यावश्यकत्वेन तदध्ययनवत् एव कर्मविचार इति तदन्यथासिद्धम् । एवमतःशब्दसूचिताध्ययनदृष्टार्थत्वस्यापि वेदान्ताध्ययने समत्वात् तदर्थवत्त्वासिद्धेर्न तद्बलादपि धर्मशब्दे लक्षणेति द्वयब्रह्मविचारो गतार्थ इति भावः । नापि द्वितीयः अग्निहोत्रादिकार्यस्य उपासनाकार्यस्य वा भिन्नप्रकरणस्थत्वाद् ब्रह्मनिष्ठवेदान्तेभ्यस्तदप्रतीतेश्च । नन्वात्मा वा अरे द्रष्टव्य इत्यादिना ज्ञानं विधीयत इति कार्यमेव वेदान्तार्थ इति चेत्तत्राह । न हीति । विधेः विषयः विधेयमिति यावत् । यद्धि वाक्यार्थप्रतीतिजन्यचिकीर्षाप्रयत्नाभ्यां निष्पाद्यं तद्विधेयं यथाग्निहोत्रादि, उपासना वा, न चात्मज्ञानं लौकिकं वा तथाऽनिच्छतोऽप्रयतमानस्यापि शब्देन प्रत्यक्षादिना तद्दर्शनात्, एतदेव कर्तृतन्त्रं विधेयं ज्ञानं च न तथेच्यत इति ज्ञानं न विधेयमित्याशयेनाह । न खल्विति देवतोद्देशेन द्रव्यत्यागो यागः, तस्य परस्वत्वापादनव्यापारो दानम्, याग एवासेचनाधिको होम इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भागः ॥ ५९ ॥

अपि च रूपितगोचरताविधे-
र्न परमात्मधियोऽस्ति च रूपणम् ॥
अविदिते परमात्मनि तद्धियो
न खलु रूपितता घटनान्विता ॥ ६० ॥

किं च विधेयपदार्थज्ञानं विधिवाक्यार्थप्रतीतेः प्राग् वक्तव्यं न च परमात्मज्ञाने तत्संभवतीत्याह । अपि चेति । रूपितो ज्ञातो गोचरो विषयो यस्य तस्य भावस्तत्ता ज्ञाधात्वर्थगोचरता, वक्तव्येति शेषः । ततः किं तत्राह । न परमात्मेति । रूपणं ज्ञानं प्रागिति शेषः, तथा च परमात्मज्ञानं कर्तव्यमिति वाक्यार्थधीर्न संभवतीति भावः । कुतस्तदनिरूपणमिति चेत्, किमज्ञाते परमात्मनि तज्ज्ञानं ज्ञायते, विदिते वा, नाद्य इत्याह । अविदित इति । घटनान्विता युक्ता, न हि विशेषणीभूतं परमात्मानमज्ञात्वा परमात्मज्ञानमिति ज्ञातुं शक्यमित्यर्थः ॥ ६० ॥

विदितता परमात्मन इष्यते
यदि वृथा विधिरस्य धियो भवेत् ॥
निखिलभेदनिदाननिवृत्तितो
भवति तद्विषयादि च दुर्लभम् ॥ ६१ ॥

द्वितीय आह । विदिततेति । ज्ञानविधिवाक्यार्थज्ञानात्प्रागिति शेषः । तर्हि ज्ञानविधिर्व्यर्थः पुरुषार्थ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साधनात्मज्ञानस्य प्रागेव सिद्धत्वादित्याह । वृथेति।
किं चात्मज्ञाने सति अविद्यातत्कार्यसकलनियोज्यविष-
यादिभेदनिवृत्तेस्तत्सापेक्षो न ज्ञानविधिः । न वा त
दनुष्ठानं संभवतीत्याह । निखिलेति । निदानस्य का
रणस्याज्ञानस्य निवृत्तित इत्यर्थः ॥ ६१ ॥

इति न धर्मविशेषसमर्पणं
श्रुतिशिरोवचनैः क्रियते ततः ॥
भवति धर्मविचारगतार्थता-
नवसरः परमात्मविचारणे ॥ ६२ ॥

नन्वात्मनि परोक्षज्ञाने प्रथमं जातेऽपि तद्विशिष्ट
नं विधेयमिति चेत्, किं विशिष्टज्ञानं परोक्षमपरोक्षं
नाद्यः, प्रथमज्ञानेनैव तत्कृत्यसिद्धेस्तद्वैयर्थ्यात्,
दितस्वार्थसंबन्धशब्दादिभ्य एव प्रथमज्ञानवद् द्वि
यज्ञानस्यापि विना पुंव्यापारमुत्पत्तिसंभवेन विधिवै
र्थ्याच्च, नापि द्वितीयः, किं कर्तव्यतयावगतं शा
ज्ञानमेव विधिवलादपरोक्षं भवति, किं वा ततस्त
त्पद्यते, नाद्यः, तस्य शब्दादुत्पन्नत्वेन तव मते तद
गात्, अन्यथा प्रथममेवापरोक्षज्ञानं किं न स्यात्।
द्वितीयः, तत्करणस्यासम्भवात्, न ह्यपरोक्षज्ञानक
मिन्द्रियमात्मन्यस्तीति न ज्ञानविधिसंभव इत्युप
रति । इतीति । धर्मविशेषसमर्पणं विधेयज्ञानमे
वान्तरो धर्मस्तस्य च निर्विषयस्यानुपपत्तेस्तदाका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यात्मानं व्युत्पादयद्भिर्वेदान्तवचनैर्विध्येकवाक्यतया धर्मविशेषसमर्पणं क्रियत इति यन्मतं तत्र । ततोऽपि परमात्मविचारे धर्मविचारगतार्थताया अनवसरो भवतीत्यर्थः । तथा च जैमिन्यादेः प्रागस्मदुक्त एवाशय इति भावः ॥ ६२ ॥

अर्हाद्यर्थे च कृत्यस्मरणमभिमतं पाणिनेः प्रार्थनादौ
लिङ्लोडादेश्च वृत्तिः प्रचुरमभिमता पाणिनेर्जैमिनेश्च ॥
तस्माद्वेदान्तवाक्ये पठितमपि लिङाद्यन्यथा योजनीयं
विध्यर्थासंभवेन स्फुटमुदितनयादेतदन्यागतार्थम् ॥६३॥

कथं तर्ह्यात्मा वा अरे द्रष्टव्य आत्मन्येवात्मानं पश्येदित्यादिविधिव्यक्तीनां गतिरिति तत्राह । अर्हेति । अर्हे कृत्यतृचश्च, विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्, लोट् चेत्यादिपाणिनिस्मरणात्, विष्णुरुपांशु यष्टव्य इत्यादौ जैमिनीयन्यायाच्च तव्यप्रत्ययादेर्विध्यतिरिक्तार्थत्वं सिद्धं यस्मात्तस्मादुक्तवेदान्तवाक्ये पठितमपि लिङादि अन्यथा विधिमन्तरेण अर्हाऽर्थतया योजनीयम् कुतः स्फुटमुदितनयाद् विध्यर्थाऽसंभवेन । अत एतद्वेदान्तविचारशास्त्रं धर्मविचारशास्त्रेणागतार्थमतस्तद्भगवताथातो ब्रह्मजिज्ञासेत्यारभ्य विचारितं भाष्यकारादिभिरपि तदाशयानुरोधेन तदर्थो वर्णित इति मयापि तदर्थाविष्करणाय यत्नः क्रियत इति ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकाहाहीनसत्रद्वयविधिविहितानेककर्मानुभाव-
ध्वस्तस्वान्तोपरोधाः कथमपि पुरुषाश्चिहिदृक्षां लभन्ते
यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा
स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति

नन्वेवमप्यधिकार्यभावादिदं शास्त्रं नारम्भणीयम्,
तावत्स्वर्गादिकाममुद्दिश्यैतदारम्भः, अग्निहोत्रादि-
रेव तत्सिद्धेः, नापि निरतिशयविषयभोगार्थिनमुद्दिश्य
तस्याप्युपासनातः सिद्धेः, न च मुमुक्षुरत्राधिकारी
सकलवैषयिकानन्दविलक्षणे मोक्षे कस्यापि कामना-
दर्शनात्, अत एव ब्रह्मजिज्ञासुरत्राधिकारीति नि-
स्तम्, ब्रह्मज्ञानस्यापुरुषार्थस्य कामनाऽयोगान्निरति-
याभिलषितस्वर्गादिविरोधित्वाच्च, न चाविरक्तस्य स्व-
द्यभिलाषेऽपि विरक्तस्य तदभावान्मुमुक्षा संभवती-
तदर्थं ब्रह्म जिज्ञासमानोऽत्राधिकारीति वाच्यम्, स्व-
दौ निरतिशयप्रीत्यास्पदे कस्यापि वैराग्यासंभवात्, दु-
खमिश्रितत्वात्ततोऽपि वैराग्यं युक्तमिति चेन्न, तादृ-
तदधिकसुखे प्रवृत्तिदर्शनात्, दुःखपरिहारे च यति-
व्यं न तु सुखमपि परित्याज्यम्, न चान्यः, कश्चिदधि-
कारी संभवतीत्यधिकार्यभावान्नेदमारम्भणीयमिति
त्राह । एकाहाहीनेति । अयमिह चिदर्दिदृक्षाप्रतिलम्भ-
प्रकारः । अनादिप्राग्भवेषु संसरन्जीवः कदाचि-
तत्र विशिष्टवर्णाश्रमो भूत्वा यावज्जीवश्रुतिचोदिता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्याग्निहोत्रादीनि सम्यगनुष्ठाति, ततः कदाचिदीष-दासादितपरमेश्वरप्रसादादग्निहोत्रादिषु दृढश्रद्धो भवति, तत ईश्वरप्रसादादेवं चिन्तयति, मदीयं मनः स्वर्गादिसुखतत्साधनान्येवाभिलषति न तु मोक्षं तत्साधनं वा ज्ञानं तत्र चादृष्टमेव केवलं निमित्तमिति तदर्थं यतितव्यमिति विविदिषोद्देशेन तान्येव कर्माण्यनुतिष्ठति ततोऽतिविमलमानसस्तद्यथेहेत्यादिश्रुतिं यत्कृतकमित्यादिन्यायं चानुसंधाय ब्रह्मलोकपर्यन्तं कर्मसाध्यं फलमनित्यमिति निश्चिनोति, आत्मा च श्रुतिन्यायाभ्यां नित्यानन्द इति च, सोयं नित्यानित्यवस्तुविवेकः। ततस्तदर्थं सकलवैषयिकसुखभोगजिहासा पुनःपुनरस्योपावर्तते, नित्ये संभवत्यनित्ये कस्तुष्येदिति, तदिदं कर्मफलवैराग्यम्। पश्चाच्छान्तिदान्त्यादिसंपन्नो दृढतरमोक्षेच्छां करोति,सेयं साधनचतुष्टयसंपत्तिः। तत इष्यमाणमोक्षसाधनं चिदानन्दस्वरूपात्मज्ञानमिच्छतीति नात्राधिकारी दुर्लभः। तदिदमनेन श्लोकेन सूचितम्। एकाहः। एकसुत्याकः क्रतुः। अहीनः। द्व्यहप्रभृतिद्वादशसुत्यान्तः। सत्रं द्विविधम्,एकमहःसमुदायसाध्यम्,यथा द्वादशाहम्, द्वादशाहस्य चाहीनसत्रात्मत्वं यजेत उपयन्तीत्युभयश्रुतिवलादवगतम्, किं चित्संवत्सरगणसाध्यम्। उपलक्षणमेतदग्निहोत्रादेः। एतेषां ये विधयस्तद्विहितानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यान्यनेकानि अग्निहोत्रप्रभृतीनि सहस्रसंवत्सरपर्य-
न्तानि कर्माणि तेषामनुभावो दुरितनिवर्हणसामर्थ्यं ते-
न ध्वस्तः स्वान्तस्यान्तःकरणस्योपरोधः विविदिषा-
प्रतिबन्धो येषां ते तथा कथमपि अनेकजन्मव्यवधा-
नेऽपि पुरुषाः साधनचतुष्टयसंपन्ना अधिकारिणः चि-
द्दिदृक्षामखण्डचैतन्यात्मकप्रत्यग्ब्रह्मसाक्षात्कारेच्छा-
मित्यर्थः। नन्वग्निहोत्रादेः पुन्दिदृक्षाप्रतिबन्धकदुरित-
निवर्त्तकत्वं कुतोऽवगतं येन तदर्थमनुतिष्ठेयुः, न ता-
त्प्रत्यक्षादिना तदवगन्तुं शक्यम्, नाप्यग्निहोत्रादि-
वाक्येन तत्र तद्वाचकपदाभावात्तत्राह । यज्ञेनेति । तमे-
वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिवाक्या-
च्छतपथविहितमिति । शतपथग्रहणं विनियोजकवा-
क्येन विनियोज्यकर्मणः प्रत्यासत्तिज्ञापनर्थम् । नन्व-
ग्निहोत्रादेः स्वर्गकामयावज्जीवादिवाक्येन तत्र त-
विनियुक्तस्य कथं चिद्दिदृक्षायां विनियोगः, विनियुक्त-
विनियोगविरोधात्तत्राह । स्वोत्पत्तीति। स्वस्याग्निहो-
त्रादेर्यदुत्पत्त्याम्नानं कर्मस्वरूपमात्रबोधकं वाक्यं
ततिसद्धमित्यर्थः । अग्निहोत्रादिकं हि प्रथममग्निहो-
जुहोतीत्यादिवाक्यैःफलविशेषशून्यमेव विधीयते, प-
द्वाक्यान्तरेण तदपेक्षितफलविशेषे तस्य संबन्धः प्रति-
पाद्यते, एवं च तद्वदेव विविदिषायामपि तस्य सं-
बन्धो न विरुध्यते, विनियोजकवाक्यानां तुल्यकल्प-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्, एवं च विषयसौन्दर्यज्ञानलभ्यायामिच्छायां कर्मणः साक्षात्साधनत्वासम्भवेन सामर्थ्यात्प्रतिबन्धकनिवृत्तावेव साधनत्वं कल्प्यत इति। पुरुषः परमात्मा। मात्रशब्देन तस्य ज्ञानादिपर्यन्तव्यापारं वारयति। एवं च नाधिकार्यभाव इति भावः॥ ६४॥

उपससाद चतुष्टयसाधनो
निशितबुद्धिरशुद्धिपरिक्षयात्॥
विविदिषुर्विहितैर्विविधाध्वरै-
र्विदितवेद्यतमं विधिवद्गुरुम्॥ ६५॥

एवं विषयप्रयोजनसंभवादगतार्थत्वाद्विशिष्टाधिकारिलाभाच्च ब्रह्मविचारशास्त्रमारम्भणीयमित्युक्तम्, इदानीं गुरुशिष्यसंवादमुखेन शास्त्रं प्रवर्त्तयितुं जिज्ञासासूत्रगताथशब्दोपात्तविशिष्टाधिकारिणस्तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिदर्शितं गुरूपसदनमाह। उपससादेति। प्राप्तवानित्यर्थः। विवेकादिचतुष्टयं ब्रह्मज्ञानसाधनं यस्य स चतुष्टयसाधनः। निशितातिसूक्ष्मा ब्रह्मैकाकारतायोग्या बुद्धिरन्तःकरणं यस्य स तथा। विहितैः सम्यगनुष्ठितैः विविधाध्वरैरशुद्धिपरिक्षयान्निशितबुद्धिः चतुष्टयसाधनो विविदिषुरिति संबन्धः। श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिदर्शितं गुरुविशेषणमाह। विदितवेद्यतमसिति। अवगतब्रह्मतत्त्वमित्यर्थः। समित्पाणिरिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिदर्शितमुपसदनप्रकारमाह । विधिवदिति ॥६५॥

इह जगति हि सर्व एव जन्तु-
निरतिशयं सुखमुत्तमं ममास्तु ।
उपरमतु तथोपघातरूपं
विषयजदुःखमिति स्पृहां करोति ॥ ६६ ॥

ननु मुमुक्षुर्गुरुमुपससादेत्युक्तमयुक्तमनुभूतसुखवि-
जातीये मोक्षे कामनाऽयोगादत एव निखिलानर्थनिवृ-
त्तिकामो मुमुक्षुरित्यपि न संभवति अनर्थनिवृत्तेः स्व-
तः पुरुषार्थशेषतयैव काम्यमानतया तदभावे अयोगा-
त्याशङ्क्य कैमुतिकन्यायेन प्रस्तुताधिकारिणो मुमु-
दर्शयितुं लोके तदतिसुलभतामाह । इहेति । सर्व ए-
ति । जन्तुमात्रे निरतिशयसुखादिकामनायां मान-
भावेन योग्यनराभिप्रायम् । उपरमतु मा भवतु ।
पघातरूपं पुरुषार्थविरोधिरूपम् ॥ ६६ ॥

निरतिशयसुखं च दुःखजात-
व्युपरमणं च वदन्ति मोक्षतत्त्वम् ॥
उभयमपि जनोऽभिवाञ्छतीति
स्फुटतरमस्य सदास्ति मोक्षवाञ्छा ॥ ६७ ॥

नन्वेवमपि मुमुक्षायां किमागतमिति तत्राह । नि-
रतिशयेति । लौकिकैरभिलष्यमाणनिरतिशयसुखा-
मोक्षत्वे फलितमाह । उभयमपीति । अस्य जनस्य
एवं प्राणिमात्रस्य मुमुक्षासद्भावे किमु वक्तव्यं निर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निखिलचित्तमलस्य तीव्रवैराग्यादिसम्पन्नस्य तत्सद्भावे मोक्षरूपसुखस्यैव तत्तद्विषयसम्बन्धेन लौकिकैरिष्यमाणत्वान्न तल्लौकिकसुखविलक्षणमिति भावः ॥ ६७ ॥

उभयमपि परात्मनः स्वरूपं
विमलचिदेकरसं स्वयंप्रकाशम् ॥
इति भवति विना प्रमाणमस्मि-
न्नुदितनयादभिवाञ्छनोपपत्तिः ॥ ६८ ॥

ननु निरतिशयसुखादावज्ञाते कथं सर्वप्राणिनामभिलाषः, ज्ञातगोचरत्वात्तस्येति चेत्तत्राह । उभयमिति । निरतिशयसुखं निःशेषदुःखहानं चेत्यर्थः । परमात्मनोऽहङ्कारविलक्षणस्य तत्साक्षिण इत्यर्थः । तादृशसुखज्ञानार्थं साक्षिस्वरूपं विशिनष्टि । स्वयं प्रकाशमिति । तत्र हेतुत्वेनाह । विमलेति । साक्षिस्वरूपस्यानावृतता वैमल्यमुक्तम् । तथा च स्वयंप्रकाशात्मस्वरूपत्वान्निरतिशयसुखादेः सर्वेषां भानमविरुद्धमित्याह । इति भवतीति । उदितनयात्, इह जगतीत्यादिनेति शेषः ॥ ६८ ॥

कर्मकाण्डकृतशुद्धिबुद्धित-
स्तर्किते च खलु मोक्षवस्तुनि ॥
अर्थितास्य घटते प्रयोजक-
ज्ञाननुन्नमनसो महात्मनः ॥ ६९ ॥

नन्वनावृतसाक्षिस्वरूपसुखादेः कथं निरतिशयत्वं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोके तथाननुभवात्, वस्तुतस्तत्तथाविधमिति चेत्सत्यं तथाप्यज्ञानावृतप्रकाशे तज्ज्ञानं विना न कामना स्यादित्याशङ्क्याह। कर्मकाण्डेति। काण्डशब्दः समूहवाची। तर्किते परमप्रेमास्पदत्वादिनोहिते। मोक्षवस्तुनि आनन्दात्मनि। अस्य विशिष्टाधिकारिणः। प्रयोजक ज्ञानमानन्दाद्वयात्मप्रतिपादकवाक्यजन्यमापातज्ञानं तेन नुन्नं प्रेरितं तदभिमुखीकृतं मनो यस्य। अत एव महात्मनः नित्याद्यनुष्ठानादतिविमलमानसस्य परम प्रेमास्पदत्वादिलिङ्गेन वेदान्तवाक्येन चापाततोऽवगता नन्दाद्यात्मनि प्रेप्सा कथं न भवेदित्याशयः॥ ६९॥

धर्मनिर्णयनिमित्तमिष्यते
वेदवित्परिषदेव मानवे॥
तद्वदत्र गुरुणास्य सङ्गति-
स्तेन चास्य घटतेऽर्थिता गुरौ॥ ७०॥

ननु प्रथममेवाधिकारिणा श्रुतिन्यायाभ्यामानन्दात्मकं वस्तु परिज्ञातं चेत्कृतं तस्य गुरूपसदनादिनेत्याशङ्क्य स्वयमुत्पादितज्ञानस्यान्यथात्वशङ्काकलङ्कसम्भवादाचार्यवान्पुरुषो वेदेत्यादिशास्त्राच्चाचार्यमुखेनैव ब्रह्म निर्णेतव्यमिति सदृष्टान्तमाह। धर्मनिर्णयेति। मानवे मनुस्मृतौ शास्त्रे। चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः॥ मनुना धर्मनिर्णयो वेदवित्पर्षत्साध्य इत्युच्यते। त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दात्मज्ञानस्यापि गुरूपदेशसाध्यत्वात्तदर्थमस्य गुरूप-सदनं युक्तमित्याशयेनाह । तद्वदत्रेति । ब्रह्मनिर्णयसा-धनमिति शेषः । फलितमाह । तेनेति ॥ ७० ॥

य: कर्मकाण्डविषयेऽभिहितोऽधिकारी
सोऽयं प्रवृत्तिषु निवृत्तिषु तुल्यरूपः ॥
अत्राभिधित्सितविशेषणपूगयुक्तो
साधारणस्त्वभिमतः पुरुषो निवृत्तौ ॥ ७१ ॥

ननु धर्ममीमांसायां षष्ठाध्याये वेदार्थाधिकारी नि-रूपित इति किमत्राथशब्देनाधिकारिनिरूपकेण, न च शास्त्रान्तरत्वान्न पुनरुक्तिर्दोषायेति वाच्यम्, त-थापि कृतकरणानर्थक्यात्, अन्यथा वेदस्यार्थवत्त्वा-देरप्यत्र निरूपणं स्यादिति तत्राह । यः कर्मकाण्डेति । मीमांसाशास्त्र इति शेषः । कर्मसमूहमुद्दिश्येति वार्थः । अभिहितः षष्ठाध्याये निरूपित इत्यर्थः । प्रवृत्तिषु निवृत्तिषु तुल्यरूप इति । अग्निहोत्रादौ प्रवर्तमान-स्यापि कलञ्जभक्षणादिनिवृत्तिलङ्घने तन्निवृत्तिशीलस्या-प्यग्निहोत्राद्यनुष्ठानलङ्घने प्रत्यवायतौल्यात्, अयं प्रवृ-त्त्यादितुल्य इत्यर्थः । प्रस्तुताधिकारिणस्ततो विशेषमा-ह । अत्रेति । अस्मिन् शास्त्रे । अथशब्देन सूचितमप्य-धिकारिविशेषणं तार्तीयन्यायेनैव स्थिरं भवतीत्यभिधि-त्सितेत्युक्तम्, वेदान्तशास्त्रे हि साधनचतुष्टयसंपन्नेन स-कलकर्मत्यागिना ब्रह्म विचार्यमिति निरूप्यत इति ततो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽस्य विशेषः, न चायं षाष्ठन्यायेन सिध्यतीति न वैयर्थ्य म् । अर्थवत्त्वादिकं तु वेदस्य न ततो न्यायान्तरमपे क्षत इति नात्र तन्निरूपणमिति भावः ॥ ७९ ॥

शास्त्रं प्रवृत्तिषु निवृत्तिषु तुल्यरूपं
साधारणस्य पुरुषस्य पुराभ्यधायि ॥
अस्योच्यते सकलकर्मनिवृत्तिभाजः
सर्वं निवृत्तिविषयं श्रवणादिशास्त्रम् ॥ ८०

नन्वस्यापि श्रवणादिप्रवृत्तेर्निवृत्तेश्चाग्निहोत्रा सत्त्वादयमपि प्रवृत्तिनिवृत्तिसाधारण एवेत्याशङ्क्या शास्त्रमिति । प्रवृत्तिषु निवृत्तिषु साधारणस्य पुरुष तुल्यं समबलं शास्त्रं विधिनिषेधशास्त्रमिति पु पूर्वतन्त्रे अभ्यधायि जैमिनिनेति शेषः । अस्य ज्ञाना धिकारिणः संन्यासिनः सर्वं श्रवणादिशास्त्रं निवृ विषयमित्युच्यते बादरायणादिभिरिति सम्बन्धः अग्निहोत्रादिशास्त्रं हि तदधिकारिणस्तदर्थकर्त तामेव प्रतिपादयति, न तु तदितरव्यापारं परिस ष्टे स्वार्थे बाधकाभावादिति स उभयसाधार अतस्तच्छास्त्रद्वयमपि तं प्रति समबलमेव जैमिनि विचारितम् । बादरायणस्तु शान्तो दान्त उपरति तिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति स्वानुसारेण ज्ञानोद्देशेन सकलकर्मत्यागं निरूप्य न्यासिनैव ब्रह्म विचार्यमित्याह । तत्र यदि श्रवणा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रमस्य प्रवृत्तिं कामप्युपदिशेत्तर्हि सकलकर्मसंन्यासशास्त्रं बाध्येतेति श्रवणादिशास्त्रमपि निवृत्तिविषयमेवेत्यधिकारिद्वयं परस्परविलक्षणमित्यर्थः ॥ ७२ ॥

शास्त्रद्वैविध्यदृष्टेर्द्विविधमधिकृतेर्भेदमप्याश्रयन्ते
तद्वद्वैविध्योपलब्धेः पुरुषमधिकृतं शास्त्रयोर्भिन्नमाहुः॥
शास्त्रार्थद्वित्वहेतोः पुरुषमधिकृतं तद्गतं चाधिकारं
नो चेद्भिन्नं प्रतीयुर्द्विविधमिह वृथा शास्त्रमापद्यते हि॥७३॥

एवं धर्ममीमांसाशास्त्रस्य प्रवृत्तिनिवृत्तिसाधारणाधिकारिविषयत्वं ब्रह्ममीमांसायास्तु निवृत्तिमात्रनिष्ठपुरुषविषयत्वमित्युक्तम्, एतच्च मीमांसकानामपि सम्मतमित्याह । शास्त्रेति । असन्निकृष्टार्थप्रतिपादकं वचनं शास्त्रं तद्वैविध्यदृष्टेर्हेतोरधिकारस्य द्विविधं भेदमप्याश्रयन्ते । तस्याधिकारस्य द्वैविध्योपलब्धेः पुरुषं तद्विशिष्टमधिकृतमधिकारिणम्, शास्त्रयोः शास्त्रार्थयोः। उक्तमर्थं विपक्षे बाधकमुखेन द्रढयति। शास्त्रार्थेति । मीमांसका एवमाहुः । असन्निकृष्टार्थवचनं शास्त्रं तद्भेदे च तदर्थो भिद्यते, भिन्नासन्निकृष्टार्थं विना तदयोगात्, तदर्थभेदे च तदनुष्ठाननिमित्तमधिकारोऽपि भिद्यते, अन्यथा चित्राकारीर्यादेरपि स्वर्गकामाद्यधिकारसम्बन्धप्रसङ्गात्, ततश्च तद्विशिष्टोऽधिकार्यपि शास्त्रभेदे भिद्यते, अन्यथा शास्त्रभेदो न स्यादिति। तद्वदिहापि प्रवृत्तिनिवृत्तिविषयतया केव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लनिवृत्तिविषयतया च भिन्नयोर्धर्मब्रह्ममीमांसयोस्त
र्थाधिकारिणोर्भेदेन भवितव्यमिति भावः ॥ ७३ ॥

यमनियमविधानैर्वाङ्मनःकायचेष्टा-
व्युपरमणमशेषैः कथ्यते न प्रवृत्तिः ।
यदि भवति कदा चित्का चिदस्य प्रवृत्तिः
श्रुतिविहितनिवृत्तेः कर्मणां कत्थनं स्यात् ॥

ननु सर्वं निवृत्तिविषयं श्रवणादीत्युक्तमयुक्तं
नाधिकारिणोऽप्यहिंसादिनियमवच्छौचादेर्नियमस्य
संन्यासिन उपदेशात्तत्राह । यमनियमेति । यमनि
योर्विधानैर्विधायकवाक्यैरित्यर्थः । अत्र यमग्रहणं
ष्टान्तार्थमुक्तम् । अशेषैर्यमनियमविधानैरिति स
न्धः । प्रवृत्तिः शौचादिरूपा । यमशास्त्रवन्नियमशा
स्यापि निवृत्तिपरत्वमेव न प्रवृत्तिपरत्वमित्यर्थः
तत्र हेतुमाह । यदीति । अस्य ज्ञानाधिकारिणः क
णां श्रुतिविहितनिवृत्तेरिति सम्बन्धः । कत्थनं क
पीडेति यावत् । यदहरेव विरजेत्तदहरेव प्रव्रजे
श्रुतिर्ज्ञानार्थिनः सकलकर्मत्यागं विधत्ते । न च य
ज्जीवादिवाक्यानुसारेण काम्यकर्मन्यासमात्रं प्र
श्रुत्यर्थ इति वाच्यम् । यज्ञोपवीतादेरपि तत्र त्य
विधानात्, संन्यासिनो धर्मविधायकवाक्ये मुण्डो
रिग्रह इति शिखादिराहित्यनियमदर्शनेन प्रतिप्र
न्यायेनापि यज्ञोपवीतादेरनङ्गीकारात् । तस्माद्यद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरजेदिति वैराग्यस्य तदधिकारस्य श्रवणाद्विरक्तमुमुक्षुविषयं संन्यासशास्त्रम्। यावज्जीवादिशास्त्रं तु न तत्समानविषयमित्यविरक्तविषयमेव। अतः सङ्कोचकाभावात्संन्यासशास्त्रं सकलकर्मनिवृत्तिं विधत्ते। तदस्य शौचादिप्रवृत्त्यभ्युपगमे बाधितं स्यात्। न च शौचाद्यनेकविधिबलात्तदिष्टमिति वाच्यम्। शौचादिशास्त्रस्य संन्यासशास्त्रवद् विरक्तमुमुक्षुमात्रविषयत्वाभावेन सामान्यविषयस्य ततो दुर्बलत्वादिति न क्वापि ज्ञानाधिकारिणो विधितः प्रवृत्तिरिति भावः॥७४॥

औदासीन्यविशेषमेव हि परब्रह्मात्मधीजन्मने
शास्तीदं श्रवणादिशास्त्रममुना त्वाक्षिप्यते व्यापृतिः॥
तां तां व्यापृतिमन्तरेण घटते सामान्यशास्त्रार्थधी-
रित्यर्थाल्लशुनादिभक्षणगतौदासीन्यबोधादिव ॥७५॥

नन्वेवं श्रवणादौ कथं मुमुक्षोर्ब्रह्मजिज्ञासोः प्रवृत्तिस्तत्प्रापकाभावात्, न चान्वयव्यतिरेकाभ्यां श्रवणादेर्ज्ञानसाधनत्वावगमात्स्वत एव मुमुक्षोस्तत्र प्रवृत्तिरिति वाच्यम्, नियमेन तत्र प्रवृत्त्ययोगात्, अन्यतोऽप्यभिलषितज्ञानसम्भवात् कथं वा तच्छास्त्रस्य निवृत्तिनिष्ठत्वमिति तत्राह। औदासीन्येति। औदासीन्यं प्रवृत्त्यभावस्तस्य विशेषमनात्मश्रवणादिरूपप्रवृत्तिविशेषाभावमित्यर्थः। शास्ति उपदिशति। अमुना ज्ञानार्थमुपदिष्टौदासीन्यविशेषेण व्यापृतिः आत्मश्रवणादिप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्तिः अर्थादाक्षिप्यत इति सम्बन्धः। अनुपपत्तिमेवाह तां तामिति। श्रवणमननादिरूपामित्यर्थः। सा सा शा स्त्रार्थधीरनात्मश्रवणमननादिनिवृत्तिरूपौदासीन्यात्मकश्रोतव्यादिशास्त्रार्थधीः। न घटते इति। यत इत्यर्थः आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिशा स्त्रेणात्मज्ञानान्वयव्यतिरेकसिद्धतयोक्तबाधकबलेन श्रवणादिव्यापारविधानासम्भवेनात्मज्ञानविरोध्यनात्मश्रवणाद्यभावरूपमौदासीन्यं विधीयते सेयं परि ख्या अनात्मव्यापारवर्जनमन्तरेण शतशोऽनुष्ठितश्रवणादिनाप्यद्वयात्मज्ञानासम्भवात्तस्मिंश्च विहिते चेत निर्व्यापारत्वासम्भवेन तावताप्यभिमतज्ञानासिद्धेर न्वयव्यतिरेकाद्यवधृतज्ञानसाधनभावश्रवणादिप्रवृत्ति राक्षिप्यत इति भावः। अर्थान्तरनिषेधसामर्थ्याद न्तरसिद्धौ दृष्टान्तमाह। लशुनादीति। लशुनं न भ येन्न कलञ्जं भक्षयेदित्यादिनिषेधेन तत्तद्भक्षणादेरिष्ट धनत्वाभावरूपौदासीन्यबोधाद्यथा तद्भक्षणादिप्राप रागादिनिवृत्तौ यतते तद्वदित्यर्थः॥ ७५॥

> औदासीन्ये बोधिते शास्त्रवृन्दै-
> रर्थादस्मात्प्रच्युतस्यास्त्यनर्थः।
> इत्यालोच्य प्रच्युतेः प्रापकस्य
> प्राबल्येऽर्थे प्रातिलोम्यं विधत्ते॥ ७६॥

दृष्टान्तं विशदयति। औदासीन्य इति। भक्षणा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धात्वर्थगतेष्टसाधनत्वाभाव इत्यर्थः। शास्त्रवृन्दैः लशुनादिभक्षणनिषेधशास्त्रैः। अस्मान्निषेधशास्त्रार्थादौदासीन्यात्प्रच्युतस्य भ्रष्टस्य भक्षणादौ प्रवृत्तस्येति यावत्। अनर्थो नरकपातोऽस्तीत्यर्थादालोच्येति संबन्धः। लशुनं न भक्षयेदित्यादिनिषेधवाक्येन तद्भक्षणस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वं निषिध्यते तस्यैव लिङादिप्रतिपाद्यत्वात्। तत्र लशुनादिभक्षणस्य प्रत्यक्षप्रमितेष्टसाधनतया तद्विरहप्रयुक्तवर्णितविशिष्टाभावानुपपत्ते र्बलवद निष्टाननुबन्धित्वरूपविशेषणाभावादेव स वाच्य इति नरकसाधनत्वं तस्य निश्चीयते, तदिदमुक्तमर्थादालोच्येति। एवं तस्यानर्थहेतुत्वनिश्चयवान्भक्षणादिप्रवृत्तेः प्रापकस्य वक्ष्यमाणरागादेः प्राबल्यरूपेऽर्थे प्रातिलोम्यं विधत्ते, यथा पुनस्तद्भक्षणादावुत्कटरागो न भवति तथा स्वयं यत्नं कुरुत इत्यर्थः। एवं च यथा लशुनादिभक्षणे प्रवर्तकरागोत्कटयनिवृत्तये श्रुतिमन्तरेण स्वयमेव प्रवर्तते एवमत्रापीति द्रष्टव्यम् ॥ ७६ ॥

औदासीन्यं बोधयच्छास्त्रमेत-
न्नित्यं पथ्यं बोधयत्यस्य पुंसः ॥
पथ्यादस्मात्प्रच्युतस्यास्त्यपथ्यं
बुद्ध्वापथ्यप्रातिलोम्ये यतेत ॥ ७७ ॥

दार्ष्टान्तिकं विशदयति। औदासीन्यमिति। अना-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मविचारादेर्मोक्षसाधनत्वाभावमित्यर्थः । एतच्छास्त्रं
श्रोतव्यो मन्तव्य इत्यादि नित्यमात्यन्तिकं पथ्यमि
ज्ञानद्वारा मोक्षसाधनमितिं यावत् । तथा च श्रुतिः
अन्या वाचो विमुञ्चथेति । अस्य मुमुक्षोस्ततः किं
त्राह । पथ्यादिति । अस्त्यपथ्यं संसाररूपोऽनर्थ इ
बुद्ध्वेति संबन्धः। अपथ्यप्रातिलोम्ये यतेत, यथाऽप
न भवति तथा पूर्वोक्तविधयात्मश्रवणादौ यतेतेत्यर्थः
पाठान्तरेत्वपथ्यं बुद्ध्वेति संबन्धः॥ ७७ ॥

वृत्ता प्रवर्त्तकनिवर्त्तकशास्त्रसिद्ध्यै
षष्ठे प्रवृत्तिविनिवृत्त्यधिकारिचिन्ता ॥
अत्रैकमेव तु निवृत्त्यधिकारमार्ग-
माश्रित्य सूत्रकृदधात इति प्रवृत्तः ॥ ७८ ॥

एवं काण्डद्वयस्याधिकारिभेदमुपपाद्योपसंहर
वृत्तेति। कृतेत्यर्थः। प्रवर्त्तकनिवर्त्तकशास्त्रसिद्ध्यै वि
निषेधशास्त्रार्थानुष्ठानसिद्ध्यै। षष्ठे पूर्वमीमांसाया
शेषः। प्रवृत्तिनिवृत्त्यधिकारिचिन्ता स्वर्गकामाधि
णादौ कलञ्जभक्षणनिषेधाधिकरणादौ च प्रवृत्तिनि
त्त्यधिकारिचिन्ता वृत्तेति संबन्धः। अत्र अस्मिन्
स्त्रे त्वेकमेवेति संबन्धः। एवं चात्राधिकारिचिन्ता
न पुनरुक्तिरिति भावः॥ ७८ ॥

औदासीन्यप्रच्युतेः प्रापकौ च
रागद्वेषौ नापरो हेतुरस्ति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रागद्वेषप्रातिलोम्ये प्रवृत्ति-
रौदासीन्यप्रापणाच्छास्त्रतोऽर्थात् ॥ ७९ ॥

इदानीं सिंहावलोकनन्यायेन प्रच्युतेः प्रापकस्येत्युक्तम् प्रापकमेव विशदयति । औदासीन्यप्रच्युतेरिति । रागद्वेषौ, धात्वर्थस्येष्टसाधनताज्ञानाद्धात्वर्थगोचरेच्छा रागः, अनिष्टसाधनताज्ञानात्तत्र द्वेषः । लौकिकभोजनादौ वैदिकाग्निहोत्रादौ चाविशेषेण राग एव प्रवर्त्तकः, न तु वेदे प्रवर्त्तनातो लिङादिव्यापारात्प्रवृत्तिः, प्रमाणस्येष्टसाधनत्वादिस्वप्रमेयबोधनव्यापारं विना व्यापारान्तराभावादित्याशयेनाह । नापर इति । एवं प्रवर्त्तकनिवर्त्तकौ रागद्वेषावित्युक्त्वा लशुनभक्षणादौ रागिणस्तन्निवृत्त्यर्थं प्रवृत्तिप्रकार इत्यालोच्य प्रच्युतेः प्रापकस्येति प्रागुक्तं स्मारयति । रागद्वेषेति । प्रातिलोम्ये प्रतिलोमे शश्वदनिष्टसाधनतानुसन्धाने प्रवृत्तिः स्यादिति शेषः ॥ ७९ ॥

अशुचेः प्रतिषेधशास्त्रतो
न भवत्येव हि वेदचिन्तनम् ।
श्रवणादिनिवृत्तिशास्त्रतः
स्वयमर्थादथ शौचमापतेत् ॥ ८० ॥

एवं मुमुक्षोर्निवृत्तिमात्रेऽधिकार इति बादरायणस्य तद्व्युत्पादनमर्थवदित्युक्तम्, नन्वेवं सति मुमुक्षोः कथं शौचादिसिद्धिरित्यत आह । अशुचेरिति । प्रतिषे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घशास्त्रत इति । द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्न
तः। स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विज इ
स्मृत्या वेदानुशीलिनोऽशुचित्वप्रतिषेधादशुचेर्वेदचिन्त
नं न संभवत्येव, तेन विना च प्रागुक्तन्यायेन वेदान्तश्र
वणादिर्न स्यात् । न हि वेदवाक्यमननुसन्दधता वेदा
न्तवाक्यं विचारयितुं शक्यमिति इतरनिवृत्तिपरश्र
णादिशास्त्रसामर्थ्यादेव शौचादिविधिमन्तरेणापि
दस्य सिद्ध्यतीति ॥ ८० ॥

अचतुर्गुणशौचवारणात्
स्वयमेवास्य चतुर्गुणं भवेत् ॥
अचतुर्ष्वशनस्य वारणात्
स्वयमेवास्य चतुर्षु भोजनम् ॥ ८१ ॥

नन्वेवमपि यतीनां तु चतुर्गुणं चातुर्वर्ण्यं चरे
क्ष्यमित्यादिशास्त्रसिद्धशौचाद्याश्रितचातुर्गुण्यादि
यमः कथं सिध्येत्तत्राह । अचतुर्गुणेति । तेनापि
शास्त्रेण सकलनिवृत्तिविधायिशास्त्रानुसारेणाचातु
र्ण्यादिनिवारणादर्थाच्छौचचातुर्गुण्याशनचातुर्गुण्य
दि सिध्यतीति न काप्यनुपपत्तिरिति भावः ॥ ८१ ॥

इति योजय सर्वमीदृशं
कथितन्यायवशेन सादरम् ॥
विधिहीननिवृत्तिशास्त्रतः
कथितेऽस्मिन्नधिकारवर्त्मनि ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं सकलसंन्यासविधायकशास्त्रबलान्मुमुक्षोरात्मश्रवणादिशास्त्रमपि तदितरपरिवर्जनपरमेव नास्य प्रवृत्तिविधायकं किंचिदपि शास्त्रमस्तीत्युपपादितमुपसंहरति । इतीति । अनेन प्रकारेणेत्यर्थः । ईदृशमापाततः प्रवृत्तिविधायितया प्रतीयमानं त्रिषवणस्नानादि शास्त्रम् । अस्य पक्षस्य महद्भिरादृतत्वाच्च न त्वयात्रादरशैथिल्यं कार्यमित्याशयेनाह । सादरमिति । अस्मिन्नधिकारवर्त्मनि । कथितन्यायवशेन विधिहीननिवृत्तिशास्त्रतस्तच्छास्त्रबलादीदृशं सर्वं सादरमिति अनेन प्रकारेण योजयेति संबन्धः ॥ ८२ ॥

इति के चन वर्णयन्ति त-
द्विपरीतं प्रवदन्ति के चन ।
प्रविभज्य तदप्युदीर्यते
निपुणाचार्यपरम्परागतम् ॥ ८३ ॥

उक्तमनूद्य तत्प्रतिपक्षं पक्षान्तरं प्रस्तौति । इति के चनेति । ज्ञानाधिकारिणः केवलं निवृत्तावेवाधिकारं के चन वर्णयन्ति । अन्ये के चन तद्विपरीतं ततो निवृत्तिमात्रनिष्ठाया विपरीतं प्रवृत्तिमपि वदन्तीत्यर्थः । ननु सकलकर्मनिवृत्तिविधायिनि शास्त्रे सति कथं तद्विपरीतपक्षोत्थानमित्याशङ्क्याह । प्रविभज्येति । तद्विपरीतं प्रविभज्योदीर्यते मयेति शेषः । ननु श्रुतिविरुद्धत्वात्तदुपेक्षैव न्याय्येति तत्राह । निपुणाचार्येति । त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था च तदुपेक्षार्हं न भवतीत्यर्थः, निपुणेति पूर्वस्मा
दस्य विशेषं द्योतयति, तदग्रे व्यक्तीभविष्यति ॥८३

उत्सर्गतः सकलकर्मनिवृत्तिनिष्ठा
संन्यासशास्त्रशतकोटिभिरर्पितास्य ॥
अस्ति प्रतिप्रसवशास्त्रमुखात्प्रतीता
चेष्टात्मबुद्धिपरिपाकफलापि काचित् ॥८

नन्वेवं सति सकलत्यागश्रुतेः का गतिरित्याशङ्क्या
तः सामान्यतः सकलनिवृत्तिसिद्धावपि ज्ञानाधिका
णो विशिष्य श्रवणादिरूपा प्रवृत्तिरपि प्रतिप्रसव
पाच्छ्रवणादिशास्त्रात् सिध्यतीति भवति तस्योभ
निष्ठेत्यभिप्रेत्याह। उत्सर्गत इति। सामान्यत इत्यर्थः
निवृत्तिनिष्ठा निवृत्त्यधिकारः, अस्य मुमुक्षोर्ज्ञाना
कारिणो यद्यपि तथाप्यस्तीत्यध्याहृत्य संबन्धः। त
प्यस्ति प्रवृत्तिरिति यदुक्तं तदाह। प्रवृत्तिप्रसवशा
मुखादिति। सामान्यतः परित्यक्तस्य विशेषरूपेण
धायिशास्त्रबलात् चेष्टा श्रवणादिरूपा शौचादिरू
प्रवृत्तिरात्मबुद्धिपरिपाकफला आत्मसाक्षात्कारस्य
क्षाद्वा परम्परया वा निश्चयत्वप्रयोजिका ॥ ८४ ॥

यमस्वरूपा सकला निवृत्ति-
स्तथा प्रवृत्तिर्नियमस्वरूपा ॥
निवर्त्तकादत्र यमप्रसिद्धिः
प्रवर्त्तकात्स्यान्नियमप्रसिद्धिः ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु संन्यासशास्त्रानुरोधेन श्रवणादिशास्त्रस्यापि पूर्वोक्तनिवृत्तिमात्रपरत्वेनास्यैकनिष्ठायां सम्भवन्त्यां किमुभयनिष्ठाभ्युपगमेनेत्याशङ्क्य श्रवणादिशास्त्रस्येतरनिवृत्तिपरत्वे स्वार्थत्यागोऽन्यार्थकल्पना प्राप्तबाधश्चेति त्रैदोष्यापत्तेर्नियमपक्ष एवाश्रयणीय इति ज्ञानाधिकारिणोऽप्युभयनिष्ठत्वमन्यथा यमनियमादिविभागप्रसिद्धिरपि न स्यादित्याह । यमस्वरूपेति । स्मृतिसिद्धयमसंज्ञितेत्यर्थः । निवृत्तिः सर्वप्रकारेण प्राणिपीडानृतवचनादेर्निवृत्तिः । प्रवृत्तिः शौचादिरूपेत्यर्थः यमनियमयोः संक्षिप्य स्वरूपमाह । निवर्त्तकादिति । अत्र तयोर्मध्ये हिंसादिनिवर्त्तकशास्त्रप्रतिपाद्यो यमः शौचादिप्रतिपादकशास्त्रप्रतिपाद्यो नियम इत्यर्थः॥८५॥

निवृत्तिरस्ति द्विविधा बहिःस्थिता
शरीरसर्वेन्द्रियसंयमात्मिका ॥
तथापराभ्यन्तरवस्तुसंश्रया
सदात्मकूटस्थचिदेकविग्रहा ॥ ८६ ॥

अधिकारिनिरूपणप्रस्तावे मुक्तियोग्यं तत्स्वरूपं प्रागहङ्काराद्यध्यस्तत्वनिरूपणेनार्थसिद्धं ब्रह्म वा इदमित्यादिशास्त्रसम्मतं साक्षाद्दर्शयितुम् , अथ वा यमस्वरूपा सकला निवृत्तिरिति कथम्, असङ्गतया ब्रह्मस्वरूपस्येतरासंसृष्टत्वेन प्रपञ्चोपशम इत्यादिश्रुत्या प्रपञ्चनिवृत्त्यात्मतया च प्रमितस्य निवृत्तिरूपत्वात् ,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च साध्यरूपा साधनात्मकयमात्मिकेत्याशङ्क्य नि
वृत्तिविधायकशास्त्रसिद्धैव सा यमात्मिका न निवृत्ति
मात्रमिति वक्तुं तां विभजते। निवृत्तिरस्तीति।
त्रिध्यमेवाह। बहिःस्थितेत्यादिना। आत्मबाह्य
रीराद्याश्रितेत्यर्थः। तत्र हेतुमाह। शरीरेति। अभ्यन्त
वस्तुसंश्रया सर्वान्तरवस्त्वात्मिका। तत्सिद्धय आ
सदात्मेति ॥ ८६ ॥

तयोस्तु बाह्या विधिशास्त्रलभ्या
प्रयत्ननिर्वर्त्त्यतया प्रतीतेः॥
विधानशास्त्रं विरहय्य लभ्या
चितिस्वरूपा त्वितरा निवृत्तिः ॥ ८७ ॥

अस्त्वेवं प्रकृते किमायातमिति अभिधित्सितं
तयोरवान्तरविशेषमाह। तयोस्त्विति। विधिशास्त्र
हिंसादिनिषेधविधिलभ्येत्यर्थः। तत्र हेतुः प्रयत्न
र्त्यतयेति। न हिंस्यादित्यादिनिषेधविधेरहिंसां कु
दित्यर्थप्रतीतेः सा तथेत्यर्थः। एतच्च परसिद्धान्त
श्रित्योक्तं स्वमते हिंसादिगतश्रेयःसाधनत्वाभाव
तदर्थत्वादिति। इतरा तु नैवमित्याह। विधाने
तस्या यत्नासाध्यत्वे चितिस्वरूपेति हेतुगर्भं विशे
म् ॥ ८७ ॥

मायामयी बाह्यनिवृत्तिरिष्टा
चितिस्वरूपा परमार्थसत्या॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयोर्निवृत्त्योश्च निवृत्तिशास्त्रं
विधायकं बाह्यनिवृत्त्यपेक्षम् ॥ ८८ ॥

बाह्यान्तरनिवृत्त्योः साध्यासाध्यत्वे हेत्वन्तरमेवाह । मायामयीति । तथा चानिर्वचनीयायास्तस्याः साध्यत्वं संभवतीत्यर्थः । परमार्थसत्येति । तथा च तस्या न प्रागसत्त्वमिति न साध्यत्वमित्यर्थः । ततोऽपि किं तत्राह। तयोरिति । बाह्याभ्यन्तरयोरित्यर्थः । बाह्याया एव कृतिसाध्यत्वसंभवाद्धिंसादिनिषेधशास्त्रं हिंसाद्यौदासीन्यानुकूलान्तरक्रियात्मिकां तामेव विधत्ते । एवं च विधेयात्मकयमोऽपि सैवेति भावः ॥ ८८ ॥

प्रवृत्तिशास्त्रेण समेऽपि संमते
निवृत्तिशास्त्रस्य विधेयबोधने ॥
निवृत्त्यनुष्ठाननिबन्धनत्वतो
निवर्त्तकं शास्त्रमिदं प्रचक्षते ॥ ८९ ॥

ननु यदि निषेधशास्त्रमपि निवृत्तिक्रियां विधत्ते तर्हि सर्वमेव विधिशास्त्रमिति विधिनिषेधविभागो न सिध्येदित्याशङ्क्याह । प्रवृत्तीति। प्रवृत्तिनिवृत्तिरूपविधेयवैलक्षण्यात्तद्विभागसिद्धिरित्याशयेनाह। निवृत्तीति। निवृत्त्यनुष्ठाने निबन्धनं कारणं तस्य भावस्तत्त्वं तत इत्यर्थः । इदं यमविषयम् । एतदुक्तं भवति । न ज्ञानाधिकारी मुमुक्षुर्निवृत्तिमात्रनिष्ठः,तथा सति श्रवणादिशास्त्रे त्रिदोषपरिसंख्याप्रसङ्गात्,किन्तु श्रवणादिरूपप्रवृ-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तिनिष्ठोऽपि, श्रवणादेश्चात्मज्ञाने साधनत्वं यद्यप्यन्य
सिद्धं तथापि तुषनिवृत्तिसाधनतया सिद्धावहनन
वात्रापि नियमविधिसंभवाद् नियमापूर्वस्य ज्ञान
तिबन्धकनिवृत्त्यार्थवत्त्वोपपत्तेरिति ॥ ८९ ॥

शास्त्रद्वयेन परिदर्शितसाधनेन
साध्यस्पृहापरवशः पुरुषो मुमुक्षुः ॥
शुश्रूषते गुरुमथेत्युदितः स चात्र
वेदान्तवाक्यविषयश्रवणाधिकारी ॥ ९० ॥

ननु यदि ज्ञानाधिकारिणोऽप्युभयत्राधिकारस्त
षष्ठाध्यायनिरूपिताधिकारिणो नास्य विशेष इति
भगवतः पृथक्तद्व्युत्पादनेनेत्याशङ्क्यास्त्यस्य ततो
हान्विशेष इत्याह। शास्त्रद्वयेनेति। पूर्वकाण्डप्रदर्शि
विविदिषार्थमनुष्ठितेन यज्ञादिनाऽहिंसादिना च शु
न्तःकरणो वेदान्तोक्तविवेकवैराग्यशमदमलक्षणसा
नेन हेतुना मुमुक्षुः पुरुषः साध्यस्य तत्त्वसाक्षात्का
स्य स्पृहया परवशः प्रवृत्तिपर्यन्तज्ञानेच्छया प्रेर्यमा
यो गुरुं शुश्रूषते चोऽवधारणे स एव वेदान्तवाक्य
षयश्रवणाधिकार्यत्र जिज्ञासासूत्रेऽथेत्युदित इति
म्बन्धः। एवं च साधनचतुष्टयसम्पन्नस्य ब्रह्मजिज्ञा
गुरुं शुश्रूषमाणस्य वेदान्तश्रवणाधिकारिणोऽवि
काविरक्ताशान्तामुमुक्षुनिवृत्तगुरुकुलवासात् कर्मा
कारिणोऽतिस्फुटमेव वैलक्षण्यं न्यायान्तरसाध्यमस्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नात्र तद्व्युत्पादनं व्यर्थमिति भावः ॥ १० ॥

स परिपृच्छति कोऽहमसौ च कः
सहजमस्य च तस्य च किं पृथक् ॥
उत तयोरभिदेश्वरजीवयो-
रिति च संशयसंकुलमानसः ॥ ११ ॥

एवमुपससाद चतुष्टयसाधन इत्यादिना प्रस्तुताधिकारिनिरूपणं समाप्येदानीं स गुरुमुपव्रज्य किमकरोदिति जिज्ञासायामाह । स परिपृच्छतीति । उक्तोऽधिकारी इति संशयसंकुलमानसो गुरुमुपेत्य पृच्छतीति सम्बन्धः । संशयप्रकारं दर्शयन्नर्थात्प्रश्नप्रकारमप्याह । कोऽहमित्यादिना । अहमनुभवे प्रकाशमान आत्मा मम स्वरूपमहमनुभवश्च देहेन्द्रियादिसङ्घे जायमानः किमालम्बन इति न ज्ञायत इति कोऽहमिति त्वम्पदार्थप्रश्नः, स्वस्वरूपस्याभ्यर्हितत्वात्प्रथमं जिज्ञासेति द्रष्टव्यम् । तत्पदार्थे प्रश्नमाह । असौ च क इति । तत्त्वमसिवाक्ये यस्तत्पदार्थः असौ च कः, किं तत्तेजोऽसृजतेत्यादिना जगत्कर्तृत्वादिप्रपञ्चवत्तया निर्दिष्ट एव सः, किं वा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतिप्रसिद्धं समस्तभेदशून्यं सदेवेति । वाक्यार्थे प्रश्नमाह । सहजमित्यादिना । स्वाभाविकमित्यर्थः । अस्य जीवस्य । तस्य तत्पदार्थस्य ब्रह्मणः । पृथक्पृथक्त्वं तयोरीश्वरजीवयोरिति सम्बन्धः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वा सुपर्णेत्यादौ जीवेश्वरयोर्भेदश्रवणात्तत्वमसीत्यां चाभेदश्रवणाद्वाक्यद्वयस्य विशेषानवगमात्संशयः॥११

तीर्थेन तं विविदिषन्तमनन्यभक्तं
संसारसागरभयातुरचित्तवृत्तिम् ॥
एकं मुमुक्षुमधिकारिणमात्मतत्त्व-
ज्ञाने समीक्ष्य गुरुराह दयाविधेयः ॥ १२ ॥

इदानीमेतादृशमेव शिष्यमुपलभ्य गुरुणा ब्रह्म द्वयमुपदेष्टव्यमिति शिक्षयन् गुरुरुपदिशतीत्याह तीर्थेनेति । पावनेन विविदिषार्थमनुष्ठितयज्ञादि गङ्गास्नानादिना चात्मानं विविदिषन्तं तमिति सम्बन्धः । तीर्थेन गुरुणा वा वेदितुमिच्छन्तं तमित्यर्थः आत्मविविदिषुरपि कश्चिद्यद्यन्यां देवतामुपास्ते स गुरुणोपदेष्टव्य इत्यभिप्रेत्याह । अनन्यभक्तमिति प्रत्यगेकप्रवणचित्तमित्यर्थः । एवं भूतोऽपि कश्चित् सारिकभोगपरित्यागातुरचित्तो भवतीति तं व्याव यति । संसारेति । नन्वेवंविधोऽधिकारी जगति दु भः,सत्यम्, तथापि कश्चित्सम्भवति, उक्तं हि भगव मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये इत्याशयेना एकमिति । एकजीवाभिप्रायं वा । गुरोः शिष्यो शव्यापारे निमित्तमाह । दयाविधेय इति । तथा न शिष्याननुबध्नीयादिति निषेधोऽत्र न प्रवर्तत भावः ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यामि वत्स तव वाञ्छितमत्यवस्थ-
मत्यन्तमेव च हितं शृणु तन्मनस्कः ॥
त्वं प्रत्यगव्यवहितं तव सुप्रसिद्धं
ब्रह्माद्वितीयमुदितं च तदस्यजस्रम् ॥ ९३ ॥

इदानीं गुरोः शिष्योपदेशप्रकारं शिक्षयंस्तदुपदेश-माह । वक्ष्यामीति । अनुद्विग्नमनाः सन्नुपदेशार्थमव-गच्छत्विति वत्सेति पुत्रवत्सम्बोधनम् । सदेवसोम्येत्या-दिलिङ्गाच्छरणागतस्य शिष्यस्य वाञ्छितमप्यनर्थ-करं चेद्‌ गुरुणा कथं तदुपदेष्टव्यमित्याशङ्क्य वाञ्छितं विशिनष्टि । अत्यवस्थमिति । अवस्थात्रयातीतं तुरी-यमिति यावत् । तथा च प्रपञ्चोपशमः शिव इति श्रुत्या निष्प्रपञ्चस्य सुखरूपत्वप्रतिपादनान्नोक्तदूषण-मित्याशयेनाह । अत्यन्तमिति । वक्ष्यमाणार्थस्याति-सूक्ष्मतया शिष्यस्य तत्र चेतःप्रणिधानार्थमाह । शृणु तन्मनस्क इति । किं तच्छ्रोतव्यमित्यपेक्षायां प्रश्नक्र-मेणोत्तरमाह । त्वमित्यादिना । त्वं न देहो न चेन्द्रि-यमनःप्राणाहङ्कारास्तेषां सावयवतया कार्यत्वाद्विनाशि-त्वाच्च घटादिवदनात्मत्वात्, आत्मनश्च कृतनाशादिप-रिहारायानादित्वात, तेषां जड़तया तदतिरिक्तसाक्षि-भास्यत्वाच्च नात्मत्वम्, साक्षी च स्वप्रकाशचैतन्यात्मा नान्यमपेक्षते, स च निर्द्धर्म एव साक्ष्यस्य रूपादिवदत-द्धर्मत्वादित्याशयेनाह । प्रत्यगव्यवहितमिति । जड़ा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नृतादिस्वभावदेहादिप्रतीपमञ्चति प्रकाशते इति स प्रकाशश्चैतन्यमत एवाव्यवहितं नित्यापरोक्षमित्यर्थ तत्र सर्वानुभव एव प्रमाणमित्याह । सुप्रसिद्धमिति अन्यथा जगदान्ध्यप्रसङ्ग इति भावः । द्वितीयस्यो रमाह । ब्रह्मेति । बृहदित्यर्थः । तत्किमाकाशब्र नेत्याह । अद्वितीयमिति । सजातीयादित्रिविधभेद न्यं सन्मात्रमित्यर्थः । तत्र प्रमाणमाह । उदितं ति । सदेवेत्युपक्रम्य ऐतदात्म्यमिदं सर्वं तत्सत्यं आत्मेत्यन्तेन ग्रन्थेन दर्शितमित्यर्थः । तृतीयस्यो माह । तदस्यजस्त्रमिति । अद्वैतब्रह्मोपासनया जी स्य ब्रह्मभावो भवतीति केचित् तान्प्रत्याह, तद ति, तद्विवरणमजस्त्रमिति, साध्यत्वे तस्यानित्य पत्तिः, चकारदर्शितस्तत्त्वमसीति श्रुतिविरोधः, त सीति ब्रह्मभावस्य वर्त्तमानताश्रवणात् । अतस्त्वं क्षिचैतन्यात्मा सदाद्वयं सदात्मकं ब्रह्मैव न तु भिन्नोऽसीति ॥ ९३ ॥

यद्यत्र पश्यसि विरोधमुदीरय त्वं
सद्यस्ततः परिहराणि तमप्रयत्नात् ॥
वाक्यं निरस्तसकलप्रतिबन्धकं सत्
त्वां बोधयिष्यति करार्पितबिल्वतुल्यम् ॥

एवं संक्षेपेण शिष्यप्रश्नानामुत्तरमभिहितमिद तत्र शिष्यस्याङ्गीकाराद्यभावलिङ्गेन वाक्याद् दृढ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुभवो नोत्पन्न इति स्वयमेवोन्नीय वाक्यात्तदनुभव-प्रतिबन्धापनयनार्थं प्रयततेऽन्यथा वक्ष्यामीत्यादि-स्वप्रतिज्ञाऽसिद्धेः,तत्रापि वाक्यार्थस्य पुरुषार्थत्वाद-व्यवधानेनोपस्थितत्वाच्च तद्विरोधमेव प्रथमं परिह-र्तुमाह । यद्यत्रेति । वाक्यार्थ इत्यर्थः । ततस्त्वदुदी-रणानन्तरम् । परिहारे भवतां क्लेशः स्यादिति शिष्यम-तिमालक्ष्याह । अप्रयत्नादिति । विरोधपरिहारे प्रयो-जनमाह । वाक्यमिति । करार्पितविल्वतुल्यं करत-लामलकादिकल्पं यथाऽपरोक्षं स्यात्तथेत्यर्थः ॥ १४ ॥

अत्राह सद्वयमहं मम रूपमीक्षे
तच्चाद्वयं विगणयामि परोक्षमेव ॥
पारोक्ष्यसद्वयविभागयुजोर्विरोधाद्
वाक्यार्थबोधमतिदुर्लभमेव मन्ये ॥ १५ ॥

एवं गुरुणानुज्ञातः शिष्यो निःशङ्को वाक्यार्थास-म्भवं चोदयति । अत्राहेति । सद्वयं प्रतिशरीरं भिन्नं कर्तृत्वादिमच्च ।ईक्ष इत्यनेनापरोक्षत्वमपि विरोधप्र-दर्शनाय स्वस्मिन्दर्शयति । ततः किं तत्राह । तच्चे-ति । तत्पदार्थरूपमित्यर्थः , चोऽवधारणे , अद्वयमे-वेति सम्बन्धः । विगणयामि कार्यलिङ्गेन तदुपादान-तया तर्कयामि । तर्कयोग्यन्तत्स्वरूपमाह । परोक्षमे-वेति । अपरोक्षे तर्कानुदयात्तर्क्यते चेत्परोक्षमेवेत्यर्थः । ततः किं तत्राह । पारोक्ष्येति । एतच्चाद्वयत्वस्यो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पलक्षणम्, सद्वयेति भावप्रधानः, । तच्चापरोक्ष्योपलक्ष
णम्, पारोक्ष्यसद्वयत्वयोः परस्परमविरोधेन विरोध
पलक्षणस्य कर्तव्यत्वात्। तथा च पारोक्ष्यापरो
सद्वयत्वाद्वयत्वरूपविभाजकधर्मयुजोरित्यर्थः। एवं व
क्यार्थाभेदासम्भवे वाक्यात्तद्बोधोऽपि न सम्भवतीत्य
ह। वाक्यार्थेत्यादिना। एतदुक्तं भवति। तत्त्वम
त्यादिवाक्यं जीवब्रह्माभेदनिष्ठमिति वाच्यमन्यथावा
र्थायोगात्तच्च न सम्भवति सद्वयाद्वययोः परोक्षापरो
योश्च जीवब्रह्मणोरभेदासम्भवात्। एवं च तद्गोचर
पनिषज्जन्यं ज्ञानं कुतस्त्यमिति ॥ ९५ ॥

यद्वस्तु सद्वयतयावगतं स्वशब्दात्
तस्याऽद्वयत्वमवगन्तुमशक्यमेव ॥
यद्वस्तु च व्यवहितं प्रतिपादितं तत्
प्रत्यक्तया न तु जनः प्रतिपत्तुमीशः ॥ ९६

ननु जीवेश्वरयोस्तत्त्वमादिशब्दैरभेदविरोधिसद्वयत्
दि न प्रत्येतुं शक्यं तेषां तदसामर्थ्यादिति कथं न त
रभेदधीरित्याशङ्क्य प्रसिद्धार्थाभिधायित्वात्तत्त्वमादि
ब्दानां जीवस्य च प्रमातृत्वादिसद्वयरूपेणैव प्रसिद्धे
दर्थस्यापि प्रकरणेनाद्वयतयैवावगमाद् भेदविरोधि
पा प्रतीतिरसिद्धेत्याशयेनाह। यद्वस्त्विति। सद्व
तयेत्यापरोक्ष्यस्याप्युपलक्षणम्। अद्वयत्वं सकलभेद
न्यत्वम्। व्यवहितं प्रतिपादितमिति। तच्छब्देनाद्वयं प

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षमेव प्रतीयत इति तथोक्तम्। प्रत्यक्तया। अपरोक्ष-चैतन्यात्मना। ईशः शक्तः ॥ १६ ॥

आकाङ्क्षितं भवति पूरणशक्तियुक्तं
यत्सन्निधौ पतितमस्य हि सङ्गतिः स्यात् ॥
नाकाङ्क्षयैव न तु सन्निधिनैव वा स्यात्
सम्बन्धिता हि विरहय्य पदार्थशक्तिम् ॥ १७ ॥

ननु शुक्तिरजतयोरभेदायोग्ययोरपि शब्दादभेदधीदर्शनाद्योग्यता शाब्दज्ञाने नाऽपेक्ष्यते किन्तु आकाङ्क्षादिकमेवेत्याशङ्क्य शाब्दप्रमायां योग्यता स्वरूपसत्यपेक्षितैव न त्वाकाङ्क्षादिमात्रमित्याह। आकाङ्क्षितमिति। येन विना यस्य पदस्य स्वार्थानुभवाजनकत्वं सा तस्य शब्दस्य तस्मिन्नाकाङ्क्षा, तदर्थयोरपि साकाङ्क्षशब्दप्रतिपाद्यतया सैवाकाङ्क्षा तद्युक्तमित्यर्थः। पूरणशक्तियुक्तम् अन्वययोग्यम्, यत्सन्निधौ पतितं समीपस्थपदेन यज्ज्ञापितम्, हि यस्मात्, पदार्थशक्तिं योग्यताम्, यद्यपि शाब्दज्ञानमात्रे योग्यता स्वरूपसती नापेक्ष्यते शब्दाभासप्रतिपाद्ये तदभावान्नापि तज्ज्ञानं तत्र मानाभावाद् योग्यताज्ञानविरहसहकृतात्तदितरकारणचक्रादेव शाब्दभ्रमोपपत्तेः, तथापि शाब्दप्रमायां स्वरूपेण सापेक्षितैव, यस्मादाकाङ्क्षादौ सत्यपि तया विना तदभावस्तस्मादन्वयव्यतिरेकाभ्यामाकाङ्क्षादित्रितयमपि शाब्दप्रमायां कारणमिति भावः ॥ १७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योग्यत्वमत्र न च तत्त्वमसीति वाक्ये
संबन्धितां प्रति पदार्थयुगस्य भाति॥
पारोक्ष्यसद्द्वयविभागविरोधहेतो-
र्गौरश्व इत्यभिहिते तु यथैव वाक्ये॥ ९८।

ननु ब्रह्मविकारत्वाज्जीवानां तदंशत्वाद्वा मृद्घटादि-
दस्त्येवाभेदयोग्यतेति भेदाऽभेदवादिनस्तत्राह। योग्य-
त्वमिति। चोऽवधारणे पदार्थयुगस्य तत्त्वंपदार्थयोः सं-
बन्धितामभेदं प्रति योग्यत्वं नैव भातीति संबन्धः
जीवस्य ब्रह्मविकारत्वेऽनित्यत्वाद्यापत्तेर्निरवयवस्य ब्र-
ह्मणः सांशत्वायोगाच्च न मृद्घटवत्तदभेदो वाक्यार्थः
किन्त्वात्यन्तिक एव स वाक्यार्थः स्यात्स च प्रागुक्त-
युक्त्या न संभवतीत्याशयेन सदृष्टान्तमाह। पारोक्ष्येति
पारोक्ष्यादिकृतो विभागो भेदस्तेन सह विरोधाद्धेतोरि-
त्यर्थः॥ ९८॥

सोऽयं गिरोरिव न लक्षणयापि वृत्ति-
र्मानान्तराधिगतिहीनतयात्मनि स्यात्॥
मानान्तराधिगतगोचर एव दृष्टः
शब्दप्रयोग इह लाक्षणिकस्तु लोके॥ ९९।

ननु तत्त्वंपदवाच्ययोः पररूपराभेदायोग्यत्वेऽपि वि-
रुद्धांशपरित्यागेन पदद्वयलक्ष्ययोरभेदो न विरुध्यते
ति तमेव वाक्यं बोधयितुं यथा सोऽयमिति प्रत्यभि-
वाक्यं तदेतत्पदवाच्ययोस्तदेतद्देशकालविशिष्टयोरभे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभवेन तदेतद्देशकालांशं विहाय लक्षितवस्तुस्वरूपाभेदं प्रतिपादयतीत्याशङ्क्याह । सोऽयमिति । तत्त्वं गिरोरिति शेषः, यथासोऽयमिति गिरोर्लक्षणया देवदत्तादिस्वरूपे प्रवृत्तिरेवं तत्त्वं गिरोरात्मनि लक्षणयापि वृत्तिर्न स्यात्, कुतस्तत्राह । मानान्तरेति । आत्मनि मानान्तरेणावगमासंभवान्न लक्षणेत्यर्थः । ननु मानान्तराभावेऽपि तत्र सा किं न स्यादित्याशङ्क्याह । मानान्तराधिगतेति । मानान्तरेण वाच्यसंबन्धितयावगते लक्षणा भवत्यन्यथा लक्ष्यस्वरूपनिर्धारणायोगात्, शब्दादेव तन्निर्णये तस्यापि शब्दस्य लाक्षणिकत्वेनानवस्थापातात्, ततश्च लक्ष्यस्य मानान्तरगम्यत्वं लक्षणाव्यापकमात्मनो व्यावर्त्तमानं लक्षणामपि व्यावर्तयतीति भावः ॥ ९९ ॥

तस्मादखण्डविषया न वचःप्रवृत्तिः
संसर्गबोधनमपास्तमयोग्यभावात् ॥
एवं न वाक्यगतशब्दसमन्वयोऽपि
दूरे प्रमान्तरविरोधनिरासासिद्धिः ॥ १०० ॥

आत्मनि लक्षणाऽसंभवसमर्थनफलमाह । तस्मादिति । यस्माल्लक्षणयापि सामानाधिकरण्यं न घटते तस्मादखण्डविषया तत्त्वमादिवचःप्रवृत्तिरिति योजना । संसर्गबोधनं तु प्रकृतवाक्येऽयोग्यभावादपास्तमित्यर्थः । समानाधिकरणवाक्यं हि लोके द्विविधं दृष्टम्, एकं विरुद्धांश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परित्यागेन लक्षणया स्वरूपमात्रपरं यथा सोऽयमि
वाक्यं किं चित्तु वाच्ययोरेव तादात्म्यलक्षणसंसर्ग
यथा मृद्घटः नीलोत्पलमित्यादि, एतच्च द्वैविध्यं ल
णासंभवात्पूर्वोक्तन्यायेन विरोधाच्च ब्रह्मणि न संभव
त्यर्थः। ननु वेदान्तविरोधाद्विरोधग्राहकप्रमाणानामेव
प्रामाण्यमस्त्वित्यत आह। एवमिति। वेदान्तवा
प्रयुक्तो यः शब्दस्तस्य सामानाधिकरण्येनान्वयोऽपि
संभवति यदा तदा पदार्थयोर्विशेषणविशेष्यभावेन
मितिरेव न सिद्धयेद् दूरे विरोधग्राहकप्रामाण्यनिरा
सिद्धिः,प्रत्यक्षादिबाधितमर्थमग्निरनुष्ण इति वाक्यवं
दोऽपि न प्रमापयितुं शक्त इति कुतस्तद्विरोधात्तदि
राप्रामाण्यमिति भावः ॥ १०० ॥

किं च प्रमान्तरमपेक्ष्य गिरः प्रवृत्तिः
सिद्धेषु वस्तुषु जगत्युपलब्धपूर्वा ॥
ब्रह्मात्मवस्तुनि तथा वचसः प्रवृत्ति-
र्युक्तात्मनस्तु फलवत्परिनिष्ठितत्वात् ॥ १०१

किं च वेदान्ता यदि सिद्धं ब्रह्म प्रतिपादयेयुस्तर्हि प्र
नान्तरसंवादायत्तप्रामाण्याः स्युः, नदीतीरे फलानी
लौकिकवाक्ये तथा दर्शनात्,न च तत्संभवति तत्र मा
न्तरासंभवात्, वेदस्यानपेक्षत्वक्षतिप्रसङ्गाच्चेत्यभि
त्याह। किं चेति। सिद्धेषु प्रयत्नानिष्पाद्येषु पराभिम
कार्यविलक्षणेष्विति यावत्। उपलब्धपूर्वेति। पूर्वमुप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्धेत्यर्थः। ततः किं तत्राह। ब्रह्मेति। तथा तथैव। कुतस्त-त्राह। आत्मनस्त्विति। आत्मनोऽपीत्यर्थः। परिनिष्ठि-तत्वादिति। सिद्धत्वादित्यर्थः॥ १०१॥

नद्यास्तीरे फलमिति गिरः सिद्धवस्तुप्रवृत्ते-
र्दृष्टा स्वार्थप्रमितिजनने स्वान्यमानव्यपेक्षा॥
तद्वद्ब्रह्मण्यपि तु वचसो वैदिकस्याभ्युपेया
तस्मादस्मिन्न खलु घटते मानभावः श्रुतीनाम्॥१०२॥

फलवदित्युक्तदृष्टान्तं विशदयन्दार्ष्टान्तिकमपि विश-दयति। नद्या इति। सिद्धवस्तुनि प्रवृत्तिर्यस्यास्त-स्याः, तुरवधारणे तद्वदेवेति संबन्धः। अस्त्वेवं तत्राह। तस्मादिति। वेदान्तप्रतिपाद्ये मानान्तरप्रवृत्तौ तत्सि-द्धार्थानुवादतया वेदान्तानां तात्पर्याभावेनाप्रामाण्यं स्यात्तदभावे च सिद्धवाक्यप्रामाण्यप्रयोजकरूपाभा-वादप्रामाण्यं स्यादिति भावः॥ १०२॥

नाखण्डवस्तुविषया वचसः प्रवृत्ति-
र्लोकेऽपि दृष्टिपथमापतिता कदाचित्॥
नानापदार्थघटनाविषयत्वहेतो-
र्दूरेत्यता श्रुतिशिरोवचनेषु तस्याः॥ १०३॥

पूर्वं सोऽयमित्यादिलौकिकवाक्यस्याखण्डार्थत्वमुपे-त्य वेदान्ते लक्षणाऽसंभवेन दूषितम्, इदानीं तत्रापि त-दसंप्रतिपन्नं कुतस्तद्दृष्टान्तेन वेदान्तेषु तदवकाशो भ-वेदित्याह। नाखण्डेति। असंसृष्टवस्तुविषया नेत्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकेऽपि सोऽयमित्यादावपि । कुत इति चेत्तत्र नानेति। अपर्यायानेकपदोपस्थापितार्थानां घटना गेस्तद्विषयत्वाद्बुधेतोर्वचस इत्यनुषङ्गः । ननु यथा भाकराणां लोके लिङादीनां नियोगार्थत्वाभावेऽपि तदर्थता तद्वदत्रापरास्त्वित्याशङ्क्याह । दूरेत्यतेति। दू तीति दूरेत्यम् अव्ययात्त्यबिति त्यप्प्रत्ययासंभवा षाधिकारे दूरादेत्य इति वार्तिकोक्तरेत्यप्रत्ययः भावस्तत्ता दूरे गतता दूरे गतिरिति यावत् तस्या अ खण्डवस्तुविषयप्रवृत्तेर्वक्ष्यमाणदोषाद्युक्त लिङादिष्व संप्रतिपत्तेश्चेति भावः ॥ १०३ ॥

आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-
रर्थं समर्पयति शब्द इति प्रसिद्धम् ॥
आस्वेष नान्यतमयापि वदत्यखण्डं
शब्दान्तरात्तविषयादधिकार्थवृत्तेः ॥ १०४ ॥

ननु सोऽयमित्यादेरर्थान्तरासंभवादखण्डार्थतैव क्तेत्याशङ्क्य किं मुख्यया वृत्त्या पदानां तद्वाक्यमख निष्ठं गौण्या वा लाक्षणिक्या वा न सर्वथापीत्य आदायेति । अस्त्वेवं किं तत इत्याशङ्क्याह । आ ति । मुख्यादिवृत्तिषु मध्य इत्यर्थः । एषः शब्दः न वदति तत्राह । शब्दान्तरेति । एकपदोपात्तवि दधिकार्थवृत्तेः शब्दस्येति शेषः, अन्यथा वाक्य न स्यादिति भावः ॥ १०४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आधिक्यमुत्सृजति शब्दगणो निजेऽर्थे
शब्दान्तरात्तविषयादिति मन्यमानाः ॥
वाक्यत्वमेव पदजातगतं विहन्यु-
र्न ह्यस्ति हस्तकरशब्दगतं तदेषाम् ॥ १०५ ॥

वाक्यत्वानुपपत्तिमेव स्पष्टयति । आधिक्यमिति । पदान्तरानुपात्तविशेषमित्यर्थः । उत्सृजति न बोधयति । शब्दगणः वाक्ये प्रयुक्तःपदसमूहः । वाक्यत्वविघाते दृष्टान्तमाह । न हीति । हस्तः कर इत्यादिपदगतं तद्वाक्यत्वम् । एषां वादिनां शब्दानां वा । यदि वाक्ये प्रयुक्तानि पदानि मुख्याद्यन्यतमया वृत्त्यान्यमन्यमर्थविशेषं न प्रतिपादयेयुः किंत्वेकमेव तदा तेषां पर्यायतापत्तेर्हस्तादिपदसमूहवद्वाक्यत्वं न स्यात्,अपर्यायपदसमूहस्यैव वाक्यत्वादिति ॥ १०५ ॥

किं च स्वयंप्रभमलुप्तचिदेकरूपं
सर्वप्रमाणविषयाद्बहिरभ्युपेत्य ॥
आत्मानमात्मनि च शास्त्रमुदाहरन्तः
सिद्धान्तमभ्युपगतं परिपीडयन्ति ॥ १०६ ॥

किं च ब्रह्मणो वेदान्तजन्यज्ञानविषयत्वाभ्युपगमे सिद्धान्तहानिरित्याह । किंचेति । स्वयंप्रभत्वे हेतुरलुप्तेति।अत एव सर्वेषां प्रमाणानामविषय इत्याह।सर्वप्रमाणेति । आत्मानं स्वप्रकाशादिस्वभावं सर्वप्रमाणविषयादनात्मनो बहिरन्यमभ्युपेत्येति संबन्धः।अत ए-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेयं श्रुतिः अन्यदेव तद्विदितादिति। तर्ह्ययमभ्युपगमः
चित एवेत्याशङ्क्य वेदान्तमेयता तस्यैवं न सिध्येदि
भिप्रेत्य विपक्षे बाधकमाह। आत्मनि चेति ॥ १०

सर्वत्र वस्तुषु जडेष्वजडप्रकाशं
कुर्वत्प्रमाणमिति संप्रतिपन्नमेतत् ॥
ब्रह्मात्मवस्त्वजडबोधवपुः कुतोऽस्मिन्
वेदान्तवाक्यजनिताऽजड़संविदन्या ॥ १०७ ॥

किं च वेदान्तानां ब्रह्मण्यकिंचित्करत्वान्न मान
मित्याह। सर्वत्रेति। जडेषु अस्वप्रकाशेषु घटपटा
ष्वित्यर्थः। अजड़प्रकाशं स्वयंप्रकाशं विषयस्फुरणम्
टादीनां जड़त्वात्स्वतः स्फुरणासंभवाच्चक्षुरादि तत्र
रणमादधद् व्यवहार उपयुज्यत इति तस्य तत्र प्रामा
युक्तं ब्रह्मात्मनस्तु अजड़बोधस्वरूपतया स्वमहि
सिद्धेस्तदन्याऽजड़प्रकाशासंभवाच्च किं तत्र जनयित्वा
दान्तास्तत्र प्रामाण्यं लभेरन्नित्याह। ब्रह्मात्मेति।
जडेतिच्छेदः ॥ १०७ ॥

किं च क्रियापदमपेक्ष्य पदानि वाक्य-
भावेन सम्यगिह सङ्गतिमाप्नुवन्ति ॥
नात्र क्रियापदमपेक्षितमामनन्ति
वाक्यं कुतो भवति वेदशिरस्तदानीम् ॥ १०

किं च वेदान्तानां सिद्धब्रह्मनिष्ठत्वे तद्गतपदानां
स्परमन्वय एव न सिध्येत् क्रियापदेनैव सिद्धपदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वयनियमाद्ब्रह्मवाक्ये च क्रियाऽसंभवादित्याह । किं च क्रियेति । इह लोके । नन्वत्राप्यसि अस्मीत्यादिक्रियापदमस्तीति चेत्तत्राह । नात्रेति । वेदान्ते अस्यादिक्रियापदमपेक्षितं विवक्षितार्थं वेदान्तिनो नामनन्तीति संबन्धः । अस्यादिपदस्याऽपि सन्मात्रनिष्ठत्वाभ्युपगमान्नास्य क्रियापदत्वं साध्यार्थस्यैव तथात्वादतस्तन्निमित्तो न पदसमन्वय इत्याह । वाक्यमिति ॥ १०८ ॥

नापूर्वमर्थमुपलम्भयितुं पदानां
सामर्थ्यमस्ति परिहृत्य तु वाक्यभावम् ॥
स्वार्थस्मृतिं हि जनयन्ति पदानि लोके
विज्ञातसंगतितया न तु कार्यमन्यत् ॥ १०९ ॥

ननु तर्हि पदविधयैव वेदान्तपदानि ब्रह्म प्रमापयिष्यन्ति इति नेत्याह । नापूर्वमिति । तुरवधारणे नैवास्तीति संबन्धः । कुतः सामर्थ्याभावस्तत्राह । स्वार्थेति । तत्रापि हेतुमाह । लोक इति । वृद्धव्यवहारे इत्यर्थः । अन्यदनुभवरूपम्, पदानि हि वृद्धव्यवहारे स्वार्थे गृहीतसङ्गतिकान्येव वाक्यार्थं वाक्यविधया बोधयन्तीति वाच्यम्, अन्यथाऽव्युत्पन्नानामपि वाक्यश्रवणे तदर्थानुभवप्रसङ्गात्, एवं च पदानि पदविधया पूर्वानुभूतस्वार्थस्मृतिमेव जनयन्ति न त्वनुभवम्, अपूर्वार्थत्वाभावात्, वाक्यभावेनैव तेषामपूर्वार्थोपलम्भनशक्तिः, वाक्यार्थस्य विशिष्टस्य वैशिष्ट्यस्य वाऽपूर्वत्वात्, तदभावे च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्तानां नापूर्वोपलम्भनशक्तिरस्तीति भावः ॥ १०९ ॥

हित्वा न वाक्यपदते प्रतिपत्तिहेतु-
र्वेदो भवेदिति कथंचन वक्तुमीशः ॥
कश्चित् कदा चिदपि तत्र कुतः श्रुतीनां
प्रामाण्यमात्मनि भवेदिति वर्णयन्ति ॥ ११० ॥

तर्हि वर्णानामेव प्रागनवगतार्थतया प्रामाण्यं स्या-
दिति तत्राह । हित्वेति । वाक्यपदते वाक्यतां पदतां
त्यर्थः । वेदो वाक्यपदते हित्वा कथं चन कथमपि
र्णात्मनापि कदाचिदपि प्रतिपत्तिहेतुर्भवेदिति क-
दपि वक्तुं नेशः । तत्रैवं सति श्रुतीनां प्रामाण्यमात्म-
नि कुतो भवेदिति वर्णयन्ति वर्णनीयमित्यर्थः । अ-
वैवं सत्यात्मनि श्रुतीनां प्रामाण्यमिति यद्वर्णयन्ति
रकुतः किंबलादित्यर्थः । न हि वर्णमात्रात्क्वाप्यनुभ-
ऽस्तीति भावः ॥ ११० ।

किं च प्रमान्तरमिहाभ्युपयन् प्रतीचि
वेदान्तवाक्यमनुवादकमभ्युपेयात् ॥
मानान्तरं यदि च नेच्छति शब्दशक्ते-
स्तत्रग्रहः कथमिति प्रतिपादनीयम् ॥ १११ ॥

किं च वेदान्तस्थसत्यज्ञानादिपदानामनात्मनि सं-
तिग्रहो न संभवति न ह्यात्मातिरिक्तं सत्यादिस्व-
वं किंचिदस्ति, नाप्यात्मनि तेषां सङ्गतिग्रहस्तद्ग्राह-
मानानामात्मनि प्रवृत्तौ वेदान्तवाक्यमनुवादकं स्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मनि मानान्तराभावे च तत्र सदादिशब्दस्य कथं सङ्गतिग्रहः स्यात्तेन विना वा कथं वेदान्तानां तत्प्रामाण्यमित्याह । किं च प्रमान्तरमिति । अभ्युपयन्नङ्गीकुर्वन् कथमिति प्रतिपादनीयमिति । न कथमपि स्यादित्यर्थः ॥ १११ ॥

किं च प्रवृत्तिविनिवृत्तिविहीनवस्तु-
तत्त्वप्रतीतिजननान्न च किंचिदस्ति ॥
पुंसः प्रयोजनमतोऽपि न तत्र मानं
वेदान्तवाक्यमिति युक्तिमदुच्यमानम् ॥ ११२ ॥

एवं वेदान्तानां सिद्धब्रह्मबोधकत्वे नद्यास्तीरे फलसत्तावाक्यवन्मानान्तरसापेक्षतापत्तिर्मानान्तराभावे च सङ्गतिग्रहासंभवान्न तत्र तेषां प्रामाण्यमित्युक्तम्, इदानीं सिद्धवस्तुज्ञानेन प्रवृत्तिनिवृत्त्यसंभवात्प्रवृत्तिनिवृत्ती विना च सुखप्राप्तिदुःखपरिहाररूपप्रयोजनासंभवात्तेन विनाध्ययनविधिपरिगृहीतवेदान्तानां प्रामाण्यायोगादपि न सिद्धनिष्ठं वेदान्तप्रामाण्यमित्याह । किंच प्रवृत्तीति । प्रवृत्तिनिवृत्तिविहीनं तदयोग्यं यद्वस्तुतत्त्वमात्मतत्त्वं तत्प्रतीतिजननादित्यर्थः । हेयोपादेययोःकलञ्जभक्षणाद्यग्निहोत्राद्योरनर्थार्थसाधनयोर्ज्ञानात्तद्भक्षणान्निवृत्तिरग्निहोत्रादौ च प्रवृत्तिः संभवतीति तद्वाक्यं प्रयोजनवदर्थनिष्ठम्, आत्मतत्त्वं तु नित्यसिद्धत्वान्न हेयं नाप्युपादेयमिति न तज्ज्ञानात्प्रवृत्त्यादिसंभव इति नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्प्रयोजनमेवात्मवाक्याध्ययनं स्यात्तच्चानुपपन्नं न॥ पेक्षाज्ञानेन तदध्ययनविधिः फलवान् भवतीति न॥ वेदप्रामाण्यं युक्तमिति भावः ॥ ११२ ॥

अज्ञातमर्थमवबोधयतः प्रमायां
हेतुत्वमभ्युपगतं ननु वेदविद्भिः ॥
अज्ञातता च परमात्मनि दुर्निरूपा
विज्ञानमात्रवपुषीति न मानकृत्यम् ॥ ११

किं चाज्ञातार्थावगमकं प्रमाणमिति प्रमाणसामा लक्षणं वेदविद आहुः, विशिष्य च वेदस्य तथैव क्तव्यन्, अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्येति जै निनोक्तेः, अन्यतो ज्ञातेऽर्थे मानाभावप्रयुक्ताऽसत्त्वा ङ्काऽभावेन वेदस्य तत्र तात्पर्यकल्पनाऽसंभवाच्च, न चा त्पर्यं विना शब्दः स्वार्थे प्रमाणमित्याह । अज्ञातमि अवबोधयतः, चक्षुरादिकरणस्येति शेषः । ततः कि त्राह । अज्ञाततेति । चोऽवधारणे दुर्निरूपैवेति सं न्धः । तत्र हेतुर्विज्ञानेति । स्वप्रकाशचैतन्यात्मनि प्र चि नाज्ञानं वक्तुं शक्यं न हि प्रचुरप्रकाशे सवितरि मः संभवति, ततोऽज्ञातोर्थावगमलक्षणप्रमाणकृत्या वान्नात्मनि वेदान्तप्रामाण्यसंभव इति भावः ॥ ११

बोधस्वभावकमबुद्धमनुष्णमुष्णं
शीतस्वभावकमशीतमितीदृशानि ॥
कः श्रद्दधीत पुरुषो वचनानि तस्माद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्माऽप्रबुद्धमिति वाक्यमयुक्तमाहुः ॥ ११४ ॥

ननु नेदं प्रमाणसामान्यलक्षणं धारावहनद्वितीयादि-बुद्धावभावात्, किं तु यथार्थानुभवः प्रमा तत्करणं प्र-माणमिति सामान्यलक्षणमिति चेन्न, धारावहनबुद्धि-सत्त्वेऽपि तद्विषयस्य प्रथमज्ञानेन निश्चितस्यासत्त्वशङ्का-नुदयेन द्वितीयादिज्ञानानां तदनिवर्तकानां प्रमेयसत्त्व-प्रयोजकप्रामाण्याभावेन तत्र लक्षणागमनस्यादोषत्वा-त्, यथार्थानुभवत्वं च शुक्तिरजतादिज्ञानसाधारणम्, अबाधितार्थज्ञानं प्रमेत्यपि न, बाधस्य बाध्याभावप्रमा-रूपतयात्माश्रयादित्यज्ञातार्थबोधकत्वमेव परीक्षकसं-मतं प्रामाण्यम्, तच्चात्मनि वेदान्तानां न संभवति अ-ज्ञानाभावादित्युक्तम्, तदभ्युपगमे च तस्य स्वप्रकाशता हीयेत, न ह्यात्मतत्त्वं स्वप्रकाशमबुद्धमितिवचनद्वय-प्रामाण्यं संभवतीति सदृष्टान्तमाह । बोधस्वभावक-मिति । आहुः वेदान्तिन इति शेषः ॥ ११४ ॥

उपाध्यभावे न भवेदुपाधिमत्
तटस्थमज्ञानमुपाधिरिष्यते ॥
प्रमाणबुद्धेर्न तदात्मवस्तुनि
स्वयंप्रकाशे न ततोऽत्र मानधीः ॥ ११५ ॥

नन्वज्ञानविशिष्टं न प्रमाणगोचरस्तस्यापि प्रमाण-गोचरत्वापत्तेः तस्य ततो निवृत्त्ययोगाच्च, नापि तदुप-लक्षितं वस्तुमात्रे प्रमाणप्रसङ्गेन तदभावेऽप्यनुपपत्त्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावादित्याशङ्क्य, नाज्ञानं तत्र विशेषणं न वोपल
णं किं तूपाधिः, उपाधिश्च यावत्कार्यावस्थायी तद
न्वयी यथा श्रोत्रत्वस्य कर्णशष्कुली, एवं चाज्ञानाभा
वस्तुनः प्रमेयत्वं न संभवति कर्णशष्कुल्यभाव
श्रोत्रत्वमित्यभिप्रेत्याह । उपाध्यभाव इति । कर्ण
ष्कुल्याद्यभाव इत्यर्थः । उपाधिमत्तत्प्रयुक्तश्रोत्रत्वा
तटस्थं प्रमेयाद्बहिर्भूतम् । किं तदुपलक्षणं नेत्याह ।
पाधिरिति । अत्र तटस्थमित्यनेन विशेषणादुपाधे
शेषो दर्शितः, उपाध्यभाव इत्यादिनोपलक्षणादिति
ष्टव्यम् । प्रमाणबुद्धेरुपाधिरिति संबन्धः । अज्ञानस्यो
धित्वे फलितमाह । न तदात्मेति । तदज्ञानं स्वयं
काश आत्मवस्तुनि न ताटस्थ्येनाप्युपाधिः संभव
इत्यर्थः । यत एवमज्ञानासंभव आत्मनि ततो हे
रत्रात्मनि न मानधीः संभाव्यत इत्युपसंहारः ॥ १

अद्वैतमात्मपदमाहुरनन्यमानं
द्वैतं प्रमाणमिह च प्रतिपादयन्ति ॥
वाक्ये निजे पदविरोधमनीक्षमाणाः
पाण्डित्यमप्रतिहतं प्रतिलभ्य धीराः ॥ १

किं चाद्वैतब्रह्मवादिना वेदान्तार्थावगन्ता प्रमाता
दान्ताः प्रमाणं तदुपदेष्टा गुरुस्तदुपकरणं युक्त्या
भ्युपगम्यते न वा, आद्ये व्याहतिः, द्वितीये न प्रमे
सिद्धिः, एवं स्वप्रकाशं स्वातिरिक्तप्रमाणगम्यमि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पि प्रमाणविरुद्धमित्याह । अद्वैतमिति । आहुः वेदान्तिन इति शेषः । द्वैतमुक्तप्रमात्रादिप्रमाणं प्रमितिसाधनं चेति संबन्धः । पाण्डित्यमित्याद्युपहासः ॥ ११६ ॥

मातृप्रमाणमितिमेयविभागभिन्नं
ब्रह्मैव चेद्भवति तत्र च वर्णयामः ॥
कूटस्थतापहतिरेकरसत्वहानिः
शाक्यैश्च सन्धिरिति दूषणमन्यदत्र ॥ ११७ ॥

ननु प्रमात्रादिविभागः सर्वोऽप्यस्त्येव, न चैवमद्वैतक्षतिः, अद्वैतब्रह्मण एव निखिलप्रपञ्चपरिणामितया मात्रादेस्तदभिन्नत्वादित्येवं वदन्तं बौद्धगन्धिनमेकदेशिनं प्रत्याह । मातृप्रमाणेति । मितिः प्रमा । तत्र च वर्णयामो दूषणमिति संबन्धः । तदेवाह । कूटस्थतापहतिरिति । निर्विकारस्य ब्रह्मणः प्रमात्रादिविकाराभ्युपगमे निर्विकारश्रुतिविरोध एवमनेकात्मप्रपञ्चाभेदे विज्ञानघन एवेत्यादिश्रुत्यवगतैकरसत्वहानिरेवं ज्ञानात्मनो ब्रह्मणः स्वावभास्यप्रपञ्चाकारत्वे शाक्यैर्विज्ञानवादिभिः सन्धिः कृतः स्यात्तन्मतप्रवेशापत्तिरिति यावत् । चकारदर्शितं दूषणान्तरमप्याह । अन्यदत्रेति । युगपदेकत्र भेदाभेदविरोधादित्यर्थः ॥ ११७ ॥

अज्ञानकल्पितमनिर्वचनीयमिष्टं
मात्रादि मानफलपर्यवसानमेतत् ॥
इत्युच्यते यदि तदा परमात्मनोऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेयत्वतो भवति कल्पितताप्रसङ्गः ॥ ११८ ॥

ननु प्रमात्रादिविभागः सत्यो न भवति येनोक्त
यां स्यात् किं तु दृश्यत्वाच्छुक्तिरजतवत्तत्राज्ञानकल्पि
त इति न कोऽपि दोष इत्याशङ्कयाह । अज्ञानकल्पि
तमिति । ननु तदपि सच्चेत्कथं नोक्तदोषस्तत्राह
अनिर्वचनीयमिति । सदसद्विलक्षणमिति नोक्तदोष
त्यर्थः । एतन्मात्राद्यज्ञानकल्पितमिति संबन्धः । मा
आदिर्यस्य मानफलं पर्यवसाने च यस्य तत्तथोक्तम् ।
श्यत्वेन प्रमात्रादेः कल्पितत्वे ब्रह्मणोऽपि तत्प्र
स्तस्यापि वेदान्तवेद्यतया दृश्यत्वादित्याह । तदेत
दिना ॥ ११८ ॥

ब्रह्म प्रमेयमथ नेष्टमिह प्रमाणं
वेदान्तवाक्यमिति पक्षपराहतिर्वः ॥
न ह्यप्रमेयमवबोधयदस्ति मानं
नादाह्यदाहक इति प्रथितः कृशानुः ॥ ११

ननु नास्ति ब्रह्मणो दृश्यत्वं स्वप्रकाशत्वादिति
त्तर्हि तत एव वेदान्तप्रमेयमपि न स्यात्, अदृश्यस्य
नविषयत्वानुपपत्तेरित्याह । ब्रह्मेति । अथ चेदि
र्थः, ब्रह्म प्रमेयं नेष्टं चेत्तर्हि इह ब्रह्मणीति संबन्ध
पक्षपराहतिमेव सदृष्टान्तं व्यनक्ति । न ह्यप्रमेयमि
अदाह्यं गगनादि तस्य दाहक इत्यर्थः ॥ ११९ ॥

किं चाप्रसिद्धमिदमत्र जगत्त्रयेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वाज्ञानकल्पितमनिर्वचनीयमेकम् ॥
निःशेषतीर्थदृगुदीरिततन्त्रमार्गे
सिद्धे यतः सदसती सकलेऽपि तन्त्रे ॥ १२० ॥

अज्ञानकल्पितमनिर्वचनीयमित्यत्रोक्तं मात्रादेरनिर्वचनीयत्वमुपेत्य ब्रह्मणोऽपि तत्प्रसङ्ग इति दूषितम्, इदानीं तदेवासंप्रतिपन्नमित्याह । किं चाप्रसिद्धमिति । इदंशब्दार्थमाह । स्वाज्ञानेति । एकमेकमपि वस्त्वति शेषः । ननु लोकाप्रसिद्धमपि कस्मिंश्चिच्छास्त्रे वैशेषिकाभिमतविशेषवत्सिद्धं स्यान्नेत्याह । निःशेषेति । तीर्थदृशः शास्त्रार्थविदः, वैशेषिकादिनिखिलशास्त्रार्थविद्भिरुदीरिततन्त्रमार्गे तन्त्र्यत इति तन्त्रं शास्त्रार्थस्तत्प्रतिपत्त्युपाये सकलेऽपि तन्त्रे शास्त्रे सदसती एव सिद्धे यत इति संबन्धः । वैशेषिकादिभिर्हि स्वशास्त्रे सदसद्वस्तुनी एव निरूपिते न तु तदुभयविलक्षणमपि किंचिद्विशेषवस्तु । लोकाप्रसिद्धोऽपि प्रमाणबलात्तैरभ्युपेत इति न तद्वदिदमभ्युपगन्तुमुचितमिति भावः १२०

अज्ञानमप्यसदभावतया प्रसिद्धे-
र्द्वैतप्रसूतिकृदतो न तदभ्युपेयम् ॥
नासत्कदा चिदपि सज्जनने समर्थं
वन्ध्या सुता न खलु पुत्त्रशतं प्रसूते ॥ १२१ ॥

ननु वैशेषिकादिभिरज्ञानानभ्युपगमात्तत्कल्पितमनिर्वचनीयं नाभ्युपेतम्, सिद्धान्ते तु तत्सत्त्वात्कथं त-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्कृतमनिर्वचनीयं नाभ्युपेयमित्याशङ्क्याज्ञानकल्पि त्वमेव न संभवतीत्याह । अज्ञानमिति । असत्सव वति । तत्र हेतुः । अभावतया प्रसिद्धेरिति । अज्ञा मिति नञा ज्ञानाभावतयाऽज्ञानं प्रतीयते अभावश्च सन् तत्र सत्ताजातेरभावात्, अभावत्वादिस्वरूपस्य दुर्निरूपत्वादित्यर्थः । अज्ञानस्यासत्त्वसमर्थनफलमा द्वैतेति । यतोऽसदज्ञानमतो द्वैतस्योत्पत्तिस्तत्क नाभ्युपेयम् । असदपि तत्प्रागभाववत्कथं न द्वैतं येदित्याशङ्क्य तद्दृष्टान्तासंमत्याऽसतोऽकारणत्वसह न्तमाह । नासदिति । न हि ज्ञानाभावोऽज्ञानं भावस्य प्रपञ्चस्योपादानं भवितुमर्हतीतिभावः ॥

> वाक्यप्रसूतमतिरिन्द्रियजन्यधीव-
> न्नार्थापरोक्ष्यजननी भवितुं समर्था
> तेनास्तु वाक्यजनितात्मपरोक्षबुद्धि-
> भ्रान्तिः सदाऽजडतयाऽनुभवेऽपरोक्षे ॥

किं चेतोऽपि वेदान्तानां नापरोक्षे ब्रह्मणि प्र ण्यं संभवतीत्याह । वाक्यप्रसूतेति । किं वेदान्ता ह्मणि अपरोक्षां धियं जनयन्ति किं वा परोक्षां इत्याह । इन्द्रियेति । इन्द्रियजन्यज्ञानवद्वाक्यजन्या तिरर्थापरोक्ष्यस्यार्थाभिव्यक्तेर्जननी भवितुं समर्था क्यजन्यत्वान्नापरोक्षेत्यर्थः । ततो द्वितीयः परिशि इत्याह । तेनेति । तत्र दोषमाह । भ्रान्तिरिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थं ब्रह्मात्मानं विशिनष्टि । सदेति । सदाऽपरोक्ष इति संबन्धः । तदर्थमाह । अनुभव इति । अनुभवोऽपि वेद्यश्चेन्न तस्य सदाऽऽपरोक्ष्यं तदर्थमाह । अजड़तयेति । तथा च वेदान्तानां तत्राप्रामाण्यमेव स्यादिति भावः ॥ १२२ ॥

नित्यापरोक्षमपि वस्तु परोक्षरूपं
वेदान्तवाक्यमवबोधयति स्वभावात् ॥
प्रामाण्यमत्र कथमस्य वदोपपन्नं
न ह्यन्यदन्यदिति बोधयतः प्रमात्वम् ॥ १२३ ॥

नन्वात्मा चेन्नित्यापरोक्षस्तर्हि घटादाविन्द्रियजन्यज्ञानमिव वेदान्तजन्यमपि तत्रापरोक्षमस्तु मास्तु वेदान्ताप्रामाण्यमिति नेत्याह । नित्यापरोक्षमिति । स्वभावाच्छब्दस्वभावात् । शब्दो हि लोके घटादिगोचरो वेदे चाग्निहोत्रादिगोचरस्तत्र परोक्षज्ञानमेव जनयतीति शब्दस्य परोक्षज्ञानजनकत्वमेव स्वभावो न त्विन्द्रियस्येवापरोक्षज्ञानजनकत्वमिति कथं वेदान्तानामपरोक्षे वस्तुनि परोक्षज्ञानं जनयतामप्रामाण्यं न स्यादित्याह । प्रामाण्यमिति । नन्वपरोक्षं सत्यज्ञानादिस्वभावं ब्रह्म तथैव बोधयन्ति वेदान्ता न विपरीततया तच्च ज्ञानं शब्दस्वभावात् परोक्षमित्येतावन्मात्रमिति कथं प्रामाण्यं न स्यादित्यत आह । न ह्यन्यदिति । वेदान्तजन्यज्ञानस्य परोक्षत्वे तद्विषयब्रह्मापि परोक्षं वाच्यं परो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षार्थविषयस्यैव ज्ञानस्य परोक्षत्वदर्शनात्, एवं च प
क्षं ब्रह्म यत्साक्षादपरोक्षादहं ब्रह्मास्मीति वाक्यप
रोक्षतया प्रतिपादयत्कथं प्रमाणम्, न चापरोक्षज्ञानं
षयः परोक्षं ब्रह्मास्ति येन सदर्थतया वाक्यजन्यं
रोक्षज्ञानं प्रमाणं भवेदित्यर्थः । अन्यत्परोक्षं
अन्यदिति अपरोक्षमिति बोधयत इत्यर्थः ॥ १२३ ॥

वस्त्वस्तु नित्यमपरोक्षमिदं तु वाक्यं
तद्वस्तु वक्तुमपरोक्षमशक्तमेव ॥
न ह्यस्ति शब्दजनिताऽत्र जगत्त्रयेऽपि
बुद्धिः करोति खलु या विषयापरोक्ष्यम् ॥ १२

नन्वग्निहोत्रादिवाक्यस्य परोक्षज्ञानजनकत्वेऽपि
ब्दस्य न तत्स्वभावः कल्पनीयः, दशमस्त्वमसीत्यादि
क्यस्यापरोक्षज्ञानजनकत्वात्, अन्यथा तत्रापरो
दशमत्वभ्रमस्ततो न निवर्तेतेत्याशङ्क्य दृष्टान्तासं
पत्त्या दूषयति । वस्त्वस्त्विति । अपरोक्षं यथा
स्तथा तद्वस्तु वक्तुमशक्तमित्यर्थः । अदशमत्वादि
स्य तत्रेन्द्रियजन्यसाक्षात्कारादेव निवृत्तेः शब्दस्य
त्रापि परोक्षज्ञानजनकत्वमेवेति न तत्स्वभावभ
ति भावः ॥ १२४ ॥

अत्राह यद्यपि किमप्युपनेयमत्र
चैतन्यवस्तुनि न संभवति प्रमाणैः ॥
अस्त्येव तत्र भवभीतिनिदानभूत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मज्ञानमात्रमपनेयमनन्यमाने ॥ १२५ ॥

पूर्वं घटादौ चक्षुरादिप्रमाणस्य स्वप्रकाशस्फुरणाधानवच्चिदात्मनि वेदान्तानां तदसंभवान्न प्रामाण्यसंभव इत्युक्तम्, इदानीं वेदान्तजन्यवृत्त्या तत्र स्फुरणाजननेऽपि न वेदान्तानामानर्थक्यमविद्यानिवृत्तेस्तत्साध्यत्वेन तत्र वेदान्तप्रामाण्यसंभवादिति सिद्धान्तिशङ्कां दूषयितुमनुवदति। अत्राहेति। उपनेयमाधेयं स्फुरणमनन्यमाने स्वप्रकाशे तत्रास्त्येवेति संबन्धः। ज्ञानमज्ञानमात्रं निवर्तयति प्रपञ्चस्तु तन्निवृत्त्या निवर्त्तते, अथ वा प्रपञ्चोऽपि तद्विकारस्तदात्मक एवेति मात्रमित्युक्तम् ॥ १२५ ॥

नैतत्प्रमाणमपनेतृ सतो न ताव-
न्नैतन्नियोज्यमसतोऽप्युपघातसिद्धेः ॥
नाप्यन्यदस्ति सदसद्यदनेन हेयं
तस्मात् प्रमाणमपनेतृ न कस्य चिद्वः ॥ १२६ ॥

एतद् दूषयति। नैतदिति। त्वदुक्तं नेत्यर्थः। कुतस्तत्राह। प्रमाणमिति। न तावत्प्रमाणं सतोऽज्ञानस्यापनेतृ निवर्तकं सत आत्मवदनिवर्त्यत्वात्, एतत्प्रमाणमसतोऽप्यज्ञानस्योपघातसिद्धेः निवृत्तिसिद्धेः नियोज्यं योजनीयं न, असतो निवृत्त्यनुपपत्तेः, नाप्येतत्पक्षद्वयादन्यत् सदसदात्मकमज्ञानमस्ति यदनेन प्रमाणेन हेयं स्यात्, विरोधेनैकस्य सदसदात्मकत्वायोगात्। यस्मा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दज्ञानस्योक्तकल्पत्रयेऽपि निवृत्तिर्न संभवति तस्मा
युष्माकं मते प्रमाणं वेदान्तवाक्यं कस्यापि न ज्ञानद्वा
पनेत्रिति वेदान्तानर्थक्यं तदवस्थमेवेति भावः॥ १३

मानं न कारकमिति प्रथितं पृथिव्यां
स्याच्चेत्क्रियावदिदमुज्झति मानभावम्॥
जन्यं न मानफलमित्यपि युष्मदीयाः
संविद्रते न खलु जातु चिदक्षरेऽस्मिन्॥ १३

किं चाविद्यानिवृत्तिरसती चेन्न प्रमाणाज्जायेत, स
चेत्तज्जनकमानस्य कारकतापत्तिः, जड़क्रियापर्यव
यिनस्तन्नियमान्न च तदुपपन्नं मानस्य व्यञ्जकतयाऽ
रकत्वव्याप्तिविरोधादित्यभिप्रेत्याह। मानं न कार
मिति। एवं तदाकारकस्यामानत्वं व्याप्तिविरोधं
ह। स्याच्चेदिति। कारकमित्यनुषङ्गः। क्रियावदग्नि
त्रादिक्रियावत्। अथ वा क्रियावत् क्रियाजनकं क
रकमिति यावत् स्यादिति संबन्धः। इदं मानमुज्झ
ति त्यजेदित्यर्थः। ननु चक्षुरादेः प्रमाणस्य जड़ज्ञा
क्रियाजनकत्वं सर्वसंमतमित्याशङ्क्य तदपि न भव
संमतमित्याह। जन्यं न मानफलमिति। संविद्रते
जानते अङ्गीकुर्वंत इति यावत्। अजड़ाजन्याभि
व्यक्तानुभवस्यैव सर्वप्रमाणफलत्वेन ब्रह्मवादिभिरङ्गीक
राज्जड़वृत्तिमात्रनिष्ठं न चक्षुरादिप्रामाण्यमिति भाव
अथ वा यथा मानं न कारकमिति नियममाहु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जन्यं न मानफलमित्यपि स्वरूपानुभवस्यैव सर्वप्रमाणफलत्वमिच्छन्तो वार्तिककृत्प्रभृतयोऽङ्गीकुर्वते तदप्येवं सति विरुद्धं स्यादित्याह। जन्यं न मानफलमिति। अस्तु तर्हि घटादाविव ब्रह्मण्यभिव्यक्तं चैतन्यं प्रमाणफलमित्याशङ्क्य ब्रह्मणः फलाव्याप्यत्वान्नैतदित्याह। न खल्विति। जातु कदाचिदप्यस्मिन्नक्षरेऽभिव्यक्ता चिन्न खल्विति संबन्धः। वेदान्ताभिव्यक्तचैतन्यस्य निष्प्रपञ्चात्मस्वरूपतया तत्फलत्वासंभवादिति भावः॥ १२७॥

> नाद्यापि वेद्म्यहमनिर्वचनीयभावां
> सर्वप्रवादहृदयान्यपि गाहमानः॥
> तात्पर्यतो न च तथाविधमस्ति किं चि-
> ल्लोकप्रसिद्धमपि यद्विषयेयमिष्टा॥ १२८॥

नन्वज्ञानस्य सदादिविकल्पेनानिवर्त्यत्वमुक्तमनुपपन्नमनिर्वचनीयत्वात्तस्य ज्ञाननिवर्त्यत्वसंभवात्, न चैवं मानस्य कारकत्वप्रसङ्गोऽपि, अनिर्वाच्यस्य निवृत्तेरधिष्ठानचिन्मात्रतया तत्पर्यवसायिमानस्य व्यञ्जकतयाऽकारकत्वादित्याशङ्क्याह। नाद्यापीति। वैशेषिकादिनिखिलशास्त्राभ्यासानन्तरमपीत्यर्थः। अनिर्वचनीयभावां सदसद्विलक्षणरूपां ताम्। तर्हि सम्यक् शास्त्रान्तरानभ्यासात्तदज्ञानं नेत्याह। सर्वेति। सर्वशास्त्रतात्पर्याणि गाहमानो विचारयन्नपीति संबन्धः। तात्पर्यतस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्गतमनसा। ततश्च तदभावादेव तदज्ञानं नान्यनि[illegible]
त्तं तदिति दर्शयन् लोकेऽपि तदप्रसिद्धिं दर्शयति
न चेति। तथाविधं सदसद्विलक्षणरूपानिर्वचनीय[illegible]
त्वयमनिर्वचनीयभावो। लौकिकरजतादिभ्रमस्याप्य[illegible]
थाख्यात्यादिरूपत्वेन लोकेऽपि तदप्रसिद्धिरिति[illegible]
वः ॥ १२८ ॥

तस्मात् प्रमाणफलमत्र निरूप्यमाणं
ब्रह्मात्मवस्तुनि न संभवतीह किं चित् ॥
कृत्यं विना न च निरूपयितुं प्रमाणं
वेदान्तवाक्यमिह शक्यमनर्थकत्वात् ॥ १२[illegible]

एवं वेदान्तानामुक्तन्यायैर्ब्रह्मणि प्रामाण्यासंभव[illegible]
मर्थनमुपसंहरति। तस्मादिति। अत्र स्फुरणाविद्या[illegible]
वृत्त्योर्मध्ये किंचिदपि निरूप्यमाणमिह ब्रह्मात्मव[illegible]
नि न संभवतीति संबन्धः। चोऽवधारणे, नैव श[illegible]
मिति संबन्धः। एतच्च पारोक्ष्यसद्वयत्वादिकृतविरो[illegible]
रप्युपलक्षणम् ॥ १२९ ॥

कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिं
श्रोतुः प्रवर्त्तकधियं परिकल्प्य बालः ॥
चेष्टावशात् पुनरपि प्रविभज्य भागं
भागस्य वाचकमिति स्वयमेव वेत्ति ॥ १[illegible]

एवं वेदान्तानां मानान्तरविरोधादिभिर्न सिद्धौ[illegible]
सीनप्रत्यगभिन्ने ब्रह्मणि प्रामाण्यमित्युक्तम्, [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नीं सर्वस्य वेदस्य कार्यपरत्वनियमान्न शुद्धे ब्रह्मणि प्रामाण्यम्, लोके शब्दानां कार्यव्युत्पत्तिबलेन वेदस्यापि तदर्थत्वादित्यभिप्रेत्य कार्ये सर्वशब्दशक्तिग्रहं लोके दर्शयति। कार्यान्वयेति। बालो व्युत्पित्सुर्गामानयेत्यभियुक्तवाक्यश्रवणानन्तरं प्रवर्त्तमानस्य श्रोतुर्गवानयनादिचेष्टावशात् प्रवर्तकधियं गवानयनादि कार्यमिति ज्ञानम्, विमता प्रवृत्तिरेतत्कार्यज्ञानपूर्विका एतत्प्रवृत्तित्वाद्यदेवं तदेवं यथा मम स्तनपानादिप्रवृत्तिरिति परिकल्पय तस्य कारणमालोचयन् गोमानयेत्यादिशब्दान्वयव्यतिरेकाभ्यां शब्दजन्यत्वं निश्चित्य तद्गोचरे वस्तुनि कार्ये प्रस्तुतवाक्यसामर्थ्यं स्वयमेव वेत्तीत्यनुषङ्गः। तत्किं वाक्ये प्रयुक्तसर्वपदानामविशिष्टार्थे शक्तिः, तथा सति पर्यायता स्यात्, न, वक्ष्यमाणन्यायेन पृथगर्थत्वादित्याह। पुनरपीति। संमुग्धतया वाक्यसामर्थ्यग्रहणानन्तरं वाक्यभागं पदानि प्रविभज्य तत्तत्पदं भागस्य कार्यान्विततत्तदर्थस्य वाचकमित्यपि वेत्तीत्यर्थः। लोके हि शब्दानां वृद्धव्यवहारानुसारेण सामर्थ्यमवगम्यते, वृद्धव्यवहारश्च प्रवर्तकवाक्याधीनः, अन्यस्मात्प्रवृत्तिहेतुज्ञानासंभवात्, न हि गौस्तिष्ठतीति वाक्यात्कश्चित्प्रवर्तत इति वाक्ये प्रथमं सामर्थ्यंग्राह्यम्, प्रवर्तकं च तद्यद्बुद्ध्वा प्रवर्तते, तच्च स्वस्मिन्कार्यमिति निर्णीतमतस्तज्ज्ञानमेव गामानयेति-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यश्रवणानन्तरं मध्यमवृद्धस्य गवानयनादिप्रवृत्त्या नुमीयते तच्च तस्य गवानयनादिवाक्यजन्यमिति तस्तद्गोचरे विशिष्टकार्ये तद्वाक्यं समर्थमिति निश्चीयते, प्रवर्त्तकवाक्यस्य तदन्यज्ञानस्य जनकत्वासंभवे तदशक्तत्वात्, एवं संमुग्धतया पदसमुदायस्य विशि कार्ये सामर्थ्यमवगत्य पश्चाद् गामबधान वत्समान त्यादौ । तद्विज्य तत्तत्पदप्रयोगे अन्वयव्यतिरेकाभ्या मेव कार्यान्विततत्तदर्थे तत्तत्पदं शक्तमिति वेत्तीति वंशब्दानां कार्यमर्थः । न च पर्यायता, कार्यविशेष व्यभिचारेऽपि कार्यसामान्यस्य तदभावेन तदन्वित शब्दार्थत्वोपपत्तेरिति । नन्वेवं कार्यपदस्य कथं क्तिः, कार्यान्तराभावेन तदन्वितकार्यासंभवात्, नापि वादौ तच्छक्तिरस्ति, न च कार्यपदं कार्यमात्रे श मिति वाच्यम्, शब्दार्थस्यानेकरूपत्वप्रसङ्गादिति तत्रा अन्वयेति । कार्यस्य योऽन्वयः संबन्धस्तदन्वयिनि ता श्रये, कार्यस्य हि सिद्धेनान्वयः सिद्धे कार्ये च वर्तते न्वयस्य द्विनिष्ठत्वादिति न शब्दशक्तिप्रयोजकरूपस्य नेकरूपत्वमिति ॥ १३० ॥

त्यक्तः कार्यान्वितार्थं वदितुमलमयं शब्द इत्येष पक्षो
नोक्तो योग्येतरार्थान्वितमिति तु पुनः पूर्वमप्येष पक्षः ।
किं तु स्यादस्य शक्तिर्निजसहजवशादन्वितार्थाभि
योग्यत्वादेस्तु पश्चात्स्वयमुपनिपतत्यस्य कार्यैदमर्थ्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु कार्यान्वयान्वयित्वापेक्षयान्वितत्वस्य लघुशरीरत्वात्तत्रैव शक्तिरस्तु, अन्यथा गौरवात्, न चैवमति-लाघवेन तत्तदर्थमात्रे शक्तिरस्त्विति वाच्यम्, अन्वितस्यैव शब्दश्रवणानन्तरं नियमेन प्रतीतेरित्याशङ्क्य पूर्वपक्षी तदनुमोदते। त्यक्त इति। एष पक्ष इत्यनेन संबन्धः। अलं समर्थः। तर्हि किं योग्येतरान्विते शक्तिराश्रिता, तदपि न, अतिगौरवादित्यभिप्रेत्याह। नोक्त इति। अस्माभिरिति शेषः। कस्तर्हि तव शब्दार्थस्तत्राह। किंतु स्यादिति। अस्य शब्दस्य निजसहजवशान्नैसर्गिकस्वभावादन्वितार्थाभिधाने शक्तिरिति संबन्धः। तर्हि सिद्धोऽपि शब्दार्थः स्यादिति नेष्टसिद्धिस्तत्राह। योग्यत्वादेरिति। उपनिपतति आयाति आगच्छेदित्यर्थः। सिद्धपदार्थानां साध्येन कार्येणैवान्वयो न तु सिद्धेन सिद्धसाध्ययोरिवान्वये आकाङ्क्षायोग्यतासंभवादन्वितमात्रे शक्तादपि गवादिपदाद्योग्यतादिमहिम्ना गवादेः कार्यान्वय एव सिद्ध्येदिति सर्वस्य शब्दस्य कार्यैदमर्थ्यं कार्यशेषत्वं कार्यप्रतिपादकत्वमिति ॥ १३१ ॥

प्रवृत्त्यभावस्य विरोधि कार्यं
कालत्रयानन्वितमाहुरेके ॥
स्वगोचरस्येप्सितसाधनत्वं
विज्ञापयत् प्रेरकमाहुरन्ये ॥ १३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु किमिदं कार्यं योग्यतादिबलाद्यदन्वयः पदा नामुपनिपतेत्, न, तावद्धात्वर्थः, तस्य स्वर्गासाधन स्वर्गकामिकार्यत्वाऽसंभवेनान्येषां तदैदमर्थ्यायोगा नापि नियोगरूपं तत्, लोके तदभावात्, न चोभय धारणकृतिसाध्यत्वविशिष्टं तदिति वाच्यम्, स्वर्गघ रपि नियोगवत्परम्परया तत्संभवेन तदन्वयस्यापि ब्दार्थत्वप्रसङ्गेन मतान्तरादविशेषादतो लोकवेदयो मशाब्दार्थताप्रयोजकं न सिध्येदित्याशङ्क्याह । प्रवृ ति । यन्निमित्तं पुरुषस्य कामनादियुक्तस्य निय प्रवृत्त्यभावो न भवेत्तत् । रागादावतिव्याप्तिवारणा द्विशिनष्टि । कालत्रयेति । भूतभविष्यद्वर्त्तमानान्य कालान्विततयाऽप्रतीयमानम्, स्वरूपेण कार्यस्य भावि त्कालान्वयित्वादित्यर्थः । यत्कालत्रयानन्वितं प्रवृ भावस्य विरोधि तत्कार्यम्, रागादौ घटादिपदार्थ मानघटादौ चातिव्याप्तिवारणाय दलद्वयम् । एके मतैकदेशिनः । अन्येषां तन्मतानुसारिणां नियो र्यलक्षणमाह । स्वगोचरस्येति । अत्र प्रेरकं कार्य त्युक्ते रागेऽतिव्याप्तिरत उक्तम् । स्वगोचरस्येत्या तावति विज्ञापयदित्यन्त उक्ते । इष्टसाधनत्वबोध माणेऽतिप्रसङ्गः स्यादित्यत उक्तम् । प्रेरकमिति । माणस्य बोधकत्वादेव न प्रेरकत्वमिति ततो ब्य त्तिसिद्धिः । इदं तु लक्षणं धात्वर्थं कार्यविलक्षणमि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गाख्यकार्यविषयम् । स्वगोचरस्येष्टसाधनत्वज्ञापकत्व-
निर्देशात् । न च नित्यनियोगेऽव्याप्तिः, तद्विषयस्ये-
प्सितसाधनत्वानङ्गीकारादिति वाच्यम् । तत्रापि
नियोगस्यैव कृत्युद्देश्यतयेष्टत्वात्तत्र धात्वर्थस्यापी-
ष्टसाधनत्वोपपत्तेस्तत्रापि लक्षणसंभवादिति द्रष्टव्य-
म् । एवं च सति कृतिसाध्यत्वादिना येन केन
चन विशेषणेन विशिष्टतयेष्टसाधनत्वज्ञानस्य प्रेरक-
त्वकल्पनेऽपि न कार्यलक्षणं तत्र गच्छति । इष्टसाध-
नत्वज्ञापकत्वस्येष्टसाधनत्वज्ञानेऽभावादिति भावः ।
स्वर्गकामो यजेतेत्यादौ लिङादिना लोके कार्यव्युत्पत्त्य-
नुसारेण कार्यमवगम्यते, तच्च कार्यं धात्वर्थातिरिक्त-
मेव, काम्यमानस्वर्गसाधनस्यैव तत्कामिकार्यत्वात्
यागस्य च तदभावात्, तच्च शब्दात्प्रतीयमानं कार्यं क-
स्य कुत्रेति नियोज्यविषयावपेक्षते, कृतिसाध्यत्वरूपेण
शब्दात्प्रतीयमानस्य किमाश्रयविषयकृतिसाध्यं तदिति
कृत्याश्रयविषययोः कृतिनिरूपकतयाऽपेक्षितत्वात्, त-
त्र स्वर्गकामः कार्यं स्वकृतिसाध्यतयावगच्छतीति नि-
योज्यः, धात्वर्थश्चाव्यवधानेन कृतिसाध्यः कृत्यवच्छे-
दद्वारा नियोगमवच्छिनत्ति यागविषयकृतिसाध्यं तदि-
ति प्रतीतेरिति स तद्विषयः, तदुभयविशिष्टं च कार्यं
स्वर्गकामो यजेतेति वाक्यार्थः, एवं च कार्यस्य धात्व-
र्थातिरिक्तस्य स्वतः कार्यत्वासंभवात् स्वस्य कृतिसा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यत्वनिर्वाहार्थं स्वविषयस्य धात्वर्थस्य कृतिसाध्य-
माक्षिपति, तच्च परम्परया काम्यस्वर्गसाधनत्वा-
ऽनुपपन्नम्, न हि कामी कश्चित्तदसाधनं करोतीति
देव कार्यं धात्वर्थस्येप्सितसाधनत्वमप्याक्षिपत्तत्र
प्रेरयतीति तदेवैके प्रेरकं कार्यमाहुरित्यर्थः ॥ १३२ ॥

या नान्यमुद्दिश्य कृतिः प्रवृत्ता
तयैव यद्व्याप्यतया प्रतीतम् ॥
तदेव कार्यं कथयन्ति केचिद्
विचक्षणाः कार्यनिरूपणायाम् । १३३ ॥

अनन्योद्दिष्टकृतिसाध्यत्वं कार्यत्वमिति तदभि-
संमतं लक्षणमाह । या नान्यमिति । प्राभाकरा हि
त्थं वदन्ति कार्यमेव कृतिसाध्यस्वभावं पुरुषार्थ
तु स्वर्गादिः स्वतस्तथा तस्य कार्यं प्रत्येव तत्सा-
स्यापि गर्भदासवच्छेषत्वादतः कार्यमुद्दिश्यैव तत्र
प्रवृत्तेति या नान्यमुद्दिश्येत्युक्तम् । व्याप्यतया सा-
तया ॥ १३३ ॥

भूत्वा रागः कारणं पुम्प्रवृत्ते-
र्नैवं कार्यं कार्यरूपं विहाय ॥
रूपेणान्येनेष्यतेऽस्या निमित्तं
भिन्दन्त्येवं रागकार्ये बहुज्ञाः ॥ १३४ ॥

ननु लोके राग एव धात्वर्थगोचरः प्रवर्त्तको दृष्टः
कार्यं तदतिरिक्तं किं चिद् दृष्टमस्तीत्याशङ्क्य तस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गव्यावर्त्तकं रूपं तावदाह । भूत्वेति । पूर्वक्षणे स्थित्वे-
त्यर्थः । कार्यरूपं कृत्युद्देश्यस्वरूपमन्येन स्वरूपेण सि-
द्धस्वरूपेणास्याः पुंप्रवृत्तेः । रागो हि निष्पन्नः सर्वत्र
प्रवृत्तौ कारणं न ह्यसिद्धो रागः क्वचित्प्रवर्त्तयति ।
कार्यं तु विपरीतमसिद्धावस्थस्यैव कृत्युद्देश्यत्वात्त-
स्यैव च स्वसिद्ध्यर्थं पुंप्रवर्त्तकत्वात्सिद्धस्य कार्यस्य कृ-
त्युद्देश्यत्वायोगेन तदयोगात् । न च लोके रागाति-
रिक्तं न प्रवर्त्तकं दृष्टमिति वाच्यम्, न तावत्फलराग-
स्य साक्षाद्धात्वर्थे प्रवर्त्तकत्वं भिन्नविषयत्वात्, धात्व-
र्थगोचरेच्छायाश्च कृतिसाध्यत्वप्रकारिकायास्तद्गोच-
रकर्त्तव्यताज्ञानं विनाऽसंभवात्, न च समानाकारज्ञानं
विना तदाकारेच्छा भवति तस्य च कर्त्तव्यताज्ञानस्या-
वलम्बनान्तराभावात् । धात्वर्थ एव तदालम्बनमिति
तदेव लोके कार्यमित्यभिप्रेत्याह । भिन्दन्तीति । भेदे-
नावगच्छन्तीत्यर्थः ॥ १३४ ॥

आवापोद्वापहेतोः पदमिदममुकस्याभिधाने समर्थं
स्वोत्पत्त्यैवेति शक्तिप्रतिनियममिमं पार्श्ववर्ती तटस्थः ॥
जानात्यालोच्य भूयो नयनिपुणमतिर्भागशः कार्ययुक्ते
वस्तुन्येतस्य हेतोरुपनिपदखिला कार्यशेषे प्रमाणम् ॥१३५॥

एवं कार्यान्विते गवादिपदगतशक्तिनिर्वाहाय लौकि-
कवैदिककार्यस्वरूपं निरूप्येदानीं भागं भागस्य वाच-
कमिति स्वयमेव वेत्तीति प्रागुक्तं कार्यान्विते तत्तदर्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषे गवादिपदशक्तिनियममुपपादयति । आवा
द्वापहेतोरिति । नयनिपुणमतिः नये निपुणा म
स्य सः । तटस्थः उदासीनः । पार्श्ववर्ती व्युत्पि
भूयो बहुश आलोच्यार्थादन्वयमिति सिध्यति । आ
पोद्वापहेतोः, इदं गवादिपदममुकस्य गोत्वादेः का
न्वितस्याभिधाने कथने स्वोत्पत्त्यैव स्वभावत एव
मर्थमिति भागशः प्रतिपदमिमं शक्तिप्रतिनियमं प्र
पदार्थनियतशक्तिं कार्ययुक्ते वस्तुनि जानातीति
न्थः । पार्श्ववर्ती व्युत्पित्सुर्हि मध्यमवृद्धस्य प्र
प्रवर्तकं गवाद्यानयनकार्यताज्ञानमनुमाय तत्र गा
नयेत्यादिवाक्यस्यान्वयव्यतिरेकाभ्यां कारणत्वम
माय तद्वाक्यस्य तस्मिन्प्रवर्त्तके संमुग्धतया शक्ति
वगच्छतीत्युक्तम्, तदनन्तरं गां बधानेत्यादिप्रयो
न्तरे गोपदस्यावापे प्रयोगे तदर्थं प्रागवगतं पश्य
त्समानयेति प्रयोगान्तरे तदभावात्तदर्थं चापश्य
न्वयव्यतिरेकाभ्यां गोपदं यत्किंचित्कार्यान्विते
शक्तं कार्यसामान्यस्याव्यभिचारात् , एवमान
दिपदमपि यत्किंचित्कारकान्वितानयनादौ, एवं
रकपदान्तरं क्रियापदान्तरमपि तत्तत्पदावापोद्वाप
तोस्तत्तत्कार्यान्वितेऽर्थे शक्तमिति प्रतिपदं शक्ति
नियमं जानाति, प्राथमिककार्यान्वयान्वितगृहीत
तिभङ्गप्रसङ्गेन केवले वस्तुनि संगतिग्रहायोगात्सो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यनिपुणमतिरित्यनेनोक्तो नयः, अन्योऽपि प्रवर्तकवाक्याधीना व्युत्पत्तिः प्रवर्तकं च कर्यज्ञानमित्येवमादिर्नयो भूय अलोच्येतिदर्शितः, ततो न्यायसिद्धो गवादिपदानां कार्यान्विते शक्तिरिति वेदान्तानामपि कार्यशेष एव ब्रह्मणि प्रामाण्यमित्यर्थः ॥ १३५ ॥

आज्ञादिभेदेऽप्यनुवर्त्तमाने
प्रवृत्त्यभावस्य विरोधिमात्रे ॥
लिङादिशब्दस्य स वेत्ति शक्तिं
प्रवर्त्तकाख्याविषयत्वयोग्ये ॥ १३६ ॥

नन्वस्त्वेवं गवादिपदानां शक्तिग्रहः, कार्यपदस्य कथं शक्तिग्रहः, नियोगस्य मानान्तरागोचरतया तत्र लिङादेः शक्तिग्रहायोगात्, न च लिङादिनैवोपस्थिते तस्मिन्शक्तिग्रह इति वाच्यम्, शक्तिग्रहात्पूर्वं लिङादेस्तदुपस्थापकत्वायोगादित्याशङ्क्य प्राभाकराणां मतभेदेन लिङादिसंगतिग्रहप्रकारान्दर्शयति। तत्र तावल्लोके आज्ञादय एव प्रवर्तका वेदे तु स्थायिकार्यं प्रवर्तकम् उभयत्र च प्रवर्तकत्वसामान्यमेकमस्ति तत्र लिङादेः संगतिग्रह इति केचित्तन्मतमाह। आज्ञादीति। उत्कृष्टस्य पुरुषस्य निकृष्टपुरुषप्रेरणा आज्ञा, आदिपदेन याञ्चा निकृष्टस्य उत्कृष्टप्रेरणा समस्य समानुज्ञा च गृह्येते। प्रवर्त्तकशब्दाभिधेयत्वयोग्ये प्रवृत्त्यभावस्य विरोधिमात्रे प्रवर्त्तकत्वसामान्ये। एवं च गोत्वादिसामान्यशक्ताद्ग-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वादिपदात्तद्व्यक्तिरिव लिङादिपदादभिहितप्रवर्त्तक
मान्यापर्यवसानादाज्ञादयो नियोगश्च सिध्यतीति
वः ॥ १३६ ॥

अन्ये वदन्ति निरुपाधिनियोगरूपं
वेदे भवत्यपुरुषप्रभवे स्वतन्त्रम् ।
लोके पुनः पुरुषधीरचितेषु कार्यं
सोपाधिकं तदिति कारणतो वचःसु ॥ १३

अन्ये त्वस्ति लोकेऽपि नियोगः स च सोपाधिको
तु स स्वतन्त्र एव तत्रोभयानुगतनियोगत्वसामान्ये
ङादिसंगतिग्रह इत्याहुः, तन्मतमाह। अन्ये इति। वै
कनियोगस्य निरुपाधित्वे युक्तिमाह। अपुरुषप्रभ
ति। अपौरुषेय इत्यर्थः, अतस्तत्राज्ञाद्यसंभवान्न
गस्तदुपाधिक इत्यर्थः, अत एव स्वतन्त्रम् लोके तु
त्यमाह। लोक इति। पुनःशब्दो विशेषद्योती विशे
ह। सोपाधिकमिति। वक्ष्यमाणोपाधियुक्तमिति त
र्यं वदन्तीति संबन्धः। तदुपपादनाय कारणत इ
क्तं तदेव विवृण्वन्वचांसि विशिनष्टि। पुरुषधीर
ष्विति। पुरुषसंबन्धाल्लौकिकवचसामित्यर्थः ॥ १३

आज्ञायाज्ञाद्युपाधिप्रणिपतितवपुः साधनेहानु
विज्ञातोपायभावं विषयमनुसरत् पौरुषेयीषु वा
वेदे कर्तृस्थरागाद्युपधिविरहितं कर्तृशून्ये ततो
न्सर्वत्रैकस्वभावस्थितवपुषि भवेल्लब्धशक्तिर्लिङा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोके कोऽयमुपाधिरिति जिज्ञासायामाह । आज्ञा-याज्ञादीति । माणवकादि ह्युपाध्यायाद्याज्ञादिनैव ग-वानयनादौ प्रवर्तते, तथा चाज्ञादिरूपो य उपाधिर्निमि-त्तं तस्मिन्प्रणिपतितं तेन संबद्धं वपुर्यस्याः फलसाध-नेहायाः साऽनुबन्धो यस्य तत्, अथ वा वपुरन्तं साध-नेहानुबद्धत्वं च पृथगेव विशेषणम् । तस्य वैदिककार्याद्वै-लक्षण्यान्तरमप्याह । विज्ञातोपायभावमिति । नियोग-प्रतीतेः प्रागेव यस्य हितोपायत्वमवगतं तं विषयं धा-त्वर्थमनुसरद्धात्वर्थो यत्फलसाधनत्वेन प्रागवगतस्तदनु-सरत्तदनुकूलं न तु धात्वर्थस्य तदधीनं फलसाधनत्व-मित्यर्थः, कार्यमिति पूर्वश्लोकादनुषञ्जनीयम्, भवती-ति च शेषः । पौरुषेयीषु वाक्षु आज्ञायाञ्चेत्यादेः संब-न्धः । वेदे निरुपाधिनियोगरूपमित्युक्तमुपपादयति । कर्तृस्थरागादीति । वेदे कर्तु राज्ञाद्युपाधिरहितमित्यर्थः । कुत इत्यत आह । कर्तृशून्य इति । अपौरुषेये वेदे कर्तुर-भावात्तदाज्ञादिकमपि नास्ति यस्मात्तत्र तन्निरुपाधिक-मित्यर्थः । नन्वेवं लोकवेदयोर्नियोगवैलक्षण्ये कथं लि-ङाद्यर्थत्वं तत्राह । ततोऽस्मिन्सर्वत्रेति । लोकवेदयोरे-कस्वभावतया नियोगत्वरूपेण स्थितवपुषि तस्मिन्नियो-योगे नियोगत्व इति यावत् । लिङादिर्लब्धशक्तिर्भवे-दिति तदैकार्थ्यं युक्तमेवेति भावः ॥ १३८ ॥

अन्ये भिन्नस्वभावं विविधमभिदधत्यानुरूप्येण कार्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोके धात्वर्थरूपं श्रुतिवचसि पुनस्तन्नियोगाख्यमेवं
संमुग्धे तत्र शक्तं शिशुरयमवगम्यादितो न्यायचक्षुः
पश्चाद्द्वैदैकवेद्यं वदति लिङिति च प्रेक्षते निश्चयेन ॥१३९॥

अभिनवगुरुमतमाह। अन्य इति। विविधमित्यस्य वि
वरणं भिन्नस्वभावमिति। आनुरूप्येण योग्यतामा
म्ना। वैविध्यमेवाह। लोक इति। संमुग्धे धात्व
नियोगस्वरूपेणाविवक्षितविशेषे। तत्र कार्यमात्रे। आ
दितः प्रथमतः। न्यायचक्षुः वक्ष्यमाणन्यायज्ञः॥१३९॥

धात्वर्थाख्यानशक्तो यदि भवति गुणाद्वृत्तितु वैदिके
संबन्धाज्ञानहेतोरनलमथ पुनर्वैदिके शक्तिमान्स्यात्
तत्संबन्धात्क्रियामप्यभिवदितुमलं लक्षणावृत्तितो
लिङ्शब्दस्तेन कार्ये श्रुतिवचनगते शक्त इत्यध्यवस
त्॥ १४०॥

तमेव न्यायं दर्शयति। धात्वर्थेति। लोके हि प्रव
कत्राश्यात्कार्ये प्रथमं लिङादेः संगतिग्रहः, कार्यं च लो
कवेद्ययोर्विलक्षणम्, न च लिङादेरनेकार्थत्वं न्याय्यम्,
च कार्यत्वसामान्यं लिङर्थ इति नोक्तदोषस्तदपर्यवसा
नाच्च कार्यप्रतीतिर्गवादिपदाद्गवादेरिवोभयत्रापि भवि
ष्यतीति वाच्यम्, वैदिकस्यापि कार्यस्य गवादिव्यक्ते
रिवाशब्दार्थत्वापत्तेर्मानान्तरेणाभिधेयसामान्यसंबन्धि
तयावगतस्यैव गवादेरिवापर्यवसानलभ्यत्वाच्च, तस्मा
देकत्र लिङ् लाक्षणिक इति कुत्र लक्षणा कुत्र शक्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिति विचारणीयम्, यदि धात्वर्थे लिङादिपदं शक्तं त-
दा गुणाल्लक्षणया वैदिके कार्येऽयं लिङादिर्वर्त्तितुम-
नलमसमर्थः कुतः संवन्धाज्ञानहेतोः, वाच्यार्थसंब-
न्धितया मानान्तरावगते तीरादौ गङ्गादिपदस्य लक्ष-
णा दृष्टा न च धात्वर्थसंबन्धितया वैदिकं कार्यं मा-
नान्तरेणावगतम्, अपूर्वरूपस्य तस्य तद्योग्यत्वात्,
अतः संवन्धाज्ञानात्तस्मिन्न लिङादिपदस्य लक्षणेत्य-
र्थः। अथ यदि शक्तिमान्स्यादयमित्यनुषङ्गः। तत्संब-
न्धान्मुख्यार्थनियोगसंबन्धात्। क्रियांधात्वर्थम्।यदि लि-
ङादिना वैदिकं कार्यमभिधीयेत तदा विषयभूतधात्व-
र्थसंबन्धितयैव लिङादिनाभिधानाद्वाच्यार्थसंबन्धि-
तया ज्ञाते धात्वर्थे लक्षणा युक्ता। यद्यपि लौकिकी
क्रिया न तत्संबन्धितयावगता, तथापि तत्संबन्धिधा-
त्वर्थजातीयेति तत्रैव लक्षणा। वैदिककार्ये तु लोके सं-
गतिग्रहणकालेऽनवगतेऽपि कामिनियोज्यसमभिव्याहा-
राद्वगते शक्तिरेवोचितेत्याशयेनाह। तेनेति ॥ १४० ॥

वं शब्दान्तराणां नयनिपुणमतिः शक्तिवित्स क्रमेण
क्षेपोद्धारदर्शी भवति कतिपयैर्वासरैस्तत्रतत्र ॥
स्मात्कार्यान्वितार्थे सकलमपि पदं शक्तिमद्बुध्यमानो
ताद्यर्थप्रतीतिं प्रति विमुखमनाश्शास्त्रतस्स्यान्मनु-
यः ॥ १४१ ॥

ननु लिङादिपदसमभिव्याहारमन्तरेणापि प्रभिन्नक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मलोदरे मधूनि मधुकरः पिबतीत्यादौ प्रसिद्धपदसम
व्याहारेण मधुकरादिपदानां शक्तिर्गृह्यते तत्र
सर्वपदानां कार्यान्विते शक्तिरित्यत आह । एवमि
शब्दान्तराणां भ्रमरादिशब्दानां शक्तिविद्भवतीति
वन्धः । स व्युत्पित्सुः । तत्रापि हि प्रवर्त्तकवाक्यात
र्यान्विते गृहीतसंगतिकपदप्रयोगादेव भ्रमरादिप
शक्तिग्रह इत्युपजीव्यकार्यव्युत्पत्त्यनुरोधेनाध्या
कार्यान्वित एव तदर्थ इति जानातीति नास्ति
द्व्यभिचार इत्यर्थः । तदिदमुक्तं नयनिपुणेति ।
पोद्धारदर्शी । भ्रमरादिपदप्रयोगस्य तत्र तदितरप
योगस्य च दर्शीत्यर्थः । तत्रतत्र । कार्यान्वित इति
फलितमाह । तस्मादिति । भूताद्यर्थेति । भूतम
मादिपदाद्वर्तमानभविष्यतोर्ग्रहणम् शास्त्रतो भू
र्थप्रतीतिं प्रतीति संवन्धः ॥ १४१ ॥

वाक्याद्भूतार्थनिष्ठाद्भवति न तु नृणां शब्दशक्तिप्र
लिङ्गं श्रोतृस्थबुद्धेर्न हि किमपि भवेदत्र बालोपलभ्य
न ह्येतत्पुत्रजन्माद्यवगतिनियतं नित्यत्रन्निश्चित
यद्वक्त्रादिप्रसादक्षितितलुठनादीक्ष्यते श्रोतृदेहे ॥

ननु न प्रवर्तकवाक्याधीनः प्राथमिकसंगतिग्रहो
वं स्या त्किं तु पुत्रस्ते जात इत्यादिवाक्यादेरपि
मं संगतिसंवेदनं स्यात्तच्छ्रवणानन्तरं पितुर्मुखप्र
दिलिङ्गेन पार्श्वस्थश्रोतरि तद्वाक्यार्थज्ञानोन्नय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वात्तत्र वाक्यस्यान्वयव्यतिरेकाभ्यां कारणत्वावगमसं-
भवाच्चान्वित एव पदानां शक्तिरस्तु, नापि योग्यता-
दिमहिम्नान्विते गृहीतसंबन्धानां कार्यैदमर्थ्यमिति त-
त्राह । वाक्यादिति । भूतार्थनिष्ठाद्वाक्यान्नृणां शब्दश-
क्तिप्रतीतिर्नैव संभवति कुतो नियतलिङ्गाभावेन तद-
र्थज्ञानानुमानासंभवादित्याह । लिङ्गमिति । अत्र श्रोत-
रि लोके वा । ननूक्तं पितुर्मुखप्रसादादिलिङ्गमिति त-
त्राह । न ह्येतदिति । एतच्छब्दार्थमाह । यद्वक्त्रादीति ।
क्षितितललुठनादि शोककार्यं तच्च पुत्रस्ते मृत इत्यादिवा-
क्यार्थज्ञाने लिङ्गमितिवदन्तं प्रत्युक्तम्। मुखप्रसादादेर्भा-
र्यासुखप्रसवधनप्राप्तितद्वियोगादिज्ञानादपि संभवेन पु-
त्रजन्माद्यवगतिनैयत्याभावेन ततस्तदनुमानासंभवान्न
सिद्धयान्वितः शब्दार्थ इति भावः ॥ १४२ ॥

तस्मादाध्वं निराशाः श्रुतिशिरसि न तस्यास्ति निष्प-
न्नरूपे
प्रामाण्यं कार्यशून्ये कथमपि च परब्रह्मणि स्वप्रधाने ॥
भूतं भव्यप्रधानं भवति हि न पुनः स्वप्रधानं कदाचि-
च्छास्त्रस्थाः शब्दशक्तिस्थितिनिपुणधियो विस्तरादे-
वमाहुः ॥ १४३ ॥

तस्माल्लोके सर्वपदानां कार्यान्वित एव संगतिग्रह इ-
ति वेदेऽपि तेषां स एवार्थो न्याय्यो लोकवेदयोः पदत-
दर्थभेदाभावात्, एवं च वेदान्तानामपि कार्यान्विते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मण्येव प्रामाण्यं वक्तव्यमिति न कार्यशून्ये स्व
धाने परब्रह्मणि कथमपि प्रामाण्यं संभवतीत्य
तस्मादिति । श्रुतिशिरसि निराशा आध्वं भवतेति
बन्धः । किं च तद्भूतानां क्रियार्थेन समाम्नायः भू
व्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति जैमिनि
बरस्वामिनोर्मतं तौ च वेदार्थनिर्णयेऽधिकृताविति
दुक्तमेव गृहीतुमुचितमित्यभिप्रेत्याह । भूतमिति
द्धमित्यर्थः । भव्यं साध्यं प्रधानं यस्य भव्यशे
त्यर्थः । स्वप्रधानं भव्यानन्वयि सच्छास्त्राप्रति
मित्यर्थः । शास्त्रस्था जैमिन्यादय एवमाहुः । ए
त्येतद्विवृतं भूतं भव्येत्यादिना । शब्दशक्तीति
दिकशब्दशक्तिव्यवस्थायां निपुणधियोऽबाधित
य इति यावत् ॥ १४३ ॥

तस्मादसंगतमिदं प्रतिभाति यन्मे
वाक्यप्रमाणकमुदीरितमद्वयत्वम् ॥
इत्येवमेष मम बुद्धिपथं विरोधः
प्राप्तः प्रभो परिहरैनमनुगृहाय ॥ १४४ ॥

एवं वर्णितन्यायबलाज्जैमिन्यादिवचनबलाच्च का
न्विते श्रुतितात्पर्यमित्यद्वयस्वप्रधानस्य ब्रह्मणो
क्यप्रमाणकत्वं भवदुक्तमसंगतमिति पूर्वपक्षमुप
ति । तस्मादसंगतमिति । इदंशब्दार्थमाह । यद्वाक्
माणकमिति । एवंविधपूर्वपक्षकरणेन स्वस्मिन्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्युत्थितत्वभ्रममपनयन्प्रार्थयते। इत्येवमिति। इति यत एवमुक्तप्रकारैर्विरोधो वेदान्तानां ब्रह्मणि प्रामाण्यासंभवो मम बुद्धिपथं प्राप्तोऽतो ममैव बुद्धिदोषादसंगतमिवभवदुक्तं वाक्यप्रमाणकमद्वयं प्रतिभाति न तु भवताऽसंगतमुक्तमित्यर्थः। प्रभो इति तत्परिहारे गुरोरनायासं द्योतयति। एनं विरोधम् ॥ १४४ ॥

सत्यं यदाह गुरुमान् यदि वाक्यगम्यं
संसर्गरूपमिह वेदशिरःस्वभीष्टम् ॥
अस्त्येव तत्र पदयोरुभयोर्विरोधः
पारोक्ष्यसद्वयविरोधकृतस्तदानीम् ॥ १४५ ॥

एवं प्रत्यगभिन्नेऽद्वये स्वप्रधाने ब्रह्मणि वेदान्तप्रामाण्याऽसंभवे चोदिते, किं जीवब्रह्मणोस्तत्त्वंपदवाच्ययोरभेदो न संभवतीति चोदयसि, उत तदुभयलक्ष्ययोः,तत्राद्यमङ्गीकरोति। सत्यमिति। यदाह। भवानिति शेषः। गुरुमान् शिक्षितमतिः। अन्यस्य सूक्ष्मेऽर्थे एवंविधाक्षेपायोगात्। संसर्गरूपं मुख्यार्थयोस्तादात्म्यमङ्गीकृतमेव दर्शयति। अस्त्येवेति। तत्र वाच्यार्थाभेदे ॥ १४५ ॥

यत् कर्मकाण्डनिपुणैरुदितं पुरस्ताद्
वाक्यार्थलक्षणमदः पुनरत्र नेष्टम् ॥
भेदादिवर्जितमखण्डमुशन्ति यस्मा-
च्छ्रीबादरायणमतानुगता महान्तः ॥ १४६ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु संसर्गो वा विशिष्टो वा वाक्यार्थ इति विद्वद्भि कृतमिति वेदान्तवाक्यस्यापि तदन्यतरोऽर्थः स्वी व्यः, तत्र चेत्पदतदर्थयोर्विरोधोऽङ्गीकृतस्तर्हि कथं व क्यार्थः सिद्धेयदित्याशङ्क्य वेदान्तव्यतिरिक्तानामेवा थाभ्युपेयो न तु वेदान्तानां वेदमात्रस्य वाऽतस्तद्वि ऽत्र न दोषायेत्याह । यत्कर्मकाण्डनिपुणैरिति। द्वाक्यार्थलक्षणमिति संबन्धः। पुरस्तात्पूर्वतन्त्रे।अ ल्लक्षणम्। अत्र वेदान्ते । वाक्यविशेषार्थलक्षणं वा विशेषार्थे नाङ्गीकृतं चेन्न कापि क्षतिरिति भावः। नु वाक्यार्थसामान्यलक्षणमेव तदस्तु, अन्यस्य साम लक्षणस्यासम्भवादन्यथा वेदान्तवाक्यविशेषस्य शोऽर्थः स्यादिति लक्षणान्तरासंभवं मन्वानं प्रत्य भेदादीति।भेदः संसर्गः।आदिपदाद्विशिष्टग्रहणम्। ण्डमपर्यायानेकपदप्रतिपाद्यमसंसृष्टमेकप्रातिपदि र्थमात्रं वा उशन्ति कमनीयतया कथयन्ति यस दादीति संबन्धः। श्रीबादरायणमतानुगता इति। वद्बादरायणः खलु तत्तु समन्वयादिति सूत्रे णाक्ष करसे ब्रह्मणि वेदान्तप्रामाण्यं न्यरूपयत्। अतस्त नुसारिणः शङ्करभगवत्पादास्तच्छिष्याश्च तथै न्तीति न वेदान्तवाक्यार्थलक्षणान्तरासंभवः। बाद णमतानुगतानां महत्त्वं पक्षपातराहित्येन श्रुत्य त्यारकौशल्यम्। नापि समान्यलक्षणासंभवो वाक्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादकत्वस्यैव हि तत्सामान्यलक्षणत्वं न संसर्गत्वादिरू-
पस्याननुगमादिति भावः ॥ १४६ ॥

भेदादिरूपमवबोधयितुं समर्थं
यद्वाक्यमस्ति तदखण्डविलक्षणार्थम् ॥
तल्लौकिकं भवतु वैदिकमेव वास्तु
नास्माकमत्र विषये विमतिः कदाचित् ॥ १४७ ॥

ननु उक्तवाक्यार्थलक्षणावान्तरभेदव्यवस्थायां किं मा-
नमित्याशङ्क्य तत्तद्वाक्यार्थे तस्य तस्य वाक्यस्य तात्पर्य-
ग्राहकमानमेव तत्र प्रमाणमिति श्लोकद्वयेनाह, तत्र प्र-
थमं यत्कर्मकाण्डनिपुणैरित्यनेन भेदादिवाक्यार्थस्यो-
क्तं लक्षणं स्वीकरोति । भेदादीति । लौकिकं गामा-
नयेत्यादि वैदिकमग्निहोत्रं जुहोतीत्यादि च, अत्रोक्त-
विषये भेदादिरूपे वाक्यार्थे नाऽस्माकं कदा चिदपि वि-
मतिरस्ति, न हि व्यसनितयाऽखण्डार्थत्वं वयमिच्छा-
म इति भावः ॥ १४७ ॥

यद्वाक्यजातमथ वेदशिरोनिविष्टं
यद्वापि लौकिकमखण्डमपास्य नान्यत् ॥
शक्नोति वस्तु वदितुं तदशेषमेव
ब्रूयादखण्डमिति तु प्रतिपादयामः ॥ १४८ ॥

इदानीं भेदादिवर्जितमित्यनेन कथितं वेदान्तवा-
क्यार्थस्वरूपं सोपपत्तिकमुच्यत इत्याह । यद्वाक्येति ।
अथेति पक्षान्तरोपक्रमार्थः । वेदशिरोनिविष्टं सत्यं ज्ञा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमनन्तं ब्रह्म तत्त्वमसीत्यादिवेदान्तवाक्यं लौकि
प्रकृष्टप्रकाशश्चन्द्रः सोऽयमित्यादिवाक्यमन्यद्वस्तु वं
तुं न शक्नोति तदशेषमखण्डमेव ब्रूयादित्यनन्त
वोपपादयिष्यत इत्यर्थः ॥ १४८ ॥

सोऽयं पुमानिति हि मुख्यपदार्थयुक्त-
वाक्यार्थबुद्धिजननस्य न वाक्यमेतत् ॥
ईशीत वाच्यशबलस्थपदद्वयेन
संसृष्टबुद्धिजनने पदयोर्विरोधात् ॥ १४९ ॥

ब्रह्मणि वेदान्तवाक्यं द्विविधम्, एकमहंकारादिसा
णः प्रत्यक्चैतन्यस्य निरतिशयानन्दाद्वयनित्यमुक्त
भेदपरम्, यथा तत्त्वमसीत्यादि, एतच्च परमपुरुषार्थ
गब्रह्मैक्यनिष्ठत्वान्महावाक्यम्, अपरं तत्त्वंपदा
रूपपरम्, यथा विज्ञानमानन्दं ब्रह्म योऽयं विज्ञान
प्राणेष्वित्यादि, एतच्च पदार्थनिष्ठत्वादवान्तरवाक्य
त्र महावाक्यस्याखण्डार्थत्वे लोके सोऽयमिति वा
मुदाहरणम्, इतरस्य प्रकृष्टप्रकाशश्चन्द्र इति, तत्र
यमिति वाक्यस्याखण्डार्थत्वं प्रमाणाभावान्नास्ती
शङ्कयाह । सोऽयमिति । मुख्यपदार्थेति । तदिदंश
यौ मुख्यार्थौ तदेतद्देशकालवैशिष्ट्यरूपतत्तेदन्ता
ष्टौ तद्युक्तस्तन्निरूपितो यो वाक्यार्थोऽभेदस्तद्बुद्धि
स्यैतत्सोऽयमिति वाक्यं नेशीतेति संबन्धः । सोऽ
ति हि वाक्यं समानाधिकरणवाक्यत्वादेकार्थ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यम्, तत्र यदि मुख्यपदार्थयोरैक्यं तदा तदेतद्देश-कालविशिष्टद्वयस्य विरोधेनाभेदासंभवादितीदं वाक्यं तत्प्रतिपादयितुमसमर्थमिति भावः। ननु देवदत्तस्तत्तेदन्ताभ्यामुक्तरूपाभ्यां संसृष्टः, देवदत्ते तत्तेदन्ते इति वा वाक्यार्थोऽस्तु न विरोध इति तत्राह। वाच्यशबलेति। वाच्यं यच्छबलं विशिष्टं तन्निष्ठपदद्वयेनेत्यर्थः। सः अयमिति पदाभ्यां तत्तेदन्तयोः पुरुषविशेषणतयोपस्थितयोः स्वातन्त्र्यासंभवेन पुरुषे च प्रथमान्तपदेनोपस्थिते सप्तम्यर्थासम्भवेन चोक्तप्रकारद्वयासंभवः। किं च देवदत्ते तत्तेदन्ते इति ज्ञानेन न भेदभ्रमनिवृत्तिः संभवति, इदं च वाक्यं तदर्थमेव वृद्धैः प्रयुज्यते, देवदत्तभेदेऽपि तत्संभवात्। न चैकस्मिन्देवदत्ते तत्तेदन्ते इति ज्ञानाद्भेदभ्रमनिवृत्तिसंभव इति वाच्यम्। समानाधिकृतपदद्वयव्यतिरेकेण तदेकत्वे प्रमाणाभावात्, तस्मादर्थान्तरासम्भवाद् वाच्यशबलस्थपदद्वयेन संसृष्टबुद्धिजननेन वाच्यं तच्च न संभवति पदयोर्विरुद्धार्थत्वादित्यर्थः॥ १४९॥

> एतद्धि सोऽयमिति वाक्यमखण्डनिष्ठं
> वक्तव्यमत्र गतिरस्ति न काचिदन्या॥
> तद्देशकालमनुकृष्य स इत्यनेन
> नायंपदार्थमुपढौकयते हि नैतत्॥ १५०॥

अस्तु तर्ह्येकस्मिन्नेव पदे लक्षणा तथा च न विरो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धः प्रतियोग्यन्तराभावात्, नाप्यखण्डार्थता देश
एकस्य विशिष्टस्यानेन तादात्म्यप्रतिपादनादित्या
ङ्क्याह। एतद्धीति। अखण्डनिष्ठं पदद्वयलक्षणयेति
अत्र,अस्मिन्वाक्ये । गतिः, त्वदुक्तप्रकारावगति
कुत इति चेत्तत्राह। तद्देशकालमिति । स इत्यं
स इति पदेन तद्देशकालविशिष्टमनुकृष्यादायायं
र्थम्, अयमिति पदस्य लक्षितमर्थं नोपढौकयते
यितुं न शक्नोतीत्यर्थः। सोऽयमिति । वाक्यमिति
हीति दृष्टान्तार्थम्। यथा तत्पदं स्ववाच्यमिदंपदलक्ष्यं
प्रथयति,एवमेतत्पदमपि स्ववाच्यं नोपढौकयते,
दलक्ष्यमिति शेषः। एकपदलक्षितस्वरूपस्य पदान्तर
च्याऽभेदनिष्ठत्वे वाक्यस्य यावद्देवदत्तस्वरूपं तत्
शिष्टमेव स्यात्, अन्यथा वर्तमानसमयस्थदेवदत्ते
दसंशयादिनिवर्त्तकतास्य वाक्यस्य न स्यान्निवर्त
चास्माद्वाक्यात्तत्संशयादिरिति पदद्वयलक्षणया
देतद्देशकालद्वयवृत्तिदेवदत्ताभेदपरमितीदं वाक्यम
ण्डार्थनिष्ठमेव । न चैवं तत्स्वरूपस्यैकैकपदादपि
तीतेरेकपदार्थज्ञानादपि तन्निवृत्तिप्रसङ्गः, वक्तव्यं
पदार्थस्वरूपादधिकं वाक्यप्रमेयमन्यथा वाक्यादपि
दयोगादिति वाच्यम्। पदद्वयलक्ष्यवाक्यार्थयोरनू
नतिरिक्तत्वेऽपि वाक्यात्तदेतद्देशकालपरामर्शपू
खण्डदेवदत्तस्वरूपाऽभेदप्रतिपादने भवन्ति तज्ज

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निश्चयरूपमतस्ततः संशयादिनिवृत्तिरुपपद्यते नैवमेकैकपदलक्ष्यज्ञानमिति न ततः संशयनिवृत्तिः, एवं च सोऽयमित्यादेरर्थान्तरासंभवादबाधाच्चाखण्डार्थतैवेति भावः ॥ १५० ॥

एवं सतीदमपि तत्त्वमसीति वाक्य-
माश्रित्य लाक्षणिकवृत्तिमखण्डनिष्ठम् ।
सोऽयं पुमानिति यथा वचनं तथास्तु
नो चेत्समं हि तदलाबुनिमज्जनोक्त्या ॥ १५१ ॥

दार्ष्टान्तिकेऽपि तदाह । एवं सतीति । लोके पदद्वयलक्षणया सोऽयमितिवाक्यस्याखण्डर्थत्वे सतीत्यर्थः । तथा च नास्माकमलौकिककल्पनेति भावः । लाक्षणिकवृत्तिं पदद्वयेऽपीति शेषः । तत्त्वमसीति वाक्यमखण्डार्थनिष्ठम् अकार्यकारणद्रव्यमात्रविषयसमानाधिकरणवाक्यत्वात् यथा सोऽयं पुमानिति वचनमित्याशयेन दृष्टान्तमाह । सोऽयं पुमानिति । तथेदं तत्त्वमसीति वाक्यमखण्डार्थनिष्ठमस्त्वति संबन्धः । पदद्वयलक्षणयाऽखण्डार्थत्वानङ्गीकारे पूर्वपक्षदशायामुक्तवाक्याप्रामाण्यमाह । नो चेदिति । अतिशुष्कमच्छिद्रं केवलमलाबु अप्सु निमज्जतीतिवचनं यथाऽप्रमाणं तथेदमपि स्यादित्यर्थः । तत्त्वमसीतिवाक्यस्यापि वक्ष्यमाणविरोधेन संसर्गादिवाक्यार्थासंभवेन पदद्वयलक्षणयाऽखण्डार्थतैवोचितेति भावः । एतेन सिद्धान्तोपक्रमे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत तदुभयलक्ष्ययोरिति द्वितीयकल्पे विरोधबीजा
वात्तच्चोद्यमनुपपन्नमित्युक्तमिति द्रष्टव्यम् ॥ १५१॥

मानान्तराधिगतगोचरगामिनी स्या-
च्छब्दस्य लाक्षणिकवृत्तिरिति प्रलापः।
सिद्धत्वमात्रमिह लाक्षणिकप्रवृत्ते-
र्निर्वाहकारणमनङ्गमतोऽन्यदस्याः ॥ १५२॥

यत्तु पूर्वपक्षावसरे वाच्यार्थसम्बन्धितया माना
धिगतिर्लक्षणाबीजमिति तथानवगते ब्रह्मणि न ल
णा स्यादित्युक्तं तदनूद्य दूषयति। मानान्तरेति।
धिगतेति भावे निष्ठा, अधिगतिरित्यर्थः। प्रलापो
दभिलापः। ननु लाक्षणिकपदस्य लक्ष्येण साक्षात्स
न्धानवगमात्स्वार्थप्रनाडैव तदुपस्थापकत्वं व
तच्च मानान्तरेण तथावगमं विना नेति कथमयं प्र
प इति चेत्। सत्यं मानान्तरं विनापि तदर्थसंब
यावगममात्रेण सा सिध्यति स चावगमस्त्वमह
पदलक्ष्येऽहंकारादिसाक्षिणि स्वप्रकाशे तद्बला
ति ब्रह्मादिपदलक्ष्यं चाद्वयं ब्रह्मादिपदवाच्यं शब
स्तुतः स्वसंसर्गशून्ये चैतन्यैकल्पितं शबलत्वादध्य
द्वा शबलान्तरवद्रजतादिवदिति तर्केण तत्संबन्
सिध्यतीति न मानान्तरापेक्षेत्याह। सिद्धत्वेति
तत्वमात्रमित्यर्थः। इह लक्ष्ये ॥ १५२॥

मानान्तराधिगतता हि न लक्षणायां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंचित्करी भवति पिङ्गलतावदग्नेः ॥
धूमस्य जन्मनि हि पिङ्गलता न हेतु-
र्यद्यप्यवस्थितवती हुतभुक्शरीरे ॥ १५३ ॥

ननु तीरादेर्गङ्गादिपदलक्ष्यस्य मानान्तरेण तथाधिगतिर्नियमेन दृष्टा तत्कथं सा तत्राप्रयोजिकेति चेत्तत्राह। मानान्तराधिगततेति। हीतिद्वयं प्रसिद्धौ, किंचित्करी निमित्तं न भवतीति संबन्धः। नियमेन तत्र विद्यमानस्यापि गौरवेणाप्रयोजकत्वे दृष्टान्तमाह। पिङ्गलतावदिति। अग्ने रूपमिव किंचित्करी न भवतीति संबन्धः। दृष्टान्तं विवृणोति। धूमस्येति। न हेतुर्हीति संबन्धः। अग्नित्वमेव हि धूमजनकतायामग्नेः प्रयोजकं न तु पिङ्गलाग्नित्वमपि गौरवादिति भावः। शुक्तिरजतादेरपि इदमित्यादिपदान्तरेण लक्ष्यत्वसंभवान्मानान्तरेण तस्यावगत्यभावान्न मानान्तरगम्यत्वं तत्प्रयोजकमिति भावः ॥१५३॥

शब्दस्य लाक्षणिकवृत्तिरपि त्रिधैषा
का चिज्जहाति न जहाति च वाच्यमन्या ॥
भागं जहाति न जहाति च भागमन्या
सोऽयं त्रिधा भवति लाक्षणिकप्रकारः ॥ १५४ ॥

ननु ब्रह्मादिशब्दानामन्यत्र संगत्यसंभवात्तत्रैव शक्तिः कल्पनीया, एवं च कथं तत्रैव तेषां लक्षणा, च्छक्तपदलक्षितार्थोपादाने चेदमपि शास्त्रमनारम-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्ठं स्यादित्याशङ्कां परिहर्तुं लक्षणात्रैविध्यम
अथ वा लोके लक्षणानेकविधा तत्र कासौ ल
तत्त्वमसिवाक्ये संमतेत्याशङ्क्य तां विवेक्तुं लोके
सिद्धं लक्षणाभेदं मत्वाह । शब्दस्येति । एषा ला
कवृत्तिरिति संबन्धः । त्रैविध्यमेवाह । का चि
दिना । का चिद्वाच्यं जहाति जहल्लक्षणेत्यर्थः ।
वाच्यं न जहाति अजहल्लक्षणेत्यर्थः । अन्या
वाच्यार्थांशं जहाति अन्यं भागं न जहाति
दजहल्लक्षणेत्यर्थः । तत्त्रैविध्यमुपसंहरति । सोऽयं
॥ १५४ ॥

गङ्गापदं हि निजमर्थमपास्य तीरे
यद्वर्तते भवति सा जहती प्रसिद्धा ॥
शोणः स्थितो बहिरितीहतु लक्षणा या-
मादाय शोणिमगुणं तुरगे प्रवृत्तिः ॥

लोके क्रमेण तासामुदाहरणमाह । गङ्गापदं
येन । निजमर्थं स्ववाच्यप्रवाहमपास्य त्यक्त्वा
च्छोणः शोणिमगुणोऽश्वत्वनियतः ॥ १५५ ॥

सोऽयं पुमानितिवचस्युभयप्रकारा
देशादिभागपरिवर्जनतः प्रसिद्धा ॥
पुंसश्च केवलमुपात्ततया पदाभ्या-
मेवं त्रिधा भवति लाक्षणिकी प्रवृत्तिः

सोऽयमिति । उभयप्रकारा जहदजहद्रूपा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वोपपादयति । देशादीति । तदेतद्देशकालवैशिष्ट्यरू-
पभागवर्जनात्केवलं यथा स्यात्तथा तदिदंपदाभ्यां
पुंस उपात्ततया चेत्यर्थः । उपसंहरति । एवं त्रिधे-
ति । गङ्गायां घोष इत्यत्र हि वस्तुतो गङ्गासंबन्धि
यत्तीरं घोषान्वययोग्यं तदेव लक्षणया प्रतीयते न तु
गङ्गाविशिष्टतीरं तस्य तेन रूपेण घोषान्वयायोग्य-
त्वादतो गङ्गापदे जहल्लक्षणैव , एवं वहिः शोणस्ति-
ष्ठतीत्यादौ निष्कृष्टद्रव्यगुणमात्रस्य वहिर्देशस्थित्य-
नुपपत्तेः शोणगुणविशिष्टस्यैवाश्वस्य नियमेन स्थित्य-
वगमात्साऽजहल्लक्षणा स्वार्थमुपादायैव तस्य द्रव्ये
वृत्तेः , सोऽयमित्यादौ तु प्रागुक्तन्यायेनाभेदो विरुद्ध-
देशादिपदार्थभागं परित्यज्य धर्मिस्वरूपं पदार्थभाग-
मुपादायेदं वाक्यमभेदं प्रतिपादयतीति तत्र सा जह-
दजहद्रूपेति लाक्षणिकी वृत्तिस्त्रिधा भवतीत्यर्थः ॥१५६॥

वेदेऽपि लाक्षणिकवृत्तिरियं त्रिधैषा
यज्ञायुधीतिवचने तु जहत्प्रवृत्तिः ॥
वैश्वानरादिवचनेष्वजहत्प्रवृत्ति-
स्तत्त्वंगिरोरुभयरूपतया प्रवृत्तिः ॥ १५७ ॥

एवं वेदेऽपि तत्त्रैविध्यमुदाहरणेनाह । वेदे-
ऽपीति । यज्ञायुधी यजमानः स्वर्गं लोकमेतीतिवाक्येऽ-
न्त्येष्टिप्रकरणस्थेऽग्निहोत्रकपालादिपात्रैर्विशिष्टो यज-
मानस्स्वर्गं गच्छतीति प्रतीयते तदनुपपन्नम् । अग्नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

होत्रपात्राणां प्रत्यक्षेणैव दाहात्, यजमानस्याग्नि-
त्रकपालादियज्ञायुधविशिष्टस्य स्वर्गगमनायोगा-
ज्ञायुधीशब्दः तस्मिन्स्वार्थं परित्यज्य वर्त्तत इति
जहल्लक्षणा, मत्वर्थप्रत्ययस्य संबन्धमात्रनिष्ठत्वमा-
त्य संबन्धिनि यजमाने जहल्लक्षणेत्युक्तम्, विशिष्टा-
वलमन्यदित्याशयेन वा। जहत्प्रवृत्तिः जहल्लक्षणा
त्तिः। वैश्वानरादिवचनेष्विति। प्रादेशमात्रमभि-
मानमात्मानं वैश्वानरमित्यत्र वैश्वानरशब्दो जाठ-
ग्नौ रूढस्तदवच्छिन्ने आत्मनि वर्त्तते, अन्यथा
त्मानं वैश्वानरमिति सामानाधिकरण्यायोगात्,
था च स्वार्थापरित्यागेन स आत्मनि वर्त्तत इ-
तस्य तत्राऽजहल्लक्षणा। आदिशब्देन सृष्टीरुपदधा-
त्यत्र सृष्यसृष्टीष्टकासु वर्त्तमानः सृष्टिशब्दो गृही-
तत्त्वं गिरोरिति। तत्त्वमसिवाक्यस्थतत्त्वंपदयोरित्या-
उभयरूपतया जहदजहद्रूपतया। पदद्वयार्थयो-
विरोधिविशेषणांशपरित्यागेनापरोक्षचैतन्याद्वयात्म-
पदद्वयप्रवृत्तेः सा जहदजहल्लक्षणेत्यर्थः। एतेन ब्र-
त्मनि शक्तब्रह्मादिपदस्य कथं तत्र लक्षणा ब्रह्म-
पदलक्ष्यस्य शास्त्रार्थत्वे इदमपि शास्त्रमना-
ष्टमितिदूषणद्वयं परिहृतम् शबले ब्रह्मणि परिगृही-
ङ्गतिकस्य शुद्धे ब्रह्मात्मनि लक्षणोपपत्तेरिति॥

ब्रह्माऽज्ञाने ह्यद्वितीयत्वमेकं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मण्यन्यच्चाद्वितीयत्वमस्ति ॥
तत्संपर्कात्तत्र चाद्वैततान्या
व्युत्पन्नोऽयं ब्रह्मशब्दस्तु तत्र ॥ १५८ ॥

ननु कथं तर्हि ब्रह्मशब्दस्य पूर्णब्रह्मार्थत्वं ब्रह्मातिरिक्तस्य सर्वस्य परिच्छिन्नत्वेन तच्छबले पूर्णतारूपबृहत्त्वासंभवादित्याशङ्क्याह । ब्रह्माऽज्ञानेति । ब्रह्माश्रयविषयाऽज्ञान इत्यर्थः । हि यस्माद्ब्रह्माऽज्ञान एकमद्वितीयत्वमस्ति तस्य सकलप्रपञ्चविवर्त्ताश्रयतया ब्रह्मण्यध्यस्तत्वेन तदन्तर्भूततया च सजातीयादिभेदशून्यत्वात् । ब्रह्मणि शुद्धे चान्यदद्वितीयत्वमस्ति तदतिरिक्तस्य सर्वस्य मिथ्यात्वेन जीवानां च तन्मात्रत्वेन सजातीयादिभेदशून्यत्वात् । तत्संपर्कात्तयोः परस्परमधिष्ठानाध्यस्ततया तादात्म्यात्संवृत्ते तत्र तदुभयात्मके शबले अन्याऽद्वैतताऽस्ति अद्वितीयद्वयात्मकस्य तस्याप्यद्वैततानियमात् । एवं सति ब्रह्मशब्दस्य वेदान्तेषु जगत्कारणे बहुशः प्रयोगाज्जगत्कारणत्वस्य केवलेऽसंभवान् मायां तु प्रकृतिं देवात्मशक्तिमित्यादिवचनैर्बृहति शबले व्युत्पत्तिरविरुद्धेत्याह । व्युत्पन्न इति ॥ १५८ ॥

प्रत्यग्भावस्तावदेकोऽस्ति बुद्धौ
प्रत्यग्भावः कश्चिदन्यः प्रतीचि ॥
प्रत्यग्भावस्तत्कृतस्तत्र चान्यो
व्युत्पन्नोऽयं तत्र चात्मेति शब्दः ॥ १५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं महावाक्यस्थब्रह्मादिपदवाच्यं श[illegible] तत्र शब्दस्य शक्तिं व्युत्पत्तिं च दर्शयित्वा तद्वाक्यस्[illegible] हमादिपदवाच्यशबलं तत्राहमादिपदसंबन्धग्रहं च[illegible] र्शयति। प्रत्यग्भाव इति। आन्तरत्वमिति याव[illegible] बुद्धौ अन्तः करणे। शरीरेन्द्रियाद्यपेक्षया हि[illegible] धिष्ठात्रन्तःकरणमान्तरमित्यर्थः। अन्य आपेक्षिकाद[illegible] करणनिष्ठप्रत्यक्त्वादन्यः। प्रतीचि साक्षिणि। तस्[illegible] आत्मा सर्वान्तर इति श्रुतेः सर्वान्तरत्वमन्यः प्र[illegible] ग्भावोऽस्तीत्यर्थः। तत्कृतस्ताभ्यां प्रत्यक्त्वाभ्यां [illegible] स्तत्र तदुभये शबलेऽन्यः ताभ्यां प्रत्यक्त्वाभ्याम[illegible] प्रत्यग्भावोऽस्तीत्यनुषङ्गः। ततः किं तत्राह। व्यु[illegible] न्नोऽयमिति। तत्र शबले। आत्मेतिशब्दः त्वमहम[illegible] शब्दः। यद्यप्यहमादिशब्दसङ्गतिग्रहसमये तदर्थे शब[illegible] न प्रतीयते तथापि तस्मिन्विचारकाले तत्सिद्ध[illegible] वक्ष्यति ततस्तदापि तदुभयात्मकमेवेत्येवमुक्तम्॥[illegible]

तच्छब्दवाच्यगतमद्वयभागमेकं
प्रत्यक्त्वमात्रमविरोधमपेक्षमाणः॥
त्वंशब्दवाच्यशबलस्थमुपाददानो
वाक्यादखण्डमथ तत्त्वमसीति विद्यात्॥ ९[illegible]

एवं पदद्वयवाच्यशबलं तत्र ब्रह्मादिपदसङ्ग[illegible] चोक्त्वा वाक्यस्य जहदजहल्लक्षणयाऽखण्डार्थप्र[illegible] दनप्रकारमाह। तच्छब्दवाच्यगतमिति। वा[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविरोधमपेक्षमाणोऽधिकारी तच्छब्दवाच्यशबलगतं-प्रविष्टमेकमद्वयभागं पारमार्थिकाद्वयभागं त्वंशब्द-वाच्यशबलस्थं प्रत्यक्त्वं सर्वान्तरत्वं जहदजहल्लक्षण-योपाददानोऽनन्तरं तत्त्वमसीतिवाक्यादखण्डं वि-द्यादिति संबन्धः ॥ १६० ॥

आदेयांशे नाणुमात्रोऽपि भेदो
यद्यप्येवं भिन्नमादाय शब्दौ ॥
वर्तेते त्वय्यद्वयात्मप्रकाशे
बाह्यं हेतुं जामिता नास्ति तस्मात् ॥ १६१ ॥

ननु तत्त्वंपदयोरेकार्थत्वमनुपपन्नं. तथा सति पर्यायतापत्तेरत्यन्तभिन्नार्थत्वे च सामानाधिकरण्या-योगादिति भेदाभेदनिष्ठं तद्वाक्यमित्याशङ्क्याह। आदे-येति। तात्पर्यविषये लक्ष्ये अपरोक्षचैतन्याद्वयभाग इ-त्यर्थः। अणुमात्रोऽपि ईषदपि। चैतन्यानन्दयोरत्य-न्तमभेदात्। अन्यथानन्दस्याभानप्रसङ्गात् चैतन्येवाक-ल्पितत्वं स्यात् अन्यथा तदसंबन्धात्। एवं चैतन्य-स्याप्यानन्दभेद उपेक्षणीयतापत्तिः। भेदाभेदौ च वि-रुद्धाविति तदुभयमेकरसं न तु भिन्नाभिन्नमित्यर्थः। एवं चेत्कथमपर्यायता पदयोरित्याशङ्क्योक्तानुवादेन तामु-पपादयति। यद्यप्येवमिति। भिन्नं परस्परमिति शेषः। शब्दौ तत्त्वमादिशब्दौ। बाह्यं वाक्यार्थाद्बहिर्भूतम्। हे-तुं शब्दप्रवृत्तिनिमित्तं वाच्यमिति यावत्। जामि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ता पर्यायता। पदद्वयलक्ष्यस्यैकरसत्वेऽपि वाच्यभे
दपर्यायतेत्यर्थः ॥ १६१ ॥

अद्वैतेऽर्थे प्रत्यगर्थोऽस्ति तद्वत्
प्रत्यक्तत्त्वे चाद्वयस्यापि भावः ॥
यद्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे तत्त्वमर्थोपपत्तेः ॥ १६२ ॥

ननु जीवब्रह्मणोरत्यन्तमभेदे घटकुटशब्दव
त्त्वंपदसामानाधिकरण्यं न स्यात् नीलमुत्पलमित्य
दावीषद्भेदे सत्येव सामानाधिकरण्यदर्शनादित्याशङ्क्या
ह। अद्वैतेऽर्थ इति। शुद्धाद्वयानन्द इत्यर्थः। प्रत्यग
केवलसाक्षी सर्वान्तरोऽस्ति तदभिन्न इति यावत्
तद्वत्प्रत्यगभिन्नाद्वयत्वप्रत्यक्तत्त्वे उक्तसाक्षिणि
द्वयस्यापि भावः अस्त्येवेति सम्बन्धः। अद्वयार्थोऽपि
त्यगभिन्न इत्यर्थः। यद्यपिशब्दौ सतीत्यस्या
एवं सतीत्यर्थः। अतिरेकः ईषद्भेदः। अथ
ऽद्वैतेत्यादिना प्रत्यगद्वयाभेदो दर्शितः यद्यपीत्या
ना सामानाधिकरण्यनिमित्तं भेदमनूद्य दूषयति।
मपि समानाधिकरण्यादतिरेकावकाश इति
तन्नेत्यर्थः। तत्र हेतुमाह। पूर्णे तत्त्व इति
तदा खलु ब्रह्म प्रतीचो व्यावर्त्तेत प्रत्यगपि ब्रह्म
एवं च तदर्थब्रह्मणो निरवधिकबृहत्त्वं त्वमर्थ
च प्रतीचः सर्वान्तरत्वं न स्यात्, पूर्णे तत्त्वे सति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्त्वमर्थयोस्तदुपपत्तेरित्यर्थः ॥ १६२ ॥

न च विनिगमनायां कारणं किंचिदस्ति
स्फुटमुभयपदस्था लक्षणा शस्यतेऽतः ॥

न हि विनिगमनायां हेत्वभावे कदाचित्
क्वचिदियमुपलब्धा सोऽयमित्यादिवाक्ये॥१६३॥

नन्वेकस्मिन् वाक्ये प्रयुक्तनिखिलपदलक्षणानुपपन्ना लोके तथाऽदर्शनात् शक्तपदं विना वाक्यार्थाऽनुभवायोगाच्च तस्यैव तज्जनकत्वादिति चेन्न, न तावल्लोके तददर्शनं विषं भुंक्ष्वेत्यादौ तद्दर्शनात्, तेन हि वाक्येन शत्रुगृहान्नोदकादेर्भक्षणपानादीष्टसाधनं न भवतीति प्रतीयत इति सर्वपदलक्षणा, एवमर्थवादवाक्यस्थसर्वपदेऽपि प्राशस्त्ये लक्षणा दृष्टा, किं च तात्पर्यानुपपत्तिर्हि लक्षणाबीजं नान्वयानुपपत्तिः कथ्येयं गौर्यतो बहुक्षीरेत्यर्थवादवाक्ये तदभावात्, एवं च यथातात्पर्यमेकस्मिन्सर्वस्मिन्वा पदे लक्षणा न विरुद्धा, अत एव सोऽयमित्यत्रापि पदद्वयलक्षणैव न्याय्या, शब्दस्य वाक्यार्थानुभवजनकत्वे चान्वीयमानोपस्थापकत्वमेव तन्त्रं न तु शक्त्या तदुपस्थापकत्वं गौरवादित्युपक्रमाद्यनुरोधेन प्रत्यगद्वयमात्रपर्यवसायितत्त्वमसिवाक्यस्थपदद्वयलक्षणा न विरुद्ध्यते, आवश्यकी च,अन्यथा श्रुतितात्पर्यानिर्वाहादितिन्यायसिद्धेऽर्थेऽविनिगमनतर्कमप्यनुग्राहकमाह ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च विनिगमनायामिति । चकारेणोक्तं न्यायं स
च्चिनोति । अस्मिन्नेव पदे लक्षणा नान्य
निर्धारणायामित्यर्थः । शस्यते प्रशस्यते । यतो वि
गमनायां किमपि स्फुटं कारणं नास्ति अत
यपदस्थेत्यादिसंबन्धः । ननु तिष्ठतु कारणान्तर
षणां श्रोतुरिच्छैव तन्निमित्तमित्याशङ्क्य तर्हि वा
र्थव्यवस्था न सिद्ध्येत्सर्वेषामेकस्य वा श्रोतु
तेच्छाभावादित्याशयेनाह । न हीति । इयमेकपद
णा ॥ १६३ ॥

प्रथमचरमभावो निर्णये कारणं चे-
दयमपि नियमो न ह्यन्यथाप्यस्य दृष्टेः ।
प्रथमपठितमासीत्तत्पदं सामवेदे
चरमपठितमेतद्द्दृष्टमध्वर्युवेदे ॥ १६४ ॥

ननु यस्मिन्वाक्ये यत्पदं प्रथमं श्रूयते तदसं
विरोधितया प्रबलं स्वार्थनिष्ठं तद्विरुद्धार्थं द्वि
तदनुकूलं लक्षयिष्यतीति तत्र कारणाभावोऽसि
त्याशङ्क्यात्रापि वाक्यार्थाव्यवस्थैव दोषः प्राथम्
रपि शाखाभेदेनाव्यवस्थितत्वादित्याह । प्रथमे
निर्णये लक्षणानिर्णये । अस्य प्रथमचरमभावस्य
न्यथादर्शनमेवाह । प्रथमेति । तत्पदमद्व यब्रह्म
कम् । सामवेदे तत्त्वमसिवाक्य इत्यर्थः । अध्वर्यु
जुर्वेदे अहं ब्रह्मास्मीतिवाक्ये । एतत्तत्पदार्थ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मपदमित्यर्थः । एवं च तत्त्वमसिवाक्येन जगत्कारणत्वादिविशिष्टस्य ब्रह्मणस्त्वंपदलक्ष्यसाक्ष्यभेदः प्रतिपाद्यते , यजुर्वेदेन तु अहंकारकर्तृत्वादिविशिष्टस्य शुद्धाऽद्वयाऽभेदः प्रतिपादनीय इति सर्वेषामेकरूपं ब्रह्म न सिद्ध्येत्तच्चायुक्तमेकस्य वैरूप्यायोगाद्वस्तुनि विकल्पासंभवाच्चेति भावः ॥ १६४ ॥

सोऽयं पुमानयमसाविति पौरुषेये
वाक्ये तथा व्यतिहृतेऽत्र विशेषहेतुः ॥
पूर्वापरत्वमिति शक्यमिदं न वक्तुं
मुख्यत्वलाक्षणिकते प्रति शब्दवृत्त्योः ॥१६५॥

प्रथमचरमभावस्यानिर्णायकत्वं सोऽयमित्यादिलौकिकवाक्येऽप्याह । सोऽयं पुमानिति । अत्र वाक्ये तच्छब्दः पूर्वोऽयंशब्दः पश्चात्प्रयुक्तः । अयमसाविति-वाक्ये तु विपरीतः प्रयोगस्तदिदमाह । व्यतिहृत इति । व्यत्यस्त इत्यर्थः । सोऽयं पुमान् तथा तथाविधे अयमसाविति च व्यतिहृतेऽत्र पौरुषेये वाक्ये शब्दवृत्त्योर्मुख्यत्वलाक्षणिकते प्रति इदं पूर्वापरत्वं विशेषहेतुर्विनिगमनाहेतुरिति वक्तुं न शक्यमिति संबन्धः । अत्रापि वाक्यप्रयोक्तृणामुच्चारणे पूर्वापरत्वनियमादर्शनादिति भावः ॥ १६५ ॥

न च भवति विरोधस्योत्थितस्यापनीतिः
पदयुगलनिविष्टां लक्षणामन्तरेण ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हि भवति कदाचित् सद्वयस्याद्वयत्वं
न च भवति परोक्षः प्रत्यगऽर्थोऽपि तद्वत्॥

एवमखण्डे ब्रह्मणि तात्पर्यानुपपत्त्या विनि[illegible]
नाभावेन च पदद्वयलक्षणेत्युक्तम्, इदानीं मु[illegible]
र्थयोरभेदान्वयानुपपत्त्याप्यविनिगमोपोद्बलितया
लक्षणेत्याह। न च भवतीति। विरोधस्याभेद[illegible]
रोधस्योत्थितस्य ज्ञातस्यापनीतिर्निराकरणं पद[illegible]
लक्षणामन्तरेण न च नैव भवतीति संबन्धः।[illegible]
रोधमेव व्यनक्ति। न हीति। तद्वत्स्वद्वयस्याद्वयाभे[illegible]
व। एतेन तदादिशब्दस्योपस्थितवाचकत्वात् शुद्ध[illegible]
तात्पर्यविषयतयोपस्थितत्वाद्विनैव लक्षणान्ततः शु[illegible]
पस्थितिसंभव इति प्रत्युक्तम्। उपस्थितिविशि[illegible]
शुद्धत्वासंभवात्, तदादिपदघटितवाक्यगर्भमहावा[illegible]
तिरिक्तावान्तरवाक्यस्य शुद्धे तात्पर्यासंभवाच्च। [illegible]
महावाक्यतदर्थप्रतिसन्धानं विना वाक्यैकदेशस्य
तात्पर्यनिरूपणं संभवति, महावाक्यतदर्थप्रतिस[illegible]
तु तत्पदतदर्थप्रतिसन्धानमृते न भवतीति तात्प[illegible]
रूपणात्प्रागेव तत्पदार्थनिर्णयो वाच्य इति सृष्ट[illegible]
वाक्यानुरोधेन विशिष्टमेव तत्पदार्थ इति त[illegible]
लक्षणा आवश्यकीति भावः। अत्र त्वमर्थगत[illegible]
तीयत्वांशपरित्यागवदापरोक्ष्यस्यापि परित्या[illegible]
तव्यस्तस्मिन्सत्येव विरोधस्य परिहारादुद्दे[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षणत्वेन तस्यापि परित्याज्यत्वाच्चेति न शङ्कास्पदत्वम्। प्रत्यङ्मात्रस्य त्वंपदे लक्षणयोपादेयस्य चैतन्यमात्रस्यापरोक्ष्यस्वभावत्वात्स्वभावत्यागे च भावत्यागापत्तेः। न हि ग्रहगतमेकत्वमविवक्षितमिति ग्रहत्वमप्युद्देश्यविशेषणत्वादविवक्षितं भवति, तस्य तत्स्वभावत्वात्। न च स्वयं चात्मा परोक्षश्चेति कस्य चिदनुभवः संभाव्यते। तस्मात्पारोक्ष्यसद्वयत्वपरिहारायोभयपदे लक्षणावश्यग्राह्येति भावः॥ १६६॥

अविरुद्धविशेषणद्वय-
प्रभवत्वेऽपि विशिष्टयोर्द्वयोः॥
घटते न यदैकता तदा
नितरां तद्विपरीतरूपयोः॥ १६७॥

नन्वेकपदेऽपि लक्षणा व्यर्था, एकस्यैव ब्रह्मणो विशेषणद्वयविशिष्टतया पदद्वयवाच्यत्वेन दण्डी कुण्डलीतिप्रयोगादिवदभेदप्रतीत्युपपत्तेरिति चेन्न, विशिष्टाभ्यां तदुभयाश्रयकेवलस्वरूपस्यान्यत्वेन लक्षणां विना तत्पदाभ्यामुपस्थित्यसंभवात्, तथा हि इदानीमयं दण्डी न भवतीति हि दण्डिनो देवदत्तात्केवले तस्मिन् भेदः प्रतीयते, अभेदनिषेधस्य भेदविषयतयान्यत्र क्लृप्तस्य विशेषणमात्रसंसर्गाभावविषयत्वायोगात्, अन्यथा घटः पटो न भवतीतिप्रतीतेरपि घटत्वात्यन्ताभावविषयत्वप्रसङ्गेन क्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पि भेदो न सिद्धयेत्, न च प्राग् दण्डयेवायमिति भिज्ञया तदभेदे सिद्धे निषेधधियो विशेषणाभावविति वाच्यम्, भेदबुद्धयनुरोधेन प्रत्यभिज्ञाया एव ज्जातीयविषयतयोपपत्तेः, आत्मैवेदं सर्वमित्यादिवाभेदसिद्धेः घटाद्यभेदनिषेधोऽपि न स्यात्, विष्टभेदस्तूभयत्रापि समान एव, अभेदबुद्धिरपि रूपमात्राभेदविषयैवेति तयोर्भिन्नविषयतैव, सति दण्डिकुण्डलिनोरपि परस्परं स्वसमानकभेदबलात्तत्रापि लक्षणयैव तदुभयाश्रयाभेद्धिः, एवमेकदैकत्राविरुद्धविशेषणद्वयविशिष्टयो परस्परभेदेन यदैकता न घटते तदा किमु विरुद्धविशेषणद्वयविशिष्टयोर्जीवेश्वरयोरित्याह । रुद्धेति । स्पष्टम् ॥ १६७ ॥

अथ केनचिदात्मनैकता
वचनेन प्रतिपाद्यते तयोः ॥
तदसुन्दरमस्तमेति हि
स्फुटमेवं त्रिविधापि लक्षणा ॥ १६८ ॥

ननु विरुद्धरूपयोरपि जीवेश्वरयोः सत्त्वादिना केन तस्वरूपेणैकत्वसंभवात्तत्त्वमादिवचनं कथं लक्षणा नैव प्रतिपादयेदिति शङ्कते । अथेति । किं रूपं पदेन केन चिदुपस्थोपनीयम् उत न तद्वाचकपदाभावेन ब्रह्माहंपदयोस्तत्र लक्षणाप्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितीये शब्दानुपस्थितस्यापि वाक्यप्रतिपाद्यत्वे ग-ङ्गासंबन्धिनस्तत्पदादनुपस्थिततीरादावपि घोषान्व-यित्वप्रतीत्युपपत्तेः , एवं शोणादिना लक्षणामन्त-रेणाश्वादेर्बहिस्थित्यन्वयसंभवात् , तथा सोऽयमित्य-त्रापि शुद्धस्य वाक्यार्थत्वसंभवात्प्रसिद्धलक्षणोच्छे-दप्रसङ्गः। तस्मात्पदोपस्थितपदार्थयोरन्वयो वाच्य इ-त्यभेदयोग्यस्वरूपोपस्थितये पदद्वयलक्षणावश्यंवाच्ये-त्याशयेनाह । तदसुन्दरमिति। एवमेवं सति स्फुटमस्त-मेतीति संबन्धः ॥ १६८ ॥

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहं-शब्दोऽहंकारवाची भवति तुज्जहती लक्षणा तत्र पक्षे ॥
नौरेषा रौति लोहं दहति विषधरो रज्जुरग्रे तवासा-वित्यत्रेवात्मवस्तुन्यपि भवतु जहल्लक्षणा को विरोधः॥१६९॥

एवं ब्रह्माहंपदयोर्लोकवेदव्यवहारानुरोधेन शबलवा-चकयोर्जहदजहल्लक्षणयाऽखण्डार्थत्वमुक्तम् , इदानी-मज्ञानमात्रवाची ब्रह्मशब्दः मम योनिर्महद्ब्रह्मेत्यत्र केवलाज्ञाने ब्रह्मशब्दप्रयोगात् , एवमहंशब्दोऽपि व्यव-हारबलेन लाघवाच्च केवलाहंकारवाची भवत्विति ताभ्यां जहल्लक्षणयैवाऽखण्डवस्तुप्रतिपत्तिरिति प-क्षान्तरमाह । साभासाज्ञानेति । चिच्छायायुक्ताज्ञान-वाचीत्यर्थः । यदीति निश्चयार्थे । जहल्लक्षणाया अ-तिप्रसिद्धतया प्रस्तुते तदौचित्यार्थं दृष्टान्तमाह । नौ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिति। रौति शब्दं करोति । नावः शब्दकर्तृत्वानु
त्तेस्तया तटस्थः पुरुषो लक्ष्यते एवमुत्तरत्रापि
हरज्जुशब्दाभ्यां वह्निसर्पयोर्लक्षणा। रज्जुर्विषध
तिलोकप्रसिद्धप्रयोगानुवादत्वाद् ग्रन्थकर्तुर्न वि
ङ्गप्रयोगदोषः । विषधरा उ इति छेदो वास्तु । वि
रपदं वा दीर्घद्रव्यलक्षकं तथा च न विलिङ्गता।
ष्टान्तिकमुपसंहरति । आत्मवस्तुनीति । अत्रानि
तार्थयदिशब्दस्वारस्येन प्रौढिवादोऽयं ग्रन्थकार
केचित् । तत्र च बीजं ब्रह्मशब्दस्य जगत्कारणे प्र
रप्रयोगानुरोधः, अज्ञाने तत्प्रयोगस्य क्काचित्कत्वात्
वमात्मवचनाहंशब्दस्यापि नियमेन शबल एव प्र
इति ॥ १६१ ॥

प्रत्यक्त्वादिगुणान्वयेन यदि वा गौण्यस्तु वृत्तिस्त
ब्रह्माहंपदयोः परेतरदृशोर्मुख्यो विरोधो यतः॥
मुख्यार्थानुपपत्तिहेतुकतया गौण्यस्ति वृत्तिर्यतो
लोके माणवको विभावसुरसौ सिंहः पुमानित्यपि॥

निर्गुणे कस्यापि गुणस्याभावात्प्रौढिवादेनैव प
न्तरमाह। प्रत्यक्त्वादीति। आदिपदेन बृहत्वं ग्र
तयोः परेतरदृशोः, ईश्वरजीवयोरिति सप्तम्यौ।
प्रत्यक्त्वादिगुणान्वयेन वृत्तिस्तर्हि गौण्यस्त्विति
न्धः । तयोर्ब्रह्माहंपदयोरिति वान्वयः । किंलक्ष
परेतदृशोः परापरयोर्ब्रह्मप्रत्यगात्मनोर्दृग्ज्ञानं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयोरिति विग्रहः । तत्र हेतुमुख्य इति । ननु लक्षणामन्तरेण गौणी काचिदमुख्यवृत्तिर्न लोके सिद्धेत्याशङ्क्याह । मुख्यार्थेति । मुख्यार्थान्वयानुपपत्तिर्हेतुर्यस्मिन्नमुख्यसंबन्धे स तथा तस्य भावस्तत्ता तयेत्यर्थः । तत्र दृष्टान्तमेव हेतुमाह । यत इति । विभावसुरग्निः । अग्निर्माणवकः सिंहो देवदत्त इत्यादौ अग्न्यादिशब्दस्य स्वार्थगुणयोगेन माणवकादावनेकत्र प्रयोगाल्लोके गौणी वृत्तिर्यतः प्रसिद्धतमेत्यर्थः ॥ १७० ॥

परशब्दवृत्तिरपरत्र भवे-
दिति यद्यपीदमुभयोः सदृशम् ॥
अनयोस्तथापि तु विभागकरं
स्फुटमस्ति लक्षणमवान्तरकम् ॥ १७१ ॥

ननु स्वार्थं विहायार्थान्तरे वृत्तिर्गौण्यप्यस्ति चेत्कस्तर्हि लक्षणागौण्योर्भेद इति शङ्कामनूद्य तयोरवान्तरभेदोऽस्तीत्याह । परशब्दवृत्तिरिति । परस्य लक्ष्यमाणादन्यस्य गङ्गादेर्माणावकादेरन्यस्य ज्वलनादेर्वाचकशब्दस्य वृत्तिरित्यर्थः । अपरत्र स्वार्थादन्यत्रोभयोर्लक्षणागौण्योः सदृशं यद्यपीति संबन्धः । अनयोरित्यादि स्पष्टम् ॥ १७१ ॥

गुणतो गुणवृत्तिरिष्यते
ह्यपरा लाक्षणिकी तु सङ्गतेः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति भेदकमस्ति लक्षणा-

गुणवृत्त्योरिति वेदवादिनः ॥ १७२ ॥

अवान्तरभेदमेव दर्शयति । गुणत इति । लक्ष्यमा गुणयोगेन स्वार्थादन्यत्र वृत्तिर्गौणी । लाक्षणिकी अपराऽन्या सा संगतेः स्वार्थसंबन्धमात्रादर्थान्तरे वृ ने तु गुणयोगादित्यर्थः । इत्यनेन प्रकारेण लक्षणागु वृत्त्योर्भेदकमस्तीति वेदवादिनो मीमांसकाः । अभि याऽविनाभूते प्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणै गाद् वृत्तिरिष्टा तु गौणतेत्याहुरित्यर्थः । गङ्गादि हि स्वार्थान्वयानुपपत्तौ सत्यां तद्विहाय तत्संबन्धि नि वस्तुनि वर्तते न तु तद्गुणयोगमपेक्षते तीरे गङ्गा सादृश्याप्रतीतेः । ज्वलनादिपदं तु स्वार्थासंबन्धि न्यपि माणवकादौ लक्षितस्वार्थे शुचित्वादिगुणयो न वर्तते, अत एवाग्निसदृशो माणवक इति ततः तीयत इति तयोः स्फुटमस्ति भेदकमित्यर्थः ॥ १७२ ॥

नित्यः शुद्धो बुद्धमुक्तस्वभावः

सत्यः सूक्ष्मः सन् विभुश्चाद्वितीयः ॥

आनन्दाब्धिर्यः परः सोऽहमस्मि

प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ १७३ ॥

एवं जहदजहल्लक्षणया तत्त्वंपदाभ्यामुपात्तप्रत्यग् ह्माभेदनिष्ठं महावाक्यमित्युक्तम्, इदानीं तदनु न्तु पादेयप्रत्यग्ब्रह्मणोरवान्तरश्रुतितात्पर्यगोचरस्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पमाह । नित्य इत्यादिना । वस्तुतः कालत्रयापरिच्छेद्यो नित्यः। शुद्धः अविद्याकलङ्करहितः । बुद्धः स्वप्रकाशबोधो न तु बोधविषयः। मुक्तो रागद्वेषादिबन्धरहितः । सत्यः त्रिकालाबाध्यः । सूक्ष्मः स्थौल्यरहितो दुर्विज्ञेयो वा । सन् विद्यमानो भावस्वरूप इति वा। विभुः देशापरिच्छिन्नः स्वतन्त्र इति वा । अद्वितीयः वस्त्वन्तररहितः । आनन्दाब्धिः अनवच्छिन्नानन्दः । परः परमात्मेति विशेष्यम् । एवं तत्पदलक्ष्यस्वरूपं निर्दिश्य त्वंपदलक्ष्यस्वरूपमाह । प्रत्यग्धातुरिति । अहमनुभवे प्रकाशमानोऽहंकारादिसाक्षी, प्रत्यग्धातुशब्दः स्वरूपवाची सोऽपि उक्तलक्षण एवातो न किं चिदपि तदुभयवैलक्षण्यमिति तदत्यन्तमभिन्नमेवेत्याशयेन वाक्यार्थमाह । सोऽहमस्मीति । विद्धीति शेषः। अस्यार्थस्य प्रागुपपादितत्वाच्चाग्रे चोपपादयिष्यमाणत्वात्संशयं मा कुर्वित्याशयेनाह । नात्रेति । अथ वाऽस्मीत्यविवक्षितम् य एतादृशः परमात्मा सोऽहंपदलक्ष्यप्रत्यक्चैतन्यमित्यर्थः । यथा चिदेकरसमपि ब्रह्म वस्तु स्वभावतः सत्यज्ञानादिपदैरपर्यायैस्तात्पर्येण प्रतिपादनाच्च सत्यज्ञानानन्दात्मकमित्युच्यते, एवं नित्यो नित्यानामज आत्मा महान् अत्रायं पुरुषः स्वयं ज्योतिः असङ्गो ह्ययं पुरुषः अकामं रूपं शोकान्तरम् विमुक्तश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमुच्यते सत्यं ज्ञानं विभु सर्वगतं सुसूक्ष्मं सदेव॰ ॰ग्येदम् एकमेवाद्वितीयम् एषोऽस्य परम आनन्द इत्ते॰ मादितत्तद्वाक्यस्थैः पर्यायैर्नित्यादिशब्दैस्तात्पर्यतः तिपादनात्तन्नित्यशुद्धादिस्वभावमित्युच्यत इति॥१॰

सच्चित्सुखाद्वयवपुः कथयन्ति के चित्
सच्चित्सुखात्मकमिति प्रथयन्ति के चित्।
ब्रह्मेतराणि किल नास्य वपूंषि तेषां
बुद्धौ स्फुरन्त्यपररूपनिवृत्तिभावात्॥ १॰

नित्यत्वादीनामभावरूपाणां न भावरूपब्रह्मस्व॰ त्वमितिमन्वानानां मतभेदमाह। सच्चिदिति। सच्चि॰ द्वयानन्दस्वरूपं ब्रह्मेति के चित्। अद्वयत्वं च॰ याभावोपलक्षितं भावस्वरूपम्। एतच्चानन्दपदार्थ॰ अपरे त्वद्वयत्वमपि मुक्त्वा सदादिकमेव ब्रह्मेति वद॰ न्ति। नित्यत्वादीनां ब्रह्मस्वरूपत्वे तेषामरुचिनि॰ त्तमाह। इतराणीति। अस्य ब्रह्मण इतराणि नि॰ त्वादीनि वपूंषि सन्ति वपुष्ट्वेन बुद्धौ न स्फुर॰ किल कुतः, तेषां नित्यत्वादीनामपररूपस्य का॰ रिच्छेद्यत्वादेर्निवृत्तिभावादभावरूपत्वादित्यर्थः। ब्र॰ ह्मणो भावरूपत्वाद्भावरूपमेव सदानन्दादिकं स्व॰ भवितुमर्हति न नित्यत्वादिकमप्यभावरूपम् विरो॰ किंतु तेषां तद्धर्मत्वमेवेति तदाशयः। अत्र के चित्॰ लशब्दाभ्यामस्वारस्यं द्योतितम् तत्रचेदं निमित्तम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था सदादिशब्दैर्लक्षणया भावरूपं ब्रह्म प्रतिपाद्यते एवं नित्यादिशब्दैरपि तत्तच्छबलशक्तैस्तदधिष्ठानं ब्रह्मैव लक्षणया प्रतिपाद्यत इति तन्नित्यादिस्वभावमिति व्यवह्रियत इति न ब्रह्मणोऽभावात्मतापत्तिः, नाप्यभावधर्मकत्वमद्वये धर्मधर्मिभावायोगादभावस्य दुर्निरूपस्य श्रुतिप्रतिपाद्यत्वानुपपत्तेश्चेति ॥ १७४ ॥

ब्रह्मेति शेषि पदमत्र हि लक्ष्यमेकं
शेषाणि लक्षणसमर्पणमस्य कुर्युः ॥
लक्ष्यार्पणेन सह लक्षणवाचि सर्वं
संगच्छतेऽरुणपदं क्रयवाचिनेव ॥ १७५ ॥

इदानीमवान्तरवाक्यस्याखण्डार्थत्वं वक्तुं सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मलक्षणावाक्ये लक्ष्यलक्षणविभागमाह । ब्रह्मेति । ब्रह्मेतिपदं शेषीति संबन्धः । शेषिणः प्रधानस्य पदमिति वा । ननु ज्ञानानन्दादेरपि ब्रह्मस्वरूपत्वात्तत्पदमपि तथाविधं किं न स्यात्तत्राह । अत्र हीति । अस्मिन्वाक्ये एकं पदं लक्ष्यं हि यतः अतः शेषाणि सत्यादिपदान्यस्य ब्रह्मणो लक्षणसमर्पणं कुर्युरित्यर्थः । एकस्मिन्वाक्ये एकमेव पदं लक्ष्यमुद्देश्यं समर्पयतीति वक्तव्यं सर्वपदार्थानामुद्देश्यत्वे तेषां परस्परानन्वयेन वाक्यमनर्थकं स्यात्, विधेयं विना सर्वोद्देशानर्थक्यात्तत्रैकं ब्रह्मपदो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पस्थितमेव भवितुमर्हति तस्यैव ज्ञातस्य पूर्वं
क्ये ब्रह्मविदाप्नोति परमित्यत्र परमपुरुषार्थसाधनः
दर्शनात्, यच्च पुरुषार्थसाधनं तदेवाधिकारिणा जि
स्यं तदेव च लक्षणेनापि निरूप्यम् , एवं च ब्रह्म
दसामर्थ्याद्यतो वा इमानि भूतानि जायन्त इतिवा
भूतसृष्टिस्थित्यादिकारणे ब्रह्मशब्दप्रयोगाच्च जगत्
णमद्वयं ब्रह्मैव कार्यानुमानेन सामान्यतोऽवगतं वि
षय जिज्ञास्यमिति तदेव लक्ष्यं शेषीति ज्ञानादि
दान्यस्य लक्षणं प्रतिपादयेयुरिति भावः । ततः
तत्राह । लक्ष्यार्पणेनेति । पदेनेति शेषः । लक्षण
चि पदमिति शेषः । संगच्छते यद्ब्रह्म तत्सत्य
नाद्यात्मकमितिवाक्यभावेन संगतं भवति। ज्ञानादि
तयाऽज्ञातब्रह्मण एव तथा प्रतिपाद्यतया प्रधान
त्तत्पदेन लक्षणवाचिपदानां तद्गुणभूतार्थानां
न्वो वक्तव्यः, अन्यथा प्रतिपिपादयिषितार्थासिद्धि
भावः । प्रधानेनेतरेषामन्वये दृष्टान्तमाह । अ
पदमिति । अरुणया पिङ्गाक्ष्या गवा सोमं क्री
तीत्यत्र तृतीयान्तारुणादिपदानि क्रयसाधना
क्रीणातीत्येनान्वीयन्ते आरुण्यादिविशिष्टक्रयस्यैव
धेयत्वादिति यद्वत्तद्वदित्यर्थः ॥ १९५ ॥

पृष्ठात्परस्परयुजाप्रतिपत्तिरेषा-
मेवंविधत्वमुपपादयितुं समर्था ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्यस्य तस्य महतः क्रयवस्तुवत् स्यात्
सर्वस्य कारकपदस्य परस्परेण ॥ १७६ ॥

नन्वेवं सत्यारुण्यादीनां यथा प्रत्येकमेव क्रयेणान्वयः प्रत्येकं निरपेक्षकरणविभक्तिश्रवणात् , एवं यद्ब्रह्म तत्सत्यं तज् ज्ञानं तदनन्तमिति सत्यादिपदानामन्योऽन्यं निरपेक्षमेव ब्रह्मणान्वयः स्यान्न तु परस्परमेलनमिति नास्माद्वाक्यात्सत्यज्ञानात्मकं ब्रह्म सिद्ध्येत्,अनेकरूपं च तत्स्यादिति तत्राह । पृष्ठादिति । सत्यादीनां प्रत्येकं ब्रह्मान्वयप्रतिपत्तेः पश्चादेषां सत्यादीनां परस्परयुजा अन्योन्यं संबन्धः अभेद इति यावत् । एषा प्रतिपत्तिर्लक्ष्यस्य तस्य महतो ब्रह्मण एवंविधत्वं सत्यज्ञानाद्यखण्डैकरसत्वमुपपादयितुं समर्था स्यादिति संबन्धः । इममप्यर्थमुक्तदृष्टान्तेनाह । क्रयवस्तुवदिति । क्रयवस्तुन इवेत्यर्थः । कारकपदस्यारुणादिपदस्य । यथा क्रयेण प्रत्येकमन्वितारुण्यादिगुणानां साक्षात्क्रयसाधनत्वायोगादेकहायनीद्रव्यावच्छेदकत्वेनान्वीयमानानां परस्परमन्वयः प्राप्नोति, एवं निरवधिकमहत्त्वशालिब्रह्मणा लक्ष्येणाभेदानुपपत्त्यैकस्यानेकस्वरूपतानुपपत्तेश्च परस्परं मेलनादभिप्रेतब्रह्मस्वरूपसिद्धिरिति ॥ १७६ ॥

तत्त्वंपदार्थविषयो नय एव योज्यः
सत्यादिवस्तुषु न तत्र विशेषकल्पः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यादिशब्दविषयाः शवलास्तदर्थ-
भागेषु लाक्षणिकवृत्तिरपीह तुल्या ॥ १७७ ॥

ननु सत्यादिपदवाच्यार्थोपादाने नोक्तब्रह्मस्वरूप-
भस्तेषामवश्यं परस्परं भेदात्' सत्यादिपदलक्ष्य-
च तस्यासत्याद्यात्मतापत्तिरित्याशङ्क्याह। तत्त्वंपद-
ति। सत्यादिवस्तुषु सत्यादिपदार्थेषु। ननु सत्यादि-
दार्थस्य ब्रह्मपदार्थेनान्वयात्तत्र च गुणगुणिभावेन
लोत्पलवन्मुख्यार्थस्यैवान्वयसंभवात् किं तत्त्वंपद-
रिव लक्षणया येन तद्विषयो नयोऽत्रातिदिश्येत तत्रा-
न तत्रेति। सत्यादिपदार्थेषु तत्त्वंपदार्थाभ्यां सकाशा-
दन्वये विशेषप्रकारो नेत्यर्थः। सत्यादिपदार्थानां
ख्यब्रह्मान्वयानुपपत्तेर्लक्षणावश्यं वाच्येति भाव-
यदुक्तं ब्रह्मण एवं सत्यसत्याद्यात्मतापत्तिरिति
पि तदीयन्यायान्तरातिदेशेन परिहरति। सत्य-
ति। शबला इति। तांश्च शबलाननुपदमेव वक्ष्य-
सत्यादिपदानामपि तत्त्वंपदयोरिव शबले शक्ति-
तो जहदजहल्लक्षणया च वक्ष्यमाणन्यायेन तेषाम-
तात्मनि वृत्तिरिति न त्वदुक्तदोष इत्यर्थः ॥ १७७ ॥

आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता काचिदन्या ॥
तत्संपर्कात्सत्यता तत्र चाद्न्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ १७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु किं तत्सत्यादिवाच्यं शबलं कथं वा तत्र व्युत्पत्तिरिति जिज्ञासायां तदाह। आकाशादौ सत्यतेत्यारभ्याकाशादावस्तितेत्यन्तैः सप्तभिः श्लोकैः। आकाशघटादौ सत्यता व्यावहारिकसत्यता। व्यावहारिकसत्यत्वं च परमार्थसत्यत्वात् कल्पितभेदमस्त्येव, सत्यं चानृतं च सत्यमभवदितिश्रुतेः, आकाशादेरात्मकार्यस्यार्थक्रियाकारित्वदर्शनाच्च, परमार्थसत्यतातिरिक्ता वियदादिसत्यताऽस्तीत्यर्थः। प्रत्यङ्मात्रे शुद्धात्मनि। सत्यता पारमार्थिकी सत्यता। अन्याकाशादिसत्यत्वाद्विलक्षणात्यन्ताबाध्यार्थलक्षणा। व्यावहारिकसत्यमेकमाकाशाद्यस्ति परमार्थसत्यं च प्रत्यग्रूपमन्यदस्तीत्यर्थः। ततः किं तत्राह। तत्संपर्कात् तयोः सत्ययोः परस्परं तादात्म्यात्, निष्पन्नेति शेषः। तत्रेत्यनुषङ्गः। सत्यता तत्र चान्या समुदायात्मिका। ततोऽपि किं तत्राह। व्युत्पन्न इति। तत्र सति शबले प्रत्यक्षादिसिद्धे सत्यशब्दस्य व्यवहारानुरोधेन शक्तिग्रह इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ १७८ ॥

बुद्धेर्वृत्तौ ज्ञानता तावदेका
प्रत्यग्बोधे ज्ञानता काचिदन्या ॥
तत्संपर्काज् ज्ञानता तत्र चान्या
व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥ १७९ ॥

बुद्धेर्वृत्तौ चक्षुरादिजन्यान्तःकरणवृत्तौ। ज्ञानता चै-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तन्याभिव्यञ्जकत्वरूपा ज्ञानता । प्रत्यग्बोधे प्रत्य
तन्ये । ज्ञानता स्वप्रकाशज्ञानस्वरूपता ॥ १७९ ॥

बुद्धेर्वृत्तौ तावदानन्दतैका
प्रत्यङ्मात्रे का चिदानन्दताऽन्या ॥
तत्संपर्कात्तत्र चानन्दतान्या
व्युत्पन्नोऽयं तत्र चानन्दशब्दः ॥ १८० ।

आनन्दता आनन्दपदव्यवहारयोग्यता प्रथमा।
मप्रेमास्पदत्वयोग्यतारूपानन्दता द्वितीया ॥ १८०

आकाशादौ नित्यता तावदेका
प्रत्यङ्मात्रे नित्यता का चिदन्या ॥
तत्संपर्कान्नित्यता तत्र चान्या
व्युत्पन्नोऽयं नित्यशब्दस्तु तत्र ॥ १८१ ।

नित्यता कल्पस्थायितारूपा नित्यतेत्यर्थः ।
लापरिच्छेद्यत्वरूपा द्वितीया नित्यता द्रष्टव्या ॥ १

आकाशादौ शुद्धता तावदेका
प्रत्यङ्मात्रे शुद्धता का चिदन्या
तत्संपर्काच्छुद्धता तत्र चान्या
व्युत्पन्नोऽयं शुद्धशब्दस्तु तत्र ॥ १८२ ।

शुद्धता अस्पृश्यताप्रयोजकरूपराहित्यतारूपा
मलवद्द्रव्यसंबन्धराहित्यरूपा वा । प्रतीचि
सर्वप्रकाराऽशुचित्वाभावोपलक्षितस्वरूपात्मिका
राहित्यरूपा वेत्यर्थः ॥ १८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोत्वादौ मुक्तता तावदेका
प्रत्यङ्मात्रे मुक्तता का चिदन्या ॥
तत्संपर्कान् मुक्तता तत्र चान्या
व्युत्पन्नोऽयं मुक्तशब्दस्तु तत्र ॥ १८३ ॥

मुक्तता बन्धनरहिततारूपा । प्रतीचि तु संसारानर्थस्य नित्यनिवृत्तिरूपा सा ॥ १८३ ॥

आकाशादावस्तिता तावदेका
प्रत्यक्त्वे चास्तिता का चिदन्या ॥
तत्संपर्कादस्तिता तत्र चान्या
व्युत्पन्नोऽयं तत्र चास्तीति शब्दः ॥ १८४ ॥

अस्तिता विद्यमानता नञर्थानुल्लिखितधीविषयतारूपभावता वा । प्रतीचि तु सा सदितिप्रतीतियोग्यतारूपा । एवं सूक्ष्मविभ्वादिपदानां केशाकाशादिशबले व्युत्पत्तिर्द्रष्टव्या ॥ १८४ ॥

यो यः शब्दो यत्कृतेऽर्थे निरूढ-
स्तत्रैवार्थे लक्षणा वृत्तिरस्य ॥
वक्तव्या स्यात् पण्डितैरेवमेतत्
प्रत्यक् पूर्णं ब्रह्म वेदान्तवेद्यम् ॥ १८५ ॥

नन्वेवं भवतु सत्यादिवाच्यस्वरूपं तत्र च सत्यादिशब्दस्य व्युत्पत्तिः, तथापि कथं तल्लक्ष्यस्य निर्णयः तद्वाच्ये भागद्वयसत्त्वेन हेयोपादेयभागविभागासंभवादित्याशङ्क्याह । यो य इति । येन कृतं य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्कृतं तस्मिन्नर्थे सत्यादिशबले निरूढो वाचक
न प्रसिद्धस्तत्रैव निमित्तभूते परमार्थसत्यादिस्व
ऽस्य सत्यादिपदस्य लक्षणेति संबन्धः । यद्यपि
त्यादिपदवाच्यमात्मानात्मभागद्वयं कृतम्, तथापि
गनादेस्तद्वाच्यभागस्य यत्सत्यत्वाद्युक्तं तत्सत्यादि
भावाधिष्ठाननिरपेक्षं न भवति तदात्मनैव तस्य
क्रियाजनकत्वादिरूपवत्त्वादन्यथा निरात्मनस्तस्य
योगादेवं चात्माकाशादिस्वरूपं भूत्वैव तेन
वलितः सन्सत्यादिशब्दवाचयतां लभत इति
पेक्षतत्कृत एव सत्यादिपदवाच्यतार्होऽर्थ इति
व निरपेक्षः सत्यादिस्वभावो लक्षणयोपादीयत
न तस्मिन्निर्णयकारणशून्यतेत्यर्थः । एतच्च पा
तैरित्यनेन द्योतितम् । एवमद्वयब्रह्माभेदप्रमिति
दपि लक्ष्यनियमसिद्धिरित्यभिप्रेत्याह । एवमेतादि
वेदान्तवेद्यमेतत्प्रत्यग्ब्रह्म एवं सति पूर्णं स्यादि
पि संवन्धः । वियदादेर्वाच्यभागस्य ब्रह्माभेदा
त्तेश्च न तल्लक्षणा व्यर्था न च न ब्रह्म पूर्णं सिद्धे
भावः ॥ १८५ ॥

सत्येऽप्यस्ति ज्ञानता ज्ञानतायां
सत्यत्वं च स्पष्टमस्त्येव तद्वत् ॥
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे ज्ञानसत्योपपत्तेः ॥ १८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सत्यादिवाक्यस्यैकरसब्रह्मार्थत्वे तत्पदानां पर्यायतापत्तिरित्याशङ्क्य किं सत्यादिपदानामपर्यायत्वेन तदर्थभेदः सिषाधयिषितः, उत सिद्धान्ते तत्परिहारजिज्ञासामात्रमिति विकल्प्याद्येऽत्यन्तभेदवादिनं प्रत्याह। सत्येऽपीत्यादिना। सत्यपदलक्ष्येऽपीत्यर्थः। ज्ञानता ज्ञानाभेदः। तर्हि किं रजताधिष्ठानशुक्तिरिव स्वाभिन्नाद्रजतात् सत्यमपि स्वाभिन्नाज्ज्ञानाद्भिन्ने नेत्याह। ज्ञानतायामिति। ज्ञाने यथा ज्ञानं सत्याभिन्नं तथा स्पष्टं सत्यत्वं च ज्ञानाभिन्नम्, सत्यज्ञानयोरत्यन्तमभेद इत्यर्थः। ननु भवतु सत्यज्ञानयोरभेदस्तथाप्यतिरेकरूपेणभेदोऽपि वाच्यः। अन्यथा तत्पदद्वयसामानाधिकरण्यायोगादिति न तदुभयलक्ष्यमत्यन्ताभिन्नमिति भेदाभेदमाशङ्क्याह। सत्यप्येवमिति। एवं सत्यप्यतिरेकावकाश इति यत्तन्नेति संबन्धः। कुतस्त्वेवं ज्ञानानन्दात्मके वस्तुनि पूर्णेऽत्यन्तमभिन्ने सति ज्ञानसत्योपपत्तेः ज्ञानस्य ज्ञानत्वं सत्यस्य सत्यत्वं चोपपद्यत इत्यर्थः। यदि सत्यं ज्ञानाद्भिन्नं स्यात्तदा तस्य दृश्यतया सत्यत्वं न स्यात्, एकदेशिमते ज्ञानाभेदोऽप्यस्तीति चेज्ज्ञानभेदस्यापि सत्वे तदपरिहारात्, अन्यथा तदस्फुरणात्, एवं ज्ञानमपि सतो भिन्नं चेदसदेवेति न ज्ञानं स्यादिति तयोरत्यन्तमभेद एव। शब्दापर्यायत्वं सामानाधिकरण्यं च ल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्ष्यैक्येऽपि वाच्यभेदादुपपन्नतरमिति द्वितीयकल्पो
निरस्त इति भावः। एवमुत्तरश्लोकयोरपि द्रष्टव्यम्॥

आनन्दत्वे ज्ञानता ज्ञानताया-
मानन्दत्वं विद्यते निर्विशङ्कम् ॥
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे ज्ञानसौख्योपपत्तेः ॥ १८७ ॥

आनन्दत्वे आनन्दे। ज्ञानसुखयोर्भेदे सुखस्य दृ
त्वादिदोषो ज्ञानस्य प्रेक्षावदुपेक्ष्यतापत्तिरिति भाव

आनन्दत्वे सत्यता सत्यताया-
मानन्दत्वं निर्विवादं प्रसिद्धम् ॥
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे सत्यसौख्योपपत्तेः ॥ १८८ ॥

आनन्दत्व इति श्लोकान्तरं स्पष्टम्॥ १८८ ॥

शेषेऽप्यूह्यं न्यायसाम्यादशेष-
मन्योऽन्यस्मिन्नस्तिता पूर्णता च ॥
अन्योऽन्यस्याजामिता शब्दशक्ते-
रेवं सुस्थं सर्वमुक्तोपपत्तेः ॥ १८९ ॥

ननु भवतु सत्यादीनामत्यन्तमभेद एकस्मिन्
समानाधिकरणपदैस्तेषामुपादानात्। नित्यशुद्धत्वा
नां तु तत्रतत्र वाक्ये पृथक्पृथगुपात्तानामत्यन्ताऽ
न किं चित्प्रमाणमित्याशङ्क्य तेषामपि पूर्णब्रह्मभे
पपत्त्या परस्परभेदे तेषामशुद्धयाद्यापत्तेश्चात्यन्ताभे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वोचित इत्याह। शेषेऽपीति। सत्यज्ञानानन्दातिरिक्ते-षु नित्यादिपदार्थेषु, अशेषं सत्यादिपदार्थेषु यदुक्तं ल-क्ष्यैश्वर्यादि तत्सर्वमुक्तन्यायसाम्यादूह्यम्। अशेषमित्यु-क्तमेव विशदयति। अन्योऽन्यस्मिन्नित्यादिना। अन्यो-ऽन्यस्यान्योन्यस्मिन्नस्तितेति संबन्धः। चकारात्सामा-नाधिकरण्यं सूचयति। शब्दशक्तेरजामितेति संबन्धः। जामिता पुनरुक्तता कार्यान्तराभावेनाप्रयोजकता वा नास्तीत्यर्थः। उपसंहरति। एवं सुस्थमिति ॥ १८९ ॥

बोधात्मत्वे निर्निमित्ते प्रतीचो
बोधात्मत्वे तन्निमित्ते च बुद्धेः ॥
बोधात्मत्वे बुद्धिधर्मौ च बुद्धे-
रुक्ते साक्षाद्वेदसिद्धान्तविद्भिः ॥ १९० ॥

ननु शबलं ब्रह्मात्मादिपदानां वाच्यमित्युक्तं त-दनुपपन्नं मूलग्रन्थे तथाऽदर्शनात्, अत एव प्रत्य-क्त्वं बोधत्वं च बुद्धेरित्यप्ययुक्तमित्याशङ्क्य नैष्कर्म्य-सिद्धावाचार्यैस्तदुभयमप्युक्तमित्याह। बोधात्मत्वे इति। निर्निमित्ते स्वाभाविके। तन्निमित्ते स्वाभाविकप्रत्यग्बो-धात्मनिमित्ते बुद्धेरिति संबन्धः। बुद्धेर्बोधात्मत्वे बुद्धिधर्माविव न त्वात्मन इव स्वरूपभूते, आत्मनो हि सर्वान्तरस्वप्रकाशस्य प्रत्यक्त्वं बोधत्वं च स्वाभा-विकं बुद्धेस्तु तदध्यासात्तद्धर्मसंबन्ध इति ते स्वाभा-विके नेत्यर्थः तदुक्तमाचार्यैः। कूटस्थबोधः प्रत्यक्त्वम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमित्तं सदात्मनः । बोद्धृताहन्तयोर्हेतुस्ताभ्यां त पलक्ष्यते । बुद्धेरित्युत्तरश्लोके लभ्यते । एवं च बु पि बोद्धृताऽहन्तयोरन्यनिमित्तयोरभिधानादात्म तदुपलक्ष्यत्वोक्ते र्वास्तवावास्तवप्रत्यक्द्वयशबलस ऽहंपदवाच्यत्वं बुद्धेश्च बोधात्मत्वादिधर्मवत्त्वं तत तमिति नाऽस्माभिः स्वेच्छया कल्पितमिति भाव एवं च ब्रह्मादिपदस्यापि शबले संगतिरवि द्रष्टव्यम् ॥ ११० ॥

जहतीह च लक्षणा मता
गुणवृत्तिश्च तथाऽभ्युपेयते ॥
न विशेषविनिर्णयक्षमं
किमपीहास्ति विशेषकारणम् ॥ १११ ॥

तत्त्वंपदयोरिव सत्यादिपदेष्वपि जहदजहल्लक्ष पपादिता , इदानीं तद्वदत्रापि लक्षणान्तरं वृत्त्य रं चातिदिशति । जहतीति । इह अत्रान्तरवाक्ये हती लक्षणा च मतेष्टेत्यर्थः । तथा तत्त्वंपदार्थ थेत्यर्थः । तथा प्राण इतिवद्व्यवहितपरामर्शस्यापि भवात् तथेह जहतीति योजनीयम् । यथा जहती तथैव वृत्त्यन्तरं चास्तु । विशेषविनिर्णयक्षमं जहद ल्लक्षणैवसत्यादिपदेषु न वृत्त्यन्तरमिति न निर्णयो मित्यर्थः । विशेषकारणं विशेषप्रमाणम् । एत प्रौढ्यैवोक्तं वृद्धानां सत्यादिपदव्यवहारस्य गगन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शबल एवानियमेन दर्शनात् । गगनं सत्यमित्यादिप्रयोगाद्धि गगने सत्यादिशब्दसंगतिग्रहो वाच्यः, स च प्रयोग आत्मानात्मसमुदायगोचरः, आत्माऽन्यस्य सतत्पदार्थस्यासंभवात्। यद्यपि व्यावहारिकी सत्यता गगनादावप्यस्ति तथापि सा तथा गृह्यमाणाऽऽत्मानं व्यावर्त्तयेन्न तु सत्यत्वादिरूपेण गृह्यमाणा । वक्ष्यमाणरीत्या व्युत्पत्तिकाले तस्या विविच्य ज्ञातुमशक्यत्वाच्च विचारदशायामेव तत्कल्पनात् । ततश्चाधिष्ठानव्यावृत्तरूपेण गगनादिस्फुरणाभावान्न केवलतद्गोचरः शक्तिग्रहः । न चैवमपि विशिष्टादन्यस्मिन्केवले जहल्लक्षणैव पदानां युक्तेति वाच्यम्। विशिष्टस्वरूपस्य विशिष्टरूपेण स्वस्मात्कल्पितभेदेऽपि तत्त्वतस्तदभावेन विशिष्टरूपस्य केवलाभिन्नस्य त्यागासंभवेन जहदजहल्लक्षणया तस्योपादेयत्वात् । एतच्चाग्रे स्वयमेव वक्ष्यति । एवं वाक्यार्थे कस्यापि गुणस्य योगाप्रतीतेर्गौण्यपि न संभवतीति ॥ १९१ ॥

ऐश्वर्यमप्यनुभवादिवदात्मरूपं
तस्मादबोधगतमस्य च तानि कस्मात् ॥
नेष्टानि पूर्ववदिति ब्रुवतो मुखस्य
सद्यः पिधानमनुसृत्य वचांसि कुर्मः ॥ १९२ ॥

ननु यथा सत्यादिवाक्यसामर्थ्यात्तत्तत्पदेषु भागत्यागोपादानलक्षणया सदाद्यात्मकं ब्रह्मेत्यङ्गीकृतम्, ए-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वमेष सर्वेश्वर इति श्रुतिसामर्थ्यादैश्वर्यमप्यात्मस्व- पं जहदजहल्लक्षणया किमिति नाङ्गीक्रियते तस्य ज्ञानाद्यविशेषादिति शङ्कते । ऐश्वर्यमिति । आत्मा- मेकम् । तस्मात् अबोधगतं मायागतमन्यदिति शेषः। यायामपि तत्रतत्र पुराणे दुर्गादिरूपायामीश्वरीश- योगात् । अस्य तदुभयशबलस्य चापरम् । त्रिविधान्यैश्वर्याणि । पूर्ववत्त्रिविधसत्यत्वादिवत् दूषणं प्रतिजानीते । इति ब्रुवत इति । वचांसि सृत्येति संबन्धः । तस्मै निरुत्तरमुत्तरं दद्म इत्यर्थः ॥

> ऐश्वर्यवर्णनमतिस्फुटमेव कृत्वा
> नेतीत्यवादि बहुशः श्रुतिभिः प्रयत्नात् ।
> सत्यादिवस्तुनि पुनर्न तथास्ति पूर्व-
> मुक्त्वा निषेधनमितीह विशेषयुक्तिः ॥ १

तदेव विवृणोति । ऐश्वर्यवर्णनमिति । किमै- शब्देनानुभवादिगतनिरतिशयत्वादिविशेषः कथ्य- किं वा स्वातन्त्र्येण निखिलजगत्सर्जनपालनादि- पारः । आद्योऽस्मदिष्ट एव, ज्ञानादिपदैरेव निर- यज्ञानादेर्लक्षितत्वेन पदान्तरेणापि तस्य प्रति- त्वात् । न द्वितीयः, यतः सर्वस्य वशी सर्वस्ये- सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो साधुना कनीयानेष सर्वेश्वर इत्यादिवचनेन निरङ्कुशं तस्योक्त्वा स एष नेतिनेत्यात्मेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेव तत्प्रतिषेधति। एवमन्तर्यामिब्राह्मणेऽपि यः पृथिव्यां तिष्ठन्नित्यादिना बहुप्रकारेण तस्य निखिलजगन्नियन्तृत्वरूपमैश्वर्यमुपवर्ण्य अन्तेऽतोन्यदार्तमिति तत्प्रतिषेधति। एवं मूर्तामूर्तब्राह्मणेऽपि पञ्चमहाभूतवासनात्मकतद्रूपाण्युक्त्वा अथात आदेशो नेतिनेतीति श्रुतिस्तात्पर्येणापवदति । तदिदमाह । बहुश इति । ततः श्रुतिभिरेव तस्य निराकृतत्वान्न तदनुभवादिवदात्मरूपतया श्रुतिप्रतिपाद्यम्। सत्यादिवस्तुनि तु न तथा पूर्वं प्रतिपाद्य निषेधनमस्तीत्यस्ति तयोर्महान्विशेषः । अतः सत्यादिकमेवात्मरूपमिति भावः ॥ १९३ ॥

शब्दस्य लाक्षणिकमुख्यविभागभिन्ना
वृत्तिर्हि लौकिकवचस्युपलब्धपूर्वा ॥
यस्मादतो न घटते यदि मुख्यवृत्ति-
राश्रीयतामिह गिरश्चरमापि वृत्तिः ॥ १९४ ॥

ननु विचारेण शुद्धोपस्थितिमन्तरेण तत्र लक्षणानवतारात्साऽवश्यं वाच्या, एवं च तत्र सत्यादिपदानां शक्तिरेवास्तु किं लक्षणयेति चेन्न, सर्वपदस्य तत्र शक्तौ पदान्तरवैयर्थ्यादिदोषप्रसङ्गात्, किं च लक्षणापरिहारार्थं तत्र शक्तिः कल्पनीया, उत तत्प्रतीतये, नाद्यः, तथा सति लोकप्रसिद्धवृत्त्यन्तरविलोपप्रसङ्गात्, स चान्याय्य इत्यभिप्रेत्याह। शब्दस्येति । उपलब्धपूर्वा पूर्वं निश्चिता। साप्येवं सति न स्यात्तीराद्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वपि गङ्गादिपदस्यैव शक्तिप्रसङ्गो यस्मादतो मुख्य निर्वाहाय लक्ष्ये न शक्तिः, कल्पनीयेति शेषः। द्वितीयः, प्रथमक्क प्रशक्त्यनुरोधेन मुख्यार्थासंभवे क इव लक्षणया तत्प्रतीत्युपपत्तेरित्याह। न घटते दीति ॥ १९४ ॥

तस्मादखण्डमवबोधयितुं समर्थो
वेदान्तभूमिगतशब्दसमन्वयोऽतः ॥
संसर्गलक्षणमपास्य विरोधहेतो-
र्वाक्यार्थमद्वयमखण्डमिहाश्रयस्व ॥ १९५ ॥

ननु सर्वेषां पदानां यद्येकप्रातिपदिकार्थे लक्षणा त कपदादेव तत्प्रतीतिसंभवाल्लक्षणापक्षेऽपि पदा व्यर्थमिति शङ्कां निराकुर्वन्नुपसंहरति। तस्मादि शब्दसमन्वयो वाक्यम्। लक्षणायां हि सर्वमपि पद र्थवदेव, अन्यथा यदेव पदं न प्रयुज्येत ब्रह्मणस्त रमताकारसंशयो न निवर्त्तेत तदभेदस्यान्यतोऽन भात्। एवं तदा लक्षणाबीजान्वयानुपपत्तिप्रतिसं नाभावाल्लक्षणापि न स्यात्। न ह्येकपदप्रयो क्वचिल्लक्षणावतरतीति न शक्तिसाम्यमिति भा फलितमाह। अतः संसर्गलक्षणमिति। तादात्म्यल मित्यर्थः। विरोधहेतोः सत्यादिपदवाच्याभेदवि दित्यर्थः। इह ब्रह्मवाक्ये ॥ १९५ ॥

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः ॥
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके
वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः॥१९६॥

वेदान्तानामखण्डार्थप्रतिपादनक्रममाह । सामानाधिकरण्यमिति । सामानाधिकरण्यादीनामुत्तरश्लोके संबन्धिनः स्पष्टं निर्देक्ष्यन्ते । अत्र ब्रह्मवाक्ये सामानाधिकरण्याख्योऽन्वयः प्राथम्यभाक् प्रथमं भवति, पश्चाद्विशेषणेतरतया विशेषणविशेष्यभावेनाभेदेनेति यावत् एषः अन्वयो भवति, पश्चात्तत्र विरोधोद्भवः विरोधस्फूर्तिः, ततो विरोध उत्पन्ने ज्ञाते एकरसकेऽखण्डात्मके वस्तुनि लक्षणया वृत्तिर्भवति, ततो वाक्यार्थधीर्भवतीत्यखण्डार्थप्रतिपत्तिक्रमः सूरिभिर्ज्ञेय इत्यर्थः ॥ १९६ ॥

सामानाधिकरण्यमत्र पदयोर्ज्ञेयस्तदीयार्थयोः
संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः ॥
संबन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु॥१९७॥

ननु कस्य सामानाधिकरण्यान्वयः कस्य वा विशेषणतादिरित्याकाङ्क्षायामाह । सामानाधिकरण्यमत्र पदयोरिति । सामानाधिकरण्यं संबन्धः पदयोर्ज्ञेयः । पदयोरिति द्विवचनं तत्त्वमस्यभिप्रायं बहूनामप्युपलक्षणम् । अपर्यायपदानामेकार्थवृत्तित्वं सामानाधिकर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ण्यान्वय इति पदानामेव स इत्यर्थः । विशेषणे
तया तु संबन्धस्तत्त्वंपदार्थयोः, तत्त्वमादिवाक्यश्रव
नन्तरं हि तदर्थयोरहं ब्रह्मेतिविशिष्टाभेदो ज्ञायते,
न्यथा सामानाधिकरण्यायोगात् । एतच्चोद्भिदा यं
त्यत्रोद्भिद्यागपदयोरप्यस्ति सामानाधिकरण्यं न
खण्डार्थतेति तद्व्यावृत्तय उक्तम्। तथापि नीलमुत्पलं
त्यादौ नाखण्डार्थता तत्राह । ताभ्यां सहेति ।
विरोधोद्भवे सतीति द्रष्टव्यम्, अन्यथा लक्षणा
तारात् । तत्त्वंपदार्थाभ्यां विशेषणविशेष्याभ्याम
त्मनो लक्ष्यलक्षणतया संबन्धो विधेयः । लक्ष्यं शु
त्मस्वरूपं लक्षको वाच्योऽर्थः, एतच्च पदार्थल
पक्षमादायोक्तम्।उपसंहरति । एवमिति । अर्थपदा
प्रतिपत्तिसाधनानि बुद्धिपदवीमारोहणीयानि
धारणीयानि, तुरवधारणे, नैव विस्मर्तव्यानि
र्थः । यत्तु जीवपरयोरंशांशिभावेन शरीरतदवय
दीर्घबाहुर्देवदत्त इतिवत्कार्यकारणभावेन वा मृद्
इतिवदभेदप्रतीत्युपपत्तेर्न विरोधोद्भवो न वा ल
ति क्वाखण्डार्थतेति । तन्न । न जायते म्रियते
दिनिखिलविकारनिषेधश्रुतेः, अन्यथा जीव
घटादिवन्नाशप्रसंगात्, निष्कलं निष्क्रियमित्या
तेश्च न वस्तुतोंऽशांशिता, अन्यथा तदंशिनो
णो देवदत्तवत्सावयवतयाऽनित्यत्वापत्तिः । अतो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्ताभेद एव पदार्थयोर्वाक्यार्थो वक्तव्योऽस्ति तत्र चास्त्येव विरोध इति कथं न लक्षणा कथं वा वाक्यस्य नाखण्डार्थतेति । इदमिहाचार्याभिप्रेतम् । तत्त्वंपदयोरपर्याययोः समानविभक्तिकयोः परस्पराकाङ्क्षयोरर्थान्तरासंभवादेकार्थवृत्तित्वं वक्तव्यमिति प्रथममधिकारिणानुसंधेयम्, ततस्तद्बलात्तदर्थयोरत्यन्ताभेदः अन्यथा तयोः सामानाधिकरण्यायोगादिति चानुसंधेयम्, ततस्तत्र विरोधोऽपि प्रतिसंधेयः, तदनन्तरं नेदं वाक्यं प्रमत्तगीतं वाक्यान्तरतुल्यत्वान्नाप्यदृष्टार्थं तदध्ययनं दृष्टे संभवति तदयोगादिति विचारयतो लोकसिद्धमर्यादया पदद्वयलक्षणया तत्त्वमितिवाक्यमखण्डमेव ब्रह्म प्रतिपादयेत्, एवं सत्यज्ञानादिवाक्यमपीति ॥ १९७ ॥

निःसंधिबन्धनमिदं चिदचित्स्वरूपं
संक्षीर्णमन्तरपरिस्फुरणेन शून्यम् ॥
आचित्तशुद्धिफलतः स्फुरितोपपत्तेः
शब्दार्थसंगतिमिहैव तु गृह्णतेऽज्ञाः ॥ १९८ ॥

ननु भवतु लक्षणया वाक्यस्याखण्डार्थता तथापि जहदजहल्लक्षणेति न सम्यगिव, शबले संगतौ हि सा स्यात्सा चानुपपन्ना लाघवादेकत्रैवांशे शक्तेर्न्याय्यत्वादन्यथा गौरवात्तत्र यद्यप्यात्मांशे सा न संभवत्युक्तदोषादनात्मांशे तु शक्तौ न किं चिद्बाधकमित्याशङ्क्य सं-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतिग्रहवेलायां लाघवाद्यनन्तराच्छबलव्युत्पत्तौ न
चिद्बाधकमस्तीति वक्तुमुपस्थित्यनुरोधेन शबले सं
ग्रहमाह । निःसंधिबन्धनमिति । इदं चिदचित्स्व
आचित्तशुद्धिफलतः आङ्मर्यादायां चित्तशुद्धि
पायाः स्फुरितोपपत्तेरुपपत्तिस्फुरणपर्यन्तम् । अ
परिस्फुरणेन शून्यम् स्फुटभेदज्ञानशून्यम् । निःसं
न्धनं तादात्म्यरहितम् । तत्र हि भेदसहिष्णुरीषद्भेति
स्तीतिसंधिबन्धनपदसूचितस्य तस्यात्र निषेधात्
तः संकीर्णमध्यस्तात्यन्तिकाऽभेदेन प्रतीयमानं भवति
शेषः । ततः किं तत्राह । शब्दार्थसंगतिमिति । इ
बले । अज्ञाः भागद्वयविवेकशून्याः । ज्ञाते हि सं
ग्रहः, ज्ञानं च प्राक् शबलस्यैव न तु तदंशयोः
मीषद्वा विविच्य संगतिग्रहसमये ग्रहणमस्ति,
बल एव संगतिग्रह इति भावः ॥ १९८ ॥

शब्दार्थसंगतिविदामथ सत्त्वशुद्धे-
रुत्पन्नतर्कदृढलोहशलाकया तु ॥
दृश्यं दृशं च निपुणं द्वयमन्तरेण
निक्षिप्य या दृगदृशोः क्रियते विभागः ॥

नन्वहंकारादेर्दृश्यत्वात्तस्य स्वातिरिक्तद्रष्टृ
यमात्तद्द्रष्टा ततोऽन्यस्तस्माच्च दृश्यमन्यदिति का
स्य विवेकग्रहासंभवः, एवमहंकारस्य कामाद्याश्र
दपि दृग्रूपाद्द्रष्टुरन्यत्वं द्रष्टुरसंगस्य दृश्याश्रयत्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दित्यतोऽपि तद्विवेकः संभवतीति कथं तत्र संगतिग्रहो न भवेदिति चेत्,सत्यमयं विवेकोपायः, परं त्वयमहमादिशब्दार्थसंगतिं जानतः समयान्तरेऽन्तःकरणशुद्धौ सत्यां मुमुक्षोरात्मविचारे प्रवृत्तेऽवतरति न तु प्रागन्यथा वादिनामहंकाराद्यात्मत्वभ्रमो न स्यात्ततस्तत्पूर्वकालीनसंगतिग्रहः शबलगोचर एवेत्याह। शब्दार्थेति। अथ संगतिग्रहानन्तरं समयान्तरे। सत्त्वमन्तःकरणम्। उत्पन्नतर्कदृढलोहशलाकया उत्पन्नो यो वर्णितस्तर्कः स एव दृढलोहशलाका, यथा दृढलोहशलाका नीरन्ध्रसंसृष्टपाषाणादीन्वियोजयत्येवं दुर्विवेकचित्संश्चिद्रूपाहंकारग्रन्थेर्विवेचनादबाधाच्चायं तर्को दृढलोहशलाकेत्युक्तः, तया दृश्यं दृशं च द्वयमन्तरेण दृग्दृश्ययोर्द्वयोर्मध्ये निक्षिप्तया निवेशितया दृग्दृश्यविभाविषयतया प्रयुक्तयेति यावत्, दृग्दृशोरात्मानात्मनोर्विभागः क्रियते ज्ञायते। ततस्तत्पूर्वमेव शबले संगतिग्रहान्नांशमात्रं तद्गोचरः, अन्यथा प्राक्संगतिसंवेदनान्तरेण विचारस्यानवताराद्विवेकग्रह एव न स्यादिति भावः ॥१९९॥

शुद्ध्युत्थतर्कजनितं चिदचिद्विभागं
प्राप्य स्थिताः पुनरिमां गिरमुद्गिरन्ति ॥
सत्यादिशब्दगण एष तु तत्रतत्र
व्युत्पत्तिमान् शबलवस्तुनि नो दृशीति ॥२००॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु प्राग् विवेकग्रहाभावे कथं शब्दार्थस्य शबल
द्धिरित्याशङ्क्य समयान्तरे तद्विवेकादेव प्रागवि
तशबल एव संगतिग्रहात्स एव शब्दार्थ इति
यत इत्याह । शुद्धनु तथतर्केति । अन्तःकरणशुद्ध
रं प्रवृत्ततर्केण जनितं चिदचिद्विभागं तद्विभागनि
द्विगरन्ति वदन्ति। तामेव गिरं दर्शयति । सत्या
अहमादेरप्युपलक्षणम् । दृशि शुद्धात्मनि ।
त्यर्थः ॥ २०० ॥

एकत्र शक्तिग्रहणोपपत्ता-
वनेकक्लृप्तिः क्रियते किमर्थम् ॥
इत्येतदेवं सति नास्ति चोद्यं
पुराऽस्य पुंसः परमाविवेकात् ॥ २०१ ॥

एवं सति यदुक्तं लाघवादेकत्रैव शक्तिर्न तु
गौरवादिति तदप्यसाधु, पूर्वं केवलोपस्थित
लाघवादेरनवतारादित्यभिप्रेत्य तदनुवादपूर्व
एकत्रेति । अनेकक्लृप्तिः । अनेकात्मके शबले
शब्दशक्तेरिति शेषः। पुरा असंगतिग्रहसमये।
धिकारिणः । परमाविवेकात् । अत्यन्तमविवेकात्

अत्राह वाच्यशबलान्वितवस्तुनीयं
तद्वर्त्मना भवति लाक्षणिकी प्रवृत्तिः ।
किं वा तदन्वितविलक्षणवस्तुनि स्या
च्छब्दस्य नोभयमपि प्रतिभाति युक्तम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वं मानान्तराधिगतगोचरगामिनी स्याच्छब्दस्य लाक्षणिकवृत्तिरिति प्रलाप इत्यादिश्लोकेन वाच्यार्थसंबन्धितया मानान्तराधिगते लक्षणा वाच्या आत्मा च न तथेति न लक्षणासंभव इत्याशङ्का तदधिगतिमात्रं लक्ष्यस्यापेक्षितं न तु मानान्तरेणापि, अधिगतिमात्रं चात्मन्यपि संभवतीति निरस्ता, इदानीं प्रकारान्तरेणाखण्डवाक्यार्थं दूषयितुं किं लाक्षणिकशब्दजन्यज्ञाने लक्ष्यं वाच्यार्थसंबन्धित्वेन विषयो भवति, केवलस्वरूपेण वेति विकल्पयति। अत्राहेति। लाक्षणिकी प्रवृत्तिःलक्षणाजन्यशाब्दज्ञानमित्यर्थः, तदन्वितविलक्षणवस्तुनीति। शबलान्विताद्विलक्षणं यद्वस्तु तस्मिन् शबलानन्वितवस्तुमात्र इत्यर्थः। शब्दस्य लाक्षणिकी प्रवृत्तिरिति संबन्धः। उभयत्रापि दूषणं संभावयति। नोभयमिति ॥ २०२॥

संबन्धिरूपं यदि वस्तु लक्ष्य-<br>
मखण्डवाक्यार्थमतिः कुतस्त्या ॥<br>
अनन्वितं वस्तु पदार्थलक्ष्यं<br>
न लक्ष्यते कुत्र चिदत्र लोके ॥ २०३ ॥

दूषणमेवाह। संबन्धिरूपमिति। वाच्यार्थसंबन्धित्वविशिष्टमित्यर्थः। लोके हि गङ्गापदादिना तीरादि स्वार्थसंबन्धित्वेनैव लक्ष्यते, अन्यथा तत्र ततो नियमेन प्रवृत्त्यनुपपत्तेः, एवमिहापि तत्त्वमादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यजन्यं ज्ञानं शबलान्वितत्वेन यदि ब्रह्म वि कुर्याद्ब्रह्म खण्डार्थता तस्य कुतो भवेत्। द्वितीये तु दोषः, परं तु तदेव न सिद्ध्यति लोके तथाऽदर्श न्यथा समुद्रतीरादेरपि गङ्गाशब्दात्प्रतीतिप्रसङ्ग भावः॥ २०३॥

पूर्वक्षणे भवति वाच्यपदार्थभाग-
भागित्वसंगतिरिहात्मनि निर्विभागे॥
मोहोपदर्शितवपुर्घटते ततोऽस्मि-
ञ्छब्दस्य लाक्षणिकवृत्तिरदोषदुष्टा॥ २

सिद्धान्ती द्वितीयपक्षमादाय समाधत्ते। पूर्वे ति। वाक्यार्थप्रतीतेः पूर्वकाल इत्यर्थः। इह नि भागे आत्मनि। मोहोपदर्शितवपुः, मोहेनोपद वपुः स्वरूपं यस्याः संगतेः सा तथा। वाच्यप भागभागित्वसंगतिः, तत्प्रतीतिरिति यावत्, पू णेऽपेक्षिता भवतीति संबन्धः। लक्षणायाः प्रागेव स्य वाच्यार्थसंबन्धित्वेन ज्ञानमपेक्षितमन्यथा तदुपस्थित्यसंभवान्न तु लाक्षणिकशब्दजन्यज्ञा तत्तथा प्रतीयते मानाभावात्किं तु स्वस्वरूपेणैव। ऽपि तीरादेः केवलस्यापि गङ्गादिपदादुपस्थिति चैवमतिप्रसङ्गः पूर्वक्षणभाविना वाच्यार्थसंबन्ध नैव नियततीराद्युपस्थितिसंभवेनान्यत्र तदसंभ न हि समुद्रतीरादि तथोपस्थितं भवति। ततो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णि लक्षणयाऽखण्डार्थप्रतीतिरुपपद्यत इति भावः। नि-र्विभागात्मनि कथं भागभागित्वमिति शङ्कां निराकर्तुं मो हेत्युक्तम् ॥ २०४ ॥

संबन्धिता भवति लाक्षणिकप्रवृत्तेः
सर्वत्र कारणमितीदमभीष्टमेव ॥
संबन्धिताकरणमेव तु लाक्षणिक्या
बुद्धेरनिष्टमिह तद्व्यभिचारदृष्टेः ॥ २०५ ॥

उक्तमेवार्थं सोपपत्तिकं प्रपञ्चयति । संबन्धितेति । संबन्धिताज्ञानमित्यर्थः । सर्वत्र लोके वेदे च। संब-न्धिताकरणम् वाच्यार्थसंबन्धिताकारत्वम्।कुतोऽनिष्ट-मित्यत आह । तद्व्यभिचारेति । तस्य संबन्धिताकार-त्वस्य सर्वत्र लाक्षणिकपदजन्यज्ञानेऽभावादित्यर्थः । कु-त्र तदभाव इति चेदुक्तमेव गङ्गापदजन्यज्ञानस्य शुद्धती-रविषयत्वेन तज्ज्ञाने गङ्गासंबन्धिताकारत्वाभावान्नि-यमेन वाच्यविशिष्टस्यैव लक्ष्यत्वे तात्पर्यगौरवप्र-सङ्गात् ॥ २०५ ॥

यत्रैष काक इदमेव तु देवदत्त-
वेश्मेति लाक्षणिकवृत्तिरिहाभ्युपेता ॥
काकास्पदत्वमवधीर्य तथापि वेश्म-
मात्राकृतिर्भवति लाक्षणिकी तु बुद्धिः ॥२०६॥

व्यभिचारस्थलान्तरमाह । यत्रैष इति। देवदत्तगृहं किमिति पृच्छन्तं प्रति कश्चिदाह यत्रैष काकस्तिष्ठ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति इदमेव देवदत्तवेश्मेति, तत्र किं काकाधिकर-
त्वविशिष्टं देवदत्तगृहमिति वाक्यार्थ उत तदुपलक्षित
अन्त्य आह। लाक्षणिकेति। अभ्युपेता सर्वा
शेषः। ततः किं तत्राह। काकास्पदत्वमिति। का
धिकरणत्वमित्यर्थः। तथापि काकास्पदत्वमिति
न्धः। तस्माद्धि वाक्याद् गृहविशेषमात्रमेव देवद
त्वेन प्रतीयते न तु काकाधिकरणत्वाकारेण, निर्गते
काके तद्बुद्धिदर्शनात्। एतेन प्रथमपक्षोऽपि निरस्त
विशिष्टस्य देवदत्तीयगृहत्वे काकापसरणे गृहैकदे
भङ्गबुद्धिप्रसङ्गश्चेति ॥ २०६ ॥

सोऽयमित्यपि पदार्थरूपकं
लक्षणं यदुपलक्षणं हि तत्॥
अंशिता यदि पदार्थलक्ष्ययो-
र्गृह्यते ननु पुनर्विरोधिता ॥ २०७ ॥

जहल्लक्षणायां लक्ष्यस्य वाच्यसंबन्धित्वेनैव लाक्ष
कपदजन्यज्ञानमिति नियमं दूषयित्वा जहदजहल्ल
यां तदसंभवमाह। सोऽयमिति। पदार्थरूपकमूपद
स्वरूपम्। लक्षणम् लक्ष्यतेनेनेति लक्षणम्, लक्षका
यावत्। तत्तेदन्ताविशिष्टपदार्थद्वयस्वरूपं शुद्धस्य
ललक्षणं तदप्युपलक्षणम्। उपलक्षणं हि तटस्थलक्ष
मेव, अपिशब्दात्काकवदिति सूचयति। एतावान्वि
काकाधिकरणत्वमन्यदेव गृहस्वरूपं लक्षयति, इ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वान्तर्भूतमेव देवदत्तादिरूपमिति । ततः किं तत्राह । अंशितेति । पदवाच्याभ्यां लक्ष्ययोरंशिता मुख्यार्थसंबन्धविशिष्टता यदि गृह्यते सोऽयंपदाभ्यां लक्षणया ज्ञायते तर्हि पुनर्विरोधिता नन्विति संबन्धः । यथा वाच्ययोर्विशिष्टयोरभेदे विरोधः प्रागुक्त एवं यदि वाच्यार्थलक्ष्ययोरंशांशितापि लाक्षणिकपदेन ज्ञाप्येत तदा पुनरपि सैव विरोधिता भवेत्, लक्ष्यस्वरूपे तत्तेदंतावैशिष्ट्यानपायादित्यर्थः ॥ २०७ ॥

एवं तावल्लक्षणावृत्तिहेतो-<br>
रानीतैषाऽखण्डवाक्यार्थबुद्धिः ॥<br>
मुक्त्वापीमां लक्षणावृत्तिमेषा<br>
वक्तुं शक्येत्युच्यतेऽनन्तरेण ॥ २०८ ॥

एवं पदद्वयलक्षणया महावाक्यस्य सत्यादिवाक्यस्यापि समभिव्याहृतनिखिलपदलक्षणयाऽखण्डे ब्रह्मणि वृत्तिमुक्तामनूद्य विनापि लक्षणां वाक्यं परमतेऽखण्डार्थनिष्ठं यदा तदाऽस्मन्मते लक्षणया तत् किमु वक्तव्यमित्याशयेनाह । एवं तावदिति । उक्तोपपत्तिपरामर्श्येवंशब्दः । तावच्छब्दोऽपि वक्ष्यमाणपक्षात्प्राथम्यमस्य द्योतयति । अनन्तरेण ग्रन्थेनेति शेषः ॥ २०८ ॥

भिन्नाभिन्नरवौ घटादिवचसा साकं समुच्चारिता-<br>
वन्यूनानधिके घटादिविषये तावत्प्रवृत्तौ तव ॥<br>
नो चेद्विम्बसृजोऽपि दुष्परिहरा भेदादिमालागता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेद्रादेरपि तत्र वाच्यमपरं भेदादिकं स्यादिति ॥१५

तदेव दर्शयति । भिन्नाभिन्नेति । रवौ शब्दौ । भि
न्नो घट इत्यभिन्नो घट इति घटादिपदेन सहो
रितौ भिन्नाभिन्नशब्दौ घटादिपदस्य यावान्वि
स्तावत्येव तव मते प्रवृत्तौ तावन्मात्रविषयाविति
वत् । परपक्षे हि भेदः स्वरूपमेव वस्तुन इति व
व्यम् एवं च भिन्नघटशब्दयोरेकार्थत्वाल्लक्षणा
नैव तावेकप्रातिपदिकार्थमात्रनिष्ठाविति तद्वाक्यम
खण्डार्थम् । एवमभिन्नो घट इति वाक्यमपि । ननु
न्न इति घटादिविशेषणतया प्रतीयमानो भेदः कथं
टादिस्वरूपं स्यादिति चेत्सत्यमस्ति तवेयमनुपपत्ति
तथापि स्वरूपातिरिक्तो भेदस्त्वन्मते न सिद्ध्यतीत्य
शयेनैवमुक्तम् । नन्वतिरिक्त एव भेदोऽभेदो वाऽस्तु
था च तद्विशिष्टाभेद एव घटादिर्वाक्यार्थ इति कु
खण्डार्थतेत्याशङ्क्याह । नो चेदिति । स्वरूपमेव भे
दिर्न भवति किं तु तदतिरिक्त एव चेदित्यर्थः । भेदा
माला, भेदाभेदपरम्परेत्यर्थः । आगतेति चेद
कथं तत्र भेदादिमालाऽऽगता स्यात्तत्राह । भेद्रादेरि
तत्र तस्मिन्मते । भेदादेर्द्धर्म्यादिभ्यो भेदे भेदे धर्म्या
भ्यो भेदान्तरमभेदे च स्वाभेदान्तरमेवं तत्रतत्रापि
भेदादिमालाप्रसङ्गः । न च भेदादेर्भेदादिः स्वरूपमे
वाच्यम् । तर्हि प्रथममेव तथास्तु किमतिरिक्तभेदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पनया। न च घटो भिन्न इत्यादिविशिष्टप्रतीतिब-लाद्घटाद्व्यतिरिक्तभेदादिसिद्धौ सत्यां पश्चात्कल्प्यमा-नस्वरूपभेदादेः प्रथमक्लृप्तातिरिक्तभेदबाधकत्वं न यु-क्तकल्पनमिति वाच्यम्। भेदादिविशेषणतादिप्रतीतेर्द्ध-र्म्यादिभ्यस्तस्य भेदग्रहसापेक्षत्वेन प्रथममेव घटादिस्व-रूपभेदादेः क्लृप्तत्वेन तद्विलक्षणभेदादिकल्पनानुपपत्तेः। न हि विशेषणविशेष्ययोर्भेदज्ञानमृते परस्परविरुद्ध-विशेषणविशेष्यभावप्रतीतिर्भवति। भावे वा प्रतीतेर-न्यथासिद्धत्वेनातिरिक्तभेदसाधकत्वं न स्यादिति भा-वः ॥ २०९ ॥

परस्पराभावमुपाददानो
निमित्तमर्थेषु हि भिन्नशब्दः ॥
प्रवर्त्ततेऽन्ये तु घटादिशब्दा
निजंनिजं वाच्यमुपाददानाः ॥ २१० ॥

नन्वेवं भिन्नाभिन्नघटशब्दानां पर्यायतापत्तिरिति चेत्तत्किं भेदादौ भिन्नादिशब्दो न प्रवर्त्तते, प्रवर्त्तते चे-त्तत्र यः परिहारः स एवान्यत्रापि तवास्तु , एवं स-त्यपि परिहारान्तरमाह। परस्परेति। ननु कोऽसौ स्व-रूपभेदवादे परस्पराभावः, अन्योऽन्याभाव इति चे-त्किं तत्र प्रमाणम्, घटात्पटो भिन्न इत्यादिबुद्धेः स्वरू-पभेदावलम्बनतयाऽन्यथासिद्धत्वात् , एतेनास्त्येव त-न्मतेपि परस्पराभावः किं तूक्तदोषात्स भेदो न भव-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीति न भेदानन्त्यमिति प्रत्युक्तम् , भेदातिरिक्त
रूपराभावे प्रमाणाभावस्योक्तत्वादिति चेत्सत्यम्॥
हि स्वरूपभेदवादिनो भावान्तरमभावो हि कया
त्तु व्यपेक्षयेति वदन्त आहुः , घटः पटो न भव
ति पटादिसापेक्षतया प्रतीयमानं घटादिस्वरूपं
टादिभ्यो भेदः , एवं पटादिस्वरूपमपि घटादि
भेद इति , एवं परस्परस्याभावः परस्परापेक्ष
रूपम् । तदुपाददान इत्यर्थः । निमित्तं प्रवृत्ति
मित्तम् । अर्थेषु घटपटादिषु । निजंनिजं स्वीयं
यमन्योन्यनिरपेक्षघटत्वादिस्वरूपं वाच्यमुपाददा
बोधयन्तः । प्रवर्त्तन्त इति विपरिणतानुषङ्गः।
त्पक्षे हि भिन्नशब्दः पटादिकमपेक्ष्य घटादिस्व
बोधयति , अथ च पटादिवैशिष्ट्यं घटेन प्रति
यति । घटादिशब्दस्तु घटत्वादिकमेव निमित्ती
तत्र प्रवर्तते इति न तयोः पर्यायता नापि विशि
ष्टं वाक्यमिति भावः ॥ २१० ॥

परस्पराभावविहीनभावा-
दभिन्नशब्दस्य घटे प्रवृत्तिः ॥
घटस्वरूपैकनिबन्धनात्तु
घटादिशब्दस्य घटे प्रवृत्तिः ॥ २११ ॥

एवमभिन्नशब्देऽप्याह । परस्पराभावविही
वादिति । भेदशब्दप्रवृत्ति निमित्तेतरसापेक्षत्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः परस्पराभावविहीनभावस्तत्सापेक्षवस्तुस्वरूपमिति यावत्, तस्मात्, तथा च तटस्थ एवाभिन्नपदप्रवृत्तिनिमित्तं स इति न घटादिपदेन तत्स्वरूपनिमित्तेन पर्यायतेति भावः ॥ २११ ॥

अबोधनाशश्चितिरित्यमुष्मिन्
पदद्वये त्वेकरसात्मनिष्ठे ॥
अगौणमेकं पदमन्यदत्र
द्वितीयवृत्तीतरसंगमाय ॥ २१२ ॥

इदानीं सिद्धान्त्येकपदलक्षणयापि तदाह । अबोधनाश इति । अज्ञाननाश इत्यर्थः । चितिः ज्ञानम् । अगौणम् मुख्यार्थम् । द्वितीयवृत्तिलक्षणावृत्तिविशिष्टम् । इतरसंगमाय पदान्तरसम्बन्धाय, तदर्थान्वययोग्यताया इत्यर्थः ॥ २१२ ॥

अज्ञाननाशपदमत्र हि मुख्यमिष्टं
विद्यानिबन्धननिवृत्तिसमर्पकत्वात् ॥
तेनान्वयापचितिवाचि पदं स्ववाच्ये
सौवं समुज्झति मतेः परिणामरूपम् ॥ २१३ ॥

ननु किं पदं तत्रागौणं किं वा लक्षणावृत्तीति तत्राह । अज्ञाननाशपदमिति । अत्रास्मिन्वाक्ये । हिरेवार्थे । अज्ञाननाशपदमेवेति सम्बन्धः । मुख्यं मुख्यार्थम् । कुत इति चेत्तत्राह । विद्यानिबन्धनेति । विद्या अविद्यानिवर्त्तकसाक्षात्काररूपा वृत्तिस्तन्निबन्धना त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुपहिता या निवृत्तिस्तस्याः समर्पकत्वाद्बोधकत्व
त्यर्थः । अविद्यानिवृत्तिर्हि वक्ष्यमाणन्यायेनाविद्या
ष्ठानात्मैव । अविद्यानिवृत्तिपदं च तामेव निवृ
भिधत्ते । यद्यपि पूर्णात्मन्युक्तवक्ष्यमाणन्यायेन क
पि पदस्य वृत्तिर्न संभवति, तथापि विद्योपहित
रूपाऽविद्यानिवृत्तौ तत्पदं प्रवर्त्तते, पशुत्वोप
हृतिहरिशब्दवत्, तत्र पशुत्वमिवात्र विद्याप्युप
तया तटस्थैवेति केवलात्मनिष्ठत्वान्मुख्यमेवेदम्।
न्वविद्यानिवृत्तिरिति नैकं पदं निवृत्तिपदं तु
दिनिवृत्तिसाधारणेन रूपेण तां वदतीति नात्म
त्रनिष्ठमिति चेन्न । निवृत्तौ भावस्याभावस्य वा
धारणधर्मस्यासंभवेन तत्तत्स्वरूपस्यैव तत्पदार्थ
यत्वादविद्यानिवृत्तेश्चात्मैव स्वरूपमिति नोक्तदो
ततस्तदन्वयाय चितिवाचि पदं चितिरिति पदं
वाच्ये शबले मतेरन्तःकरणस्य परिणामरूपं सौवं
कीयं धीपरिणामांशं समुज्झति त्यजति। एतच्च भा
न्तरोपादानोपलक्षणमिति मुख्यलाक्षणिकपदाभ्या
यडसिद्धिरिति भावः । अत्र सौवं समुज्झतीत्य
र्थसिद्धानुवाद इति द्रष्टव्यम् ॥ २१३ ॥

विधिपदानि हि भागसमर्पणा-
दपरभागनिराकरणादपि ॥
अविषयात्ममतिं जनयन्ति नो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तु मृषार्थनिवृत्तिगिरस्तथा ॥ २१४ ॥

ननु विधिपदस्यात्मनि लक्षणा, अभावपदस्य तत्र शक्तिरिति महदेतच्चित्रम्, अविद्यानिवृत्तिर्वा कथमात्मा भवेत्, न हि घटनिवृत्तिर्भूतलं भवतीत्याशङ्क्य सत्यादिपदसाधारण्याच्चितिपदस्य नात्र किं चिच्चित्रमित्याशयेनाह । विधिपदानीति । भावरूपार्थवाचकपदानीत्यर्थः । निराकरणात्परिवर्ज्जनात् । अविषयात्ममतिमवाच्यात्ममतिं ब्रह्माकारां वृत्तिम् । नः अस्माकं मते । द्वितीयामाशङ्कां परिहरन्नाह । न त्विति । मृषार्थनिवृत्तिगिरस्तु तथा तद्भागत्यागापरभागाऽर्पणेनाविषयात्ममतिं न जनयन्तीत्यर्थः । मृषार्थनिवृत्तीत्यस्यायमाशयः । यत्र यदध्यस्तं तस्य ततः पृथक्त्वाऽभावात्तत्र तन्निवृत्तिरत्यन्ताभावोऽधिष्ठानमेव, यथा शुक्तिरजतादेः, घटादेस्तु भूतलादावनध्यस्तत्वेन पृथक्त्वान्निवृत्तिस्ततो भिद्यते । अविद्या चात्मन्यध्यस्तैवेति तन्निवृत्तिः स एव, अतो न किं चिदत्रालौकिकमिति ॥ २१४ ॥

भेदो भिन्नश्चातिरेकोऽतिरिक्तो
भेदोऽभिन्नः संविदः स्वप्रकाशाः ॥
इत्येतस्मिन्विद्यते नार्थभेदो
वेदान्तानामप्यखण्डस्तथार्थः ॥ २१५ ॥

पूर्वं भिन्नोऽभिन्नो वा घट इत्योद्युदाहरणेन मु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्यवृत्याऽखण्डार्थतायां परसंमतिरुक्ता, तत्र
दवादिनोऽसंप्रतिपत्तिं मत्वा तत्संमतोदाहरणेन
माह। भेदो भिन्न इत्यादिना। एकदेशिनं प्रत्य
अतिरेकोऽतिरिक्त इति। जीवब्रह्मणोर्भेदाऽभेदसंपा
कश्चिद्धर्मोऽतिरेकः। प्राभाकरं प्रत्याह। संविदः
काशा इति। इत्येतस्मिन्नीदृशेऽस्मिन्वाक्य इत्यर्थः
येषां मते भेदो घटादेर्भिद्यते तेषामपि भेदस्य भे
दानङ्गीकारात्तत्स्वरूपमेवेति मुख्यार्थयोरपि पद
कार्थत्वम्। एवमतिरेकाद्युदाहरणेऽपि द्रष्टव्यम्।
स्वप्रकाशत्वमपि संवित्स्वरूपमेव। तस्य ततो भेदे
न्येन वा संबन्धाऽसंभवेनाऽसिद्धिप्रसङ्गः, माना
ग्राह्यत्वे च संविदोऽपि तत्प्रसङ्गेन स्वप्रकाशत्वा
गादित्यभिप्रेत्य दार्ष्टान्तिकमाह। वेदान्तानामिति

एवं तावदखण्डवस्तुविषयः शब्दान्वयो दर्शितो
लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम्
येनायं स्मरति प्रकृत्यभिहिते वृक्षादिके केवले
तन्मात्रे प्रथमेतिसूत्रवचसैवाद्यां विभक्तिं मुनिः

एवं न्यायबलाल्लोकवादिप्रसिद्धेः सोऽयमित्य
ष्टान्तेन च वेदान्तानामखण्डवस्तुसमन्वयं दर्शि
वदन्समस्ततीर्थकाराणां संप्रतिपन्नाप्तभावपाणि
चनादप्यखण्डार्थत्वसिद्धेर्वेदान्तेषु तदविरुद्धमित्य
येनाह। एवं तावदिति। येन वचसा पाणि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽखण्डविषयशब्दसमन्वयः सूचितस्तत्सूत्रैकदेशं संक्षिप्य तदर्थकथनपूर्वकमुदाहरति। येनेति। अयं मुनिर्येन सूत्रवचसैव स्मरति तत्पाणिनिवच एवास्य संसूचकमिति संबन्धः। प्रकृत्यभिहिते वृक्षादिपदस्य प्रकृत्यंशाभिहिते। अनेन प्रातिपदिकार्थेति पदं व्याख्यातम्। केवल इति सौत्रमात्रपदार्थस्योक्तिस्तन्मात्रे प्रथमेति सूत्रैकदेशोदाहरणम्। आद्यां प्रथमाम्। पाणिनिः खलु भगवान्प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रे प्रातिपदिकार्थमात्रे प्रथमां विभक्तिं स्मरन्नपर्याययोर्वृक्षादिप्रातिपदिकप्रथमाविभक्त्योरेकार्थत्वं दर्शयति। एतदेव च वाक्यस्याऽखण्डार्थत्वमिति तत्संमतमिति भावः॥ २१६॥

सामानाधिकरण्यमन्वयगिरां हेतुं वदत्यादरात्
तस्यैवाथ विशेषणं समिति च व्यावृत्तये गृह्यते॥
गौणान्मुख्यमयं भिनत्ति भगवान्व्यावर्त्तकेनामुना
नीलेनोत्पलवस्तुवत्स्फुटतरं द्वैविध्यसद्भावतः॥ २१७।

श्रुतितन्मूलन्यायसिद्धं सूचयता भगवता बादरायणेन तत्तु समन्वयादिति सूत्रेण तदिति वेदान्तगम्यत्वेन प्रतिज्ञाते निरतिशयानन्दाऽद्वये ब्रह्मणि स्वप्रकाशे समन्वयादिति हेतुरुक्तः, तत्र यद्यपि व्यधिकरणान्वयोपि लोके वेदे च दृश्यते, तथापि तस्य संबन्धादिनिष्ठतया प्रतिज्ञातब्रह्मनिष्ठत्वासंभवाद् योग्यतया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामानाधिकरण्यान्वय एव तेन विवक्षित इति
न्वयादिति सौत्रोक्तिबलाद्वेदान्तानामखण्डे पर्यव
मित्याह । सामानाधिकरण्यमिति । अन्वयगिरां
न्वयसूत्र इति शेषः । वदति भगवानित्यनुषङ्गः ।
दरादिति तस्य श्रुतिन्यायसूचकत्वं दर्शयति । भव
र्हि नीलोत्पलवद्गुणगुणिभावनिष्ठतया मृद्घटव
र्यकारणभावनिष्ठतया वा समानाधिकरण्यमित
ङ्क्याह । तस्यैवेति । अथेति पूरणार्थे । समिति वि
यां च गृह्यत इति संबन्धः । तत्किं रूपवान्घट
रूपवत्तेव घटस्यान्वयस्य समितिविशेषणं नेत्य
व्यावृत्तय इति । विशेषणस्योत्सर्गतो व्यावृत्त्यर्थ
त्संभवन्त्यां च व्यावृत्तौ रूपवत्ताया इव न स्वरू
त्रनिष्ठतेति भावः । गृह्यते भगवतेति विपरिणता
ङ्गः । कुतो व्यावर्त्तयति विशेषणमिति जिज्ञासा
द्दर्शयन्व्यावृत्तिसंभावनामपि दर्शयति । गौणादि
अयं भगवान्स्फुटतरं सामानाधिकरण्यद्वैविध्य
द्भावतो व्यावर्त्तकेनामुना समितिविशेषणेन गौणा
मानाधिकरण्यान्मुख्यं नीलेनोत्पलवस्तुवद्भिन्नार्थ
बन्धः । सूत्रकारो ह्यन्वयस्य समितिविशेषणं प्र
ति तच्च व्यावृत्तिपरमिति गौणात्सामानाधिक
दस्य व्यावृत्तिसिद्धौ मुख्यत्वं सिद्ध्यतीति तद्वाक्य
ण्डपर्यवसायीति वक्ष्यमाणन्यायेन निश्चीयत इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व: ॥ २१७ ॥

तद्धि द्विधैकाधिकरण्यमुक्तं
गौणं च मुख्यं च विविच्य सद्भिः ॥
संसर्गरूपार्थनिवेशि गौणं
मुख्यं त्वखण्डार्थनिविष्टमाहुः ॥ २१८ ॥

द्वैविध्यसद्भावमेव दर्शयति । तद्धीति । हिरवधारणे । सद्भिस्तदैकाधिकरण्यं गौणं च मुख्यं चेति द्विधा विविच्य तत्रतत्रोक्तमेवेति संबन्धः । गौणमुख्ययोः क्रमेण स्वरूपमाह । संसर्गेति । गुणगुण्यादिसंसर्गरूपेऽर्थे निवेशि तत्पर्यवसायि यत्सामानाधिकरण्यं तद्ध गौणम्, मुख्यं तु नैवं किं त्वखण्डार्थनिष्ठमिति सन्त आहुरिति संबन्धः ॥ २१८ ॥

आदाय नानाविधकारणानि
गिरामथैकत्र तु या प्रवृत्तिः ॥
तामाहुरैकाधिकरण्यनाम्ना
विपश्चितो वेदशिरःसु विप्राः ॥ २१९ ॥

इदानीं मुख्यस्याखण्डे पर्यवसानं दर्शयिष्यंस्तदुभयसाधारणरूपमाह । आदायेति । कारणानि प्रवृत्तिनिमित्तानि । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकत्रैवार्थे या वृत्तिः तां वेदशिरःसु विपश्चितो विवेकिनो विप्रा ऐकाधिकरण्यनाम्ना आहुरिति संबन्धः । अत्र पर्यायपदेषु राज्ञः पुरुष इत्यादिषु चातिप्रसङ्गवारणा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

य भिन्नप्रवृत्तिनिमित्तानामेकत्रेति च द्वयमुपात्त त्त्वमस्यादिवाक्यार्थनिरूपणं सामानाधिकरण्या मिति वेदान्तिभिस्तदवश्यं निरूपणीयमिति द्योतं वेदशिरःसु विपश्चित इत्युक्तम् ॥ २१९ ॥

नीलं सुगन्धि महदुत्पलमम्बुशायी-
त्येवंप्रकारमिह गौणमुशन्ति सन्तः ॥
सोऽयं पुमानुदशरावगतो विवस्वा-
नाकाशगो रविरसाविति मुख्यमाहुः ॥२

उभयोः क्रमेणोदाहरणमाह । नीलमित्यादिना। त्पलमिति विशेष्यमुक्तम् । उदशरावगतः जल प्रतिबिम्बितो विवस्वानाकाशगोऽसौ रविरिति। मानाधिकरण्यं मुख्यमाहुः । बिम्बप्रतिबिम्बयो सत्वादित्यर्थः ॥ २२० ॥

एकत्र वृत्तिरिति लक्षणमत्र मुख्यं
संसर्गवस्तुनि पुनर्न हि तद्ध घटेत ॥
नानारसे हि विषये वचसां प्रवृत्ति-
र्नीलं सुगन्धि महदुत्पलमित्यमीषाम् ॥२

अस्त्वेवं तद्वैविध्यं कथमेतावता मुख्यसामा करण्यस्याऽखण्डपर्यवसानं तत्राह । एकत्रेति क्षणं लक्षणांशः । अत्र अखण्डे । अखण्डे स्तुनि पर्यवसन्नानामपर्यायपदानामेकत्र वृत्तित्व ख्यमनुपचरितम् । नीलोत्पलादिविशिष्टवस्तुनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तन्मुख्यमेकनिष्ठत्वं न हि घटेत । तत्र लोकप्रसिद्धि-मेव हेतुमाह । नानारसेति । अमीषां वचसां नानारसे विषये प्रवृत्तिः प्रसिद्धेति संबन्धः ॥ २२१ ॥

नानाविधैर्बहुभिरेव निमित्तभेदै-
र्भिन्नेषु वस्तुषु गिरामथ या प्रवृत्तिः ॥
सर्वत्र वैयधिकरण्यमिति प्रसिद्धा
सा शब्दवृत्तिकुशलव्यवहारभूमौ ॥ २२२ ॥

इदानीमेकत्र वृत्तिरित्येतद्व्यावर्त्यंव्यधिकरणाऽन्वयस्वरूपमाह । नानाविधैरिति । अत्र बहुत्वमविवक्षितं द्वयोरपि तद्दर्शनात् । निमित्तभेदैः स्वस्वार्थे प्रवर्त्तमानानामिति शेषः । तासां भिन्नेषु गुणप्रधानभूतानेकपदार्थेषु, तन्निरूपितार्थेष्विति यावत् । तत्र या वृत्तिः सा वैयधिकरण्यमित्यन्वयः । सामानाधिकरण्यव्यावृत्तये भिन्नेष्विति । अत्यन्तभिन्नेष्वित्यर्थः । नानाव्यक्तिनिष्ठपर्यायव्यावृत्तये निमित्तभेदैरिति । शेषं स्वरूपकथनम् । शब्दवृत्तीति । शब्दवृत्तिविवेचने ये कुशलास्तेषां व्यवहारस्थल इत्यर्थः ॥ २२२ ॥

अभिन्नहेतुर्विषये समाने
विभिन्नवाचामथ या प्रवृत्तिः ॥
पर्यायनाम्नाऽभिवदन्ति धीराः
प्रवृत्तिमेतां वचसां बहूनाम् ॥ २२३ ॥

इदानीं नानाविधकारणानीत्येतद्व्यावर्त्यंपर्यायस्वरू-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पमाह । अभिन्नहेतुरिति । एकप्रवृत्तिनिमित्तत्व समाने एकस्मिन्नभिन्नप्रवृत्तिनिमित्तानामेकस्य वृत्तिः पर्यायता इत्यर्थः ॥ २२३ ॥

कुड्यं गृहस्य सरसोऽम्बुजमस्य वस्त्र-
मित्यत्र वैयधिकरण्यमिति प्रसिद्धम् ॥
एवं मुखं वदनमाननमित्यमीषां
पर्यायतापि विदितैव पुरोक्तहेतोः ॥ २२४ ॥

व्यधिकरणाऽन्वयपर्याययोः क्रमेणोदाहरणमाह ॥ कुड्यमित्यादिना । अस्य देवदत्तादेः । पुरोक्तहेतोः निमित्तभेदैः, अभिन्नहेतुरित्यत्र चोक्तहेतोः ॥ २२४ ॥

पर्यायता न खलु तत्त्वमसीति वाक्ये
नापीह संभवति भेदकभेद्यभावः ॥
तत्त्वंपदार्थगतमेकरसैकभागं
तत्त्वंपदे समुपलक्षयतो विरोधात् ॥ २२५ ॥

एवं लोकप्रसिद्धान्वयस्वरूपभेदमुक्त्वेदानीं तत्त्वमसीति वाक्ये अन्येषामसंभवान्मुख्यमेव सामानाधिकरण्यमखण्डनिष्ठं सिद्ध्यतीत्याह । पर्यायतेति । न संभवतीत्यनुषङ्गः । तत्त्वमसीति सत्यादेरुपलक्षणम्, प्रवृत्तिनिमित्तभेदादिति शेषः । पर्यायत्वे सह प्रयोगानर्हत्वाच्च । तदुक्तम्, पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते इति । भेदकभेद्यभावः कुड्यं गृहस्य नीलमुत्पलमित्यादाविव तदर्थयोर्विशेषणविशेष्यभावोऽपि न

ति तस्य तत्र बाधितत्वान्मुख्यार्थयोर्विरोधादित्यर्थः । अविरोधादिति वा तदर्थमित्यर्थः । अतोऽबाधितं मुख्यमेव सामानाधिकरण्यं तत्र समन्वयो भवतीति तदखण्डार्थमिति । फलितमाह । तत्त्वंपदार्थगतमिति । एकरसश्चासावेकभागस्तं चिदेकरसमित्यर्थः ॥ २२५ ॥

प्रकृष्टप्रकाशध्वनी व्यक्तिमेकां
यथा लक्षणावर्त्मनोपाक्षिपेताम् ॥
शशाङ्कादिशब्दार्थसंकीर्तने स-
च्चिदानन्दशब्दाः परं ब्रह्म तद्वत् ॥ २२६ ॥

एवं महावाक्यस्याऽखण्डे वृत्तिं तत्र दृष्टान्ततया सोऽयमिति वाक्येऽपि लोके तां दर्शयित्वा इदानीं ब्रह्मलक्षणसत्यादिवाक्यस्याऽखण्डार्थत्वोदाहरणे प्रकृष्टप्रकाशश्चन्द्र इति चन्द्रलक्षणवाक्येऽप्यखण्डार्थतां दर्शयन्दार्ष्टान्तिकेऽपि न्यायसिद्धान्तामनुवदति । प्रकृष्टप्रकाशध्वनी इति । ध्वनी शब्दौ । व्यक्तिं चन्द्रव्यक्तिम् । उपाक्षिपेतां प्रतिपादयतः । ननु किमिति प्रकृष्टप्रकाशशब्दयोश्चन्द्रे स्वार्थसंसर्गमविरुद्धं विहाय लक्षणया तत्स्वरूपबोधकत्वं मुख्ये संभवति लक्षणाया अन्याय्यत्वादिति तत्राह । शशाङ्कादीति । आदीति गवादिशब्दं दर्शयति । संकीर्तने उद्दिश्य इति शेषः । वक्ष्यमाणरीत्या शशाङ्कादिशब्दार्थसंकीर्तनं ह्यनेन वाक्येन क्रियते, प्रकृष्टप्रकाशादिवैशिष्ट्यं च न तदर्थस्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपमिति तद्विहाय विवक्षितशशाङ्कस्वरूपमेव प्र
लक्षणया प्रतिपादयतीत्यर्थः । तद्वत्प्रकृष्टादिशब्द
क्षयतीत्यर्थः ॥ २२६ ॥

न नीलोत्पलाद्या गिरो व्यक्तिनिष्ठाः
स्ववाच्यार्थसंसर्गमात्राभिधानात् ॥
विरोधे हि वाच्यच्युतिर्नाऽविरोधे
गिरां लक्षणात्रापि चेदस्तु साम्यम् ॥ २

ननु संभवन्मुख्यार्थप्रयोगस्यापि लक्षणया
खण्डार्थत्वे नीलोत्पलादिवाक्यस्यापि तत्किमिति
भवेदित्याशङ्क्याह । न नीलोत्पलाद्या इति । कु
त्राह । स्ववाच्येति । तत्र गुणगुण्यादिसंसर्गमात्र
व ताभ्यामभिधानादित्यर्थः । ननु तदेव कुतः प्र
प्रकाशपदयोरिव तयोरपि द्रव्यमात्रनिष्ठतैव हि
स्यात्तत्राह । विरोधे हीति । मुख्यार्थानां गिरां त
र्यविषयीभूतार्थबाधे मुख्यार्थच्युतिर्नाविरोधेऽपि
यद्यविरोधेऽपि तत्र लक्षणाभ्युपगम्येत तर्हि नील
लादेरपि प्रकृष्टप्रकाशादिसाम्यमस्तु किं नश्छिन्न
त्याह । लक्षणेति ॥ २२७ ॥

न नीलत्वजात्याश्रयव्यक्तितः स्याद्
विभिन्नोत्पलत्वाश्रयव्यक्तिरेषा ॥
तथैवोत्पलत्वाश्रयव्यक्तितः स्या-
न्न नीलत्वजात्याश्रयव्यक्तिरन्या ॥ २२८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र साम्यमेवोपपादयति। न नीलत्वेति। उत्पलत्वस्याश्रय आश्रयत्वं यस्यां सा तथोक्ता, न त्रिभिन्ना स्यादिति संबन्धः। एवं द्रव्यस्यापि गुणादभेदमाह। तथैवेति। गुणगुणिनोरभेदादित्यर्थः। नीलत्वोत्पलत्वादिजातिवाचकशब्दाभ्यां लक्षितव्यक्त्योरभेदात्तदप्यखण्डार्थमस्त्विति प्रौढ्याभ्युपगमः॥ २२८॥

न नीलोत्पलादिप्रदेशेषु किंचिद्
गिरां लक्षणाकारणं तेन तत्र॥
न नीलोत्पलत्वादिकव्यक्तिनिष्ठा
गिरस्ता भवेयुः प्रमाणादृते नः॥ २२९॥

एवं नीलोत्पलवाक्ये लक्षणामखण्डार्थत्वं चाभ्युपेत्योक्त्वेदानीं तदुभयं परित्यजति। न नीलोत्पलादीतिद्वयेन। इदमुपेत्य किमप्युदितमित्युत्तरश्लोकस्थमन्त्रादौ द्रष्टव्यम्। लक्षणाया अपि तत्राभ्युपगमेनोक्ताया अत्र परित्यागात्प्रदेशेषु वाक्येषु नीलोत्पलाद्यर्थेषु वा लक्षणाकारणं किमपि नेति संबन्धः। न तावदन्वयानुपपत्तिस्तत्रास्ति निमित्तं तदन्वयस्य सत्त्वात्, नापि तात्पर्यानुपपत्तिः गुणगुणित्वसंसर्गस्यैव तत्राभिप्रेतत्वात्, न चान्यल्लक्षणानिमित्तं प्रसिद्धमस्ति निर्बीजलक्षणायां चातिप्रसङ्ग इत्याशयेनाह। तेन तत्रेत्यादिना। नो मते नीलोत्पलत्वादिजातेर्या व्यक्तिस्तन्निष्ठास्ता गिरो न भवेयुः, प्रमाणाभावादित्यर्थः॥ २२९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदमुपेत्य किमप्युदितं मया
न तु तयोरभिदा परमार्थतः ॥
गुणगुणित्वकृतोऽतिशयस्तयो-
र्भवति लक्षणयापि गृहीतयोः ॥ २३० ॥

लक्षणायामपि तस्य वाक्यस्य नाखण्डार्थता ल॰
व्यक्त्योरेकरसत्वाभावादित्याह । इदमुपेत्येति । कि॰
अनभिप्रेतमपि । तयोः नीलोत्पलव्यक्त्योः । आ॰
परमार्थतोऽत्यन्तमभेदस्तस्यैव परमार्थत्वादित्य॰
कुतो नाभिदा तत्राह । गुणगुणित्वेति । अतिशय॰
द्भेदः । अत्यन्ताभेदे गुणगुणित्वायोगान्नैल्योत्पल॰
गुणगुणित्वे न प्रसिद्धत्वादत्यन्तभेदाभावेऽपीषद्भेदो॰
ति न तदखण्डार्थमित्यर्थः ॥ २३० ॥

प्रकृष्टप्रकाशत्वजाती हि लोके
प्रकृष्टप्रकाशाभिधानाभिधेये ॥
तयोरन्वये कीर्त्यमाने तु ताभ्यां
शशाङ्काभिधानाभिधेयं न लभ्यम् ॥ २३॰

तर्हि तद्वदेव प्रकृष्टप्रकाशादिवाक्यमपि चन्द्र॰
धितस्वार्थसंसर्गपरमस्त्वित्याशङ्क्याह । प्रकृष्टप्रका॰
प्रकृष्टत्वप्रकाशत्वजाती इत्यर्थः । हिरवधारणे । प्र॰
प्रकाश इत्यभिधानयोः शब्दयोरभिधेये भवत॰
शेषः। ततः किं तत्राह। तयोरिति । आक्षिप्तव्यक्ति॰
तयोर्जात्योरन्वये ताभ्यां पदाभ्यां प्रतिपाद्यमाने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तुरवधारणे। शशाङ्काभिधानाभिधेयं न लभ्यमेव। जातिद्वयतदाश्रयचन्द्रवैशिष्ट्यस्य चन्द्रपदाभिधेयत्वाभावादितिभावः ॥ २३१ ॥

शशाङ्काभिधानाभिधेये हि पृष्टे
तदेवोत्तरेणापि निर्णीयमत्र ॥
प्रकृष्टप्रकाशत्वजात्यन्वयोऽयं
तदाक्षिप्ततद्व्यञ्जकव्यक्तिनिष्ठः ॥ २३२ ॥

ननु प्रकृष्टप्रकाशविशिष्टस्यैव चन्द्रत्वाद्यः प्रकृष्टप्रकाशः स चन्द्र इति वचनव्यक्त्या किमिति शशाङ्काभिधानाभिधेयं न लभ्यमिति तत्राह। शशाङ्काभिधानेति। तदेव न गुणादिवैशिष्ट्यमित्यर्थः। उत्तरेण प्रकृष्टप्रकाशश्चन्द्र इति प्रत्युत्तरवचनेन। अत्र लोके। ननु तदेवोक्तवचनव्यक्त्यापि निर्णीयते। प्रकृष्टप्रकाशाश्रयस्यैव तयापि चन्द्रत्वप्रतिपादनाच्चन्द्रत्वाश्रयस्यैव तदभिधानाभिधेयत्वादिति तत्राह। प्रकृष्टप्रकाशत्वेति। तदानीं हि तत्पदद्वयेन मुख्यवृत्त्योपस्थितप्रकृष्टत्वप्रकाशत्वजात्योरन्योऽन्यमन्वयो वाच्यः, पदार्थयोस्तन्नियमात्,स च साक्षान्न संभवतीत्ययं जात्यन्वयस्तदुभयाक्षिप्ततदभिव्यञ्जकतद्व्यक्तिनिष्ठ इति न केवलचन्द्रव्यक्तिलाभ इति भावः ॥ २३२ ॥

शशाङ्काभिधानाभिधेयो न चेष्टः
शशाङ्कस्य तेजोविशेषत्वहेतोः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततश्चोपपन्ना जहल्लक्षणातः
पुरोक्ता पदाभ्यामखण्डार्थसिद्धिः ॥ २३

ननु स एव शशाङ्क इत्युक्तमिति चेत्सत्यं शशाङ्क
साधारणो धर्मः सः न तु तत्स्वरूपमित्याशयेन
शशाङ्काभिधानाभिधेयो न चेष्ट इति । चोऽवधार
वेष्टः सिद्ध्यतीति शेषः । कुतः शशाङ्कस्य तेजोवि
हेतोस्तेजोविशेषमात्रस्यैव तत्स्वरूपत्वान्न जाति
विशिष्टव्यक्तिद्वयतादात्म्यं तत्स्वरूपमिति न त
त्सिद्ध्यतीर्थः । इदमिह विवक्षितम् । अस्ति ताव
चन्द्रस्वरूपेऽयं चन्द्रोऽयं वेति संशयः, अस्ति च त
यायास्मिन्ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः, त
चन्द्रस्वरूपमात्रविषयं तदन्यस्य तद्विषयस्याभा
ननु चन्द्रस्यासाधारणो धर्मः क इति प्रश्नोऽस्ति
चेन्न । प्रश्नवाक्ये तत्पदाभावात् । लक्षणायां
निमित्तमस्ति प्रकृष्टप्रकाशस्य प्रत्यक्षेण निर्णीतस्
रूपेण कः प्रकृष्टप्रकाश इति संशयाभावात् । च
नं विना तस्य चन्द्रधर्मत्वज्ञानायोगेन प्रकृष्टः
किं चन्द्रस्यान्यस्य वेति प्रश्नासंभवाच्च । यद्यपि
न्द्रमपि प्रत्यक्षेण पश्यति, तथापि तत्संशय
धेन तज्ज्ञानस्यापातज्ञानतया तदज्ञाने नावि
नैवं प्रकृष्टप्रकाशेऽनिश्चयस्तज्ज्ञानम् । अत एव
पदवाच्यत्वादिः प्रश्नविषय इति प्रत्युक्तम् । च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चन्द्रपदवाच्य इति सामान्यतश्चन्द्रे तस्यापि निर्णीतत्वात् । व्यक्तिविशेषे तदज्ञानस्य पूर्ववच्चन्द्रस्वरूपज्ञानाभावेऽसंभवात् । अतः संशयप्रश्नावज्ञातचन्द्रप्रातिपदिकार्थमात्रनिष्ठौ । अत एव प्रकृष्टप्रकाश इति वचनमपि तन्मात्रगोचरं न तु प्रकाशविशेषवैशिष्ट्यादिगोचरमन्यथास्मप्रश्ने कोविदारोत्तरवत्प्रश्नव्यधिककरणप्रतिवचनस्यानवधेयतापत्तेः । यत्तु अपृष्टमपि प्रकाशवैशिष्ट्यं पृष्टार्थनिर्णयोपयोगितया वाक्यं प्रतिपादयति, अन्यथा यः कश्चिच्चन्द्र इत्युत्तरार्थप्रसङ्गेन तदनिर्णयादिति । तन्न । व्यक्तिमात्रतात्पर्ये लाघवेन वाक्यस्य निश्चिते गुणवैशिष्ट्यस्यावाक्यार्थत्वेऽपि लक्षणया नियतव्यक्त्युपस्थित्यर्थत्वेन नियतव्यक्तिविषयतया व्यक्तिमात्रविषयप्रतिवचनेनापि तन्निर्णयोपपत्तेः । गङ्गापदाल्लक्षणया जातं ज्ञानं तीरविशेषे निर्णयः, अतः प्रकृष्टप्रकाशवैशिष्ट्यस्य तत्राबाधितस्यापि तात्पर्यागोचरतया वाक्यं चन्द्रप्रातिपदिकार्थमात्रनिष्ठं तदिदमुक्तं तदेवोत्तरेणेति । तच्च प्रकृष्टप्रकाशपदाभ्यां मुख्यार्थनिष्ठाभ्यां न शक्यं निर्णेतुमिति पृष्टोऽर्थो नैव सिद्ध्यति चन्द्रस्य तेजोविशेषमात्रतया विशिष्टस्वरूपमात्रत्वादिति । फलितमाह । तत्रेति । लक्षणात इत्येकं पदम् ॥ २३३ ॥

प्रकर्षः प्रकाशातिरिक्तो न चात्र
प्रकाशः प्रकर्षातिरिक्तो न चात्र ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहिश्चन्द्रमस्ति स्वरूपातिरेक-
स्तयोश्चन्द्रमस्येकतैवातिमात्रम् ॥ २३४ ॥

ननु लक्षणयापि ताभ्यां पदाभ्यां स्वाभिधेयव्या
यमेव लक्षणीयं मुख्यार्थसंबन्धान्न तु चन्द्रव्यक्ति
न्धात्ततः कथं ताभ्यां तल्लाभ इत्याशङ्क्याह । प्रकर्ष
अत्र चन्द्रे प्रकर्षप्रकाशव्यक्त्योश्चन्द्रव्यक्त्या परस्परं
भेदान्नोक्तदोष इति भावः । ननु खद्योते प्रकाशे सत्
न प्रकर्षोऽस्ति तमआदौ प्रकर्षे सत्यपि न प्रकाश
तयोर्भेदो वाच्यः । एवं च चन्द्रेऽपि तयोर्भेद एवेत्या
ङ्क्याह । बहिश्चन्द्रमिति । चन्द्रादन्यत्रेत्यर्थः । तयोः
कर्षप्रकाशयोः । अतिमात्रमत्यन्तम् ॥ २३४ ॥

न चन्द्रप्रकाशप्रकर्षं प्रकाशा-
त्तदीयात्पृथक्कश्चिदुत्पश्यतीह ॥
तथास्य प्रकर्षप्रकाशं प्रकर्षा-
त्ततो नानयोरस्ति भेदे प्रमाणम् ॥ २३५ ॥

तत्रानुभवप्रमाणमाह । न चन्द्रप्रकाशेति । तदीय
न्द्रसंबन्धिनः प्रकाशादिति संबन्धः । पृथग्भिन्नं
उत्पश्यति स्पष्टं पश्यति । इह चन्द्रे । यद्यपि ख
तमसि च प्रकाशप्रकर्षौ पृथगनुभूयेते, तथापि चन्द्र
योः परस्परं चन्द्राच्च भेदं कोऽपि नानुभवति । न चा
यशब्दप्रतिपाद्यतया तत्रापि भेदोऽस्तीति वाच्यम् । वा
च्यभेदे सत्यपि लक्षितव्यक्तीनामभेदात् । यथा घटत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न योः पृथक्प्रवृत्तसत्यज्ञानपदाभ्यां ब्रह्मणि लक्षितव्य-
क्त्योरभेदः, एवं च खद्योतमन्धकारं च व्यावर्त्त्य प्रकृष्ट-
प्रकाशपदाभ्यां चन्द्रस्वरूपप्रकाशविशेषो जहल्लक्षणया
प्रतिपाद्यत इति तद्वाक्यमखण्डार्थमेवं गवादिलक्षणवा-
क्यमपि द्रष्टव्यम्। तस्यापि तत्तल्लक्ष्यस्वरूपनिश्चयाय
प्रवृत्तस्य तदन्यार्थत्वायोगात्। तथा च सत्यं ज्ञानमनन्तं
ब्रह्मेति वाक्यमखण्डार्थं लक्षणवाक्यत्वात्प्रकृष्टप्रकाशा-
दिवाक्यवत्। न चाप्रयोजकत्वं चन्द्रस्वरूपमात्रप्रश्न-
वदिह ब्रह्ममात्रप्रश्नादर्शनेन प्रकृष्टादिवाक्यस्येवास्या-
खण्डार्थत्वाभावे बाधकाभावादिति वाच्यम्। यतो ब्र-
ह्मविदाप्नोति परमिति निरतिशयबृहदात्मकब्रह्मज्ञा-
नस्य परमपुरुषार्थसाधनत्वं संकीर्त्तितं तच्च तज्जि-
ज्ञासामूलप्रश्नार्थमेव अन्यथा साधनात्फलनिष्पत्ते-
स्तत्संकीर्त्तनवैयर्थ्यादिति यावन्मात्रज्ञानात्फलं श्राव-
यति तावन्मात्रनिर्णयाय प्रवृत्तमिदमपि वाक्यं ताव-
न्मात्रार्थमेवेति कथमप्रयोजकता ब्रह्मातिरिक्तवैशिष्ट्य-
स्य ब्रह्मपदार्थेऽसंभवाच्च। नापि लक्षणवाक्यत्वं धर्मध-
र्मिभावं विनानुपपन्नमसाधारणधर्मस्यैव लक्षणत्वादिति
विरुद्धमिति वाच्यम्। यतो न लक्षणमसाधारणो धर्म
इति नियमोऽस्ति, अन्त्यविशेषलक्षणे तदभावात। किंतु
यद्विषयं सज् ज्ञानं सजातीयादिभ्यः स्वविषयं व्या-
वर्त्तयति तल्लक्षणम्। तच्च धर्मो धर्मी वा यथा प्रमाण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मस्त्विति सर्वमेव लक्षणवाक्यमखण्डार्थमिति प्र
क्षणसत्यादिवाक्यमप्यखण्डार्थमिति भावः ॥२३५॥

यथा सच्चिदानन्दशब्दास्तदर्थं
तथा तत्त्वमावात्मनो ब्रह्मभावम् ॥
विरोधान्मिथो लक्षणावर्त्मनेमौ
किमर्थं न संभूय वक्तुं समर्थौ ॥ २३६

एवं तत्त्वमस्यादिवाक्यस्य वाक्यत्वेन ज्योतिष्टो
दिवाक्यवद्विशिष्टार्थत्वानुमाने व्यभिचारादिना
ते तदखण्डार्थ मुपाधितो भिन्नयोरभेदवाक्यत्वा
म्बप्रतिबिम्बाभेदवाक्यवद्ब्रह्मपरवाक्यत्वाद्वा सत्य
नादिवाक्यवदित्यभिप्रेत्योपसंहरति । यथेति । तदर्थं
हावाक्यस्थतत्पदलक्ष्यं लक्षणया बोधयन्तीति
तत्वमौ तत्त्वंशब्दौ मिथो विरोधादित्यन्वयः ।
ख्यार्थयोः परस्परमभेदे विरोधाद्धेतोरित्यर्थः । लक्ष
वर्त्मना लक्षणामार्गेण लक्षणयेति यावत् । इमौ
माविति संबन्धः । किमर्थं न संभूय वक्तुं समर्थौ
मर्थावेवेत्यर्थः ॥ २३६ ॥

प्रत्यक्तत्त्वं लक्षयेत्त्वंपदार्थ-
स्तच्छब्दार्थो लक्षयेदद्वितीयम् ॥
एवं पूर्णं प्रत्यगात्मानमेतौ
शब्दौ ब्रूतो लक्षणावर्त्मनैव ॥२३७॥

पदेन कीदृशोऽर्थो लक्ष्यते येन तदर्थयो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घः परिह्रियेतेत्याशङ्क्य प्रागुक्तमर्थमुपसंहारे स्मारयति। प्रत्यक्तत्त्वमिति। अहङ्कारादिसाक्षिसर्वान्तरचैतन्यमात्रमित्यर्थः। त्वंपदार्थ इति। पदार्थस्य लक्षकत्वमाश्रित्योक्तम्। एवमग्रेऽपि। सर्वान्तरस्य साक्षिणः सर्वव्याप्यद्वयाभेदे तत्त्वंपदसामानाधिकरण्येन सिद्धे निरतिशयबृहत्त्वशालि ब्रह्म सिद्ध्यतीत्याशयेनाह। एवं पूर्णमिति। एवकारेण वृत्त्यन्तरं व्यावर्त्तयति। अत एव गौण्युक्तिर्ग्रन्थकारस्य प्रौढेयति प्रागवादिषम्॥ २३७॥

पारोक्ष्यं च ब्रह्मणि प्रत्यगर्थे
दुःखित्वं च ध्वान्तसम्भूतमाहुः॥
सम्यग्ज्ञानध्वस्तमोहस्य पुंसः
प्रध्वंसेतेऽहेत्वभावेऽफलत्वात्॥ २३८॥

नन्वेवमपि कथं पूर्णवस्तुलाभः परापरयोः पारोक्ष्यदुःखित्वादेरनपायादित्याशङ्क्याह। पारोक्ष्यं चेति। ब्रह्मणि पारोक्ष्यं चेति जगत्कारणत्वादि समुच्चिनोति। दुःखित्वं चेति। सुखित्वादि समुच्चिनोति। तयोरविद्यासंभूतत्वे किं सिद्धं तदाह। सम्यगिति। प्रध्वंसेते पारोक्ष्यं दुःखित्वं चेत्यनुषङ्गः। तत्र सामान्यन्यायमाह। हेत्वभाव इति। अफलत्वादिति छेदः। कारणाभावे कार्याभावादित्यर्थः॥ २३८॥

षष्ठी जातिगुणक्रियादिरहिते सर्वस्य विज्ञातरि
प्रत्यक्षे परिवर्जिताखिलजगद्द्वैतप्रपञ्चे द्वयोः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्त्यक्तव्यवधानके परमके विष्णोः पदे शाश्वते
त्वय्यज्ञानविजृम्भिता न हि गिरो मुख्यप्रवृत्तिक्षमाः
एवं वेदान्तानां सर्वपदलक्षणयाऽखण्डैकरसे ब्र
पर्यवसानं न्यायत उपपादितम्, ननु सर्वपदलक्षण
पन्ना लोके लक्ष्यस्य पदान्तरवाच्यत्वनियमदर्शनात्
न्यथा लाक्षणिकपदैरेव लक्ष्यप्रश्नोत्तरदाने तत्रापि
क्ष्यप्रश्ने लाक्षणिकपदप्रयोगानवस्थानप्रसङ्गादिति
तेन विनापि वाच्यसंबन्धितया विचारादिनावगत
तत्त्वस्य योग्यतादिमहिम्ना स्वत एव लक्ष्यज्ञान
न लक्ष्यप्रश्नोत्तरानन्त्याप्रसङ्गात्, न हि तीरादि
गतिग्रहात्पूर्वं प्रवाहादिसंबन्धितया विचारा
तीरादौ गङ्गादिपदलक्षणा नावतरति, किं चेक्षुक्षी
माधुर्यविशेषेऽनुभवसिद्धे कस्यापि पदस्य शक्त्यसं
न्माधुर्यविशेषादिः सामान्यशब्देन लक्षणयैव प्र
दनीयः स इति पदान्तरवाच्यमेव लक्ष्यमिति न
मो लोकेऽपि वक्तुं शक्यः, किं च सत्यज्ञानान
ब्रह्मणि गवादाविव गवादिशब्दः किं जातिनिमि
चकः शब्दः प्रवर्तते, किं वा दण्डयादिशब्द इव सं
सनिमित्तः, अथवा गुणवचनेभ्यो मतुपो लोपानुशा
शुक्लादिशब्द इव पटादौ गुणयोगेन सनिमित्तः,
जकादिशब्दवत् क्रियानिमित्त., उद्भिदादिशब्दवत्
मात्रनिमित्तो वा न सर्वथापीत्याह। षष्ठीत्यादिना।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षष्ठी ब्रह्मणि तेषामन्यतमस्याप्यसंभवादित्यर्थः । तत्र हेतुमाह । सर्वस्य विज्ञातरीति । सर्वावभासक इत्यर्थः। ननु स्वावभासकत्वे तस्य स्वात्मनि वृत्तिविरोध इति कथं सर्वस्य विज्ञातेति चेन्न,तस्य स्वप्रकाशतया स्वत एव नित्यापरोक्षत्वादित्याह । प्रत्यक्ष इति। तदुपपादनाय दृशावित्युक्तम् । तथा चावभास्यघटादेरवभासकेऽभाव इव चेतनाचेतनात्मकद्विविधप्रपञ्चशून्यत्वात्तस्मिन्न षष्ठ्यादिसंभव इत्याह । परिवर्जितेति । जगदिति चतुर्विधचेतनप्रपञ्चो निर्दिष्टः।द्वैतशब्देन तदितरः,वैपरीत्येन वेति विवेक्तव्यम् । ननु दृग्रूपमपि पुरुषान्तरसंवेदनं न प्रत्यक्षं तद्वद्ब्रह्मापि किं न स्यादित्याशङ्क्य तस्योपाध्यन्तरेण व्यवधानात्तथात्वं न निरुपाधिब्रह्मणस्तदित्याशयेनाह। सन्त्यक्तव्यवधानक इति । ननु निखिलप्रपञ्चकारणस्य कथं परिवर्जितेत्याद्युक्तमिति चेन्न मायाशबलात्मना तस्य तथात्वेऽपि स्वस्वरूपेण परिशुद्धत्वादित्यभिप्रेत्याह । परमके विष्णोः पद इति । शाश्वते निर्विकार इति गुणक्रियाराहित्ये हेत्वन्तरमुक्तम्। शिष्येणैवंभूते ब्रह्मणि प्रत्यगभेदबुद्धिः कर्तव्येति शिक्षयन्नाह। त्वयीति। किञ्चाज्ञानकार्याणां गिरां तादृशेनैवार्थेन संबन्धो युक्तः समस्वभावयोरेव लोके संबन्धदर्शनात्तन्नामरूपाभ्यामेव व्याक्रियतेति शब्दतदभिधेययोराविद्यकत्वश्रवणाच्च न स्वज्ञानतत्कार्यविरुद्धेन दृग्रूपेण प्रत्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गात्मनेत्याशयेनाह । अज्ञानविजृम्भिता इति।एवं कोऽपि शब्दस्तत्र प्रवर्त्तितुं नार्हतीति सर्वपदलक्ष्यं चितेति भावः ॥ २३९ ॥

आस्तामत्र वचःप्रवृत्तिविरहः प्रत्यक्त्वहेतोर्दृशि
व्यापाराय मनोऽपि न प्रभवति भ्राम्यत्पराग्भूमि
एवं चेदखिलप्रसर्पणदवीः षोढा विभिन्ना भवा-
नुल्लङ्घ्य व्यवतिष्ठते त्वयि गिरःस्यान्मुख्यवृत्तिःक
॥ २४० ॥

एवं कस्यापि प्रवृत्तिनिमित्तस्य निष्कले आत्मन भवान्नैकस्यापि शब्दस्य तत्राभिधा वृत्तिः संभवति क्तम्, इदानीं तत्र संगतिग्रहासंभवादपि ना संभवतीत्याह । आस्तामिति । तिष्ठत्वित्यर्थः। निष्कलात्मनि प्रवृत्तिनिमित्ताभावादत्र वचसो प्रवृत्तिविरह आस्तां नैतावन्मात्रमिहेति भावः । हीन्यत्तदाह । प्रत्यक्त्वहेतोरिति । द्रष्टृत्वाद्धेतोरित्य व्यापाराय ज्ञानाय । मनोऽपीत्यपिशब्देन सकल वभासकतया सूक्ष्मवस्तुनिर्धारकतया वा चक्षुरादि तिशयं तस्य द्योतयति । न प्रभवति न शक्नो मनश्चेदात्मनि ज्ञानं जनयेत्तर्हि मनसा करणेन स एवान्यो वा । अन्यश्चेत्स एवात्मा न विषय षयस्यानात्मत्वनियमात्, एकत्र भोक्तृद्वयायोगा अत एव स एवेत्यप्यनुपपन्नम् । कर्तृकर्मविरो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादिति न द्रष्टरि मनोव्यापारः संभवतीत्याशयेनाह। भ्राम्यदिति। पराग्भूमिषु बाह्यविषयेष्वनिच्छयापि पुनःपुनः प्रवर्त्तमानमित्यर्थः। पराग्विषयेष्वित्यनेन ज्ञानविषयस्य पराक्त्वं ज्ञात्रन्यत्वरूपम्,भ्रमतीत्यनेन पराग्विषयप्रवृत्तिशीलत्वं च मनसो दर्शितम्। तथा च श्रुतिः। तस्मात्पराङ् पश्यति नान्तरात्मन्निति। ततः किं तत्राह। एवं चेदिति। मन आत्मग्रहायोग्यं चेत्प्रत्यक्षादिषट्प्रकारेण भिन्नास्तदधीनव्यापारनिखिलप्रमाणानां पदवीर्मार्गानुल्लङ्घ्य भवान्व्यवतिष्ठते, मनोऽधीनव्यापाराहाणि हि चक्षुरादिप्रमाणानि तदगोचरे आत्मनि न प्रवर्त्तितुमर्हन्तीति भवांस्तद्विषयइत्यर्थः। ततोऽपि किं तत्राह। त्वयि गिर इति। भवान् त्वयीत्यादिशब्दा अधिकारिणाहमेवंविध इति प्रतिपत्तव्यमितिसूचनायेत्युक्तम्। एवमग्रेऽपि प्रमाणान्तरेण हि शब्दस्य संगतिग्रहो वाच्यः। आत्मनि चमनोव्यापारागोचरे नप्रमाणान्तरप्रवृत्तिरिति न तदधीनः शब्दार्थसंगतिग्रहः संभवतीति भावः॥ २४०॥

आत्मानं न तु कर्मतामुपनयञ्छब्दो वदेल्लक्षणा-
मार्गेणापि यतः पराग्विषयवन्नारुयेष्यते कर्मता॥
प्रत्यक्त्वा हि विरुध्यते यदि भवेदस्यात्मनः कर्मता
यद्यत्कर्म न तस्यतस्य भवति प्रत्यक्स्वभावो यतः॥२४१॥

नन्वेवं लक्षणयापि कथमात्मानं वेदान्तः प्रतिपाद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येत् , तस्य विषयतयानात्मत्वप्रसंगादिति चेत्
फलव्याप्यतारूपविषयत्वेन तस्यानात्मत्वम्, किं
वृत्तिव्याप्यत्वेन , आद्ये तथैव तत्, अत एव ना
भिरपि तथा वर्ण्यत इत्याशयेनाह । आत्मानं
कर्मतां फलव्याप्यतामुपनयन्प्रापयञ्छब्द आत्मा
क्षणावृत्त्यापि कर्मतामुपनयन्नैव वदेदिति संबन्धः
नु वेदान्तानामात्मन्यपरोक्षज्ञानजनकत्वादिन्द्रि
कथं तत्र न फलाधायकत्वमित्याशङ्क्याह । यत इ
परागिवषयवत् । घटादेरिवेत्यर्थः । घटादेर्हि जड
प्रमाणाधीनस्फुरणाश्रयत्वं विना न स्फुटता संभव
आत्मनस्तु स्वत एव स्फुटत्वात्तदतिरिक्तस्फुरणास
च्च न प्रमाणाधेयस्फुरणाश्रयत्वमिति न फलव्याप्य
र्थः।न द्वितीयः। तंत्वौपनिषदमिति श्रुत्यात्मन्या
त्सिद्धेः । न चैवमन्यदेव तद्विदितादिति श्रुतिविरो
तस्याः फलव्याप्यत्वमात्रनिषेधपरत्वात् । अन्य
न्यथासिद्धवर्णितश्रुतिविरोधः स्यादित्याशयेना
प्रत्यक्तेति । हिरवधारणे । अस्यात्मनो यदि
भवेत्तर्ह्येव प्रत्यक्ता विरुद्ध्यत इति संबन्धः ।
वृत्तिव्याप्यत्वे न दोष इति भावः । तथैव नित्य
ह । यद्यदिति । यतो यद्यदिति सम्बन्धः ॥२

वागादेः खलु बाह्यवस्तुविषयो नात्मा यतो न
व्यापारं करणस्य कस्य चिदपि प्रेक्षामहे न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्किं चित्करणं जगत्त्रयगतं तत्प्रत्यगात्मेक्षितं
बाह्ये वस्तुनि वर्त्ततेऽनुभवनं तत्र प्रमाणं मतम् ॥२४२॥

एवं प्रत्यक्षादिसर्वप्रमाणागोचरत्वमुक्त्वा तेनैव चक्षुराद्यगोचरत्वमपि सिद्धवत्कृत्य, अग्राह्यमित्यादिश्रुत्यनुरोधेन न्यूनतापरिहाराय च कर्मेन्द्रियागोचरत्वमप्याह । वागादेरिति । आदिपदेन पाण्यादिग्रहणम् । खल्विति सकलवादिप्रसिद्धिमाह । बाह्यवस्त्विति । वक्तव्यादिरूपशब्दादीत्यर्थः । आत्मा विषयो नेत्यनुषङ्गः । कुतस्तत्राह । यत इति । यतो न्यायत आत्मनि कस्य चित्करणस्य वागादिमध्ये कस्यापि करणस्य व्यापारं न प्रेक्षामह इति संबन्धः । किं वागादिः स्वस्य प्रसिद्धप्रवचनादिव्यापारेणात्मानं विषयीकरोति, उत व्यापारान्तरेण । नाद्यस्तस्यात्मन्यसंभवात्, न हि शब्दादिविलक्षणे वागादेर्वचनादानादिगोचरत्वं संभवति । न द्वितीयस्तेन विनानुपपत्त्यभावेन तदसिद्धेरित्यर्थः । किं च जगति यावत् किंचित्करणमस्ति तस्य सर्वस्य नात्मा गोचरः, एवं हि करणं प्रत्यगात्माधिष्ठितं बाह्यमेव विषयीकरोतीति सर्वेषामनुभवसिद्धमित्याह । यत्किं चिदिति । ईक्षितम् अधिष्ठितम् । तत्र । तस्मिन्नर्थे ॥ २४२ ॥

प्रत्यग्रूपमतो न शब्दविषयो बुद्धेरवेद्यं यतो
बुद्धिर्यत्र हि गृह्यते स विषयः शब्दस्य नात्मन्यसौ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनात्मानमसौ न गोचरयितुं शब्दः क्षमो
वृत्त्या वेतरयापि तेन न तया तस्यात्मनः कर्मता
मनोव्यापारागोचरत्वेन तदधीनव्यापारनिखिल
णागोचरे आत्मनि संगतिग्रहासंभवात्प्रवृत्तिनि
भावाच्च न मुख्यवृत्त्या शब्दप्रवृत्तिरित्युपपादि
संहरति । प्रत्यग्रूपमिति । प्रत्यग्रूपं यतो बुद्धेर्मन
वेद्यं ततः शब्दविषयो नेतिसंबन्धः । बुद्ध्यविषय
शब्दविषयः किं न स्यादित्याशङ्क्याह । बुद्धिरि
शब्दस्य बुद्धिवृत्तिकरणत्वात्तद्गोचर एव वृत्तिरित्य
ततः किं तत्राह । नात्मनीति । असौ बुद्धि
ततोऽपि किं तत्राह । तेनेति । येन बुद्धिरात्मनि न
वर्त्तते तेनोक्तन्यायेन संगतिग्रहासंभवादसौ शब्द
त्मानं मुख्यया वृत्त्येतरया लक्षणया वा गोचरयि
क्षम इति संबन्धः । लक्षणया तद्गोचरत्वनिषेधश्च
नः फलव्याप्यत्वाभावाशयेन, तमेवाह । तेनेति
नात्मनः सर्वप्रमाणफलरूपत्वान्न फलव्या
तेनेत्यर्थः ॥ २४३ ॥

नन्वज्ञेयमिदं भवेद्यदि मम प्रत्यक्स्वरूपं त
प्रामाण्यं कथमस्य वेदशिरसस्तत्र प्रतिज्ञाय
यन्मेयं न भवेत्कदाचिदपि तद्वेदान्तवेद्यं भवे
दित्येतद्वचनं पराहतपदं वक्तुं न युक्तं बुधैः ॥
नन्वात्मनः फलव्याप्यत्वाभावे शास्त्रजन्यज्ञा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्वं नास्तीत्यज्ञेयं ब्रह्म स्यात् एवं च तं त्वौपनिष-दमिति श्रौती शास्त्रयोनित्वादिति सौत्री च तस्य शास्त्रप्रमाणकत्वप्रतिज्ञा न सिद्ध्येदिति उक्तां व्यवस्थां दृढीकर्त्तुं शङ्कते । नन्विति । चोद्ये इदं प्राङ्निर्धारि-तस्वभावं ममेदं प्रत्यक्स्वरूपमिति सम्बन्धः । ततस्त-र्हि । तत्र इत्थंभूते मम स्वरूपे । प्रतिज्ञायते श्रुति-सूत्रकाराभ्यामिति शेषः । कथंशब्दसूचितं दूषणमेव व्यनक्ति । यन्मेयमित्यादिना । अथ वा फलाव्याप्य-त्वेऽपि ब्रह्मणो वृत्तिव्याप्यत्वान्न प्रतिज्ञाबाध इत्या-शङ्क्य तर्हि धर्मादिवच्छास्त्रोत्थवृत्तिचैतन्यविषयत्वं स्यादन्यथा चिदचित्संवलितप्रमाविषयत्वाभावाद्ब्रह्म मेयं न भवेदिति तत्र प्रामाण्यप्रतिज्ञा कथं न व्याहन्ये-तेत्याह । यन्मेयं न भवेदिति । कदाचिदपि यन्मेयं नेति संबन्धः । पराहतान्यन्योऽन्यं विरुद्धानि पदानि यस्मिंस्तत्तथा ॥ २४४ ॥

नैतद्वस्तुनि कल्पितस्य जगतो वाक्यप्रसूतप्रमा
बुद्धिर्मूलधगिष्यते तव निजस्वाकारमात्रग्रहात् ॥
कर्मत्वं न करोति वाक्यजनिता बुद्धिस्वरूपे तव
स्वाकारग्रहणेन केवलमियं संसारमूलं दहेत् ॥ २४५ ॥

ब्रह्मणः स्वप्रकाशतया चिदन्तराभावाच्च चैतन्यावि-षयत्वेऽपि शास्त्रस्य तत्र प्रामाण्यप्रतिज्ञा न विरुद्ध्य-त इत्ति परिहरति । नैतदिति । त्वदुक्तं दूषणं नेत्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थः । कुतः यतो वाक्यप्रसूतप्रमारूपा बुद्धि
कल्पितस्य जगतो यन्मूलमज्ञानं तद्दहति नाश
मूलधगिष्यते, ततश्च निवर्त्तकत्वेन तत्र शास्त्र
ाश्रयमुपपद्यत इति भावः । ननु बुद्धिरूपाया अ
मायाः स्वगोचरविषयाज्ञानादिनिवर्त्तकस्वभाव
ह्मणः शास्त्रीयप्रमाविषयत्वाभावे कथं तस्या
वर्त्तकत्वमिति चेन्न । अस्त्येव हि ब्रह्मणो घ
वद् वृत्तिविषयत्वं स्वप्रकाशस्याप्यसजातीयवि
स्येच्छाविषयत्ववत् प्रदीपादेर्ज्ञानविषयत्ववच्च
च्चैतन्यांशविषयत्वं तु स्वप्रकाशे विरुद्धमेव । न
त्र तन्मानमस्ति तथापि प्रकृते न काचित्क्षति
द्याविषयस्य पूर्णचैतन्यस्यैव प्रकाशमानस्यावि
वर्त्तकत्वोपपत्तेस्तदाकारसाक्षात्कारवृत्त्या ह्यनभि
क्तिरूपावरणनिवृत्तौ प्रकाशमानचैतन्यस्यैव
त्राविद्यादिनिवर्त्तकत्वमिति वृत्तौ तदाकारता
मपेक्षितं तच्चेहास्तीत्याह । तव निजेति ।
यः स्वस्वभावभूतश्चैतन्याद्वयानन्दघन आत्मा
कारमात्रग्रहादित्यर्थः, मात्रपदेनाहङ्कारादि
यति । नन्वज्ञानस्य घटादौ स्वगोचरकर्मकज्ञान
वृत्तेरिहाप्यज्ञानत्वेनावृतब्रह्मगोचरज्ञाननिवर्त्य
मीयत इत्याशङ्क्य जडगोचरत्वं तत्रोपाधिरि
नाह । कर्मत्वं न करोतीति । किं चाविद्यानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रविद्याविषयस्य प्रकाशमात्रेण तदाकारवृत्त्यभिव्यक्ते-
नोपपत्तौ न कर्मत्वं तत्प्रयोजकमित्यप्रयोजकत्वं हे-
तोरित्यभिप्रेत्याह । तव स्वाकारग्रहणेनेति । केवलं क-
र्मत्वरहितं यथा स्यात्तथेयं तव स्वाकारग्रहणेनेति सं-
बन्धः । एवं च वेदान्तादिजन्यवृत्त्याकारमात्रतया ब्र-
ह्म वृत्तिव्याप्यमेव न तु घटादिवत्फलव्याप्यं नापि
धर्मवद्‌ वृत्तिचैतन्यविषय इति भावः ॥ २४५ ॥

संविद्व्युत्पादकं यद्वचनमभिमतं कर्ममीमांसकानां
तत्कर्मत्वं न तावत्क्षिपति घटपटाद्यर्थसंवित्स्वरूपे॥
किं त्वज्ञानापनुत्त्या फलवदभिमतं तत्र शिष्यस्य तद्वत्
सर्वं वेदान्तवाक्यं फलवदिदमपि प्रत्यगात्मस्वरूपे॥२४६

ननु तदाकारवृत्तिव्यक्तचैतन्यविषयत्वं विनाऽविद्या-
दिनिवृत्तिमात्रेण परीक्षकाणां न प्रामाण्यं संमतमित्या-
शङ्क्य मीमांसकानां तावत्तत्संमतमित्याह । संविद्व्युत्पा-
दकमिति । कर्ममीमांसकानां तावत्संविद्व्युत्पादकं त-
त्स्वरूपज्ञापकं वचनं ज्ञानं ज्ञातता वा स्वप्रकाशमित्या-
दिवाक्यमभिमतं तद्घटपटाद्यर्थस्य या संवित्तत्स्वरूपे क-
र्मत्वं ज्ञाततां तद्विषयज्ञानं वा न क्षिपति न जनयति ।
ज्ञातताया ज्ञानस्य च स्वयंप्रकाशत्वेन तत्र ज्ञाततान्त-
रस्य ज्ञानान्तरस्य वाऽयोगात् । ज्ञानस्य परोक्षज्ञानवि-
षयत्वोपगमे वाऽपरोक्षविषयत्वे च तत्स्वप्रकाशत्ववि-
रोधादित्यर्थः । किं तर्हि तत्र प्रमाणकृत्यमिति तत्राह ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंत्वित्यादिना। तत्र शिष्यस्य तदाकारज्ञानजनन
ज्ञानस्य स्वप्रकाशत्वादिसंशयादेरपनुत्त्या निवृत्त
लवदभिमतमिति यद्वत्तद्वदिति संबन्धः ॥ २४६ ॥

अकार्यस्वरूपस्य कार्यत्वमिष्टं
यथा कारकैर्मूर्तमुत्सारयद्भिः ॥
तथैवाप्रमेयस्य मेयत्वमिष्टं
प्रमाणैस्तमस्तद्वदुत्सारयद्भिः ॥ २४७ ॥

लोकेऽप्याह। अकार्येति। यथा ऽसाध्यस्व
कूपगगनादेस्तिरोधायकमृत्पाषाणाद्युत्सारयद्भिर
रयद्भिः कारकैः कर्तृकरणादिभिः कार्यत्वं साध्यत
तथैवाप्रमेयस्येति संबन्धः। लोके हि देवद
कर्तृभिः कुद्दालादिभिः कूपः साध्यते। कूपश्चाव
त्वं नभ एव तदन्यस्यानिरूपणात्। न च नभसः
पेणपाधिद्वारा वा साध्यता संभवति। मूर्त
त्सारणव्यतिरेकेण प्रयत्नसाध्यस्यान्यस्यात्रासंभव
एवं च यथा तावतैव कूपाकाशस्य साध्यता
एवमस्याप्रमेयस्याप्यात्मनः प्रमाणैरज्ञानतत्क
लोपात्प्रमेयत्वव्यवहार इति भावः ॥ २४७ ॥

वाक्योत्थापितबुद्धिवृत्तिरमला यज्ञादिभिर्नि
वेदान्तश्रवणादिभिः स्फटिकवत्स्वच्छा सती
रूपं दर्पणवद्बिभर्ति परमं विष्णोः पदं संनि
रेतस्मादिह कारणादथ भवेत्संसारबीजक्षयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवं साङ्गाध्ययनादेवोत्पन्नात्मज्ञानादप्यविद्यानिवृत्तिः स्यादित्याशङ्क्य, दृष्टादृष्टप्रतिबन्धरहितवृत्त्यभिव्यक्तपूर्णचैतन्यस्यैवाविद्यानिवर्त्तकत्वान्नैवमित्याशयेनाह । वाक्योत्थापितेति । अमला प्रक्षीणदुरिता । यज्ञादिभिरमलेति संबन्धः । निश्चला संशयादिरहिता । अत एव स्वच्छा । सन्निधेः सन्निधानादेव । विष्णोः पदं बिभर्ति । तत्प्रतिबिम्बं गृह्णातीत्येतस्माज् ज्ञानात्सविलासाज्ञाननिवृत्तिरित्यर्थः ॥ २४८ ॥

एवं वेदशिरः प्रमाणमुदितं प्रत्यक्स्वरूपे तव
कर्मत्वं विरहय्य तत्र न हि नो बाधः प्रतिज्ञागिरः ॥
कर्मत्वं न करोति बोधयति च स्पष्टं वचो वैदिकं
रूपं तावकमेवमस्य भवति प्रामाण्यमत्रात्मनि॥ २४९ ॥

आर्थक्रमानुरोधेन द्वितीयं पद्यमवतार्यते, एवं फलाव्याप्ये चैतन्याविषये चात्मनि विधिरूपवेदान्तप्रामाण्यमुपपादितमुपसंहरति। एवं वेदशिर इति। तावता च श्रुतिसूत्रयोः शास्त्रप्रमाणकत्वप्रतिज्ञापि न विरुध्यत इत्याह । तत्रेति। प्रतिज्ञाविलोपमेव विवृणोति। कर्मत्वं न करोतीत्यादिना ॥ २४९ ॥

पृष्ठेन पूर्णवपुषा क्रियते प्रतीति-
र्नेतीतिवाक्यजनिता जगतो निषेद्ध्री ॥
प्राधान्यमस्तु विधिना सममेव तस्मा-
त्तस्याथ वा भवतु तद्वचनं प्रधानम् ॥ २५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं सर्वेषां विधिमुखप्रवृत्तवेदान्तानाम्
वा इदमेक एवाग्र आसीदित्यादिसर्ववेदस्थनिर्वि
त्मोपक्रमोपसंहारैक्यादिनोदरमन्तरं कुरुत, इत्या
दमात्रनिन्दावचनेन एकधैवानुद्रष्टव्यं तमेवैकं
आत्मानमन्या वाचो विमुञ्चथेत्यात्मप्रातिपदि
मात्रज्ञेयत्वतदितरपरिहार्यत्ववचनेन च वर्णित
पोद्बलितेनाखण्डैकरसे तात्पर्यं निरूपितम्,इदानीं
धवाक्यमपि पदार्थशोधनद्वारा तत्त्वमस्याद्यनुग्राह
तत्रैव पर्यवसन्नमिति वक्तुं प्रथमं नेतिनेत्यस्थूला
क्यमपि तत्त्वमस्यादिना समप्रधानं तदेव वा प्रधा
ति भेदेन केषां चिन्मतमुत्थापयति । पृष्ठेनेति ।
नेतिनेत्यात्मेत्यादिवाक्यजनिताप्रपञ्चनिषेद्धधी
पृष्ठेन पश्चान्निखिलभेदनिषेधानुपपत्त्या पूर्णवपु
यते,पूर्णं ब्रह्माऽहमस्मीत्येवमाकारा भवति यस्मा
त्तस्य निषेधवाक्यस्य विधिना विधिमुखप्रवृत्तेन
मादिना समं प्राधान्यमस्तु। अथ वा तद्वचनमे
धानं भवत्विति संबन्धः ॥ २५० ॥

अद्वैतीकरणं निषेधवचनादुत्पन्नबुद्धेरपि
तुल्यं तत्त्वमसीतिवाक्यजनितप्रत्यक्प्रतीत्या
आर्थं शाब्दमथापि वा भवतु तत्किं तेन यद्वा
नोक्तुं शबलार्थगोचरतया निर्भेदमर्थं क्षमः
उक्तमेवार्थद्वयं विवृणोति । अद्वैतीकरण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यगब्रह्मैक्याकारतेत्यर्थः । अध्यस्तसकलप्रपञ्चनिषेधा-
न्यथानुपपत्त्या तदधिष्ठानमद्वयं ब्रह्माहमेवेत्यर्थात्,
प्रतीतिर्भवेत्, यथा तत्त्वमसीतिवाक्यादित्यर्थः । न-
नु निषेधवाक्यार्थानुपपत्त्यैकत्राद्वयात्माकारं ज्ञानं भ-
वति, अपरत्र शब्दादेवेति कथमनयोः साम्यमित्याशङ्क्य
भवत्वेवं विशेषः अविद्यानिवृत्तौ तु तदाकारतामात्रं
नस्यापेक्ष्यते तच्चोभयत्रापि सममेवेति किं शाब्दत्वार्थ-
त्वविशेषेणेत्याह। आर्थं शाब्दमिति । अथापि वा अथ
वेत्यर्थः । द्वितीयपक्षमुपपादयति। यद्वेति । निर्भेदमर्थ-
माकर्तुं तदाकारज्ञानं जनयितुं न क्षमः । कुतः शबला-
र्थगोचरतयेति । तत्त्वमस्यादेः शबलार्थत्वान्नाखण्डा-
र्थज्ञानं ततः संभवतीति न ततोऽविद्यानिवृत्तिः संभव-
ति। तत उक्तविधया निषेवाक्यमेव फलवत्प्रधानमि-
ति भावः ॥ २५१ ॥

संबन्धजातविरहान्न च लक्षणास्मिन्
संभाव्यते परिहृताखिलदृश्यराशौ ॥
ब्रह्मात्मवस्तुनि ततः प्रतिषेधवाक्य-
शेषत्वमेतु विधिरित्यपि केचिदन्ये ॥ २५२ ॥

ननु शबलार्थस्यापि प्रागुक्तप्रकारेण तत्त्वमस्यादेर्ल-
क्षणयाऽखण्डार्थत्वमस्त्येवेत्याशङ्क्याऽसङ्गेऽद्वये वाच्या-
र्थसंबन्धासंभवान्न लक्षणा संभवतीत्यभिमानेनाह ।
संबन्धजातविरहादिति। संयोगसमवायतादात्म्यकार्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारणतादिसंबन्धासंभवादित्यर्थः । ब्रह्मात्म
संबन्धजातविरहादस्मिंस्तत्त्वमादिवाक्ये लक्षणा
संभाव्यते । संबन्धाभावसिद्ध्यर्थं ब्रह्म विशिनष्टि।
रिह्तेति । इति यतस्तत इति सम्बन्धः । शेषत्वं
लार्थतत्त्वमादेरपि निषेध्यभेदाभेदोपस्थापकतया
धवाक्यशेषत्वमेतु प्राप्नोतु, अपिना पूर्वोक्तपक्ष
द्योतयति । केचिदन्य इति । वक्तृभेदव्यपदेश
तभेदाभिप्रायः । अन्य इत्युत्तरार्थो वा ॥ २५२ ॥
वाक्यं मुक्तिफलां धियं जनयति स्पष्टं विधि
साक्षादेव तत्र स्वरूपकथनान्नैवं निषेधात्मकम्
अध्यारोपितरूपभेदविलयव्यापारनिष्ठं तव
स्थाकारग्रहणक्षमां नहि धियं कर्तुं समर्थं यतः
उच्यते । संबन्धजातविरहादित्यसिद्धम्, अ
येऽप्याध्यासिकनिखिलसम्बन्धस्य यथानुभवं
किं चैवं सत्यादिवाक्यात्सत्यज्ञानाद्यात्मकब्रह्म
स एष नेतिनेत्यादिवाक्येन तत्परामर्शेन निषेधो
स्यात्, अवान्तरवाक्यस्य तत्र लक्षणाभ्युपगमे
पराङ्महावाक्येन तेनेत्याशयेनाह। वाक्यमिति
मुखेन बोधकं तत्त्वमादिवाक्यमेव भागत्याग
तव शुद्धचैतन्यस्वरूपानुवादेनाद्वयब्रह्मप्रतिपाद
क्तिफलां धियं स्पष्टं यथा स्यादपरोक्षरूपा
वत् साक्षाज्जनयति नैवं निषेधात्मकमिति संब

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षात्त्वस्वरूपेति वा योजना, अध्यस्ताहंकारस्वरूपव्यावृत्तये च साक्षादित्युक्तम् । ननु मा भूत्ततः साक्षान्मुक्तिफलज्ञानजन्म, अर्थाद्भविष्यतीति चेन्न । अधीतिविधिपरिगृहीतोपनिषद्भ्य एव साक्षादुत्पन्नज्ञानस्य मुक्तिसाधनत्वे संभवत्यार्थिकस्य तदयोगात् । औपनिषदमितिश्रुत्या ब्रह्मणि प्रमाणान्तरस्य निषिद्धत्वाच्च । किं चार्थादपि किमहं ब्रह्मेतिज्ञानं मुक्तिसाधनं ततो जायते, किंवाऽद्वयं ब्रह्मेति, नाद्यः अस्मिन्पक्षे हि तत्त्वमादिना निषेधवाक्येन वा तज्ज्ञानं भवतीति तयोर्वैकल्पिकं साधनत्वं वाच्यमेवं च निषेधस्य तत्त्वमादिवाक्यानपेक्षत्वाज्जीवमपि प्रपञ्चवत्तन्निराकुर्यात् । जीवस्वरूपशोधकवाक्यानां त्वंपदशेषाणामपि तेनानपेक्षितत्वात्ततोऽहं ब्रह्मेत्याकारा धीर्निषेधमात्रपर्यवसिता न भवेदित्याशयेनाह । अध्यारोपितेति । आत्मन्यारोपितसप्रपञ्चतारूपभेदस्य विलये निवृत्तौ यो व्यापारस्तन्निष्ठमित्यर्थः । प्रपञ्चाभावमात्रबोधकमिति यावत् । स्वाकारग्रहणक्षमाम् अहं ब्रह्मेत्याकाराम् ॥२५३॥

अस्थूलादिवचःसमुत्थितमतिर्नाकारमादास्यते
साक्षादद्वयवस्तुनस्तव विभोरज्ञानविच्छेदिनः ॥
अज्ञातस्य हि वस्तुनो न हि धिया स्वाकारसंवेदनं
मुक्त्वा तद्विषयस्य विभ्रमकृतो ध्वान्तस्य विध्वंसनम्॥२५४॥

नापि द्वितीय इत्याह । अस्थूलादिवच इति । अस्थू-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लमनणवह्रस्वमदी -मित्यादिसमस्तद्वैतनिषेधवच
त्पन्नं ज्ञानमित्यर्थः। साक्षादित्यर्थादित्यस्याप
लक्षणम्। अस्थूलादिवचःसमुत्थितमतिरज्ञानवि
दिनो विभोरद्वयवस्तुनस्तवाकारं साक्षाद्वा अं
नादास्यते न ग्रहीष्यतीत्यर्थः। वृत्तिव्यक्तस्वरूपसं
ज्ञाननिवर्त्तकत्वमित्याशयेनाज्ञानविच्छेदिन इत्यु
म्। मा भूत्तदादानमित्याशङ्क्येष्टसिद्धिस्तदा न स्या
ति सामान्यन्यायेनाह। अज्ञातस्यहीति। हि यतोऽज्ञा
वस्तुनो धियान्तःकरणवृत्त्या स्वाकारसंवेदनम्,
तस्वरूपविशेषस्फुरणं मुक्त्वा तद्विषयस्य वस्तुविष
विभ्रमकृतो विभ्रमहेतोर्ध्वान्तस्याज्ञानस्य विध्वं
निवृत्तिर्न हि भवति। अज्ञानं हि स्वविषयस्फुरणा
वर्त्तते न त्वन्यस्फुरणात्, स्फुरणमन्तरेण वा निवे
त्रादेति प्रसङ्गात्, स्फुरणं च प्रमाणजन्यवृत्त्यधी
त्यावृतगोचरप्रमाणवृत्तिरावश्यकीति भावः ॥

रज्ज्वज्ञानविजृम्भितस्य फणिनो रज्जुप्रकाशक्षम
विज्ञानं विरहय्य न प्रशमनं दृष्टं निषेधे कृते।
तद्वत्प्रत्यगविद्यया विरचितं संसारदुःखं न त
संवित्तिं विरहय्य शाम्यति धिया नेतीति शब्दोत्थया

ततः किमित्याशङ्क्योक्तन्यायस्य विशिष्टं दृष्टान्
र्शयन्दार्ष्टान्तिके तदभावे दुःखोपशमो न स्यादि
ह। रज्ज्वज्ञानेति। रज्ज्वज्ञानादारोपितस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नायं सर्प इति निषेधे कृतेऽपि रज्जुरियमिति तदधिष्ठानावृतविशेषज्ञानं विना तदज्ञानस्य प्रशमनं न दृष्टं नास्ति यद्वत्तद्वदिति संबन्धः। जीवस्य नित्यमुक्ताद्वयब्रह्मैक्याज्ञानात्संसार इति तत्प्रकाशं विना तदज्ञानतन्मूलसंसारनिवृत्तिर्न भवेदिति नाद्वयं ब्रह्मेति ज्ञानं मुक्तिसाधनं ततो निषेधस्य न तत्त्वमादिसाम्यम्। एतेन तदेवं प्रधानमिति पक्षोऽपि निरस्तो वेदितव्यः ॥२५५॥

अस्थूलादिवचो निषेधकतया भेदस्य संशोधनाद्
वाक्यार्थान्वयसिद्धये तु घटते वाच्यार्थलक्ष्यार्थयोः॥
एवं तत्त्वमसीतिवाक्यगतयोस्तत्त्वंपदोक्तार्थयोः
संशुद्धैव तु नेतिनेति वचनं मोक्षाय साक्षान्न तु॥२५६

किं तर्ह्यस्थूलादिवचःकृत्यं मुक्तिसाधनज्ञानस्य विधिवाक्यादेव सिद्धत्वादित्याशङ्क्य पदार्थशोधकतया तस्य तत्त्वमादिवाक्यशेषत्वमाह। अस्थूलादिवचो निषेधकतयेति। भेदस्य निषेधकतया वाच्यार्थलक्ष्यार्थयोः संशोधनादस्थूलादिवचो वाक्यार्थान्वयसिद्धये अखण्डवाक्यार्थसिद्धये घटते व्याप्रियत इति संबन्धः। वाच्यार्थाभ्यां लक्ष्यौ यावर्थौ प्रत्यग्ब्रह्मस्वरूपभूतौ तयोः संशोधनादित्यर्थः। तत्संशोधनं च चैतन्यानन्दैकरसस्य विनिश्चयः। वाच्यार्थश्च लक्ष्यार्थश्च तयोरिति वा। वाच्यार्थे न वाक्यतात्पर्यमपि तु लक्ष्यमात्र इति निश्चय एव तयोः संशोधनम्। एवं च निषेध-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यं विधिवाक्यशेषमेव न विपरीतम्,न वा निषेध
वाक्यमपि प्रधानमित्याशयेनाह। एवमिति । मोक्षो
भवतीति शेषः । साक्षान्न तु साक्षान्मोक्षाय नैव
वतीत्यर्थः ॥ २५७ ॥

अन्ये पुनर्विधिवचोजनितात्मबुद्धि-
सामर्थ्यसिद्धमनुवक्ति निषेधवाक्यम् ॥
द्वैतोपमर्द्दमिति शासति शिष्यवर्गं
तच्च प्रशस्तमनवद्यमभीष्टमेव ॥ २५८ ॥

एवं निषेधवाक्यस्याज्ञानप्रपञ्चनिषेधप्रतिपादनं
तत्त्वमस्याद्यन्तर्भावो दर्शितः , अन्ये तु तत्त्वमस्या
दिवाक्यार्थज्ञानसामर्थ्यसिद्धद्वैतनिषेधस्यानुवादि
द्वैतनिषेधवाक्यं महावाक्यानुग्राहकम्, द्वैतनिषेधानु
वादादपि महावाक्यस्याऽद्वैततात्पर्यसिद्धेरित्याहुस्तद
नुमोदते । अन्य इति । सामर्थ्यसिद्धमिति । तत्त्वम
स्यादिवाक्येनाहमद्वयानन्दं ब्रह्मेति वाक्यार्थबोधे
ते अहं चेदित्थंभूतस्तर्हि कालत्रयेऽपि मयि द्वैतं ना
ति द्वैताभावो निश्चीयत इति तमनुवदति निषेध
न तु तं प्रतिपादयतीत्यर्थः। तत्प्रशासनम्। निषेध
स्य तत्पक्षे पृथक् तात्पर्याभावेन तात्पर्यलाघवा
समीचीनम् । अबाधितत्वाच्चानवद्यं प्रपञ्च
मन्तरेणापि दृश्यत्वादिना सिद्धतन्मिथ्यात्वमा
क्यस्याद्वयब्रह्मप्रतिपादकत्वोपपत्तेः। अत एवाभी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यर्थः ॥ २५७ ॥

दृष्टश्च रज्जुविधिनावगतार्थवस्तु-
सामर्थ्यसिद्धभुजगप्रशमानुवादः ॥
रज्जुस्तवाग्रत इयं न भुजङ्गमोऽय-
मित्यत्र तद्वदिह योजयितव्यमेतत् ॥ २५८ ॥

विधिसामर्थ्यसिद्धनिषेधानुवादं लौकिकदृष्टान्तेनाप्याह। दृष्टश्चेति। रज्जुविधिना इयं रज्जुरितिवाक्येन। वस्त्विति स्वरूपपरम्, तवाग्रे स्थितेयं रज्जुर्नायं भुजङ्गम इत्याप्तवाक्य इयं रज्जुरिति वाक्यसामर्थ्यसिद्धभुजङ्गाभावस्य नायं भुजङ्गम इत्यनुवादो यद्वत्तद्वदिहापीत्यर्थः ॥ २५८ ॥

अस्यैव तत्त्वविनिवेदनशक्तिभाजः
संसारमूलविनिवृत्तिफलप्रसूतौ ॥
सामर्थ्यमस्ति पटुभिः परिबृंहितत्वा-
द्वेदान्तभूमिगतपञ्चविधार्थवादैः ॥२५९ ॥

एवं निषेधवाक्यस्य निर्विशेषे महावाक्यतात्पर्यप्रमित्यनुकूलतया तच्छेषत्वं मुक्तिफलज्ञानप्रसवस्तु तत्त्वमादेरेवेत्युक्तम्, अत्रैवोपपत्त्यन्तरमाह। अस्यैवेति। तत्त्वमादेरेवेत्यर्थः। तत्त्वविनिवेदनशक्तिभाजः तत्त्वं परमार्थसद्वस्तु तद्गर्भशबलनिवेदनशक्तिभाज इत्यर्थः। संसारमूलस्य विनिवृत्तिः फलं यस्य ज्ञानस्य तत्प्रसूतावित्यर्थः। अस्यैव तत्सामर्थ्ये युक्तिमाह। पटुभिरि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति । समर्थैरित्यर्थः । परिबृंहितत्वात् । उपोद्बलि
त्वात् । वेदान्तभूमिषु गताः अवगताः पठिताः
यावत् पञ्चविधा ये अर्थवादा भूतार्थवादा
त्यर्थः । अर्थवादानां हि विधिनैवान्वय इति प्रा
वेदान्तभागे च सन्ति वक्ष्यमाणाः पञ्चविधार्थवा
स्तैश्च तत्त्वमस्यादिवाक्यस्यैवाज्ञातज्ञापकतया वि
स्थानीयस्योपोद्बलनं दृश्यते न तु निषेधवाक्य
तत्त्वमादेरेवार्थवादान्वितस्य फलवत्त्वमितिजनक
मित्यर्थः ॥२५१ ॥

सृष्टिस्थितिप्रलयसंयमनप्रवेश-
व्यापारजातकथनच्छलतः प्रवृत्तैः ॥
सानुग्रहादवगतिः खलु तत्त्वमादे-
र्वाक्यात्परस्य घटते न ततोऽपरस्मात् ॥ २

तानेवार्थवादान्दर्शयंस्तत्त्वमादेस्तदनुग्रहात्पुरु
साधनज्ञानहेतुत्वं युज्यते न तु निषेधस्येत्याह । सृ
स्थितीति । सृष्टिर्वियदादेः सर्जनम्,स्थितिस्तस्य
स्थितिस्तत्पालनमिति यावत् , प्रलयस्तस्य तत्रैव
स्तत्संहरणमिति यावत्, संयमनं नियन्तृत्वम्, प्र
जीवरूपेण प्रतिफलनम्,त एव व्यापारास्तेषां जात
मूहस्तत्कथनच्छलतस्तद्व्याजेन प्रवृत्तैरर्थवादैः
योऽनुग्रहस्तत्सहितात्तत्त्वमादेर्वाक्यादिति योजना
दान्तेषु हि यतो वा इमानि भूतानि जायन्ते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः स एष इह प्रविष्ट आनखाग्रेभ्य इत्यादयः श्रूयन्ते, ते चार्थवादा एव, निर्गुणब्रह्मप्रकरणगतत्वात्, स्वतः प्रयोजनशून्यतया वेदान्तार्थशेषत्वाच्च, तत्र सृष्ट्यादित्रयेण कारणस्य ब्रह्मणः प्रपञ्चभेदनिषेधः कार्यकारणानन्यत्वन्यायेन सिद्ध्यति। नियमेन नियन्तुः कारणस्य चैतन्यप्रवेशेन तस्य जीवानन्यत्वमित्येभिरद्वयचैतन्यात्मकप्रत्यग्ब्रह्माभेदपरतत्त्वमादेरेवार्थदृढीकरणात्तस्यैव तत्कृतोपकारभाक्त्वं न तु निषेधवचनस्य कथमपि तत्र सृष्टिस्थित्योः कथं चित्तत्र निषेध्यप्रसञ्जकतया तदनुग्राहकत्वेऽपि प्रलयादीनां तदनुपयोग एव। एवं संयमनादिविशेषोपन्यासस्येति तत्त्वमादेरेव वाक्यात्तदर्थस्याद्वयब्रह्मणोऽवगतिर्घटते न ततोऽपरस्मान्निषेधादित्यर्थः ॥ २६० ॥

सूत्रं तत्तु समन्वयादिति विधिव्यापारनिष्ठं वचो
मोक्षायेति निवेदनाय कृतवान् वेदान्तवेदी मुनिः ॥
न्यायेनाकलयन्नशेषवचनव्यापारमूरीकृत-
स्वातन्त्र्यः सकलेऽपि वेदशिरसि स्वैरं चरन्नीश्वरः॥२६१॥

एवं सूत्रकारस्याशयादपि विधिवाक्यस्यैव प्राधान्यं निश्चीयत इत्याह। सूत्रमिति। वेदान्तवेदी वेदान्तानां सम्यगर्थवेदनशीलः, अनेनास्य तद्विषयेऽज्ञानादिराहि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यं सूचितम्, मुनिर्बादरायणः तत्तु समन्वयादितिसूत्रं कृतवानिति संबन्धः। किमर्थमिति तदाह। विधीत्यादि निवेदनायेत्यन्तम्। स हि भगवांस्तत्तु समन्वयादिति सूत्रे तत्पदेन निर्विशेषाद्वयं सत्यज्ञानानन्दात्मकं ब्रह्म शास्त्रप्रमाणकं प्रतिज्ञाय तत्र समन्वयादिति हेतुं दर्शयति न तु निषेधादिति। न हि निषेधवाक्यसमन्वयमात्रात्सत्यज्ञानानन्तानन्दं ब्रह्म सिद्ध्यतीतिविधिव्यापारमेव वचनं ब्रह्मणि प्रमाणमिति दर्शितवानित्यर्थः। ननु स च केन बलेनैवमुक्तवानित्याशङ्क्योक्तन्यायेनेत्याह।न्यायेनेति।आकलयन्नशेषवाक्यार्थं निश्चिन्वन्। तस्याप्यखिलवचनव्यापाराकलने सामर्थ्यमाह।ऊरीकृतस्वातन्त्र्यः स्वतः स्वीकृस्वातन्त्र्यः,अत एव तस्येश्वरत्वं स्मर्यते। को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् इति। अत एव सकलेऽपि वेदशिरसि सर्ववेदान्तार्थे स्वैरं चरन् स्वत एवावगच्छन्नशेषवचनेति पूर्वेण संबन्धः ॥ २६१ ॥

वाक्यार्थान्वयितत्पदार्थकथने नेतीति वाक्यं पुनः साक्षात्सूचयति स्म सूत्रकृदतस्तत्तत्परं निश्चितम्॥
एवं हस्ततलार्पितामलकवत् तात्पर्यसंवेदने सत्यन्याद्वगुदीरयन्ति यदि तत्क्षन्तुं कथं शक्नुमः॥२६२॥

एवं वाक्यतात्पर्यनिरूपकसमन्वयसूत्रबलाद्विधिप्राधान्यमुक्तम्, संप्रति तत्पदार्थशोधनप्रस्तावे एवं सू

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रकारस्य प्रकृतैतावत्त्वं हि प्रतिषेधति, ततो ब्रवीति च भूय इत्यादिसूत्रेण निषेधवाक्यविचारादपि निषेधवचनं विधिशेष एवेत्याह । वाक्यार्थेति । पुनरपि सूत्रकृन्नेतीति वाक्यं साक्षात्तत्त्वमस्यादिवाक्यार्थाऽन्वयी यस्तत्पदार्थस्तत्कथने तच्छोधनार्थं प्रतिषेधतीत्यनेन सूचयति स्म यतो ऽतस्तन्निषेधवाक्यं तत्परं तत्पदार्थपरं न तु वाक्यार्थपरमित्यर्थः । सूत्रकारो ह्युदाहृतसूत्रेण अथात आदेशो नेतिनेतीति वचनं मूर्त्तादिकं कारणब्रह्मस्वरूपमेव प्रतिषेधति न तु रूपि ब्रह्मेति-प्रतिपादयंस्तत्पदार्थमेव शोधयामासेति न तत्प्रधानमिति भावः । ननु विधिर्वा प्रधानमस्तु निषेधो वा किं तत इत्याशङ्क्य निषेधप्राधान्येऽपसिद्धान्तः स्यादित्याशयेनोपसंहरति । एवमिति स्पष्टम् ॥ २६२ ॥

सत्यं ज्ञानमनन्तमित्यभिहिते संभावनाऽऽनीयते<br>
नाऽस्थूलादिवचःसमुद्भवधिया द्वैतोपमर्दं विना ॥<br>
तेनावान्तरवाक्यलक्ष्यविषयां बुद्धिं दृढीकुर्वता<br>
सर्वद्वैतनिषेधकेन वचसा वाक्यार्थधीर्जन्यते ॥२६३॥

ननु तत्पदार्थसंशोधनस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यैरेव सिद्धत्वात्किं तदर्थं निषेधवाक्यविचारेणेत्याशङ्क्याऽनन्तपदार्थदृढीकरणाय तदपेक्षितमित्याह । सत्यं ज्ञानमनन्तमिति । सत्यादिरूपेणाभिहितेपि न संभावनाऽऽनीयत इति संबन्धः। आनीय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त इति पदम्। अनन्तमाकाशमितिवदन्यथासिद्धिशङ्का-संभवादित्यर्थः। अस्थूलादिविनान्तमादौ योजनीयम्। फलितमाह। तेनेति। येन निषेधवाक्यानां सत्यादिवाक्यार्थानन्त्यसंभवबुद्धिहेतुत्वं तेनेत्यर्थः। अवान्तरवाक्येन सत्यादिवाक्येन या लक्ष्याऽनन्तब्रह्मविषया बुद्धिस्तां दृढीकुर्वता वाक्यार्थधीः तत्त्वमादिवाक्यार्थधीः परंपरया जन्यत इत्यर्थः॥ २६३॥

अस्थूलादिवचोनिरस्तनिखिलद्वैतप्रपञ्चं परं
जाग्रत्स्वप्नसुषुप्तिवर्जितमिदं प्रत्यक्स्वरूपं तथा॥
एकीकृत्य परस्परेण पदयोरर्थद्वयं तत्त्वतः
प्रत्यक्चाद्वयमद्वयं च तदिति प्रेक्षस्व निःसंशयम्॥२६४

नन्वेवं तत्पदार्थसंशुद्धावप्यवस्थात्रयतद्धर्मकलुषीकृतजीवस्वरूपस्य कथमखण्डवाक्यार्थप्रवेश इत्याशङ्क्य शुद्धं तत्पदार्थमनुवदंस्तस्याऽपि ज्योतिर्ब्राह्मणतात्पर्येण जाग्रदाद्यवस्थातद्धर्मकामकर्तृत्वादिरहिताऽसंगज्ञप्तिमात्रतया सिद्धत्वादखण्डमात्मतत्त्ववाक्यादवेहीत्याह। अस्थूलादिवच इति। परं परमात्मतत्त्वम्। तथेति समुच्चये। पदार्थद्वयशोधनफलमाह। एकीकृत्येति। परस्परेण परस्परम्। पदयोस्तत्त्वंपदयोः। एकीकरणप्रकारमेवाह। तत्त्वत इत्यादिना। निःसंशयं यथा स्यात्तथेत्यर्थः॥ २६४॥

अद्वैतं परिशोधितं भगवतो विष्णोः परं यत्पदं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्छब्देन समर्पितं परिगृहीतादेयमात्मप्रभम् ॥
यच्चोपाधिविवर्जितं तव निजं साक्षात्स्वरूपं तयो-
रेकत्वं परिवर्जितव्यवधिकं प्रत्यक्षमीक्षस्व भोः ॥२६५॥

नन्वस्तु शुद्धमपि पदार्थद्वयं पृथगेव तत्कथं निःसं-शयं प्रेक्षणं स्यादित्याशङ्क्य पदद्वयलक्ष्ये भेदकाभावा-त् कथमपि भेदो न संभवतीति कथं न निःसंशयं प्रे-क्षणमित्याशयेनाह । अद्वैतमिति । भगवतो विष्णोर्य-त्परं पदं परिशोधितं सत्यादिवाक्येनेति शेषः । तदेव भागलक्षणया तत्पदेनोपादेयमित्याशयेनाह । परिगृ-हीतादेयमिति । परिगृहीतमादेयमुपादेयांशो यथा स्यात्तथा समर्पितमित्यर्थः । उपाधिवर्जितमहंकारा-दिरहितमत एव साक्षादित्युक्तम् । परिवर्जितव्यव-धिकं निरस्तपरस्परभेदकम् । एतच्चैकत्वविशेषणम-त्यन्ताभेदाभिप्रायम् ॥ २६५ ॥

अनृतजडविभक्तदुःखतुच्छा-
सहनवपुः परमं पदं मुरारेः ॥
परिहृतसकलप्रपञ्चमात्मा
तव तदवेहि तमो निरस्य वाक्यात् ॥ २६६ ॥

परिगृहीतादेयमित्यनेन सूचितं सत्याद्यवान्तरवाक्य-सिद्धं परमं पदं तत्र सत्यादिपदानामनृतादिव्यवच्छेद एव मातिस्विकं प्रयोजनमिति दर्शयन्ननृतादिव्यावृत्ति-मुखमखण्डवाक्यार्थप्रपञ्चनमुपसंहरति । अनृतजडे-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति । विभक्तेत्यनन्तपदव्यवच्छेद्यं परिच्छिन्नमुक्त्वा तुच्छेति सत्पदव्यावर्त्यम् । एतानन्तादीन्न सहत इत्यसहनम् एतद्विलक्षणमिति यावत्, एवंविधं वपुर्यस्य तदित्यर्थः । तमः पदार्थाविवेकं तद्विवेचनेन निरस्य यत्सत्यज्ञानानन्तानन्दसद्रूपं परिहृतसकलप्रपञ्चमद्वयं मुरारेः परमं पदं तत्त्वात्मेति तत्त्वमादिवाक्यादवेहीति संबन्धः ॥ २६६ ॥

श्रद्धत्स्व सोम्येति हि शास्ति शास्त्रं
श्रद्धाधनत्वश्रुतिरस्ति चान्या ॥
श्रद्धा तु यस्येत्यपरं च वाक्य-
मधीयते संशयकृन्तनाय ॥ २६७ ॥

एवमखण्डवाक्यार्थं निरूप्य तस्यातिसूक्ष्मतया पुनः सन्दिहानं प्रत्युपससाद चतुष्टयसाधन इत्यनेन साधनसंपन्मध्यस्थतयोक्तायामपि श्रद्धायां तस्याः प्राधान्येन कर्त्तव्यतामभिप्रेत्य तत्र प्रमाणमाह । श्रद्धत्स्वेति । छान्दोग्ये यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोणिमन एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येत्यतिसूक्ष्मस्य जगन्मूलस्य ब्रह्मणो दुर्विज्ञेयतया तद्विज्ञानसाधनं श्रद्धामिदं वाक्यं विधत्ते । तथा बृहदारण्यके श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदित्याह । तदिदमाह । श्रद्धाधनत्वश्रुतिरिति । एवं यस्य स्याच्छ्रद्धा न विचिकित्सा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तीति संशयनिवृत्तयेऽपरमपि वाक्यं छन्दोगा अधीयते। ततस्त्वं वर्णितेऽखण्डवाक्यार्थे संशयनिवृत्तये श्रद्धां कुर्वित्यर्थः ॥ २६७ ॥

अज्ञो विनश्यति पुमानतिमूढभावा-
दश्रद्धयोपहतबुद्धिरतोऽपि कष्टः ॥
कष्टाच्च कष्टतर एव तु संशयात्मा
दुःखी सदेति भगवानपि वासुदेवः ॥ २६८ ॥

एवं तमो निरस्येत्यज्ञानस्य संशयकृत्सनायेति संशयस्य च निवृत्तिं सूचयता तयोरनर्थहेतुत्वं सूचितं श्रद्धायाश्चानुष्ठेयत्वं सूचयता तदभावस्यापि तत्सूचितं तत्त्रितयं भगवतोऽपि संमतमित्याह । अज्ञो विनश्यतीति । अविवेकी परमपुरुषार्थाद् भ्रश्यतीत्यर्थः। अतिमूढभावात्तत्त्वंपदार्थाविवेकात्। अज्ञोऽपि यदि वैदिकं कर्म श्रद्दध्यात्तस्य कदाचिद्भवेदपि पुरुषार्थो न त्वश्रद्दधानस्य, तस्य नास्तिक्यप्रसङ्गेनानर्थसम्भवादित्याह । अश्रद्धयोपहतबुद्धिरिति । बुद्धिर्वैदिकी । कष्टः अतिदुःखीत्यर्थः । यदि कश्चिच्छ्रद्धामपि संपाद्य विवेकादिसाधनचतुष्टयो भूत्वा संन्यस्यानिश्चयरूपापातज्ञानेन कृतार्थं मन्यमानः श्रवणादिकं नानुतिष्ठति, असावन्ततः सन्दिग्धात्मोभयपुरुषार्थसाधनशून्यत्वात् सर्वथा भ्रष्ट एवेत्याह । कष्टाच्चेति । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नायं लोकोऽस्ति न परो न सुखं संशयात्मन इति श्री-
भगवान्वासुदेव आहेत्यर्थः ॥ २६८ ॥

रूपं तावकमुज्झितद्वयमभूदद्वैतमेवाञ्जसा
तच्चाद्वैतमपास्य मोहजनितं पारोक्ष्यमात्मा ह्यभूत्।
एवं वेदशिरःपदान्वयवशादेकत्वमेकान्ततः
सिद्धं प्रत्यगनन्तयोरिति तव श्रेयः समाप्तिं गतम्॥२६९॥

नन्वग्निहोत्रादिवाक्यार्थनिश्चयानन्तरमिवाद्वैतवा-
क्यार्थसाक्षात्कारानन्तरमपि किं कर्तव्यतान्तरमस्तीति
शङ्कमानं प्रति तदन्तरमेवाद्वयं निरतिशयानन्दं ब्रह्म
प्राप्तस्य कर्तृकरणादिसाधनाभावात्तदधिकश्रेयसो भा-
वाच्च नैवास्तीत्याह । रूपं तावकमिति । तावकं रूपं
स्वरूपमुज्झितद्वयं परित्यक्ताहङ्कारतद्धर्मादिद्वैतं यथा
स्यात्तथाञ्जसा स्वभावतो द्वैतमेव पूर्णं ब्रह्मैवाभूत्तच्चा-
द्वैतं मोहजनितं पारोक्ष्यमपास्याञ्जसा तदात्माभूदि-
ति संबन्धः। हीति वैदिकप्रसिद्धौ । एवं च सति तत्त्व-
मस्यादिवाक्यादहं ब्रह्मास्मीति साक्षात्कार उदिते पूर्ण-
पुरुषार्थलाभ इत्याह। एवं वेदशिर इति। तव श्रेय इति
तावतैवेति शेषः । समाप्तिं गतं निरवशेषं प्राप्तमित्यर्थः
प्रतीचः परमानन्दाद्वयब्रह्मप्राप्तेरेव श्रेयःसमाप्तित्वात्
सा काष्ठा सा परा गतिरितिश्रुतेः। आत्मलाभान्न परं
विद्यते एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारतेति
स्मृतेश्च । अग्निहोत्रादिज्ञानमात्रात्तु नैवंविधपुरुषार्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाभ इति तत्रानुष्ठानापेक्षेति भावः ॥ २६९ ॥

संबन्धः समवाय इत्यपि पदे वैशेषिकोच्चारिते
नाखण्डव्यतिरिक्तवस्तु वदितुं शक्तोऽनवस्थाभयात् ॥
पञ्चानां समवायितेति वचनव्याघातभीतेरपि
संबन्धान्तरमस्य नाभिमनुते वैशेषिकः कातरः ॥२७०॥

एवं वेदान्तानामखण्डे ब्रह्मणि समन्वयो दर्शितः, अखण्डार्थतायाश्च वाक्यस्य लोकवादिप्रसिद्धिर्दर्शिता, इदानीमन्तेऽपि तत्राढ्यार्थं वादिप्रसिद्धिं दर्शयति, तत्रादावेकपदलक्षणया वैशेषिकमते तामाह । संबन्ध इति। संबन्धविशिष्ट इत्यर्थः । समवायपदेन वैशेषिकप्रसिद्धो नित्यः संबन्धः कथितः । कुतो न शक्तस्तत्राह । अनवस्थाभयादिति । वैशेषिकैर्ह्यवयवावयव्यादिसंबन्धः समवाय इत्युच्यते तत्र समवायस्यासंबद्धत्वान्न तत्कृतावयवादिविशिष्टबुद्धिः स्यात्। न च समवायस्यापि समवायान्नासंबद्धत्वमिति वाच्यम् । स्वस्य स्वस्मिँस्तदसंभवेन समवायान्तराभ्युपगमे तस्यतस्यापि समवायांन्तरमभ्युपेयमित्यनवस्था स्यादिति चोद्यपरिहाराय स्वरूपसंबन्धाभिप्रायेण संबद्धः समवाय इत्युच्येत । तत्र संबद्धपदं समवायस्वरूपमात्रे लक्षणया वर्तते समवायपदमपि तत्रैवेति कथं नाखण्डार्थता तदभ्युपेयेति भावः । न केवलं समवायान्तराभ्युपगमेऽनवस्था किं तु तेषामभ्युपगमविरोधोऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादित्याह । पञ्चानामिति । वचनस्य स्ववचनस्य व्याघातभयादित्यर्थः । अस्य समवायस्यावयवावयविगुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशेषनित्यद्रव्याणां पञ्चयुग्मानामेव समवाय इति हि ते वदन्ति तस्यैवं व्याघातः स्यात् तत्परिहाराय समवाये समवायान्तरं कातरः स्वसिद्धान्तसंरक्षाव्याकुलचित्तो वैशेषिकः कथमङ्गीकुर्यादित्यर्थः ॥ २७० ॥

शब्दो गकार इति लौकिकमस्ति वाक्यं
विस्पष्टमस्ति च पदद्वयमत्र वाक्ये ॥
प्राभाकरे च समये न गकारमात्रा-
दन्यत्पदद्वयनिगद्यमभीष्टमस्मिन् ॥ २७१ ॥

प्राभाकरमतेऽप्यखण्डार्थताप्रसिद्धिमाह । शब्दो गकार इति । अस्त्वेवंविधवाक्यस्य लोकप्रसिद्धिस्तस्यापि संसृष्टार्थतैव किं न स्यात् तत्राह । प्राभाकरे चेति । प्राभाकरे समये चास्मिन्वाक्ये पदद्वयनिगद्यं शब्दो गकार इति पदद्वयप्रतिपाद्यमन्यन्नाभीष्टमिति संबन्धः । अस्मिन्पदद्वयात्मकएतद्वाक्ये शब्दो गकार इति वाक्ये हि प्रयुक्तपदद्वयेन प्राभाकरैर्गकारव्यक्तिमात्रमभिधेयमित्यङ्गीकृतमितीदं वाक्यमखण्डार्थमभ्युपेयमिति भावः॥२७१॥

शब्दत्वजातिवचनो न हि शब्दशब्दः
श्रोत्रोपलम्भनतया तु निबन्धनेन ॥
वर्णान्ब्रवीति न हि जातिरिहाभ्युपेता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साक्षाद्गकारमयमाह गकारशब्दः ॥ २७२ ॥

ननु द्रव्यं घट इतिवाक्यमिव शब्दो गकार इति-वाक्यमपि परापरजातिद्वयविशिष्टाभेदं प्रतिपादयिष्य-तीति नाखण्डार्थमिति तत्राह । शब्दत्वजातिवचन इति । गत्वजातेरप्युपलक्षणम् । शब्दशब्दः शब्द इति शब्दः, एतद् गशब्दस्याप्युपलक्षणम् । शब्दशब्दस्य जा-तिवचनत्वाभावे व्यक्तिष्वानन्त्यव्यभिचाराभ्यां कथं वृत्तिरित्यत आह । श्रोत्रोपलम्भनतयेति । श्रोत्रोपल-भ्यत्वेन तटस्थेनोपाधिनेत्यर्थः । निबन्धनेन निमि-त्तेन । ननूपाध्यपेक्षया जातिर्लघीयसीति सत्यं किं तु जातेः संस्थानव्यङ्ग्यत्वनियमेनाद्रव्ये शब्दे तदसंभव इत्याह । न हि जातिरिति । अत एव गत्वमपि न जा-तिरिति गकारशब्दोऽपि साक्षाद् गकारव्यक्तिमेवाह । सा च व्यक्तिरेका संभवतीति नानन्त्यव्यभिचारदोषो-पीत्याशयेनाह । साक्षाद् गकारमिति । प्रभाकरैरद्रव्य-वृत्तिजात्यनभ्युपगमाच्छ्रोत्रग्राह्यत्वस्य शब्दप्रवृत्तिनि-मित्तस्य तच्छब्दादप्रतीतेर्गकारशब्दस्य चैकगकारमात्र-निष्ठत्वादधिकार्थाभावात्तस्याखण्डार्थतैव वक्तव्येति भावः ॥२७२ ॥

तस्मादखण्डविषये वचने विवादं
प्राभाकराः परिहरन्तु न चेदशक्यम् ॥
निर्वोढुमेतदिह वाक्यमितोऽन्यथा चे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दस्यार्थकल्पनमभीप्सितमिष्टहानिः ॥२७३॥

प्राभाकरं प्रत्यखण्डार्थप्रसिद्धिसमर्थनमुपसंहरति तस्मादिति। यस्मादुक्तविधयाऽखण्डार्थता तैरभ्युपेया तस्मादित्यर्थः। परिहरन्तु त्यजन्तु। न चेद्यदि न परिहरेयुः, इह तर्ह्येतदुदाहृतवाक्यं निर्वोढुमुपपादयितुमशक्यम्। यदि परापरजातिनिबन्धनं पदद्वयसामानाधिकरण्यं तैरभ्युपगम्येत तर्हि तत्सिद्धान्तक्षतिरित्याह। इत इति। उक्तप्रकारादित्यर्थः। अस्य प्रस्तुतवाक्यस्येतोऽन्यथार्थकल्पनमभीप्सितं चेदिष्टहानिरिति संबन्धः ॥ २७३ ॥

प्रातिपदिकान्यनतिरिक्तविषयाणि
प्राह भगवान्प्रथमशब्दितविभक्त्या ॥
पाणिनिरतः सकलतर्कसमयज्ञो
वष्टि वचसोरनतिरिक्तविषयत्वम् ॥ २७४ ॥

अखण्डार्थत्वे प्रागुदाहृतामपि पाणिनिसंमतिमतं पुनरप्युदाहरति तस्याऽन्यथासिद्धत्वशङ्कानिरासाय प्रातिपदिकेति। भगवान्पाणिनिः प्रातिपदिकानि विभक्तिवर्जितवृक्षादिशब्दान् प्रथमशब्दितविभक्त्या प्रथमेत्युक्तया विभक्त्या स्वादिरूपयाऽनतिरिक्तविषयाण्येकार्थविषयाणीति प्राहेति संबन्धः। पाणिनिः सु प्रातिपदिकार्थमात्रे प्रथमेति तदर्थे प्रथमां विभक्तिं विधत्त इति प्रकृतिप्रत्ययात्मकं तद्वाक्यमखण्डार्थम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैवं विभक्तेस्तत्पर्यायत्वं तत्सिद्धानुवादत्वं चेति न त-
योर्वाक्यतेति वाच्यम्। तथा सहैव प्रातिपदिकस्य प्रयो-
गनियमेन स्वार्थप्रतिपादकत्वेन च तदुभयाभावात्।
यस्मादयं पाणिनिः प्रातिपदिकप्रथमयोरेकार्थत्वमाह।
तोऽयं सकलन्यायाऽभिज्ञोऽन्यत्राऽप्यपर्यायपदयोस्तादृ-
शपदानां चानतिरिक्तविषयत्वं वष्टीच्छतीत्युपसंहर-
ति। अत इति ॥ २७४ ॥

इयं घटव्यक्तिरितीदृशेषु च
प्रसिद्धमेवैकरसार्थगोचरम् ॥
पदद्वयं लोकवचःसु तेन च
प्रशस्यते नात्र विवादसंग्रहः ॥ २७५ ॥

किं च लोकेऽपर्यायपदवद्वाक्यप्रयोगस्यैकार्थे दर्शना-
न्नात्र वादिभिर्विवादः कार्य इत्युपसंहरन्नाह। इयं घट-
व्यक्तिरिति। इयं घटव्यक्तिरित्येवमादिषु लोकवचःसु प-
दद्वयमेकरसार्थगोचरमेवेति प्रसिद्धं येन तेनात्रास्मिन्न-
र्थे विवादसंग्रहो नैव प्रशस्यते न युज्यते वादिनामिति शे-
षः। इयमिति पुरःस्थितवस्तुमात्रं परामृश्य तस्य घट-
व्यक्त्यभेदमात्रं विवक्षितमिदं वाक्यं प्रतिपादयतीति त-
देकरसार्थमित्यर्थः ॥ २७५ ॥

न च प्रमाणान्तरयोग्यतायां
प्रयोजकं स्यात्परिनिष्ठितत्वम् ॥
यतः प्रमाणान्तरयोग्यतायां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दस्यार्थकल्पनमभीप्सितमिष्टहानिः ॥२७३॥

प्राभाकरं प्रत्यखण्डार्थप्रसिद्धिसमर्थनमुपसंहरति। तस्मादिति। यस्मादुक्तविधयाऽखण्डार्थता तैरभ्युपेया तस्मादित्यर्थः। परिहरन्तु त्यजन्तु। न चेद्यदि न परिहरेयुः, इह तर्ह्येतदुदाहृतवाक्यं निर्वोढुमुपपादयितुमशक्यम्। यदि परापरजातिनिबन्धनं पदद्वयसामानाधिकरण्यं तैरभ्युपगम्येत तर्हि तत्सिद्धान्तक्षतिरित्याह। इत इति। उक्तप्रकारादित्यर्थः। अस्य प्रस्तुतवाक्यस्येतोऽन्यथार्थकल्पनमभीप्सितं चेदिष्टहानिरिति संबन्धः ॥ २७३ ॥

प्रातिपदिकान्यनतिरिक्तविषयाणि
प्राह भगवान्प्रथमशब्दितविभक्त्या ॥
पाणिनिरतः सकलतर्कसमयज्ञो
वष्टि वचसोरनतिरिक्तविषयत्वम् ॥ २७४ ॥

अखण्डार्थत्वे प्रागुदाहृतामपि पाणिनिसंमतिमत्र पुनरप्युदाहरति तस्याऽन्यथासिद्धत्वशङ्कानिरासाय प्रातिपदिकेति। भगवान्पाणिनिः प्रातिपदिकानि विभक्तिवर्जितवृक्षादिशब्दान् प्रथमशब्दितविभक्त्या प्रथमेत्युक्तया विभक्त्या स्वादिरूपयाऽनतिरिक्तविषयाण्येकार्थविषयाणीति प्राहेति संबन्धः। पाणिनिः सूत्रे प्रातिपदिकार्थमात्रे प्रथमेति तदर्थे प्रथमां विभक्तिं विधत्त इति प्रकृतिप्रत्ययात्मकं तद्वाक्यमखण्डार्थम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैवं विभक्तेस्तत्पर्यायत्वं तत्सिद्धानुवादत्वं चेति न त-
योर्वाक्यतेति वाच्यम्। तथा सहैव प्रातिपदिकस्य प्रयो-
गनियमेन स्वार्थप्रतिपादकत्वेन च तदुभयाभावात्।
यस्मादयं पाणिनिः प्रातिपदिकप्रथमयोरेकार्थत्वमाह।
तोऽयं सकलन्यायाऽभिज्ञोऽन्यत्राऽप्यपर्यायपदयोस्तादृ-
शपदानां चानतिरिक्तविषयत्वं वष्टीच्छतीत्युपसंहर-
ति। अत इति ॥ २७४ ॥

इयं घटव्यक्तिरितीदृशेषु च
प्रसिद्धमेवैकरसार्थगोचरम् ॥
पदद्वयं लोकवचःसु तेन च
प्रशस्यते नात्र विवादसंग्रहः ॥ २७५ ॥

किं च लोकेऽपर्यायपदवद्वाक्यप्रयोगस्यैकार्थे दर्शना-
न्नात्र वादिभिर्विवादः कार्य इत्युपसंहरन्नाह। इयं घट-
व्यक्तिरिति। इयं घटव्यक्तिरित्येवमादिषु लोकवचःसु प-
दद्वयमेकरसार्थगोचरमेवेति प्रसिद्धं येन तेनात्रास्मिन्न-
र्थे विवादसंग्रहो नैव प्रशस्यते न युज्यते वादिनामिति शे-
षः। इयमिति पुरःस्थितवस्तुमात्रं परामृश्य तस्य घट-
व्यक्त्यभेदमात्रं विवक्षितमिदं वाक्यं प्रतिपादयतीति त-
देकरसार्थमित्यर्थः ॥ २७५ ॥

न च प्रमाणान्तरयोग्यतायां
प्रयोजकं स्यात्परिनिष्ठितत्वम् ॥
यतः प्रमाणान्तरयोग्यतायां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रयोजकं रूपरसादिमत्त्वम् ॥ २७६ ॥

एवं वेदान्तानामखण्डैकरसे श्रुतिन्यायाभ्यां तात्प-
र्यं निरूपितम् , इदानीं किं न्न प्रमान्तरमपेक्ष्य गिरः
प्रवृत्तिः सिद्धेषु वस्तुषु जगत्युपलब्धपूर्वेत्यनेन सिद्ध-
वस्तुविषयवाक्यस्य मानान्तरसंवादायत्तार्थवत्त्वनिश्च-
यतया वेदान्ता यदि सिद्धब्रह्मपराः स्युस्तर्हि मानान्त-
रसापेक्षाः स्युर्लौकिकसिद्धवाक्यवदिति यदुक्तं तत्र मा-
नान्तरयोग्यार्थत्वोपाधेः , न च तदपि सिद्धार्थत्वे-
वेदान्तेष्वनुमेयमिति साधनव्यापकतोपाधेरिति वा-
च्यम् , यतो न यत्परिनिष्ठितं तत्प्रमाणान्तरयोग्यमि-
ति नियमोऽस्ति येन तत्प्रमाणवेदान्ते मानान्तरसापेक्ष-
ता स्यादित्याशयेनाह । न च प्रमाणान्तरेति । प्रयोजक-
गमकं व्याप्यमिति यावत् । परिनिष्ठितत्वं सिद्धत्वम्,
कुत इत्यत आह । यत इति । रसः आदिर्यस्य स्पर्शा-
देः सः , रूपं च रसादिश्च रूपरसादी, तावस्य स्तः स रूप-
रसादिमान् तस्य भावस्तत्त्वमित्यतद्गुणसंविज्ञानो ब-
हुव्रीहिः । रूपादिविशेषो हि द्रव्ये प्रत्यक्षप्रमाणस्य प्रवृ-
त्तौ मूलं व्याप्त्यादिविशेषश्चानुमानादेरित्यर्थः ॥ २७६ ॥

ततस्तु रूपादिविहीनरूपे
प्रमान्तराऽगोचरचित्स्वरूपे ॥
वचः प्रमाणान्तरनिस्पृहं सत्
प्रमाणमत्रात्मनि निर्विवादम् ॥ २७७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलितमाह । तत इति । यतो रूपादिमत्त्वमेव शब्दातिरिक्तप्रमाणप्रवृत्तौ मूलं ततस्तद्रहिते अत एव प्रमाणान्तराऽयोग्येऽस्मिन् चैतन्यात्मनि सापेक्षत्वानुमानस्योक्तोपाधिदुष्टत्वेन वेदान्तवाक्यं प्रमाणान्तरनिरपेक्षं सन्निःसंदिग्धं प्रमाणं भवतीत्यर्थः ॥ २७७ ॥

लोकप्रसिद्धपदगोचरतानिमित्त-
मन्यप्रमाणविषयत्वमिह प्रसिद्धम् ॥
लोकप्रसिद्धपदगोचरता न चास्मिन्
ब्रह्मात्मनीति च तदत्र निवारणीयम् ॥२७८॥

किं च लोके मानान्तरस्याऽन्यथासिद्धत्वान्न तत्सिद्धार्थशब्दप्रामाण्यनिमित्तमित्याह । लोकप्रसिद्धेति । लौकिकमानसिद्धा या पदगोचरता तन्निमित्तं तद्व्युपकमित्यर्थः । ततः किं तत्राह । लोकप्रसिद्धपदेति । अस्मिन्निर्विशेषे वेदान्तलक्ष्ये । फलितमाह । इति चेति । तदन्यप्रमाणविषयत्वं सर्वपदलक्ष्ये ब्रह्मणि संगतिग्रहस्यानपेक्षत्वान्न तन्निमित्तमानान्तरापेक्षा तत्र शब्दस्येति भावः ॥ २७८ ॥

लोकप्रयुक्तपदगोचरताऽस्ति कार्ये
तेनाऽस्तु कार्यपरवाक्यमशेषतस्ते ॥
मानान्तरेषु परतन्त्रतयाऽप्रमाणं
स्वार्थे न दूषणमिदं श्रुतिमस्तकेषु ॥ २७९ ॥

एवं स्वपक्षे शब्दस्य लक्ष्ये ब्रह्मणि मानान्तरनिरपेक्षं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रामाण्यमुपपाद्य येषां वादिनां कार्यमेव वेदार्थस्तच्च लिङाद्यभिधेयमिति मतं तेषामिदं सापेक्षत्वदूषणं दुष्परिहरमित्याशयेनाह । लोकप्रयुक्तेति । मानान्तरसिद्ध एव संगतिग्रहो वक्तव्य इति कार्ये लोकप्रयुक्तपदगोचरताऽस्तीत्युक्तम् । फलितमाह । तेनेति । लोकप्रयुक्तपदगोचरत्वेन ते सापेक्षत्वप्रसङ्गेन सिद्धे वेदाप्रामाण्यमभ्युपेत्य कार्ये तत्प्रामाण्याभ्युपगन्तुस्तवाशेषतोऽशेषेषु मानान्तरेषु परतन्त्रतया मानान्तरापेक्षया स्वार्थेऽप्रमाणमस्तु स्यादिति संबन्धः । अप्रमाणमिति पदच्छेदः । स्वपक्षे चोक्तविधया नेदं दूषणमस्तीत्याह । न दूषणमिति । मानान्तरायत्तं स्वार्थप्रामाण्यमित्येवंरूपमिदं दूषणं श्रुतिमस्तकेषु वेदशिरस्सु न ब्रह्मपदस्य लिङादिपदवल्लौकिकपदत्वाभावादित्यर्थः ॥ २७९ ॥

न च क्रियाकारितसंहतीनि
पदानि लोके नियमेन वक्तुम् ॥
समीहते पक्वमतिः पदानां
क्रियां विनाप्यन्वयदर्शनेन ॥ २८० ॥

यत्पुनरुक्तं किं च क्रियापदमपेक्ष्य पदानि वाक्यभावेन सम्यगिह संगतिमाप्नुवन्तीत्यादिना वेदान्तेषु क्रियापदाभावान्न तन्निमित्तः पदानां परस्परं समन्वय इति कुतस्ततो वाक्यार्थप्रमितिस्तत्राह । न च क्रिया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारितेति । क्रिया तिङन्तं पदं तन्निमित्ता संहतिः समन्वयो येषां पदानां तानि, समीहते इच्छति, वक्तुं न समीहत इति सम्बन्धः । पक्वमतिः लौकिकन्यायाभिज्ञः । कुत इत्यत आह । पदानामिति ॥ २८० ॥

महीभुजोऽयं पुरुषो मनस्वी
वनस्पतेस्तत्फलमित्यपीह ॥
क्रियां विनाप्यन्वयवन्ति लोके
पदानि दृष्टानि बहूनि वक्तुः ॥ २८१ ॥

तदेव दर्शनमुदाहरति । महीभुजोऽयमिति । कस्यायं पुरुषः कस्येदं फलमिति तत्सबन्धिविशेषमात्रजिज्ञासायामयं मनस्वी पुरुषो महीभुज इत्यादिना सम्बन्धिविशेषमात्रनिष्ठोऽयं प्रयोग इति क्रियापदापेक्षाभावान्न तन्निमित्तस्तत्पदसमन्वयः, लोके वक्तुः पदानि वक्त्रा प्रयुक्तानि बहूनि पदानीति संबन्धः । आकाङ्क्षायोग्यतासंनिधिमत्त्वं हि पदानां परस्परान्वये निमित्तं न क्रियापदं न वा तद्विशेषः । तस्याप्याकाङ्क्षादियुक्तस्यैवाऽन्वयित्वेन लाघवेन तावन्मात्रस्यैव तत्प्रयोजकत्वादतो वेदान्तपदानां परस्परान्वये न किंचिद्बाधकमिति भावः ॥ २८१ ॥

क्रियापदं वेदशिरःस्वपीष्यते
विवक्षितार्थानुगुणं तु तन्मतम् ॥
विवक्षितार्थप्रतिपत्तिघाति तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रियापदं स्वीकृतमप्यनर्थकम् ॥ २८२ ॥

एवं तात्त्विकं परिहारमुक्त्वा तदभ्युपगम्याप्याह। क्रियापदमिति। न चैवं वेदान्तानामपि क्रियानिष्ठत्वप्रसङ्ग इत्याह। विवक्षितार्थेति। परं तु तत्क्रियापदं वेदान्तेन प्रतिपिपादयिषितोऽर्थोऽखण्डैकरसं ब्रह्म तदनुगुणं तत्र वेदान्तप्रामाण्याविरोधीत्यर्थः। अनुगुणपदव्यावर्त्त्यमाह। विवक्षितार्थप्रतिपत्तीति। उपासीतेत्यादि क्रियापदं स्वीकृतं पठितमपि तत्रानर्थकमित्यर्थः ॥ २८२ ॥

अस्त्यस्म्यसीति च पदं प्रचुरं क्रियाया
वेदान्तवाक्यगतमादरतः पठन्ति ॥
तन्मात्रतः सकलवेदशिरःपदानां
संघातसिद्धिरिति वेदशिरोनिषण्णाः ॥ २८३ ॥

विवक्षितार्थानुगुणं क्रियापदं वेदान्ते किमस्तीत्यपेक्षायामाह। अस्त्यस्म्यसीति। अस्ति ब्रह्मेति चेद्वेदाहं ब्रह्मास्मि तत्त्वमसीत्यादौ क्रियायाः पदमस्तीत्यादितिङन्तपदमित्यर्थः। प्रचुरमनेकमिति पदविशेषणम्। तस्यावेदत्वशङ्कानिवृत्तये आदरत इत्युक्तम्। फलितमाह। तन्मात्रत इति। वेदशिरोनिषण्णाः समन्वयसूत्रकृद्बादरायणभगवत्पादप्रभृतयः ॥ २८३ ॥

यत्तु प्रमाणमनुभूतिरिति प्रमाण-
सामान्यलक्षणमनूद्य पुनर्वदन्ति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्ताप्रमाणघटनां प्रति योग्यताऽतो
नास्त्यर्थनिष्ठवचनेष्वनपेक्षतेति ॥ २८४ ॥

नन्वेवं वेदान्तानामस्त्यर्थनिष्ठत्वेन सैव मानान्तरसापेक्षता स्यात्, अस्त्यर्थो हि सत्ता सा च प्रमाणविषयत्वमेव न तदतिरिक्तसत्ता जात्यादि सत्तादेरसत्त्वप्रसङ्गात्, ततश्च सदात्मकब्रह्मणो मानान्तरविषयत्वमावश्यकमिति प्रभाकराः, तदनुवदति। यत्त्विति। तदुक्तविधया तन्मतमनुपपन्नमिति दूषयितुं तदुक्तं प्रकारमाह। प्रमाणमनुभूतिरिति। अनुभूतिः प्रमाणमिति प्रमाणसामान्यलक्षणमुक्त्वा पश्चात्प्रमाणविषयतां प्रति योग्यता सत्तेति यद्वदन्ति तद्ध दुर्घटमित्यग्रिमेण सम्बन्धः। तेषामेव वदतामाशयमाह। अतो नेति। अनपेक्षता न स्यादिति संबन्धः॥ २८४ ॥

तद्ध दुर्घटं न खलु संविदियं स्वयोग्या
न ह्यात्मनि स्थितिमुपैष्यति योग्यताऽस्याः ॥
वस्त्वन्तरोपनिहितस्वपदत्वहेतो-
र्न ह्यात्मरूपदहने दहनस्य शक्तिः ॥ २८५ ॥

दुर्घटत्वमेवाह। न खल्विति। किं संविद्विषयत्वं सत्त्वमुत तद्योग्यता। नाद्यः, तत्पूर्वमर्थस्यासत्त्वप्रसङ्गात्। द्वितीये च संविदि सास्ति वा न वा। आद्ये किं स्वविषयत्वस्य योग्यता किं वा संविदन्तरविषयत्वस्य। द्वितीये संविदोऽस्वप्रकाशत्वापत्तिरित्यभिप्रेत्याद्याभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वे हेतुमाह । न हीति । अस्याः संविदो योग्यता
तन्निरूपितविषयत्वस्य योग्यता आत्मनि स्वस्मि
स्थितिं नोपैष्यति न युज्यत इत्यर्थः । कुतो न युज्य
तत्राह । वस्त्वन्तरेति । स्वस्मादन्यस्मिन्नेव घटादावु
निहितमुपक्षिप्तं यत्स्वपदत्वं स्वविषयत्वं तस्माद्धेतो
रित्यर्थः । संविद्विषयत्वस्य तदन्यवृत्तित्वनियमात्तस्
तत्र संभवतीत्यर्थः । संविदः स्वगोचरत्वाभावे दृष्टा
न्तमाह । न हीति । आत्मरूपदहने स्वभस्मीका
इत्यर्थः ॥ २८५ ॥

संवित्प्रमाणघटनां प्रतियोग्यतां चे-
न्नेयं बिभर्त्ति न सती भवितुं समर्था ॥
तद्योग्यतैव यदि मातृघटादिसत्ता
तस्याप्यसत्त्वमिति शून्यमुपाजिहीथाः ॥ २८६ ॥

संविदि सा योग्यता नेति द्वितीयं पक्षमनूद्य प्रति
क्षिपति । संवित्प्रमाणेति । घटनां संबन्धं विषय
मिति यावत् । संविदि प्रमाणविषयत्वयोग्यताभावे
यं सती न स्यात् । प्रमाणविषयत्वयोग्यताया एव
न्मते वस्तुनः सत्तारूपत्वादित्यर्थः । अस्तु तर्ह्य
सेति चेन्न । तदनुभवप्रसङ्गात् । किं चैवं तदधीन
सर्वमेवासत्स्यादित्याह । तद्योग्यतैवेति । शून्यमु
जिहीथाः शून्यमागच्छेः, त्वमपि शून्यवादी भवि
सीत्यर्थः ॥ २८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुस्वभाव इति सत्त्वमतो गृहाण
तच्च द्विधेति वितथाऽवितथत्वभेदात् ॥
सत्त्वं द्विरूपमितरेतरसंकरेण
सच्छब्दवाच्यमिति च व्यवहारकाले ॥ २८७॥

यतो मानयोग्यता न सत्त्वम् अत इत्युपसंहरति। वस्तुस्वभाव इति। बाधायोग्यवस्तुस्वभाव इत्यर्थः। अतः सत्त्वं वस्तुस्वभाव इति गृहाणाङ्गीकुर्विति संबन्धः। ननु किमात्मवस्तुनः स्वभावः किं वा प्रपञ्चस्योतोभयस्य वा। नाद्यद्वितीयौ प्रपञ्चात्मनोस्तदभावप्रसङ्गात्, तृतीये तु द्वैतापात इत्याशङ्क्याकाशादावस्तितेत्यादावुक्तमनुस्मारयन्नाह। तच्च द्विधेति। गृहाणेत्यनुषङ्गः। द्वैविध्यमेवाह। वितथेति। वितथमसत्यं वस्तुतो व्यवहारकाले सदवितथं परमार्थसदितिभेदादित्यर्थः। नन्वेवमस्तिशब्दस्यानेकार्थतापत्तिरित्याशङ्क्याह। इतरेतरेति। संकरेण मिश्रेण। तृतीयेत्थंभावे। शबलात्मना तत्सच्छब्दवाच्यमिति गृहाण अतो नोक्तदोष इत्यर्थः॥ २८७॥

उत्सृज्य तत्र वितथांशमथेतरस्मिन्
संवित्स्वरूपपरमार्थसति स्वरूपे ॥
बुद्धिं कुरु प्रणिदधत्प्रणयेन भूम्नि
ब्रह्माहमस्मि परमार्थसदित्यजस्रम् ॥ २८८ ॥

तर्ह्यस्त्यर्थ आत्मा द्विरूपः स्यादित्याशङ्क्य प्रागुक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेवार्थं स्मारयति। उत्सृज्येति। तत्र वाच्ये इतरस्मिन्
रूप इति संबन्धः। तत्स्वरूपमाह। संवित्स्वरूपेति।
तच्च परमार्थत्वे हेतुतयोक्तम्। एवंभूतस्वरूपे भूम्नि
णयेन श्रद्धया प्रणिदधत् चित्तं प्रत्यक्प्रवणं कुर्वन्
रमार्थसद्ब्रह्माहमस्मीति बुद्धिमजस्त्रं कुर्वीति संबन्धः
तथा च नोक्तदूषणमिति भावः ॥ २८८ ॥

ब्रह्म स्वयंप्रभमतः शबलेषु तस्य
मानान्तरानधिगतेष्वपि शब्दशक्तिः ॥
रूपेषु वृद्धजनसंव्यवहारहेतोः
शक्याग्रहीतुमुदितेन यथानभिज्ञैः ॥ २८९ ॥

यच्चोक्तं मानान्तरं यदि न चेच्छक्ति शब्दशक्ते
ग्रहः कथमिति प्रतिपादनीयमिति तत्राह। ब्रह्म स्व
प्रभमिति। ततः किं तत्राह। अतः शबलेष्विति।
त्वाहमादिशब्दवाच्यसाक्षिभास्याहंकारतद्वृत्तिश
भिप्रायम्, सदादिवाच्यघटादिशबलं तु चक्षुरादि
म्, ब्रह्मपदवाच्यं च कार्यलिङ्गाख्यतर्केण ब्रह्मपद
वव्युत्पत्त्या चोपस्थितमेव, तदभिप्रायेणापि शब्दो
नान्तरानधिगतेषु शबलेषु तस्य रूपेष्विति संबन्ध
दितेन प्रागुक्तेन मार्गेणानभिज्ञैरविवेकिभिर्यद्यपि
क्यतात्पर्यगम्ये ब्रह्मणि किमपि मानं न प्रवर्त
थापि तस्य शबलेषु यथा प्रमाणं यथानुभवं श
तिर्ग्रहीतुं शक्यत इति न तदर्थमपेक्षितप्रमाणेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तानामनुवादता न वा संगतिग्रहविरह इति भावः॥२८९॥

लोकप्रसिद्धार्थपदान्तराणां
समीपसंकीर्तनतोऽपि शक्तिः ॥
ब्रह्मादिशब्दस्य सुखावसेया
यथा हि यूपादिगिरस्तथैव ॥ २९० ॥

ब्रह्मादिपदव्युत्पत्तावुपायान्तरं सदृष्टान्तमाह । लोकप्रसिद्धेति । यतो वा इमानि भूतानि जायन्त इत्यादि तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्ये ब्रह्मपदव्यतिरिक्तानां यतो वेत्यादिपदानां लोकप्रसिद्धार्थानां समीपे संकीर्त्तनेनापि तर्कविधयोपस्थिते जगत्कारणरूपेऽद्वयेर्थे ब्रह्मादिशब्दस्य शक्तिः सुखावसेया भवति । यथा यूपं तक्षति यूपमष्टास्त्री करोतीत्यादिप्रसिद्धार्थतक्षणादिवाचकपदसमभिव्याहारसामर्थ्यात्तक्षणादिसंस्कारविशिष्टो यूपशब्दार्थः । एवमाहवनीयमादधातीत्यादिवाक्य आधानसंस्कारवानग्निराहवनीयशब्दार्थ इति निश्चीयते तथैवेत्यर्थः ॥ २९० ॥

विनापि शक्तिग्रहणं पदानां
परात्मनोर्वाचकभावभाजाम् ॥
भवेत्परब्रह्मणि वेदवाक्यात्
प्रतीतिरन्यप्रतिषेधनेन ॥ २९१ ॥

इदानीं ब्रह्मादिपदानां शक्तिग्रहाभावेऽपि निखिलप्रपञ्चनिवारकनिषेधवाक्यसामर्थ्यान्निष्प्रपञ्चं ब्रह्म सि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्यतीति स्वासंमतमपि पक्षमाह । विनापीति । प
परमात्मा आत्मा च तयोर्वाचकभावभाजां वाचक
युक्तानां पदानामिति संबन्धः । अन्यस्य ब्रह्मातिरि
प्रपञ्चस्य । नेह नानेत्यादिप्रतिषेधनेनेत्यर्थः ॥ २११ ॥

नञः प्रपञ्चप्रतिपादकस्य च
प्रतीत्य शक्तिं व्यवहारतः स्थितः ॥
पदस्य शक्नोति परं समीक्षितुं
श्रुतेः प्रपञ्चप्रतिषेधमार्गतः ॥ २१२ ॥

ननु न तावद्ब्रह्मणि प्रमाणान्तरेण प्रतिषेधः सम
वति शब्दस्तु शक्तिग्रहमपेक्षत इति कथं विनापि श
क्तिग्रहणमित्युक्तमित्याशङ्क्य नञादिपदानां लोक
सिद्धार्थत्वेन विनापि ब्रह्मणि पदशक्तिग्रहं तदुपप
त इत्याह । नञः प्रपञ्चप्रतिपादकस्येति । स्थितः
मान् नञः पदस्य नाना किं च नेत्यादिनिषेध्यप्रप
प्रतिपादकस्य च पदस्य व्यवहारतः शक्तिं प्रतीत्य
सम्बन्धः । स्थित इति । अर्थाद्व्यवहारभूमाविति लभ्य
परं परमात्मतत्त्वं श्रुतेर्वेदान्तवाक्यात्प्रपञ्चप्रतिषेध
र्गतः समीक्षितुं शक्नोतीति योजना । अत्र यदि प
मात्मनि शक्तिग्रहो नापेक्ष्यते तर्हीह एष इत्यादि
परमात्मानमनूद्य तत्र कथं प्रपञ्चो निषिध्येत न
निरधिष्ठानो निषेधः पर्यवस्यति ततो वा कथमा
सिध्येत् । नन्वात्मा स्वप्रकाश इति चेत्तर्हि किं प्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रनिषेधेनापि तस्य निष्प्रपञ्चतासिद्धये तन्निषेध इति चेन्न । तदनूद्य निषेधाभावे कथं तस्य तदपि सिध्येत। इहेत्यादिपदस्य तत्र सङ्गतिग्रहे च किमपराद्धं ब्रह्मात्मादिपदैः,सत्यादिपदलक्षणां विना वर्णितब्रह्मस्वरूपासिद्धेश्चेत्येतन्मतं न ग्रन्थकर्तृ सम्मतमिति द्रष्टव्यम्॥२९२॥

ब्रह्मास्मीति वचोनिविष्टपदयोर्मानं भवेदन्वयः
साक्षाददृयवस्तु तस्य च भवेन्मेयं ततस्तद्गतेः ॥
यद्यत्र प्रमितिं करोति भवति प्रामाण्यमत्रास्य च
स्पष्टं दृष्टमिदं हि युक्तिघटितं रूपे यथा चक्षुषः॥२९३॥

एवमात्मस्वभावस्यैव सत्त्वात्तस्य चोक्तविधया मानान्तरायोग्यत्वात्तच्छ्वले ब्रह्मादिपदसंगतिग्रहस्यापि सुकरत्वात्प्रत्यग्ब्रह्मणि वेदान्तप्रामाण्यमबाधितमिति तयोर्मानमेयभावसिद्धिरित्याह । ब्रह्मास्मीति । ब्रह्मास्मीतिपदयोरन्वय इति सम्बन्धः । मानंमितिजननयोग्यः । साक्षादपरोक्षं प्रत्यगभिन्नमिति यावत्। तस्य च ब्रह्मास्मीति वचनस्य, चोऽवधारणे भवेदेवेति सम्बन्धः। मेयमिति। विषयतायोग्यम् उभयत्र प्रमाणाह। तन इति। तस्माद्वचस इत्यर्थः। तस्याद्वयवस्तुनः। गतेरवगतेरित्यर्थः । ततश्चायोग्यात् फलानिष्पत्तेः तदुभयं तद्योग्यमित्यर्थः । एतस्याप्रमाणे व्यभिचारमाशङ्क्य प्रमाणसामान्यलक्षणं कथयन्तं परिहरति । यद्यत्रेति । यत्करणं यस्मिन्नर्थे प्रमितिमबाधिताज्ञाता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थावबोधं करोत्यत्रार्थे ऽस्य प्रामाण्यं प्रमाजनक
योग्यत्वं भवत्येव इदं हि स्पष्टं दृष्टं युक्तिघटि
च। एतदेवोदाहरणविशेषे दर्शयति । रूपे यथा चक्षु
इति। यदनधिगतमबाधितं येन निश्चीयते तत्र त
त्प्रमाणमिति हि प्रमाणसामान्यलक्षणं यथा तादृशा
पादौ चक्षुरादि, नैवमप्रमाणमिति भावः ॥ २१३॥

मानान्तरानधिगतं परिनिष्ठितं यद्
वेदः समर्पयति चेतसि तत्परः सन् ॥
तत्तथ्यमेव भवतीति समाश्रयस्व
श्रेयस्करो विधिगिरोऽवगतो यथैव ॥ २१४॥

प्रमाणसामान्यलक्षणं प्रकृते दर्शयन्फलमाह। मा
नान्तरानधिगतमिति। यद्ब्रह्म तदन्यद्वा वेदस्तत्ता
र्यवान् भूत्वा मानान्तरानधिगतं परिनिष्ठितमपि यच्चे
तसि समर्पयति बोधयति तत्तथ्यमेवाबाध्यमेव भव
तीति समाश्रयस्व यथैव विधिवाक्यादवगतो धर्म
इति सम्बन्धः। अत्रोपास्यगुणसंसर्गस्य व्यावृत्तये तत्प
इत्युक्तम् । वेदतात्पर्यगोचरविपरीतग्राहिण एवाभा
नत्वात्तदर्थोऽबाधित एवेति वेदस्तत्र प्रमाणमेवे
भावः ॥ २१४ ॥

निष्पन्नमेव यदि वा पुरुषप्रयत्न-
निष्पाद्यमस्तु तदनङ्गमिह प्रमेये ॥
एवं विधिर्भवतु शब्दसमन्वयो वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रामाण्यकारणमिदं न वदन्ति सन्तः ॥ २९५ ॥

ननु कार्ये कार्यवाक्यवद्ब्रह्मवाक्यं तत्र कथं प्रमाणं स्यात्, कार्यत्वस्य शब्दमेयत्वे तद्वचनत्वस्य शब्दप्रमाणत्वे च प्रयोजकत्वात्, न चाकार्यत्वमेव वेदार्थत्वे प्रयोजकमेवं वेदस्य प्रमाणत्वेऽपि तद्वचनत्वमेव प्रयोजकमस्तु न कार्यत्वादीति वाच्यम्, प्रयोजकगौरवापातादिति चेन्न, त्वन्मतेऽपि महाजनाश्रितवेदान्तप्रामाण्यतदर्थबाधप्रसङ्गान्नोभयमपि प्रयोजकं किं त्वदन्यदेवेत्यभिप्रेत्याह । निष्पन्नमिति । यदि यदित्यर्थः । वाशब्दश्चार्थे । अस्तु स्यात् । यन्निष्पन्नं स्याद्यच्च पुरुषप्रयत्ननिष्पाद्यं तदुभयमिह वेदप्रमेयत्वे ऽनङ्गमप्रयोजकम् । एवं विधिर्वा भवतु शब्दसमन्वयः सिद्धवाक्यं वा इदमुभयं प्रामाण्यकारणमिति सन्तो न वदन्ति । अबाधितानधिगतनिश्चायकशब्दत्वस्यैव तत्प्रयोजकत्वादिति भावः । अथ वा चोदनासूत्रबलात् कार्यमेव वेदार्थः, चोदनैव प्रमाणमिति सिद्धं तत्कथं सिद्धवाक्यमपि प्रमाणं तदर्थोऽपि वेदार्थ इत्याशङ्क्याह । निष्पन्नमिति । निष्पन्नत्वमित्यर्थः, निपातानामनेकार्थत्वाद्यदि वेतीवार्थे, यथा निष्पन्नत्वं वेदप्रमेयत्वेऽनङ्गं तथा तत्पुरुषप्रयत्ननिष्पाद्यत्वमस्त्विति सम्बन्धः । वेत्यपि दृष्टान्तार्थे, शब्दसमन्वयत्वं वेदप्रामाण्यकारणमिति यथा सन्तो न वदन्त्येवमिदं त्वदुक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मपि न भवतु । इदंशब्दार्थमाह । विधिरिति । विधि त्वमित्यर्थः । यद्वा चोदनासूत्रबलात्कार्यत्वादेव वेदः प्रमेयत्वादौ न प्रयोजकं किं तु वक्ष्यमाणमेवाबाधत्वादि युक्तं प्रमेयम्, प्रमाणमपि तादृगर्थनिश्चायकमेव तच्च सिद्धं कार्यं वा भवतु न सिद्धत्वादिमात्रं प्रमेयत्वनिमित्तम्, न वा विधित्वादि प्रामाण्यप्रयोजकमित्याशयः । अत्रानङ्गमेवेति सम्बन्धः । तन्निष्पन्नमेवमित्यनन्तरं तादृगर्थनिश्चायक इति शेषः । तस्मादबाधितानधिगतश्रोतृसमीहितमेव वेदतात्पर्यगम्यं तादृगर्थनिश्चायकत्वेनैव वेदोऽपि प्रमाणम् । अन्यथा भोजनादिकार्येण विषभक्षणादिना वा तुल्यस्य त्वदभिमतकार्यस्य तद्वाक्यतुल्यचोदनायाश्च प्रमेयत्वाद्यनिर्वाहात् एवं च लाघवादुक्तमेव वेदप्रमेयत्वादौ प्रयोजकं चोदनासूत्राशयस्तूपरिष्टात् द्रष्टव्य इति ॥ २९५ ॥

नीलैकगोचरतया नियतं न चक्षु-
र्नाप्यस्य पीतविषये नियमोऽस्ति शक्तेः ॥
तद्वन्न वेदवचसामपि शक्तियोगः
कार्यादिवस्तुषु कथं चन पक्षपाती ॥२९६॥

यद्यपि वेदः सिद्धं कार्यं च बोधयति तथापि सिद्धत्वादि वेदबोध्यत्वे न प्रयोजकं न वा तदन्यतरबोधकत्वं वेदस्य प्रामाण्ये प्रयोजकमिति न्यायत उक्तं दृष्टान्तेनाप्याह । नीलैकगोचरतयेति । अस्य चक्षुषः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पक्षपाती कार्यमात्रगोचरः सिद्धमात्रगोचरो वा नेति सम्बन्धः ॥ २१६ ॥

यद्बादरायणमतं परिगृह्य पूर्वं
श्रेयस्करेऽनधिगते खलु चोदनायाः ॥
प्रामाण्यमुक्तमिदमस्य समन्वयस्य
वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति ॥ २१७ ॥

उक्तमर्थं जैमिनीयन्यायबलादपि द्रढयति । यद्बादरायणमिति । परिगृह्याश्रित्य पूर्वं पूर्वतन्त्रेऽस्य समन्वयस्य प्रस्तुतवेदान्तवाक्यस्य पूर्वं बादरायणमतमाश्रित्यानधिगते धर्मे चोदनाया यत्प्रामाण्यमुक्तमिदमस्य समन्वयस्य वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति खल्विति सम्बन्धः । पूर्वतन्त्रे हि जैमिनिनाऽनुपलब्धेऽर्थे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति सूत्रांशेनानपेक्षत्वेनैव वेदप्रामाण्यं बादरायणसम्मतमित्याश्रित्य धर्मेऽप्युपदेशस्य तथैव प्रामाण्यं व्यवस्थापितं तदिहालौकिकार्थापौरुषेयवेदान्तेष्वप्यस्तीति कथं न ते ब्रह्मणि प्रमाणम् । चोदनासूत्रं तु स्वस्य विचार्यतया प्रतिज्ञातकर्मवाक्याशयेनैवेति वेदान्तानां ब्रह्मणि प्रामाण्यं जैमिनेरपि सम्मतमन्यथा धर्मेऽपि तन्न निर्वहेदिति भावः ॥ २१७ ॥

मानान्तरानधिगतं त्ववगम्यमानं
मेयं भवेदिति हि मेयविदो वदन्ति ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानान्तरानधिगते विषयेऽवबोधं
कुर्वत्प्रमाणमिति मानविदां प्रसिद्धिः ॥ २९८

तस्मात्सकलप्रमाणप्रमेयसाधारणमेव रूपं वेदव्र- र्थयोरप्याश्रयणीयं तच्चात्राप्यस्त्येवेत्याशयेन सर्वप्र- माणप्रमेयसाधारणरूपमुक्तं भट्टाचार्यप्रभृतीनां सम्म- मित्याह । मानान्तरेति ॥ २९८ ॥

एवं सतीह यदि वेदशिरो न मानं
श्रेयस्करे विधिगिरोऽपि न मानता स्यात्।
श्रेयस्करे विधिगिरो यदि मानता स्याद्
वस्तुस्वरूपकथनेऽपि समन्वयस्य ॥ २९९ ॥

एवं प्रमाणप्रमेयत्वप्रयोजकरूपे सत्यपि यदि वेदान्तं ब्रह्मणि न प्रमाणं ब्रह्म च न प्रमेयं स्यात्तर्हि चोदना- धर्मयोरपि न तदुभयं स्यादिति ब्रह्मणि वेदान्तप्रामाण्य- बाधकमुखेनोपसंहरति । एवं सतीति । प्रामाण्यप्रयो- जकरूपे सतीत्यर्थः । इह ब्रह्मणि न मानता स्यात् प्रयोजकरूपान्तराभावादित्यर्थः । यदि मानता स्या- दिति । तेनैव रूपेणेति शेषः । समन्वयस्य मानता स्या- दित्यनुषङ्गः ॥ २९९ ॥

वस्तुस्वरूपकथने ननु नास्ति पुंसः
किं चित्फलं विधिवचःसु पुनः प्रवृत्तिः ॥
सम्भाव्यते फलमतः किल वस्तुनिष्ठं
वाक्यं विधिस्तुतिपरं त्विति जैमिनीयाः ॥ ३०० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं सिद्धपरत्वेऽपि वेदान्तानां न सापेक्षत्वप्रसङ्ग इत्युक्तम्, नन्वेवमपि सिद्धवस्तुज्ञानेन प्रयोजनासम्भवादध्ययनविध्युपात्तवेदान्तानां कथं तत्र पर्यवसानं स्यादिति शङ्कते। वस्तुस्वरूपकथनं इति। नन्विति। चोद्ये पुंसोऽध्येतुः कथं तर्हि फलपर्यवसानमित्या शङ्क्य विध्येकवाक्यत्वेन तत्सिध्यतीत्याशयेन विधीनांस्वतः फलं सम्भावयति। विधिवचःस्विति। प्रवृत्तिरर्थभावना। फलं शब्दभावनाभाव्यम्। ततश्च तस्याःपुरुषार्थभाव्यनिष्ठत्वाद्विधीनां फलवत्त्वमित्यर्थः। कथं तर्हि वेदान्तानां तदेकवाक्यतासिद्धे ब्रह्मणि विध्यसम्भवात्तस्य भावार्थैकगोचरत्वनियमादित्याशङ्क्य कर्मविधिनार्थवादानामिव कर्त्रादिस्तावकतया तदेकवाक्यतामाह। अतः किलेति। यतो वेदान्ताः स्वतोऽफलाः विधिश्च फलवानत इत्यर्थः। तुरवधारणे। परमेवेत्यर्थः। ततश्च सिद्धे ब्रह्मणि प्रमाणाभावान्न तत्सिध्यतीति भावः ॥ ३०० ॥

स्यादेतदेवमनवद्यपुमर्थसिद्धि-
र्वेदान्तवेद्यविषयावगतौ न चेत्स्यात ॥
स्वाराज्यमत्र कवलीकृतभोगभूमि
संपूर्णमस्य विदुषो भवतीति दृष्टम ॥ ३०१ ॥

नैवं वेदान्तानां स्वातन्त्र्येणैव निरस्तनिखिलदुःखनिरतिशयानन्दब्रह्मावाप्तिफलसत्त्वादिति परिहरति। स्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देतदिति। वेदान्तवेद्यविषयावगतौ सत्यामनवद्यपुमः सिद्धिः साक्षान्न स्याच्चेदेवं त्वदुक्तविधयैतत्कर्मशेष स्यान्न चैतदस्तीत्यर्थः। ननु सिद्धज्ञानात्मवृत्त्यावस वात्फलमात्रं न संभवति कुतोऽनवद्यपुमर्थलाभस्तत्रा स्वाराज्यमिति। स्वस्वरूपसौख्यमित्यर्थः। अत्र सि ब्रह्मसाक्षात्कारे सति। तस्य निरतिशयत्वमाह। कव क्रतेति। ब्रह्मादीनां या भोगभूमयो भोगा इ यावत्। ताः कवलीकृताः स्वान्तर्गमिता येन स्वा ज्येन तत्तथा। अत एव संपूर्णमनवच्छिन्नम्। दृष्ट एको ब्रह्मण आनन्द इत्यादिश्रुताविति शेषः, ब्र विद्धिरिति वा। एवं च वेदान्तानां फलप्रतिलम्भार्थं प्रवृत्त्याद्यपेक्षेति न विध्येकवाक्यत्वं न वाऽद्वैतब्रह्म विमानत्वमिति भावः ॥ ३०१ ॥

यस्यापि विप्रुषि कृतार्थतया निषण्णाः
शक्रादयो जलचरा इव सागरस्य ॥
प्रत्यक्तभावकमपास्तसमस्तदुःखं
तद्ब्रह्म सुखमवाप्नुवतः किमन्यत् ॥ ३०२ ॥

नन्वाज्यावेक्षणादिवदात्मज्ञानमपि ज्ञानत्वादय वाच्यं तत्कुतस्तावन्मात्रात्पुमर्थलाभस्तत्राह। यस्य ऽपीति। यस्य ब्रह्मसुखस्य विप्रुषि अतिक्षुद्रांशे शक्रादयस्त्रिलोकीश्वरप्रभृतयः कृतार्थतया निषण्ण स्वरूपानन्दैकलेशभूतं त्रिलोकीशासनादिसंभवं सु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्य वयं कृतार्था इति मन्यमाना नान्यदपेक्षन्त इत्यर्थः। तत्प्रत्यक्त्वभावकत्वादिविशिष्टं वैष्णवं विष्णोः परमं पदं सुखमवाप्तवतो विदुषः किमन्यत्कर्तव्यं स्यात्, आत्मानं चेद्विजानीयादयमस्मीति पूरुषः किमिच्छन्कस्य कामाय शरीरमनु संज्वरेदिति श्रुतेः, आज्यावेक्षणं तु क्रतुप्रकरणे विहितमिति पराङ्गं नैवमात्मज्ञानं तत्प्रकरणे विहितमिति स्वतन्त्रम् एतच्च भट्टपादानामपि संमतम्, सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारितमिति तदुक्तेरिति भावः। तेषां सुखैकलेशप्राप्तिमात्रेण कार्तार्थ्ये दृष्टान्तमाह। जलचरा इति। सागरस्य विप्रुषि कृतार्थतया निषण्णा जलचरा इवेत्यर्थः॥ ३०२॥

अज्ञानमात्मविषयं भवहेतुभूतं
प्रच्छादकं च परमात्मसुखस्य तूर्णम्॥
त्रय्यन्तवाक्यजनितात्ममतिर्विपाक-
मासाद्य हन्ति यदि तत्र किमर्थनीयम्॥ ३०३॥

नन्वात्मेत्थं सुखरूपश्चेत्किमित्यस्माभिस्तथा नानुभूयत इत्याशङ्क्याज्ञानेनावृतत्वात् अस्माभिर्नानुभूयते, विदुषस्तु विद्योत्पत्तिमात्रेणाऽज्ञाननिवृत्तेः पूर्णसुखानुभव उपपद्यत इत्याशयेनाह। अज्ञानमिति। तत्र मानमाह। आत्मेति। आत्मविषयं साक्षिसिद्धम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यानर्थहेतुत्वमाह । भवहेतुभूतमिति । भवः संसा स्तद्धेतुमित्यर्थः । पुरुषाऽर्थप्रतिबन्धकत्वमाह । च्छादकं चेति । परमात्मसुखस्य प्रच्छादकं चेति बन्धः । त्रय्यन्तो वेदान्तः । तूर्णं झटिति हन्तीति बन्धः । आपातज्ञानं व्यवच्छेत्तुमाह । विपाकमिति श्रवणादिनिमित्तां स्वविषयप्रतिष्ठामित्यर्थः । तथा ज्ञानमात्रेण कृतकृत्यतेति भावः ॥३०३॥

करमुष्टिनिविष्टमुत्तमं
कनकं प्रस्मरणादलब्धवत् ॥
प्रतिभाति तदाप्तवाक्यतः
प्रतिपत्त्या लभते यथा जनः ॥ ३०४ ॥

ननु सर्वत्र साध्यस्यैव पुरुषार्थत्वं दृष्टं न तु क्सिद्धस्य ब्रह्मसुखं च नित्यसिद्धमिति कथं तस्य क्षावदभिलाषास्पदत्वमित्याशङ्क्य लोके प्राक्सिद्धस्य पयज्ञातस्य प्रेक्षाविषयत्वं दृश्यते, ज्ञानेन तदज्ञा निवृत्तौ चेष्टं प्राप्तमित्यनुभवोऽपि, एवं प्राप्तेऽप्यज्ञ ब्रह्मसुखे प्रेक्षावतां प्रेप्सातन्निवृत्तौ कार्तार्थ्यं चोप द्यत इति श्लोकद्वयेनाह । करमुष्टिनिविष्टमित्यादि मुष्टौ कृतमित्यर्थः । प्रस्मरणाद्विस्मरणादाप्तवाक्यं मुष्टिं विमुच्य पश्येत्याप्तवचनात् प्रतिपत्त्या तद्ज्ञा इति संबन्धः ॥ ३०४ ॥

परमात्मपदं पराकृत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितयं प्राप्तमपि स्वभावतः ॥
अनवाप्तवदेव लिप्सते
लभते चैवमयं प्रमाणतः ॥ ३०५ ॥

परमात्मपदमित्यादि दार्ष्टान्तिकमेवमित्यादौ योजनीयम्, स्वभावतः प्राप्तमपीति संबन्धः। अनवाप्तवत् अप्राप्तहिरण्यवस्त्रादिवत्। लिप्सते आप्तुमिच्छति। प्रमाणतः ब्रह्मसाक्षात्कारात्। न हि सुखस्य कृतिसाध्यत्वमपि पुरुषार्थत्वप्रयोजकं गौरवात्तस्य दुःखादिसाधारणत्वाच्च किं तु स्वस्य प्रकाशमानसुखत्वं तच्च नित्यसिद्धात्मसुखेऽप्यस्ति, न च ज्ञानवैयर्थ्यं तदावरणनिवृत्तये तदपेक्षणादिति भावः ॥ ३०५ ॥

न स्वाध्यायवदाप्यता न च पुनस्त्रेताग्निवज्जन्यता
न व्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया ॥
पाठाधानजलोक्षणाभिषवणैः कूटस्थरूपं हि तद्
ब्रह्मापास्तविकारजन्ममरणं निःश्रेयसं साधनैः ॥३०६॥

एवमबाधितानधिगतब्रह्मप्रतिपादकानामनतिशयानन्दब्रह्मप्राप्तिपर्यवसायिनां वेदान्तानां धर्म इव चोदनाया ब्रह्मणि प्रामाण्यमनपवादमित्युपपादितम्, ननु सत्यमीदृशं ब्रह्म वेदान्तेभ्योऽवगम्यते परं तु कार्यपरेभ्यस्तेभ्यो न तु केवलसिद्धपरेभ्यः, लोके शब्दानां सिद्धे सङ्गतिग्रहासंभवेन वेदस्याप्यतदर्थत्वात् कार्ये च सङ्गतिग्रहस्योक्तत्वात्, आत्मेत्येवोपासीतेति ह्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मोपासनं विधीयते, तत्र च रात्रिसत्रन्यायेन ब्रह्म
ब्रह्मैव भवतीत्याद्यर्थवादावगतब्रह्मभवनकामो नि
ज्यः कल्प्यते, ब्रह्मभवनकामस्य च कर्त्तव्यतयाऽव
उपासनाविषयनियोगः स्वस्य साक्षात्कर्तव्यत्वायो
त्स्वसिद्ध्यर्थं स्वविषयोपासनस्यानुष्ठानमाक्षिपति
तच्चाज्ञातं नानुष्ठातुं शक्यमिति तज्ज्ञानाय विषयत
तन्निरूपकमद्वैतात्मानमप्युपासनानियोगोऽपेक्षते,
तः कोऽसावात्मेति तदाकाङ्क्षायां सत्यादिवाक्यमुपा
नानियोगपर्यवसाय्येव मन्त्रा इव विधिपरा देव
विग्रहमात्मानं बोधयतीति तस्य कार्यपरवेदान्ता
द्धिरिति, मैवम्, सिद्धेऽपि शब्दानां संबन्धग्रहस्य
क्ष्यमाणत्वान्मोक्षकामं प्रत्युपासनाविध्यसंभवात्
तथा हि, किमुपासनं प्रधानकर्मतया विधीयते, गु
कर्मतया वा, आद्ये उपासनाजन्यापूर्वस्य क्वोपयो
इति चिन्तनीयम्, न तावद् ब्रह्मैकत्वे तस्योपयो
तस्य नित्यसिद्धस्य तदसाध्यत्वात्, नाप्यविद्यानि
तस्या अपि ज्ञानैकफलत्वात्, नाप्यात्मसाक्षात्
तस्य श्रवणादिविधिफलतया तदफलत्वात्, अन्व
व्यतिरेकाभ्यां तत्साधनत्वसिद्ध्या तत्र प्रवृत्तिसंभ
द्विधिवैयर्थ्याच्च, अवघातादौ च नियमापूर्वमस्ति
न विधिवैयर्थ्यं प्रकृतेऽपि तथास्त्विति चेत्तर्हि पा
नाया अपूर्वद्वारा मुक्तिफलता न स्यादिति न प्रधा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मता, किं तु सिद्धान्त इव निदिध्यासनस्यात्मज्ञानार्थतयात्मशेषतैव स्यात्, अत एव न गुणकर्मतयापि तद्विधिः, किं च गुणकर्मणः फलं प्राप्तिरुत्पत्तिर्वा संस्कारो विकारो वा स्यात्, न चैषामन्यतमोऽपि ब्रह्मण्युपासनया संभवतीति व्यतिरेकदृष्टान्तेन सह दर्शयति । न स्वाध्यायेत्यादिना । अस्य ब्रह्मणः साधनैर्न स्वाध्यायोऽध्येतव्य इति विहितस्वशाखाध्ययनेन स्वाध्यायस्येवाप्यता प्राप्तिः संभवति । स्वाध्याये च सा अध्येत्रधीनोच्चारणक्षमता । नापि वसन्ते ब्राह्मणोऽग्नीनादधीतेतिविहिताधानेन गार्हपत्याहवनीयदक्षिणाग्निरूपाग्नित्रयस्येवोत्पत्तिः । नापि व्रीहीन्प्रोक्षतीत्यादिना विहितप्रोक्षणेन व्रीह्युलूखलादेरिव संस्कृतिः संस्कारस्तत्कृतातीन्द्रियातिशयस्तया युजा संबन्धः । नापि सोममभिषुणोतीति विहितेन कुट्टनरूपाभिषवणेन सोमस्येव विक्रियाऽन्यथाभावः । पाठोऽध्ययनम् । उक्षणं प्रोक्षणम् । एषां चतुर्णां पाठादीनां यथाक्रमं स्वाध्यायाद्याप्यतादिभिः संबन्धः । अत्र साधनैरिति बहुत्वं पूर्वपक्षे मनोमयादिब्रह्मोपासनाद्यभिप्रायेण । कुतो ब्रह्मणि तदसंभव इत्यत आह । कूटस्थेति । हिर्हेतौ । यतो ब्रह्म कूटस्थादिरूपमत आप्यताद्यस्य नेति संबन्धः । कूटस्थपदसूचितं निर्विकारत्वमजन्यत्वं चापास्तेति दर्शितम् । अ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्येऽपि भावविकारा निरस्ता इति सूचयितुं मरण
हणम् । ब्रह्मपदेन तस्य सर्वात्मत्वं दर्शयता आप
त्वं निरस्तम् । निःश्रेयसमिति परमप्रयोजनरूपतं
पयुक्तोपयोक्ष्यमाणताऽभावात्संस्कार्यत्वं निरस्तमि
द्रष्टव्यम् ॥ ३०६ ॥

ब्रह्मैव सन्निति वचः प्रथमश्रुतत्वा-
दप्येतिशब्दमुपसंहरणस्थमुच्चैः ॥
प्रच्यावयत्स्वविषयादुचिताद्ब बलीयो
ब्रह्मात्मनोरनतिरेकमसाध्यमाह ॥ ३०७ ॥

ननु ब्रह्मैव सन् ब्रह्माप्येतीति तस्याप्यत्वं
ते, न च ब्रह्मैव सन्निति तस्य प्रागपि सत्त्वा
क्रियासाध्यत्वमिति वाच्यम्, क्रियापदानुरोधेन
ह्मैवेत्यस्य भाविपरत्वकल्पनात्, न चैवमपि
सर्वगतस्य घटेनाकाशस्येव न क्रिययाप्यत्वमिति
च्यम्, अथ यदतः परो दिवो ज्योतिर्दीप्यत
श्रुतिसिद्धाविकृतब्रह्मप्रदेशस्याप्यत्वोपपत्तेरित्या
ह । ब्रह्मैव सन्निति । उपसंहरणस्थमेतद्वाक्य
श्रूयमाणं प्रच्यावयद्ब भ्रंशयदुचितान्मुख्याद्ब
सन्निति सावधारणं प्रथमश्रुतत्वात्तथैव बुद्धि
दयदसंजातविरोधितया बलीयो भूत्वाऽन्ते
प्येतिशब्दं मुख्यार्थात् प्रच्यावयति, एकस्मि
उपक्रमानुरोधेनोपसंहारस्य नेतव्यत्वात्, यथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदा अजायन्तेत्यर्थवादोपक्रमगतवेदशब्दानुरोधेनो-च्चैरृचा क्रियत इति चरमपठितं विध्युद्देशगतमपि मन्त्रवाचि ऋगादिपदं वेदपरतया नीतमतो ब्रह्मात्मनोरत्यन्तमभेद इति नानया श्रुत्या तदाप्यत्वसिद्धि-रित्यविद्यानिवृत्त्याऽप्राप्तत्वभ्रान्तिध्वंस एव तथोपचर्यते। अविकृतं ब्रह्म च सर्वत्र सदास्त्येवासङ्गत्वेन तस्य सर्वविक्रियाशून्यत्वादत एव श्रुतिरत्र ब्रह्म सम्पश्रुत इति। तस्योद्ध्र्ध्वदेशस्थत्वश्रवणं तूपासनार्थमिति ॥ ३०७ ॥

आग्नेय इत्याद्यपि तद्धितान्त-
मष्टाकपालादिसमन्वितं सत् ॥
आख्यातशब्दस्य धुरं बिभर्ति
भव्यार्थसंवित्तिनिबन्धनत्वात् ॥ ३०८ ॥

ननु नामपदमाख्यातान्तपदं प्रति गुणभूतं भूतार्थस्य भव्यशेषत्वेन तत्पदयोरपि तथाभावस्य वक्तव्यत्वात्, एवं गुणे त्वन्याय्यकल्पनेति ब्रह्मैव सन्निति-नामपद एव लक्षणोचिता न त्वाख्यातान्तेऽप्येतिपद इत्याशङ्क्य नामपदमपि विधेयसमर्पकं क्रियापदकार्यं कुर्वन्क्रियापदमेवेति न नामत्वं गुणत्वनिमित्तम्, एवमविधेयार्थक्रियापदमप्यर्थान्नामैवेति न प्रधानत्वनिमित्तमित्याशयेन दृष्टान्तं सार्द्धश्लोकेनाह। आग्नेय इत्यादिना। आग्नेयोऽष्टाकपालो भवति,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अग्नीषोमीयमेकादशकपालमित्यादिवाक्येऽग्निर्देव
स्येत्यादिव्युत्पत्त्याग्न्यादिदेवतासंबन्धिद्रव्याभिधा
माग्नेय इत्यादितद्धितान्तं पदमष्टसु कपालेषु संस्कृ
पुरोडाश इत्यादिव्युत्पत्त्याऽष्टाकपालादिसंयुक्तपुरो
शवाचकाष्टाकपालादिपदेन हविर्विशेषबोधकेनाि
सदाख्यातशब्दस्य विधेयबोधकस्य धुरं कार्यं वि
त्तिं करोति। कुतस्तत्राह। भव्यार्थेति। साध्यार्थ
संवित्तिजनकत्वादित्यर्थः। आग्नेयादिपदं हि देव
र्थंतद्धितान्तं द्रव्यदेवतासंबन्धमभिधत्ते स च संबन्
यागनिष्पाद्य इति यागोऽपि तेन प्रतीयत इति
देवाख्यातेन विधीयतेऽतस्तत्प्रधानमित्यर्थः॥ ३०

आख्यातमेव सदिदं भवतीति नाम
भव्येतरार्थमपि जन्मनिबन्धनत्वात्॥
अप्येतिशब्दमपि तद्वदिमं प्रतीमो
भव्येतरार्थगतबुद्धिनिबन्धनत्वात्॥ ३०१॥

एवं तस्मिन्नेव वाक्ये भवतीतीदं पदं क्रिया
मेव सदर्थतो नाम। तत्र हेतुर्भव्येतरेति। भवत्य
स्य सत्ताया अविधेयत्वात् तन्नामसदृशमेवेति न
धानमिति भावः। दार्ष्टान्तिकमाह। अप्येतीति।
प्येतिशब्दोऽपि न भव्यार्थः संभवति, ब्रह्मभाव
जीवे साध्यत्वेऽनित्यत्वेनामृतत्वानुपपत्तेर्ब्रह्मा
कृतद्भावस्याऽसंभवाद् ब्रह्मणश्चानादित्वनन्तत्वादतो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रधानम् । ब्रह्म तु सकलशेषीति तत्पदमेव प्रधानम् । भूतभव्यन्यायोऽपि प्रकृते नावतरति । उक्तन्यायेन प्रकृते भव्याऽसंभवादित्याशयः ॥ ३०९ ॥

ब्रह्मैव सन्निति गिरं प्रति शेषितायै
नाप्येतिगीरियमलं कथितोपपत्तेः ॥
आख्यातमेव खलु नामपदस्य शेषि
नाख्यातमेतदनृतत्वनिवेदकत्वात् ॥ ३१० ॥

अप्येतिशब्दस्याऽभव्यार्थत्वे सिद्धमाह । ब्रह्मैव सन्नितीति । शेषितायै नालमिति योजना । शेषिता प्राधान्यम् । अत्र हेतुमाह । कथितोपपत्तेरिति । भव्यार्थत्वासंभवादित्युक्तोपपत्तेरित्यर्थः । परोक्तं शेषिताप्रयोजकमनुवदन्नत्र तन्नास्तीत्याह । आख्यातमेवेति । एतदप्येतिपदम् ॥ ३१० ॥

ब्रह्मैव सन्निति ततः प्रथमश्रुतं स-
दप्येति शब्दमपसारयति स्ववाच्यात् ॥
अस्याङ्गभावविरहादमुना सहाऽतो
ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः ॥ ३११ ॥

प्रकृतमुपसंहरति । ब्रह्मैव सन्निति । तत इति । अस्य ब्रह्मेतिशब्दस्यामुनापेग्रतिशब्देन सहाऽङ्गभावस्य शेषत्वस्य विरहादित्यर्थः । फलितमाह । अतो ब्रह्मात्मनोरिति । अनतिरेकमभेदम् । उशन्ति इच्छन्ति । धीरा भेदवादिभिर्बहुधाभिभूयमाना अपि श्रुतिप्रामा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्यातिदार्ढ्याद् ब्रह्मैकनिष्ठाः ॥ ३११ ॥

भव्याय भूतमिति किं च विधिप्रधाने
काण्डे नयोऽयमिह तद्विपरीतमाहुः ॥
भूताय भव्यमिति भूतपरं हि सर्वं
वेदावसानमिति सूत्रकृदाचचक्षे ॥ ३१२ ॥

भव्यार्थत्वासंभवादपेर्गतिशब्दस्य नात्र भूतभव्यन्यायावतार इत्युक्तम्, किं चायं न्यायः कर्मसमभिव्याहृतभूतविषयो न तु सिद्धब्रह्मविषयोऽपि, प्रत्युत विपरीतं विविदिषावाक्यानुसारेण सर्वापेक्षा च यज्ञादिश्रुतेरिति सौत्रन्यायेन च कर्मण एव ब्रह्मशेषत्वावगमादित्याशयेनाह। भव्याय भूतमिति। विधिः प्रधानं प्रतिपिपादयिषितो यस्मिन्काण्डे तस्मिन्। इह ब्रह्मकाण्डे। तद्विपरीतं भूतभव्यन्यायविपरीतम्। तद्वैपरीत्यमेवाह। भूताय भव्यमिति। हिर्हेतौ। यतो भूतसत्यसिद्धब्रह्मपरं वेदावसानं वेदान्तं सूत्रकृदाचचक्षे समन्वयसूत्रप्रमुखैः सूत्रैरुक्तवानतो भाष्यकारादय एवमाहुरित्यर्थः ॥ ३१२ ॥

ब्रह्मैव सन्निति ततोऽपि बलिष्ठमेतदपेर्गति शब्दमवसानगतं व्यपेक्ष्य ॥
तस्मादमुष्य परिपीडकमेतदेव
ब्रह्मैव सन्निति पदं गुणकल्पनायै ॥ ३१३ ॥

भव्यस्य भूतशेषत्वे सिद्धमाह। ब्रह्मैव सन्निति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततोऽपीति । ततोऽपि भूताय भव्यमित्युक्तन्यायादपि एतद्ब्रह्मैव सन्निति पदमवसानगतमप्येतिशब्दमपेक्ष्य बलिष्ठमिति संबन्धः । ततः किं तत्राह । तस्मादिति । अमुष्यापेरतिशब्दस्य गौणत्वकल्पनायै एतद्ब्रह्मैव सन्निति पदमेव परिपीडकं मुख्यार्थभ्रंशकरं स्यादिति शेषः ॥ ३१३ ॥

निःश्रेयसं न खलु साध्यमतः क्रियाभि-
र्ज्ञानेन वा द्वयसमुच्चयवर्त्मना वा ॥
उत्पत्तिराप्तिविकृती न च संस्कृतिश्च
यस्मान्न संभवति वर्णितवर्त्मनेह ॥ ३१४ ॥

तस्माद्ब्रह्मभावस्यासाध्यत्वादुपासनादिक्रियासाध्यत्वं न संभवतीति न पराभिमतसमुच्चयस्यापि तत्राऽवकाश इत्याह । निःश्रेयसमिति । अत उक्तयुक्तिभिः । क्रियाभिः केवलोपास्त्यादिक्रियाभिः । ज्ञानसाध्यत्वमपि नित्यसिद्धत्वात्तस्य न संभवति किमु वक्तव्यं क्रियासाध्यत्वं न संभवतीत्याशयेनाह । ज्ञानेन वेति । द्वयसमुच्चयवर्त्मना ज्ञानक्रियासमुच्चयरूपोपायेन । तत्र प्राक्सूचितमेव फलाऽसंभवं दर्शयति । उत्पत्तिरित्यादिना । उत्पत्तिर्न संभवतीत्यनुषङ्गः । आप्तिविकृती न संभवत इत्यर्थः । एतच्च न स्वाध्यायवदाप्यतेति श्लोके दर्शितमित्याह । वर्णितवर्त्मनेति ॥ ३१४ ॥

तस्मात्प्रवृत्तिविनिवृत्तिविवर्जितत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मात्मवस्तुविषयावगते र्न दोषः ॥
सर्वप्रवर्त्तकनिवर्त्तकमूलदाहात्
स्वाराज्यहेतुरिति भूषणमेव तन्नः ॥ ३१

एवं किं च प्रवृत्तिविनिवृत्तिविहीनवस्तुतत्त्वप्र-
तिजननादित्यादिना यत्सिद्धवस्तुज्ञानात्प्रवृत्त्याद्य-
भवात्तन्निष्ठवेदान्तानां न फल पर्यवसानमित्युक्तम्,
तत्र प्रवृत्त्याद्यभावेऽपि निरतिशयपुरुषार्थपर्यवसा-
तेषामुपपादितम्, इदानीं प्रवृत्त्यादिराहित्यमात्रस्य
दोषत्वमुपसंहरन्न केवलं तदभावस्यादोषता अपि
अनुष्ठानजन्यायासाभावात्स गुण एवेत्याह । तस्मात्
वृत्तीत्यादिना । सर्वे ये प्रवर्त्तका रागादयो निवर्त्तका-
श्च द्वेषादयस्तेषां मूलमज्ञानं तदाश्रितवासनादि च त-
न्निवृत्तेरित्यर्थः । तत् प्रवृत्त्यादिविवर्जितत्वम् । नो-
स्माकं कृतकृत्यानाम् ॥ ३१५ ॥

अज्ञाततापि घटतेऽत्र दृशोऽनुभूते-
र्जानामि नाहमिति दृश्यपि दृश्यते हि ॥
अज्ञातताऽनुभवनं न च वास्तवं त-
दज्ञाततोद्वहति कल्पिततां हि तस्याः ॥ ३१

ननु वेदान्तानामनवगतार्थबोधकत्वमेव न संभव-
ति यद्बलात्सिद्धेऽपि तेषां प्रामाण्यं भवेत्, स्वप्रका-
शेऽज्ञाततायाः एवासंभवादित्याशङ्क्याह । अज्ञात-
ति । अत्रास्मन्मते तद्विषयाज्ञाने वेदान्तवेद्यमात्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न जानामीत्यनुभवं प्रमाणमाह । अनुभूतेरिति । अज्ञाने प्रमाणव्यापाराभावात्तदनुभवासिद्धिमाशङ्क्याह । जानामीति । दृग्रूपेऽप्यात्मनि नाहं जानामीत्यज्ञातता-नुभवनं दृश्यते हीति संबन्धः । अस्ति खलु सर्वेषा-महमिदं न जानाम्यात्मानं न जानामीति चाज्ञानापरोक्षानुभवः, स च न प्रमाणजन्यः, लिङ्गादेरपरोक्षज्ञानासंभवात्, चक्षुरादेश्चान्तरज्ञानायोगात्, मनसश्च प्रमावृतयाऽप्रमाणत्वात्, मनोव्यापारविरहदशायामपि तदनुभवाच्च तत्साक्षिमात्रभास्यमित्यर्थः । साक्षिसाध्यत्वसाधनफलमाह । अथ वेतोऽपि तत्साक्षिभास्यमेवेत्याह । न च वास्तवमिति । तदज्ञाततानुभवनं वास्तवं प्रमाणं न भवति अतः शुक्तिरजताद्यनुभववदज्ञानानुभवनमपि साक्षिरूपमित्यर्थः । ननु विषयबाधं विना कथमनुभवस्याप्रमाणत्वमित्याशङ्क्याह । अज्ञाततेति । तस्या दृशोऽज्ञातता स्वस्यां कल्पितता-मुद्वहति प्रापयतीति संबन्धः । अज्ञानस्यापि शुक्तिरजतादिवद् दृश्यत्वात्स्वप्रकाशात्मनि वस्तुतोऽयोगाच्च सा कल्पिता भवतीत्यर्थः ॥ ३१६ ॥

अज्ञानमित्यजडबोधतिरस्क्रियात्मा<br>
जाड्यं च मौढ्यमिति च प्रकृतिः प्रसिद्धा ॥<br>
सा चातिदुस्थितवपुर्दृशमद्वितीया-<br>
मालिङ्गति स्म घृतपिण्डमिवाग्निमिद्धम् ॥ ३१७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वात्मानं न जानामीत्यनुभवः सिद्धान्तेऽनुपपन्न
तस्य हि ज्ञानाभावो विषयः, न चात्मनि स्वप्रकाश
या स्वसत्तानिश्चये ज्ञानाभावः संभवति, आत्मनो नि
त्यत्वात्, न च तद्गोचरवृत्त्यभावोऽस्तीति वाच्यम्, तथा
पि तज्ज्ञानाभावासंभवात्, न हि वृत्तिर्ज्ञानं न वात्म
तदधीनप्रकाशो येन तदभावादात्मनोऽस्फुरणमज्ञानं
चेत्, अन्यथा वृत्तिं विना नित्यं प्रकाशमाने साक्षि
शुक्तिरजतादौ च न जानामीत्यनुभवप्रसङ्गः, तस्माद
त्मनि सिद्धान्ते न जानामीत्यनुभवो न संभवति
न तद्बलादज्ञानसिद्धिरिति चेत्, सत्यम्, अस्ति तावद
त्मन्यप्यनुभवः सर्वजनप्रसिद्धः स च त्वदुक्तविषया
भावविषयो न भवतीति स्वप्रकाशात्मावरणरूपं
द्गोचराज्ञानमनुभवबलादभ्युपगन्तव्यम्, अन्यथा
पुष्प्यादावात्मनोऽस्फुरणं न स्यात्, किं च वियदादि
समानस्वभावा तत्प्रकृतिः काचिदभ्युपेया, सा च
पराभिमतप्रधानादिः, अद्वयात्मपरोपनिषद्विरो
दित्यात्मन्यध्यस्तैव वाच्या सैवात्मप्रकाशावरणं तद
स्मिंस्तस्मिन्गौरवात् प्रमाणाभावाच्च, अज्ञानमप्या
रणस्वभावमिति सैव प्रकृतिरज्ञानमित्यपि सिद्ध्यतीत्य
शयेनाह। अज्ञानमित्यजडबोधेति। याऽजडबोधस्य ति
रस्कृयात्मावरणस्वरूपा प्रकृतिः साऽज्ञानमिति प्रसि
द्धेति संबन्धः। एवं चात्मनि न जानामीत्यनुभवे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुपपत्तिरिति भावः । ननु नञर्थतयाऽनुभूयमानमज्ञानं कथं भावरूपं स्यादिति चेन्न । आत्मन्युक्तविधयाऽभावासंभवेन ज्ञानविरोधिभावरूपमेवाज्ञानमित्यभ्युपगन्तव्यत्वात्, यथा पापमधर्म इत्यभ्युपगम्यते । ननु तत्र पापशब्देन महाजनव्यवहाराद्भावत्वं तस्य निश्चितमिति चेत्तर्हि इहापि भावार्थतया सकलप्रसिद्धजाड्यमौढ्यव्यवहाराभ्यां भावत्वं निश्चीयतामित्याशयेनाह। जाड्यं चेति । प्रकाशविरोधिस्वरूपविशेष इत्यर्थः । न च ज्ञानान्यत्वं ज्ञात्रन्यत्वं वा जाड्यमिति न तद्भावरूपमिति वाच्यम् । अन्यत्वस्यानुगतस्यैकस्यासंभवेन वक्ष्यमाणजडानुगतबुद्धेरयोगात् । यद्यप्यज्ञानं जडमेव तथापि जडप्रपञ्चानुगततया जाड्यमिति तद्व्यवहार उपपद्यते, मौढ्यमिति च पुरुषगतं मोहात्मकज्ञानमेव व्यवह्रियत इति तद्भावरूपमिति भावः । नन्वजडबोधतिरस्क्रियात्मेत्ययुक्तं न हि प्रकाशमानस्याद्वयस्य द्वितीयेनाप्रकाशमानता संभवतीति चेत्। किं वस्तुभूतेन द्वितीयेन वस्तुसदप्रकाशमानत्वं न संभवतीति वदसि, किं वाऽनिर्वचनीयेनानिर्वचनीयम् । आद्ये मदिष्टसिद्धिः । द्वितीयेऽनुभवविरोधः । अनुभवसिद्धमप्यनुपपन्नमिति चेत् । अत एवानिर्वचनीयम्, उपपन्नत्वेऽनिर्वचनीयत्वायोगादित्याशयेनाह । सा चेति । अतिदुस्थितवपुः दुर्निरूपस्वरूपाऽनिर्वचनी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येति यावत्। यतोऽद्वितीयां दृशमालिङ्गति, आ[illegible] त्यावृणोति स्मेति तदुभयस्य दुर्घटत्वं द्योतय[illegible] न ह्यद्वितीये द्वितीयं प्रकाशमाने अप्रकाशमानत्वं वस्तुसद्भवतीति भावः। स्वविरोध्याश्रयणमतिदु[illegible] तमित्यत्र दृष्टान्तमाह। घृतपिण्ड इति। इद्धं दी[illegible] ज्वलन्तमिति यावत्॥ ३१७॥

चिद्वस्तुनश्चिति भवेत्तिमिरं तमिस्रं
तामिस्रमन्धतमसं जड़िमा तमिस्रा॥
माया जगत्प्रकृतिरच्युतशक्तिरान्ध्यं
निद्रा सुषुप्तिरनृतं प्रलयो गुणैक्यम्॥ ३१८॥

ननु यद्यज्ञानस्यात्माश्रयस्तदा तद्विषयोऽन्यो वा[illegible] इत्यात्मावरणं तन्न स्यात्, घटादिज्ञानादावाश्रयवि[illegible] षययोर्भेददर्शनादज्ञानेऽपि तस्य वक्तव्यत्वात्, अन्यथा [illegible] त्मा तदाश्रयो न स्यादित्याशङ्क्य तमस्त्वाद्वाह्यतमो[illegible] त्तदेकाश्रयविषयम्, तमस्त्वं च तस्य श्रुतिपुराणा[illegible] तमःशब्दतत्पर्यायैर्व्यवहारात्सिद्धयतीत्याशयेनाह। [illegible] द्वस्तुन इति। चिद्रूपं यद्वस्तु परमार्थसत्तस्य या स्व[illegible] पभूता चित् तस्यां तिमिरं भवेदिति योजना। चितीति विषयाभेदेन सप्तमी चिद्विषयमित्यर्थः। लौकिका[illegible] ज्ञानादावाश्रयविषयाभेदेन भेदेन सविषयत्वस्य[illegible] चारादज्ञानमेकाश्रयविषयं भवेदिति भावः। ननु मा[illegible] त्माश्रयात्मविषया च श्रुत्यादौ प्रसिद्धा सा किमेत[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दज्ञानादन्या नेत्याह। मायेति। एवं प्रकृतिर्विष्णुशक्तिरिति च श्रुतमज्ञानमेवेत्याह। जगत्प्रकृतिरच्युतशक्तिरिति। आन्ध्यमिति। प्रकाशतिरोधायकत्वादज्ञानमुच्यते। निद्रेति। विविधप्रपञ्चहेत्वज्ञानं प्रकर्षेण लीयन्ते सर्वाणि कार्याण्यस्मिन्निति प्रलयः सत्त्वरजस्तमसां गुणानां समुदायरूपं गुणैक्यं च तदेवेत्यर्थः ॥ ३१८ ॥

आश्रयत्वविषयत्वभागिनी
निर्विभागचितिरेव केवला ॥
पूर्वसिद्धतमसो हि पश्चिमो
नाश्रयो भवति नापि गोचरः ॥ ३१९ ॥

नन्वहमज्ञ इति जीवाश्रयं तदनुभूयते एवं विषयोऽपि ब्रह्म न जानामीत्यनुभवात्तस्य ब्रह्मैव तत्कथं चिद्वस्तुनश्चिति भवेदित्युक्तं तत्राह। आश्रयत्वविषयत्वेति। अज्ञानस्येति शेषः। अज्ञानस्याश्रयत्वं विषयत्वं च भजत इत्याश्रयत्वविषयत्वभागिनी। केवला अद्वितीयैव। अत एव निर्विभागो जीवेश्वरविभागरहिता। न चैवं प्रदर्शितानुभवविरोधस्तस्यान्यथासिद्धत्वादन्यथान्योऽन्याश्रयः स्यादित्याशयेनाह। पूर्वसिद्धेति। स्वसत्ताप्रयोजकाज्ञानस्येत्यर्थः। हिर्हेतौ। यतो जीवेश्वरविभागसत्त्वप्रयोजकमज्ञानं ततः पश्चिमस्तत्प्रयोज्यो ब्रह्मविभक्तो जीवस्तद्विभक्तं ब्रह्म च यथाक्रमं नाश्रयो भवति नापि गोचरः। यद्यपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवेश्वरविभागादिरनादिस्तथापि स न वास्तवः; यिकस्तु सोऽद्वयब्रह्मानवभासदशायामेव भवतीति दज्ञानाधीनसत्ताक एव। अज्ञानं तु स्वसत्तायां वि- गादिसत्त्वं नापेक्षत इति न तत्प्रयोज्यम्। एवं नादिभूतोऽपि जीवब्रह्मविभागोऽज्ञानविकार एव। एतदभिप्रेत्य पूर्वसिद्धेत्याद्युक्तम्। ततश्चात्मन्यज्ञ सत्त्वसिद्धौ जीवेश्वरविभागसत्त्वम्, अज्ञानस्य वि जीवचैतन्याश्रयत्वे तदधीनं सत्त्वमित्यन्योन्याश्र अहमज्ञ इत्यादिप्रतीतिस्त्वज्ञानाश्रयपूर्णचैतन्यस्य हंकाराद्युपहिततया तत्रापि तत्संभवादुपपद्यते। त एवैतदनुभवादहंकाराश्रयं ब्रह्मविषयं तदि त्युक्तम्। अज्ञानस्य केवलजडवृत्तित्वानुपपत्तेश्च व विषयोऽपि पूर्णं ब्रह्मैवेति वक्ष्यत इति चिद्रू श्रितीत्युपपन्नमिति भावः ॥ ३१९ ॥

नाभावताऽस्य घटते वरणात्मकत्वा-
न्नाभावमावरणमाहुरभावशौण्डाः ॥
अज्ञानमावरणमाह च वासुदेव-
स्तद्भावरूपमिति तेन वयं प्रतीमः ॥ ३२

एवं स्वतः स्फुरणरूपात्मनि ज्ञानाभावासंभवा वरणस्वभावमज्ञानं स न संभवतीत्युक्तम्, लोकेऽप्यज्ञानमनुभूयमानं स न संभवति। यद्या स्यधीनप्रकाशस्य घटादेरस्त्यभावेनास्फुरणं सं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथापि तस्यानावरणत्वादावरणविषयस्य न जानामीत्यनुभवस्य स विषयो न भवितुमर्हतीत्याशयेनाह । नाभावतेति । अस्याज्ञानस्य । तत्र हेतुर्वरणात्मकत्वादिति । आवरणस्वभावत्वादित्यर्थः । नन्वभावस्याप्यावरणत्वं किं न स्यात्तत्राह । नाभावमिति । अभावशौण्डाः अभावपदार्थनिरूपणे समर्था वैशेषिकादयः, तेऽपि ह्यभावं नावरणमाहुः । आवरणत्वस्य भावधर्मत्वनियमात् ज्ञानाभावस्तु विशेषतो नावरणम् । यतं आवरणस्य ज्ञानाभावो न प्रयोजकः अतस्तत्प्रयोजकमन्यदेवावरणं वक्तव्यमित्यर्थः । ननु मा भूदज्ञानमावरणमिति चेन्न । तन्न जानामीत्यनुभवविरोधात् । किं चाज्ञानेनावृतं ज्ञानमित्यादिभगवद्वचनमपि तदा विरुद्धेयतेत्याह । अज्ञानमावरणमिति । ततश्चावरणत्वात् प्रसिद्धमेघाद्यावरणवदज्ञानं भावरूपमिति निगमयति । तद्भावरूपमिति ॥ ३२० ॥

एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन् ॥
येनावृतः कुरुते संप्रमत्तो
घोराणि कर्माणि सुदारुणानि ॥ ३२१ ॥

भगवद्व्यासवचनेनापि तस्यावरकत्वमाह । एकः शत्रुरिति । येनाज्ञानेनावृत इत्येतत्पदमत्रोपजीव्यम् । घोराण्यतिगर्हितानि पापादीनि, सुदारुणानि दीनद्रि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वस्वापहरणादीनि ॥ ३२१ ॥

जाड्यं जगत्यनुगतं खलु भावरूपं
मौढ्यं च पुंगतमिति प्रतिभाति तादृक् ॥
जाड्यं च मौढ्यमिति चानुभवप्रसिद्ध-
मज्ञानमाहुरपवर्गपिधानदक्षम् ॥ ३२२ ॥

एवमजड़बोधतिरस्क्रियात्मत्वं नाभावस्य संभ
तीति भावरूपाज्ञानस्यैव तदित्युपपादितम्, इदा
जाड्यं च मौढ्यमिति चेत्युक्तं जाड्यमौढ्यात्मकत्व
पि तस्योपपादयति। जाड्यं जगतीति। यद्व घटपटा
जड़प्रपञ्चे इदं जड़मिदं जडमित्यनुगतव्यवहारा
जाड्यं तद्भावरूपं चेतनान्यत्वादेर्भावाभावनिखिल
नुगतस्यैकस्यासंभवात् । एवं मौढ्यमपि जीवनि
यानुगतं भावरूपम् । ततः किमित्यत आह । ज
चेति। कारणतया जगत्यनुगताज्ञानव्यतिरिक्तानु
जाड्यकल्पने जीवत्वाद्युपाधितया निखिलजीव
न्ययज्ञानान्यमौढ्यकल्पने च प्रमाणाभावादनुभव
मज्ञानमेव तदुभयमिति तदात्मकमज्ञानं भाव
त्यर्थः ॥ ३२२ ॥

साभासमेतदुपजीव्य चिदद्वितीया
संसारकारणमिति प्रवदन्ति धीराः ॥
साभासमेतदिति संसृतिकारणत्वे
द्वारं परं भवति कारणतादृशस्तु ॥ ३२३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदानीं प्रकृतिरिति प्रागुक्तमज्ञानस्य जगत्प्रकृतित्वमुपपादयितुं प्रक्रमते, तत्रेयं शङ्का, ननु सूत्रकारेण प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रेण ब्रह्मैव जगत्प्रकृतिर्वेदान्तार्थ इति निरूपितं तत्कथमज्ञानं प्रकृतिरिति तत्राह । साभासमिति । चैतन्यच्छायायुक्तमित्यर्थः । एतदज्ञानमुपजीव्य घटकतयाश्रित्य संसारस्य वियदादिप्रपञ्चस्य कारणम् । धीराः कूटस्थब्रह्मनिष्ठाः । ब्रह्म हि स्वस्य निष्प्रपञ्चतारूपां शुद्धिमपरित्यजदेव संसारकारणमिति वक्तव्यं कूटस्थमचलं ध्रुवं निष्कलं निष्क्रियमित्यादि श्रवणात्, तादृश, कारणत्वं प्रपञ्चविभ्रमाधिष्ठानतयैव निर्वहति, सर्पाधिष्ठानरज्ज्वादेस्तदानीमपि स्वरूपस्थितिदर्शनात्, विभ्रमाधिष्ठानत्वं च विवर्त्तमानाज्ञानमनुपजीव्य न सिद्ध्यति स्वस्यैव तथा परिणामे पूर्वरूपनाशप्रसङ्ग इति ब्रह्मकारणतासिद्ध्यर्थमज्ञानमपि जगत्प्रकृतिरिति स्वीकर्त्तव्यमिति भावः । नन्वज्ञानं चेज्जगत्प्रकृतिस्तर्हि तदेव जगदुपादानमस्तु ब्रह्मकारणताश्रुतिस्तु तस्य निमित्ततयाऽप्युपपद्यत इत्याशङ्क्य किं स्वतन्त्रमज्ञानं प्रपञ्चनिदानं स्यात्किं वात्मन्यध्यस्तम्, नाद्यः, जडस्य स्वातन्त्र्यायोगात्, तत्तत्कार्ययोः सत्तास्फूर्त्यभावप्रसङ्गाच्चेत्यभिप्रेत्य द्वितीये आह । साभासमेतदिति । आ समन्ताद्भासत इत्याभासं स्वप्रकाशमनवच्छिन्नं ब्रह्म



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सहितं तत्तादात्म्यापन्नं साभासमज्ञानमित्यर्थः।
ध्यस्तस्य हि अधिष्ठानमेव स्वरूपमिति तंत्ततो नि
कारणं न भवितुमर्हति किं तु दृशः संसृतिकारणत्वं
वत्ताधिष्ठानत्वे परं केवलं द्वारमुक्तविधया घट
वति श्रुतिमत्कारणता तु दृश एवेति भावः ॥

यावद् दृशोन्यदिह संसृतिकारणं तद्
वेदान्तवादिसमये न मतं जडत्वात् ॥
यद्यज्जडं भवति संसृतिकारणं त-
न्नेति स्फुटं वदति सूत्रकृदत्र यस्मात् ॥

ननु सांख्यादिभिः साधर्म्यादिना जडमेव जगत्
णमनुमानादङ्गीकृतं तद्वत्त्वयाप्यङ्गीकर्त्तुमुचितमि
ङ्क्य तदैक्षत बहु स्यां प्रजायेयेतीक्षितुरेवोपादान
षयश्रुतिमाश्रित्य बादरायणेन सांख्यवैशेषिका
क्षस्य निरस्तत्वान्नैवमित्याह । यावद् दृशोऽन्यदि
इह जगति दृशोऽन्यद् यावत्तद्वेदान्तवादिसमये
तिकारणं मतमिष्टं न, कुतो जडत्वाद्रज्जुसर्पव
चाप्रयोजकम्, श्रुतिन्यायवित्सूत्रकारेणोक्तत्वादि
येनोक्तश्रुतेरनुग्राहकन्यायमूलं व्याप्तिमाह । यद्य
ति । स्फुटं वदतीति । ईक्षतेर्नाशब्दमित्यादिसू
शेषः । अत्र वेदान्तशास्त्रे । अत्र जगति यद्य
ति वा संबन्धः ॥ ३२४ ॥

अजडकारणभावनिबन्धनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलमेव जड़ं न तु कारणम् ॥
इति हि वेदशिरस्सु विचक्षणाः
कपिलपक्षनिराकरणे जगुः ॥ ३२५ ॥

किं च रचनानुपपत्तेश्च नानुमानमित्यादिना सूत्रकारेण प्राधान्येन जड़कारणत्वनिराकरणादपि चेतनं ब्रह्मैवोपादानमुपेयमित्याह । अजड़कारणेति । अजड़कारणस्य भावः सत्ता तया निबद्ध्यत उत्पाद्यत इत्यजड़कारणभावनिबन्धनमित्यर्थः । यद्वा ऽजड़स्य चिदात्मनः कारणभावे कारणत्वव्यवहारयोग्यत्वे निबन्धनं द्वारं सकलमेव जड़मविद्यादि न तु तत्कारणं स्वयमिति शेषः । कपिलादिपक्षनिराकरण उद्दिश्य इत्यर्थः ॥ ३२५ ॥

शबलमात्मपदेन निगद्यते
सकलमात्मजमित्यपि च श्रुतिः ॥
शबलमात्मपदं जगतस्ततः
प्रकृतिरित्यपरे तु जना जगुः ॥ ३२६ ॥

एवं शुद्धमद्वयं ब्रह्मैवाविद्यातद्विवर्ताधिष्ठानतया श्रुतिसंमतं जगन्निदानमविद्या तु तद्घटकतयैव जगत्प्रकृतिरिति वेदान्ततत्त्विर्णातानां मतमुक्त्वा मतान्तरमनुवदति । शबलमात्मपदेनेति । आत्मन आकाशः संभूत इत्यादिवाक्ये आत्मादिपदेनाविद्याशबलं वस्तु निगद्यतेऽभिधीयते । ततः किं तत्राह । सकलमात्मज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिति। वियदादिसमस्तमात्मजंमात्मनः संभूतमिति च श्रुतिर्दर्शयतीति शेषः। ततोऽपि किं तत्राह। श लमात्मपदमिति। शबलात्मस्वरूपमित्यर्थः। यतः लिः सकलमात्मपदनिगद्याच्छबलात्संभूतमिति द यति ततः शबलमात्मपदं प्रकृतिरिति संबन्धः॥३

सुकृतदुष्कृतकर्मणि कर्त्तृतां
मतिगतात्मचिति प्रतिबिम्बकम्॥
व्रजति तद्वददः परमात्मनो
जगति याति तमःप्रतिबिम्बकम्॥ ३२७॥

एवं शबलस्य जगत्प्रकृतित्वमुक्त्वा तन्मत एव त तुस्ततो विशेषं सदृष्टान्तमाह। सुकृतदुष्कृतेति। ण्ये विहिते कर्मणि दुष्कृते प्रतिषिद्धे चेत्यर्थः, म न्तःकरणं तत्र यदात्मचैतन्यप्रतिबिम्बकं जीवभा पन्नमित्यर्थः, कर्तृतां व्रजति यद्वत्तद्वदिति संबन्धः दस्तद्याति कर्तृतामित्यनुषङ्गः, तमोऽज्ञानं तत्र प्र बिम्बकम्, यथा पुण्यपापयोर्जीवभावमापन्नमन्तः पे प्रतिबिम्बचैतन्यमेव कर्तृ कर्त्ता शास्त्रार्थवत्त्वा त्यादिन्यायान्न तच्छबलमिति तन्मतम्, तद्वज्जग पि तमःप्रतिबिम्बकं चैतन्यमेवेश्वराभिधानं कर्तृ न तमोविशिष्टमित्यर्थः॥ ३२७॥

सुकृतदुष्कृतयोः शबला यथा
भवति कारणमात्मचितिस्तथा॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गगनवायुपुरःसरकारणं
परमचेतनताशबलाकृतिः ॥ ३२८ ॥

उक्तदृष्टान्तेनैव शबलोपादानत्वमपि द्रढयति । सुकृतदुष्कृतयोरिति । शबलाऽन्तःकरणशबलात्मचितिरिति संबन्धः । कारणं भवतीत्यनुषङ्गः । परमचेतनता परमात्मचैतन्यम् ॥ ३२८ ॥

शबलताकवलीकृततावशात्
परमचेतनतैव निगद्यते ॥
शबलमात्मपदेन न कथ्यते
शबलमात्मनिवृत्तिनिबन्धनम् ॥ ३२९ ॥

यद्यपि सृष्ट्यादिवाक्यगतात्मादिपदेनौचित्येन शबलमेवाभिधीयते तथापि लक्षणया शुद्धं परमेव तद्वाच्यमिति न ततः शबलस्य कारणता सिद्ध्यतीति समाधत्ते । शबलताकवलीकृतेति । शबलतया शबलस्वरूपेण कवलीकृतता अवच्छिन्नता या तद्वशाच्छबलसम्बन्धवशादिति यावत् । परमचेतनता सर्वोपाधिविवर्जितं चैतन्यं तदेव तत्र जिज्ञास्यत्वान्निगद्यते लक्षणया ज्ञाप्यते । आत्मपदेन न शबलं कथ्यते तात्पर्येणेति शेषः । शबलस्य वस्तुतोऽनात्मत्वादित्यर्थः । तर्हि शबलाभिधानस्य किं प्रयोजनमित्याशङ्क्य लक्षणासिद्धिरेवेत्याह । शबलमात्मनीति । आत्मादिपदस्येति शेषः ॥ ३२९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शबलतापरिधानसमन्वयात्
परमचेतनतात्मगिरः पदम् ॥
भवति तेन जनस्य तु विभ्रमः
शबलमात्मगिरः पदमित्ययम् ॥ ३३० ॥

यत एतस्मिन्वाक्ये आत्मादिपदैरात्मलक्षण: शबलमुपस्थाप्यते ततः शबलमेव तदर्थं इति भ्रमो न तु वस्तुतत्त्वमित्युक्तानुवादपूर्वकमाह । शबलतापरिधानेति । एतदुक्तं भवति । सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्ये ह्यानन्त्यं ब्रह्मणः प्रतिज्ञातं, यो वेद निहितं गुहायामित्युत्तरवाक्ये गुहाप्रवेशे तस्य प्रत्यग्भावं दर्शयन्त्या श्रुत्यानन्त्योपपादनाय आत्मनो नानात्वं निरस्तम्, ततस्तस्य विजातीयगगनादि भेदापनिनीषया सृष्टिरुपन्यस्यते तदा खलु कार्यकारणानन्यत्वन्यायेन कार्यस्य वस्तुतः कारणमात्रत्वं सिद्ध्यतीत्युपपन्नं तदानन्त्यमेवं च यत आकाशादि सम्भूतं तत्तस्मादेतस्मादात्मन इति प्रत्यगभिन्नानन्दमिति दर्शयन्ती श्रुतिरद्वैतमात्मानमेवाभिप्रैतीति ततः शबलकारणता सिद्ध्यतीति ॥ ३३० ॥

बहु निगद्य किमत्र वदाम्यहं
शृणुत संग्रहमद्वयशासने ॥
सकलवाङ्मनसातिगता चितिः
सकलवाङ्मनसव्यवहारभाक् ॥ ३३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवं सति प्रत्यक्षादिदृष्टं मृत्सुवर्णादेर्घटकुण्डलादिकारणत्वमपि त्वत्पक्षे न स्यादिति चेत्, सत्यम्, सर्वत्रापि मृदाद्यधिष्ठानं सर्वकार्यानुगतं सत्तत्त्वं मृदादिशबलद्वारा घटादिकारणं न तु केवलमृदादिस्तस्याधिष्ठानात्मतया ततः पृथग्भूय कारणत्वायोगादित्याशयेनाह । बहु निगद्येति । अत्रास्मिन्नर्थे बहुभाषणेन किं प्रयोजनमद्वयशास्त्रेऽहं सिद्धान्तसंग्रहं वदामितं शृणुतेति सम्बन्धः । तत्संग्रहमेव निर्गुणसगुणभेदेनाह । सकलेति । स्पष्टम् ॥ ३३१ ॥

चित्रायागः पशुफल इति श्रूयमाणेऽपि चित्रा-
ऽपूर्वं द्वारं पशुफलतयाक्षिप्यते तत्र तद्वत् ॥
चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽत्रापि पश्चा-
न्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन्॥३३२॥

ननु यदि मायाशबलस्य कारणतां श्रुतिर्न प्रतिपादयति कुतस्तर्हि मायाप्रकृतित्वसिद्धिस्तत्राह । चित्रायाग इति । चित्रया यजेत पशुकाम इति पशुफले यागे श्रूयमाणेऽपि श्रुतेऽपि क्षणिकस्य यागस्य कालान्तरभाविपशुसाधनतानुपपत्त्या चित्रासंज्ञितयागजन्यं पशुफलसाधनतयाऽपूर्वं तत्र कर्मकाण्डे यद्वदाक्षिप्यते कल्प्यते, तद्वदत्रापि काण्डे चैतन्यात्मा जगदुदयकृदिति श्रूयते श्रुतेऽपि तस्य निर्विकारस्य जगत्कारणत्वानुपपत्त्या पश्चादस्मिन्जगति फले कार्ये मायादीनां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वारभावो भवति भवेदिति कल्प्यते । कूटस्थब्रह्म
श्रुतिप्रदर्शितकारणत्वादिसंरक्षणार्थं जड़प्रपञ्चोपा
नतयानुमितमज्ञानं तद्घटकतयाश्रितमिति न तद्
द्धिरिति भावः ॥ ३३२ ॥

कारणत्वमुपलक्षणं चिते-
र्ब्रह्मणो न खलु तद्विशेषणम् ॥
इत्यपीदमुपपद्यते तदा
चेतना भवति कारणं यदा ॥ ३३३ ॥

शबलकारणत्वं न श्रुतिसम्मतमित्यत्र ब्रह्मवि
मभ्युपगमं लिङ्गमाह । कारणत्वमिति । जगत्कार
हि चिद्रूपब्रह्मणो गृहस्येव काकसम्बन्ध उपल
तटस्थलक्षणं न खलु तद्विशेषणमिति यद्ब्रह्मवि
पेतमिदमपि तदोपपद्यते यदा चेतनात्मा कारणं
वेदिति सम्बन्धः ॥ ३३३ ॥

अन्यदेव यदि कारणं भवेत्
कारणत्वमुपलक्षणं कथम् ॥
चेतनस्य घटतेऽन्यगामिना
वस्तु नान्यदुपलक्ष्यते यतः ॥ ३३४ ॥

ननु शबलकारणत्वमपि तदुपलक्षणं किमिति
वेदित्याशङ्क्यालक्ष्यवृत्तिधर्मस्य तदनुपपत्तेरित्याह
अन्यदेवेति । शुद्धब्रह्मणोऽन्यच्छबलमेवेत्यर्थः । 
स्य ब्राह्मणः कथं घटत इति संबन्धः कुत इत्यत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह । अन्यगामिनेति । लोकेऽलक्ष्यवृत्तिधर्मस्य लक्षकत्वादर्शनात् । शुद्धं ब्रह्म शबलवृत्तिधर्मेण लक्षितुं न शक्यते यतस्ततो ब्रह्मैव श्रुतिसंमतमुपादानं मायायास्त्वार्थिकं तच्छ्रुत्यानूद्यते ततो भावरूपैव सेति भावः ॥ ३३४ ॥

अनवबुद्धमतः श्रुतिमस्तकै-
र्विषयतामुपपादयितुं क्षमम् ॥
अनुभवात्मपदं तमसा यतः
पिहितमेतदिह प्रतिभासते ॥ ३३५ ॥

एवं प्रसङ्गान्मायाप्रकृतित्वचिन्तां परिसमाप्य प्रकृतमनवगतार्थविषयतया सिद्धेऽपि वेदान्तप्रामाण्यसमर्थनमुपसंहरति । अनवबुद्धमिति । यतः अनुभवात्मस्वरूपमुक्तविधया तमसा पिहितं मामहं न जानामीति प्रत्यक्षतोऽपि इह साक्षिणि प्रतिभासतेऽतोऽनवबुद्धमेतत् श्रुतिमस्तकैर्विषयतामुपपादयितुं क्षममिति संबन्धः ॥ ३३५ ॥

अज्ञानकल्पितमनिर्वचनीयमस्मि-
न्नाबालवृद्धमविवादपदं प्रसिद्धम् ॥
स्वप्नो तथा च भगवानपि वक्ष्यतीदं
सन्ध्येऽस्ति सृष्टिरिति पक्षनिराससिद्धै ॥३३६॥

यदुक्तं प्रागज्ञानकल्पितमनिर्वचनीयमित्यादिनानानिर्वचनीयं किं चिद्वस्त्वस्तीति तदिदानीमाशङ्क्य नि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राक्रियते। ननु स्वप्रकाशब्रह्मणः कथमनवबुद्धत्वं
रोधात्, न च तत्कल्पितमनिर्वचनीयमिति न वि
इति वाच्यम्, तस्यैव गगनकमलप्रायत्वादित्या
लोके सर्वानुभवसिद्धत्वान्मैवमित्याह। अज्ञानक
तमिति। अस्मिन् लोके आबालवृद्धं बालवृद्धमभि
प्य सर्वेषामित्यर्थः। शुक्त्यादौ रजतादिर्हि लोके
रनुभूयते स न तावज् ज्ञानद्वयं ततो रजतार्थिप्र
नुपपत्तेर्ज्ञानस्य स्वविषय एव प्रवर्तकत्वादिति भ्र
द्धौ वक्ष्यमाणविधया सोऽनिर्वचनीयविषय इति भा
किं च सूत्रकारोऽपि स्वप्ने प्रतीयमानस्य रथादे
त्यत्वनिरासायाऽनिर्वचनीयत्वं वक्ष्यतीति त
रित्याशयेनाह। स्वप्न इति। यथा लोके प्रसिद्धं
वेत्यर्थः। वक्ष्यति पदार्थपाद इति शेषः। इदम
चनीयत्वम्। सन्ध्येऽस्ति सृष्टिरित्यनेन सन्ध्ये सृ
हीति सूत्रमुपलक्षयति। सन्ध्ये स्वप्ने सृष्टिः सृज्य
रथादिरस्ति सती, यतोऽथ रथान् रथयोगानिति
सृष्टिमाहेति सूत्रेण कृतपूर्वपक्षस्य निरासार्थं माया
त्रमित्यादिसूत्रेणाऽनिर्वचनीया सेत्युक्तवानित्यर्थः

मिथ्याशुषिः सवितृमण्डलमध्यवर्त्ती
प्रत्यक्षदृष्टिपथमापतितोऽचिरेण॥
द्रष्टुः शरीरकरणप्रविभागरूपं
मृत्युं निवेदयति सत्यमिति प्रसिद्धम्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु गुरुवेदान्तादेरन्यस्य वा प्रपञ्चस्य मिथ्यात्वे कथं ततोऽद्वैतब्रह्मावगमोऽन्यद्वा विचित्रं कार्यं भवेदिति चेन्न, स्वप्ने तथाभूतादपि सत्यविचित्रकार्यदर्शनादेवं जाग्रत्यपि तत्प्रसिद्धमित्याह । मिथ्येति । शुषिरिति । शुषिश्छिद्रम् आपतितः प्राप्तः सवितरि रथनाभिच्छिद्रवत्कॢपितं शुषिरं प्रत्यक्षदृष्टिविषयोऽचिरेण द्रष्टुर्मृत्युं मरणं निवेदयति । मृत्युमेवाह । शरीरेति । स्थूलशरीरात्करणसमूहस्य लिङ्गशरीरस्य प्रविभागरूपम् उत्क्रमणरूपम् । सोऽपि तर्हि मिथ्येत्याशङ्क्य व्यावहारिक इत्याह । सत्यमिति । एतच्च ऐतरेयकब्राह्मणेन चिरमिव जीविष्यतीति विद्यादित्युपक्रम्य छिद्र इवादित्यो दृश्यते इति श्रुतिप्रसिद्धमनुभवसिद्धं च, नात्र विमतिरिति भावः । वस्तुनः कारणत्वे कार्यत्वे च सर्वसंप्रतिपन्नासद्विलक्षणः स्वरूपविशेष एवापेक्षितस्तावतैवानन्यथासिद्धत्वादेः कारणत्वशरीरस्योपपत्तेः, न त्वबाध्यत्वमप्यपेक्षितम्, तदृतेऽनुपपत्त्यभावादस्माकं प्रपञ्चे तदसंप्रतिपत्तेश्च । आत्मा तु कूटस्थो न वस्तुतः कस्यापि कारणम्, अपूर्वमनपरमिति श्रुतेः । मिथ्याकारणत्वं तु प्रपञ्चमिथ्यात्वं विना न सिद्ध्यतीति न सत्त्वं कारणस्य क्वचिदपि क्लृप्तमिति सवितृशुष्यादेर्मृषावस्तुनोऽपि मरणादिनिवेदकत्वमुपपद्यते । ननु तच्छुषिरज्ञानमेव तत्सूचकं न तु तदि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति चेत्तर्हि सर्वत्रापि ज्ञानमेव कारणं तच्च जीवं
श्वरस्य वास्तु न वस्त्विति स्यात्। ज्ञानमात्रस्या
प्रसक्तस्य कारणत्वानुपपत्त्या विषयमिश्रितस्यैव क
रणत्वाच्च सोऽपि कारणमिति भावः ॥ ३३७ ॥

स्वप्नः शुभाशुभफलागमसूचकः स्यान्
मिथ्यापि सन्निति च सूत्रकृदाह यत्नात्
गुर्वादि सर्वमिदमद्वयबुद्धिहेतु-
मायानिबन्धनमिति प्रतिपादनाय ॥ ३३८

किं च सूत्रकारोऽप्युक्तन्यायं यदा कर्मसु काम्ये
स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयादित्या
श्रुतिं च पश्यन्मिथ्या सन्नपि स्त्रीदर्शनकुञ्जरारोह
रापानादिदर्शनरूपः स्वप्नः शुभाशुभफलयोराग
प्राप्तेः सूचकः स्यादिति सूचकश्च हि श्रुतेरित्यादि
णाहेति तस्यापि संमतमेवेदमित्याह। स्वप्नः शुभा
भेति। यत्नोऽत्र उक्तन्यायाद्यनुसंधानम्। ननु ब्रह्म
चारमध्ये किमिदं सूत्रकारस्य स्वप्नफलनिरूप
त्याशङ्क्य तदाशयमाह। गुर्वादीति। मायानिब
मपीदं गुर्वादि अद्वयबुद्धिहेतुरिति प्रतिपादनायेति
बन्धः ॥ ३३८ ॥

भ्रान्तिप्रतीतिविषयो न च सन्न चास-
न्नाकाशतत्कुसुमयोर्न हि सास्ति नापि।
तस्या भवेत्सदसदात्मकगोचरत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न ह्यस्ति तत्किमपि यत्सदसत्स्वरूपम् ॥३३१॥

ननु स्वप्नादिविषयस्य मृषात्वमसंप्रतिपन्नमिति चेन्न शुक्त्यादौ रजताद्यर्थिप्रवृत्त्यादिबलाद् भ्रान्तिस्तावदस्तीत्युक्तम् । तत्र भ्रान्तिर्नाम रजताद्याकाराऽविद्यावृत्तिः, तदवच्छिन्नं साक्षिचैतन्यं भ्रान्तिप्रतीतिः । सा किं सविषया निर्विषया वा, आद्ये तद्विषयः किं सन्नुतासन्नुतोभयात्मकः, आद्येऽपि किं तत्रैव सन्नन्यत्र वा । नान्त्यः अन्यत्र सतोऽत्रापरोक्षप्रतीत्यसंभावात्तद्धेतोरिन्द्रियसंन्निकर्षस्य संयोगादेरसंभवात् । न प्रथमः । नेदं रजतमित्यादिरूपेण बाधायोगात् । नाप्यसन्, असतोऽपरोक्षप्रतीत्यनुपपत्तेः । नापि तृतीयः । विरोधेनैकस्य सदसदात्मकत्वासंभवादित्याशयेनाह । भ्रान्तिप्रतीतीति । सदसदेकैकविषयत्वे भ्रान्तिरपि सा न स्यादित्याह । आकाशेति । यतः सा भ्रान्तिराकाशतत्कुसुमयोर्नास्ति अतो भ्रान्तिप्रतीतिविषयो न च सन्न चासन्निति पदयोजना । परेत्याकाशेत्युक्तं न ह्याकाशे सति आकाश इति ज्ञानं तत्कुसुमेऽत्यन्तासत्यसदिति ज्ञानं भ्रमो भवतीत्यर्थः । तृतीयेऽपि एकस्य सदसद्विषयत्वानपायाद् भ्रान्तित्वानुपपत्तिस्तुल्येत्यभिप्रेत्याह । नापीति । भ्रान्तेः सदसदात्मकविषयत्वाभावे विषयाऽसंभवमपि हेतुमाह । न ह्यस्तीति । विरुद्धसमुच्चयस्य क्वाप्यदृष्टत्वादिति भावः ॥ ३३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आलम्बनं च विरहय्य न विभ्रमस्य
ज्ञानात्मनो भवति जन्म कदा चिदत्र॥
सिद्धं ततः सदसती व्यतिरिच्य किं चि-
दालम्बनं भ्रमधियः सकलप्रवादे ॥ ३४०॥

इदानीं भ्रान्तिरविषयेति पक्षं प्रतिक्षिपति। आल-
म्बनमिति । विरहय्य वर्जयित्वा । भ्रमस्य निर्विषयत्वा-
भावे हेतुतया तं विशिनष्टि । ज्ञानात्मन इति। अत्र
लोके । तथा च ज्ञानस्य सविषयत्वनियमाद् भ्रमज्ञान-
स्याविषयत्वमनुपपन्नमिति भावः। अतः परिशेषाद्भ्रा-
न्तिविषयोऽनिर्वचनीय एव सर्वैरप्यभ्युपगन्तव्य इ-
त्युपसंहरन्नाह। सिद्धं तत इति । व्यतिरिच्य विहाय
किं चित् सदसद्विलक्षणमनिर्वचनीयम् । तदालम्बनं
सिद्धमित्यर्थः । विषयस्यानिर्वचनीयत्वेन विषयिणो-
ऽप्यनिर्वचनीयत्वमर्थसिद्धमन्यथा तद्विषयत्वायोगादि-
ति भावः । न च सदसत्त्वसमुच्चयवत्तद्वैलक्षण्यसमुच्च-
यरूपमनिर्वचयीत्वमपि विरुद्धमिति वाच्यम् । अनि-
र्वचनीयत्वस्याप्यनिर्वचनीयत्वेन विरोधस्यालङ्कार-
त्वादिति भावः॥ ३४० ॥

ब्रह्मात्मवस्तु निरवद्यचिदेकरूपं
वन्ह्युष्णतावदपरोक्षवपुः स्वभावात्॥
निर्दोषवेदशिरसो वचनादतोऽस्मिन्
ब्रह्मात्मवस्तुनि भवेदपरोक्षबुद्धिः ॥ ३४१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्तु वाक्यप्रसूतमतिरिन्द्रियजन्यधीवन्नार्थापरोक्ष्यजननी भवितुं समर्थेत्यादिना वेदान्तवाक्यस्य ब्रह्मण्यपरोक्षज्ञानजनकत्वायोगादपरोक्षे ब्रह्मणि परोक्षज्ञानस्य प्रमात्वायोगाच्च न तत्र तत्प्रामाण्यमित्युदक्तं तद्दूषयति। ब्रह्मात्मवस्त्विति। अवद्यं तदापरोक्ष्यप्रतिबन्धको वास्तवो मलस्तद्रहितमित्यर्थः। चिद्रूपमपि द्रव्यांशसंवलितं चेत्स्यादपि कदा चित्परोक्षमित्यत एकेतिविशेषणम्। वन्हेरौष्ण्यं यथा स्वभावस्तथा। यथा स्वभावाद्वह्निरुष्णस्तथा स्वभावादपरोक्षवपुरित्यर्थः। ततः किं तत्राह। निर्दोषेति। अनेन वेदान्तेभ्यः भ्रमासंभवात्तज्जन्यज्ञानस्य भ्रान्तित्वमिष्टमिति न मन्तव्यमिति दर्शितम्। अपौरुषेये वेदान्ते भ्रान्त्यादिमूलत्वाभावान्निर्दोषत्वं च सर्वसंप्रतिपन्नमेव यतो निरवद्यचिदेकरूपं ब्रह्मात्मवस्तु स्वभावादपरोक्षवपुस्ततोऽस्मिन् ब्रह्मात्मवस्तुनि निर्दोषवेदशिरसोऽपरोक्षबुद्धिर्भवेदिति संबन्धः। ज्ञानापरोक्षत्वं ह्यपरोक्षविषयत्वेनैव न त्विन्द्रियजन्यत्वेन सुखादिज्ञानस्य नित्यसाक्षिरूपस्यापरोक्षस्यापीन्द्रियजन्यत्वाभावेनापरोक्षविषयत्वस्यैव तत्र तत्प्रयोजकत्वात्। प्रत्यगभिन्नं ब्रह्म चापरोक्षचिन्मात्रत्वाद्यत्साक्षादपरोक्षादिति श्रुतेश्च नित्यापरोक्षमेवेति तत्र वेदान्ताज्जातं ज्ञानं शब्दप्रसूतमपि विषयमहिम्नाऽपरोक्षमेव भवेदिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोक्तदूषणमिति भावः ॥ ३४१ ॥

सा चोपनेयरहिते विषयिण्यनन्ते-
ऽनिर्वाच्यमग्रहणमात्रमपाकरोति ॥
स्वोत्पत्तिलब्धनिजवस्तुबलेन तत्र
तापत्रयं समुपशाम्यति निर्निमित्तम् ॥ ३४

यच्चोक्तं नैतत्प्रमाणमपनेतु सतो न तावदित्यादि
ना स्वप्रकाशे ब्रह्मणि यथा भावरूपं प्रमाणाधेयं स्फु
र्त्यां न संभवत्येवं सदादिस्वभावस्याविद्यादेर्निवृत्तिः
न संभवतीति व्यर्थं तत्र वेदान्तप्रामाण्यमिति तदपं
सत्यनवकाशमिति तद् दूषयति। सा चेति। अपरो
बुद्धिरित्यर्थः। उपनेयं प्रमाणाधेयं स्फुरणं तद्रहित
त्यर्थः। विषयिणि चैतन्ये। अनन्त अपरिच्छिन्ने।
तदपि तदभावे हेत्वन्तरम्। अनिर्वाच्यमिति च्छे
अग्रहणं ग्रहणविरोध्यज्ञानम्। अज्ञानतत्कार्यप्रपञ्च
प्रागुक्तन्यायेनानिर्वचनीयत्वात्तस्य च लोके ज्ञाननि
त्तिदर्शनाद्वेदान्तजन्यब्रह्मसाक्षात्कारान्निवृत्तिरुपपद्य
ति भावः। अज्ञानमात्रं ज्ञाननिवर्त्यं प्रपञ्चस्तु तन्नाशे
नश्यतीति मतेन मात्रमित्युक्तम्। ननु वेदान्तज
द्वृत्तेः कथमज्ञाननिवर्तकत्वमिति तत्राह। स्वोत्प
ति। स्वोत्पत्त्या लब्धमभिव्यक्तं यन्निजवस्तु स्व
चैतन्यं तद्बलेनेत्यर्थः। नन्वविद्यानिवृत्तिः पुरुषार्थ
थ्यते सुषुप्त्यादावनर्थं विना तिष्ठन्त्यास्तस्याः स

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्परम्परया वानर्थत्वाभावादित्याशङ्क्य सुषुप्त्यादौ ततोऽनर्थाभावेऽपि समयान्तरे तत्संभवात्तन्निवृत्तिरप्यात्यन्तिकानर्थनिवृत्तिमिच्छद्भिरर्थनीयेति तन्निवृत्तावात्मन्याध्यात्मिकादित्रिविधदुःखस्य विनैव पुंव्यापारमन्यद्वा निमित्तमुपशान्तिर्भवतीति सफलैवात्मनि वेदान्तव्यापृतिरित्याह। तत्रेति। अविद्यानिवृत्तौ सत्यां स्वात्मनि वा ॥ ३४२ ॥

वाक्यात्प्रवर्त्तकनिवर्त्तकरूपभाजः
पुंसः प्रवृत्तिमुपलभ्य धियोऽनुमानात् ॥
कार्यान्विते शिशुरवैति पदस्य शक्ति-
मित्युच्यते यदि तु तत्र वयं वदामः ॥ ३४३॥

यदप्युक्तं लोके शब्दानां संगतिग्रहात्तस्य च प्रवर्त्तकवाक्याधीनत्वात्प्रवर्त्तककार्यान्वित एव गवादिपदसंगतिग्रह इति वेदोऽपि कार्यपर एव न सिद्धब्रह्ममात्रपर इति, तद्द दूषयितुमनुवदति। वाक्यादिति। प्रवर्त्तकनिवर्त्तकरूपं प्रवर्त्तकनिवर्त्तकस्वरूपं कार्यं तद्भाजस्तद्गोचरादित्यर्थः। गामानय परिहर सर्पमित्यादिप्रयोजकवृद्धवाक्यात्पुंसः प्रयोज्यवृद्धस्य प्रवृत्तिं निवृत्तिं चोपलभ्य पश्चाद्धियः कार्यधियोऽनुमानात्कार्यान्विते पदस्य शक्तिं शिशुर्व्युत्पित्सुरवैति अवगच्छतीति योजना। तुरवधारणे। कार्यान्विते एवेति संबन्धः। सिद्धान्ती तद्दूषणं प्रतिजानीते। तत्रेति। दूष-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णमिति शेषः ॥ ३४३ ॥

योग्येतरान्वितपदार्थनिवेदने तु
शब्दस्य शक्तिरिह वृद्धजनप्रयोगे ॥
विज्ञायते न खलु कार्यसमन्वितेऽर्थे
कार्याभिधायिषु पदेष्वपि तत्प्रसङ्गात् ॥३

कार्यान्वितसंगतिवादिना किं योग्येतरत्वमपि द्विशेषणमाश्रयणीयमुत न, अन्त्य अन्वय एव न भवति कुतः कार्यान्वय इत्यभिप्रेत्याद्यो योग्येतरान्वित एवावश्यापेक्षिते शब्दस्य वृद्धप्रयोगेशक्तिर्गृह्यतां कार्यत्वेनापि विशेषणेनेत्याशयेनाह। योग्येतरेति। न्वययोग्यं यदितरत् तदन्वितस्य पदार्थस्य निवे ज्ञापन इत्यर्थः। योग्यता तु सिद्धस्य कार्येण कार्यस्य सिद्धेन। तुरवधारणे। कार्यसमन्वितेऽर्थे शब्दस्य शक्तिरित्यनुषङ्गः। नन्वव्यभिचारात्कार्यान्वय्येव शब्दार्थ इत्याशङ्क्यासिद्धो हेतुरित्याशयेनाह। कार्याभिधायिष्विति। कार्यवाचकलिङ्लोडादिपदेष्वपि कार्यान्विते शक्तिप्रसङ्गादित्यर्थः ॥ ३४४ ॥

कार्यान्वितार्थविषया यदि शब्दशक्तिः
कार्यार्थवाचिषु लिङादिषु कार्यमन्यत् ॥
वक्तव्यमापतति तत्र च तत्र चान्यद्
वक्तव्यमेव भवतीत्यनवस्थितिः स्यात् ॥३

नन्वेतदिष्टप्रसञ्जनमित्याशङ्क्य सम्प्रसञ्जकं प्रसं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुवदन्नस्यानिष्टपर्यवसानमाह । कार्यान्वितार्थेति । अस्त्वेवमिति चेत्तत्राह । तत्र च तत्र चान्यदिति । येन कार्येणान्विते कार्ये लिङादिपदस्य शक्तिस्तस्यापि कार्यस्य लिङाद्यन्तरगम्यत्वे तत्रापि कार्यान्तरान्विते तस्य शक्तिर्वाच्येति लिङादिपदस्य तदभिधेयकार्यस्य चानन्त्यप्रसङ्गः । एकस्मिन्वाक्ये लिङादिनानात्वं चासंभवि । प्रकृतलिङादिनैव कार्यान्तरस्याप्यभिधाने तस्यापि कार्यस्याभिधानार्थं कार्यान्तरं वाच्यमिति तदानन्त्यं स्यात्, एकस्यानेकार्थत्वायोगाच्च । न च शब्दानभिधेयकार्यान्विते लिङादेः शक्तिरिति नोक्तदोष इति वाच्यम् । तदियत्ताऽभावेनानन्तकार्यान्विताभिधानप्रसङ्गात् । न च धात्वर्थकार्यान्वितं लिङाद्यभिधेयं कार्यमिति न कोऽपि दोषः स्यादिति वाच्यम् । धात्वर्थकार्यतायास्तन्मते प्रत्ययार्थकार्योपस्थित्यधीनावगमतयाऽन्योन्याश्रयात् । तस्माल्लिङादेः कार्यान्विते शक्तिरसङ्गतेति भावः ॥ ३४५ ॥

सिद्धान्वितं यदि लिङादिपदानि कार्यं
ब्रूयुर्विनश्यति तदा नियमस्त्वदीयः ॥
यो वर्णितः सकलमेव पदं स्वमर्थं
कार्यान्वितं वदति नान्यदिति स्वशास्त्रे ॥३४६॥

एवं सर्वेषां पदानां कार्यान्विते शक्तिरिति पक्षे दूषितेऽस्तु तर्हि लिङादिव्यतिरिक्तानां कार्यान्विते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तिरित्याशङ्क्य तर्हि किं कार्यपदस्यानन्विते ऽर्थे शक्तिः, किं वा सिद्धान्विते। आद्ये अन्वितक प्रतीतिराकस्मिकी स्यादित्यभिप्रेत्य द्वितीयमनूद्य त्याह। सिद्धान्वितमिति। यस्यैवं नाशप्रसङ्ग मेव तदीयं नियममाह। यो वर्णित इति। अन्यत्र द्धान्वितम्। प्राभाकरा हि स्वशास्त्रे सर्वमेव पदं कार्यान्वितमेव स्वार्थं वदति न सिद्धान्विता वर्णयन्ति। तल्लिङादेः सिद्धान्वितार्थे शक्त्यभ्युप बाधितं स्यात्। किं चैवं पदान्तराणामपि सिद्धान्वि ते शक्तिप्रसङ्ग इति योग्येतरान्विते पदशक्तिरित्य दुक्तमेव स्यात्। अन्यथा शब्दशक्तिप्रयोजकद्वैवि प्रसङ्ग इति भावः॥ ३४६॥

योग्येतरान्वितनिमित्तकशब्दशक्ति-
व्युत्पत्तिरेव यदि संभवभागिनी स्याद्।
आस्थीयते किमिति कार्यसमन्वितेऽर्थे
शब्दस्य शक्तिरसदर्थविशेषणेन॥ ३४७॥

पूर्वं योग्येतरान्विते पदशक्तिरित्ययमेव पक्षः स न तु योग्येतरकार्यान्वित इति तत्र कार्यत्वविशेष गौरवादिदुष्टत्वादित्युक्तमिदानीमुपयोगाभावाच्चै वेत्याह। योग्येतरान्वितेति। भावपरोऽयं निर्देशः ग्येतरान्वितत्वं निमित्तं प्रयोजकं निरूपकमिति वत् यस्याः शब्दशक्तेस्तद्व्युत्पत्तिरित्यर्थः। योग्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्विते शक्तिग्रह इति यावत्। संभवभागिनी स्यात्। अबाधिता भवेत्। अनेन कार्यान्वितस्य विशेषणस्य वैयर्थ्यं द्योतितम्। तदेवाह। असदर्थविशेषणेति। असन्नविद्यमानोऽर्थः प्रयोजनं यस्य तादृशं विशेषणमभिमतं यस्य वादिनस्तेनेत्यर्थः। संभवे व्यभिचारे च स्याद्विशेषणमर्थवदिति न्यायेन सर्वस्यापि विशेषणस्य व्यावृत्तिप्रयोजनत्वात्तच्छून्यं विशेषणं न युक्तमिति भावः॥ ३४७॥

यत्राविशेषितनिमित्तकताऽविरोधे
किं चिन्निवारकमुदीक्षितमस्तु तत्र॥
किं चिद्विशेषणविशिष्टमभीष्टशक्ते-
र्वस्तु प्रयोजकमिदं पुनरत्र नास्ति॥ ३४८॥

सर्वत्र विशेषणोपादाननिमित्तं दर्शयन्कार्यान्वयित्वस्यासदर्थविशेषणत्वमुपपादयति। यत्रेति। यत्राविशेषितमविशिष्टं निमित्तं यस्य तदविशेषितनिमित्तकं तस्य भावस्तत्ता तस्या ऽविरोधे अतिप्रसङ्गादिरूपे बाधे प्रसक्ते सति यदि तन्निवारकं विशेषणमीक्षितं तत्संभवतीत्यर्थः। एतावता संभवे व्यभिचारे च स्याद्विशेषणमर्थवदित्युक्तं विशेषणोपादानप्रयोजकं दर्शितम्, तत्र किं चिद्विशेषणविशिष्टं वस्त्वस्तु, निमित्तमितिशेषः। यत्र हि प्रवृत्त्यादौ केवलेष्टसाधनताज्ञानादेर्निमित्तत्वे प्रवृत्त्यतिप्रसङ्गो बाधकोऽस्ति तत्र तत्परिहारा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

य यत्कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानादि प्रवृ
कारणमिति तत्तादृशस्थले विशेषणमुपादीयत इत्यं
ततः किं तत्राह । अभीष्टेति । अत्र शब्दे, अभीष्
योग्येतरान्वितगोचरशक्तेः पुनरिदमुक्तम् प्रयोजकं क
र्यान्वयित्वविशेषणोपादाने निमित्तं बाधकं किं चि
पि नास्तीति संबन्धः । शब्दशक्तेर्योग्येतरान्वयि
यत्वे बाधकाभावान्न कार्यान्वयित्वमपि तद्गोचरवि
षयं कल्पनीयमित्यर्थः ॥ ३४८ ॥

कार्यान्वयान्वयिनि वस्तुनि शब्दशक्ति-
रित्युच्यते यदि तदापि समानमेतत् ॥
अन्वीयमानवचनत्वमतोपपत्तौ
कार्यान्वयान्वयिविशेषणगीर्वृथेति ॥ ३४९ ॥

यदुक्तं प्राक्कार्यान्वयान्वयिनि वस्तुनि शब्दश
रिति नानेककार्यापत्तिरिति तत्रापीदं गौरवं दूषण
सत्येवेत्याह । कार्यान्वयान्वयिनीति । एतद्गौरवम्।
म्यमेवाह । अन्वीयमानेति । शब्दस्येति शेषः । यदि
न्मते शब्दस्यान्वीयमानवचनत्वं तस्योपपत्तावित्यर्थ
इतिहेतौ यस्मादेवं कार्यान्वयित्वविशेषणगीर्वृथा त
देतत्समानमित्यधस्तात्संबन्धः ॥ ३४९ ॥

वक्तृज्ञानविवक्षयोरपि भवेच्छब्दार्थता तावके
पक्षे शब्दमनु प्रतीतिरुभयोरस्त्येव यस्मात्तयोः
यद्यच्छब्दमनु प्रतीतिपदवीमारोहदुत्प्रेक्ष्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्तद्वाच्यमिति स्थितौ न हि तयोः शब्दार्थतावर्जनम्॥३५०

ननु गामानयेत्यादिवाक्यान्नियमेन कार्यान्वयितया गवादिपदार्थप्रतीतेः कार्यान्वय्येव शब्दार्थ इति चेत्तर्हि लौकिकं वाक्यं वक्तृज्ञानविवक्षागोचरतयाऽनुमानसिद्धार्थानुवादकमिति वदतस्तव वाक्यश्रवणानन्तरं तयोरपि नियमेन प्रतीतेर्वक्तव्यत्वाद्वक्तृज्ञातविवक्षितकार्यान्वयिनः शब्दार्थतापत्तिः, गौरवान्न तथेति चेत्कार्यान्वयित्वमपि तत एव न तथेत्याशयेनाह । वक्तृज्ञानविवक्षयोरिति । शब्दमनु प्रतीतिः, शब्दं निमित्तीकृत्य प्रतीतिरस्त्येवेति । अन्यथा तद्विषयतया वाक्यार्थस्य सिद्धय्रभावेन वाक्यस्यानुवादकत्वायोगादित्यर्थः । नन्वेतावता कथं तयोरस्मत्पक्षे शब्दार्थतापत्तिरित्याशङ्क्य प्रतीतिबलादेव कार्यान्वयिनः शब्दार्थत्वमिच्छतस्तव मते कथं तयोः शब्दार्थतावर्जनं स्यादित्याह । यद्यच्छब्दमिति । पदवीं विषयताम् । उत्प्रेक्ष्यते दृश्यते । यद्यच्छब्दानन्तरं प्रतीयत इत्यर्थः । स्थितौ मते । तयोर्वक्तृज्ञानविवक्षयोः । प्राभाकरा हि गामानयेत्यादि लौकिकवाक्यं प्रथमं तात्पर्यज्ञानाभावाद् गवानयनादिसंसर्गं न प्रतिपादयति, किंतु तत एवमयं वेद विवक्षति चेति वक्तृज्ञानादिप्रतीतौ तद्विषयतया ऽर्थेऽपि ज्ञाते वाक्यं पश्चात्तमनुवदतीति वदन्ति । तत्र कथमुक्तविधया तयोरपि शब्दार्थता न स्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त् । न च मानान्तरात्प्रयोगानुपपत्तिरूपाद्वक्तृज्ञान-प्रतीतिरित्यन्यलभ्ययोर्न शब्दार्थतेति वाच्यम् । का-तदन्वययोरपि लिङ्लोडादिबलात्प्रतीयमानतया गवादिशब्दार्थतेति तुल्यमेवेति भावः ॥ ३५० ॥

वेदे वक्तुरभावतस्तदुभयं नास्तीह यस्मादतः
शब्दो वाचकशक्तिमुज्झति निजान्तत्र स्ववाच्यं वि-
वाच्ये वाचकशक्तिमिच्छति भवान्नान्यत्र तत्र श्रुते-
रप्रामाण्यमिति स्फुटं तव भवेद्बुद्धेरनुत्पत्तितः ॥ ३५१ ॥

नन्वेवमस्त्विति चेत्तर्हि वेदप्रामाण्यहानिरपौरुषे-या वेदस्य वक्तुरभावेन तेन ज्ञातविवक्षितकार्यरूपा-संभवादित्याशयेनाह । वेदे वक्तुरभावत इति । तदु-वक्तृज्ञानं विवक्षा च इह अस्मिन्मते तत्र वेदे स्वव-विना तदभावात् शब्दो निजां वाचकशक्तिमुज्झति संबन्धः । ननु लोके लिङाद्यर्थतया गृहीतकार्याभावे वैदिकलिङादेर्यथा प्रामाण्यं तथा वक्तृज्ञानाद्यभावे वेदप्रामाण्यं किं न स्यादित्यत आह । वाच्य इति । कप्रसिद्ध इति शेषः । वाचकशक्तिं वैदिकशब्दस्या-शेषः । अन्यत्र लोकाप्रसिद्धे । प्राभाकरोऽपि वेदे श-लौकिकावेवेति मन्यते लिङादेरपि लोकावगतका-त्यनुरोधेन वेदे धात्वर्थस्य कार्यत्वायोगात्तदतिरिक्त-र्य एव शक्तिं कल्पयति न त्वर्थान्तरे इत्येकरूप-लौकिकवैदिकविधिप्रामाण्यं वदति । वक्तृज्ञान-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योस्तु सर्वथा वेदेऽसंभवाद्वेदस्याबोधकतारूपाप्रामाण्य-मेव स्यादित्याह। तत्रेति। लोकवेदयोः शब्दार्थैकरूप्ये सतीत्यर्थः। इत्येवं तव मत इति शेषः। तत्र तव मते श्रुतेरतिस्फुटमप्रामाण्यं भवेदिति संबन्धः। तत्र हेतुः बुद्धेरनुत्पत्तित इति, वक्तृज्ञातविवक्षितकार्यान्वयिबुद्धे-रसंभवादित्यर्थः ॥ ३५१ ॥

न च सोमयागपदयोरुभयो-
रपरस्परेण घटतेऽत्र युजा ॥
पदजातमेतदखिलं हि निजं
विषयं समर्पयति कार्ययुतम् ॥ ३५२ ॥

किंच कार्यान्वयी शब्दार्थ इति मते सोमादिविशिष्टविधिविलोपापत्तिः, सोमेन यजेतेत्यत्र हि सोमविशिष्टयागो विधीयत इति तेऽपि मतं स तव न संभवति त्वन्मते सोमयागशब्दयोः परस्परसंबन्धाभावेन सोमविशिष्टयागप्रतीत्यभावान्न चाप्रतीतस्य विधिः संभवतीत्याशयेनाह। न च सोमयागपदयोरिति। अत्र भवन्मते। युजा संबन्धः। कुतस्तयोः संबन्धासंभवस्तत्राह। पदजातमिति। निजं विषयं स्वाभिधेयम्। सर्वेषां सोमादिपदानां लिङर्थकार्यान्वित-स्वार्थबोधकत्वात् परस्परमन्योन्यं न संबन्धो युज्यत इत्यर्थः। न च शब्दाभिहितं कार्यमेव यागसोमयोः क्रियाकारकभावेन संबन्धं घटयतीति वाच्यम्। वि-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षयान्वितस्यैव तस्य लिङादिप्रतिपाद्यतया विशि‍ष्ट
षयज्ञानमन्तरेण प्रतीतस्य वैशिष्ट्याक्षेपकत्वायोगा
एवमन्योऽपि भिन्नपदार्थविशिष्टविधिर्न संभव
भावः ॥ ३५२ ॥

कार्यान्वयान्वयिनि शक्तिरिति स्थितौ च
कार्यान्वयान्वितमतिर्न परस्परेण
संबन्धितामतिरतश्च न सिद्धिमेति
सर्वो विशिष्टविधिरित्यपि दूषणं वः ॥ ३५३ ॥

कार्यान्वयान्वयि शब्दार्थ इति मतेऽप्युक्तं दूषण
दिशति । कार्यान्वयान्वयिनीति । वो युष्माकं का
न्वयान्वयिनीति संबन्धः । स्थितौ पक्षे । अपिरव
रणे । कार्यान्वयान्वितमतिरेव स्यादिति शेषः । प
रस्परेण संबन्धितामतिः स्यात्, पदार्थविषयेति
अत्र सर्वशब्दः पृथगुपात्तविशेषणविशेष्याभिप्रा
ष्टव्यः । पूर्वोक्तादिदं मतान्तरमित्येतावतैव तत्रो
षणस्यातिदेशः । न च तदप्राप्तिशङ्काबीजनिराक
येति द्रष्टव्यम् ॥ ३५३ ॥

योग्येतरान्वितपदार्थगतैव शब्द:
शक्तिः स्थिता यदि पुनर्घटते तदाऽयम्
सर्वो विशिष्टविधिरस्तु तथैव तस्माद्
युक्तं तदेतरदितीदमपीह भाष्यम् ॥ ३५४ ॥

रस्य मते नायं दोष इत्याह । योग्यतरान्वितेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्येनेतरेणान्वितो यः पदार्थस्तद्गोचरेत्यर्थः। स्थिता आश्रिता। उक्तदोषाभावे फलित माह। तस्मादिति। तथैव योग्येतरान्वितशक्तिरेवास्त्विति न केवलं विशिष्टविधिरेवास्मिन्पक्षे युज्यते यदैकस्मादपूर्वं तदेतरत्तदर्थमिति शबरभाष्यमप्यस्मत्पक्षे युक्तमेवेत्याह। युक्तमिति। इहास्मिन्पक्षे ॥ ३५४ ॥

शब्दः प्रवृत्तिजनको न तु बोधकश्चे-
न्नैतत्प्रवर्तकधियो जनकत्वहेतोः॥
इष्टाभ्युपायमतिजन्मनिमित्तभूतः
शब्दः प्रवर्तयति नैष पुनः पुमांसम् ॥३५५॥

नन्तु विधिश्रुतेः प्रवर्तनालक्षणमेव प्रामाण्यं विशेषतो विशिष्टविधेर्न तु बोधकतालक्षणं तस्य त्वदुक्तविधया विशिष्टविधिप्रतिपादनासंभवादिति न विशिष्टविधेरप्रामाण्यमित्याशङ्कते। शब्द इति। लिङादिरित्यर्थः। किं ज्ञानद्वारा प्रवृत्तिं जनयति नेत्याह। न त्विति। नैवेत्यर्थः। दूषयति। नैतदिति। त्वदुक्तं नेत्यर्थः। यथा प्रत्यक्षादीनां बोधकत्वेन प्रामाण्यं यथा वा शब्दान्तरस्यैवमेव विधेरपि युज्यते। प्रवर्तकबोधजनकत्वमात्रेण प्रवर्तनालक्षणं प्रामाण्यमितिव्यवहारस्याप्यबाधादित्याशयेनाह। प्रवर्तकधिय इति। कथं तर्हि विशिष्टविधेर्बोधकतया प्रामाण्यमित्याशङ्क्य, कार्यमेव लिङर्थ इति पक्षेपि योग्येतरान्वितेति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्लोकोक्तविधया तदुपपत्तिरित्याशयेन सर्वविधि-
धारणप्रकारमाह । इष्टाभ्युपायेति । इष्टसाधनत्वं
जन्मनिमित्तत्वाच्च साक्षाच्छब्दः प्रवर्तक इत्युपसं-
ति । प्रवर्तयतीति ॥ ३५५ ॥

तस्मादसंगतमिदं यदुशन्ति के चित्
कार्यान्वितार्थविषयैव तु शब्दशक्तिः ॥
तत्र प्रयोगमभिवीक्ष्य तथा प्रतीतिः
कल्प्येति वर्णितनिजेष्टविघातहेतोः ॥ ३५६ ॥

गौरवाद्विशिष्टविधिविलोपप्रसङ्गाच्च कार्यान्वित-
शब्दार्थ इतिमतमसंगतमिति प्रकृतमुपसंहरति । तस्मा-
दिति । इदंशब्दार्थमाह । यदुशन्तीति । के चित्प्राभाक-
राः । शब्दशक्तिः कल्प्येतियदुशन्तीति सम्बन्धः । तद्
तत्र शब्दशक्तिकल्पनाप्रकारमप्याह । तत्रेति । कार्य-
त्यर्थः । प्रयोगमुत्तमवृद्धस्येति शेषः । तथा प्रती-
कार्यान्विते शक्तिरिति प्रतीतिः, स्यादिति शेषः । अ-
कृतमित्यत्र प्रागुक्तमेव त्वदिष्टविशिष्टविधिलोपप्रस-
ङ्गादिति हेतुमाह । वर्णितेति ॥ ३५६ ॥

वेदैकगम्यमिति कार्यमभीष्टमस्मिन्
छक्तिग्रहोऽपि न यदस्य समञ्जसोऽयं
शक्तिग्रहं च परिहृत्य न बोधकत्वं
शब्दस्य शक्यमिह वक्तुमशङ्कितेन ॥ ३५७ ॥

किं च वेदे न लोकवद्वाक्यार्थकार्यान्वितं शब्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वया तदनभ्युपगमात्, तद्व्यतिरिक्तं तु कार्यमपूर्वतया शब्दैकप्रमाणयोग्यमिति तवेष्टमित्यज्ञाते तस्मिन्वैदिकलिङादेः शक्तिग्रहासंभव इत्याशयेनाह। वेदैकगम्यमिति। कार्यमपूर्वलक्षणं कार्यम्। न समञ्जसः युक्तो न भवति। ननु यद्यग्निहोत्रादि धात्वर्थातिरिक्तं कालान्तरभाविस्वर्गानुकूलं स्वर्गकामिकार्यं न स्यात्तर्हि स्वर्गकामपदसमभिव्याहारो न स्यादिति तत्समभिव्याहारानुपपत्त्योपस्थिते तस्मिन्संगतिग्रहोऽस्त्विति चेन्नेत्याह। अयमपि न समञ्जस इति। उक्तोऽपि सङ्गतिग्रहोपायः सम्यङ् नेत्यर्थः। विधिवाक्यार्थावगमात्प्राग्लोकेऽपि सुखविशेषतत्साधनयोः स्वर्गपदप्रयोगादनिश्चितामुष्मिकार्थतया स्वर्गपदस्य तत्समभिव्याहारमात्रेणालौकिककार्योपस्थित्ययोगात् तत्रापि धात्वर्थस्य कार्यत्वे सिद्धे तदनुकूलस्य स्वर्गस्य तदर्थवादेनापि वक्तव्यत्वात्, उक्तार्थापत्तिगम्यत्वे तस्यापूर्वत्वव्याहतेश्च,नोक्तोपायेन व्युत्पत्तिरिति भावः। शक्तिग्रहासंभवोपपादनफलमाह। शक्तिग्रहमिति। शब्दस्य लिङादेः। इह वेदे। अशङ्कितेन धृष्टेनापि ॥ ३५७॥

शश्वत्स्वयंप्रभमलुप्तचिदात्मभूतं
विष्णोः परं पदममुत्र तु शब्दशक्तिः॥
शक्या ग्रहीतुमतिबुद्धिमनस्यपीति
शास्त्रप्रमाणकमदः प्रवदन्ति सन्तः ॥ ३५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु भवन्मते सर्वप्रमाणायोग्यमपि ब्रह्म यथा शा-
स्त्रप्रतिपाद्यमेवमस्मन्मते कार्यमपि शास्त्रार्थोऽस्ति
त्याशङ्क्य वैषम्यमाह । शश्वत्स्वयंप्रभमिति । सदा स्व-
यंप्रकाशमित्यर्थः । बुद्धिर्निश्चयात्मकवृत्तिमदन्तःकरणं
संकल्पविकल्परूपवृत्तिमत्तदेव मनस्तदुभयमतीत्य ति-
ष्ठतीत्यतिबुद्धिमनस्तस्मिन्, वाङ्मनसागोचरस्यापि स्व-
प्रकाशब्रह्मणोऽहंकारादिशबलस्य साक्षिणा, सत्यादिश-
बलस्य च प्रत्यक्षादिनोपस्थितिसंभवेन तत्र गृहीतसङ्ग-
तिकैर्वेदान्तैर्लक्षणया पूर्णब्रह्मणः प्रतिपादनात्तस्य शा-
स्त्रप्रमाणकत्वं युज्यते, न तथा त्वदभिमतकार्यस्य
न च तदपि लिङादिलक्ष्यमस्त्विति वाच्यम् । तथा त्व-
यानभ्युपगमात् । वाच्यार्थसंबन्धितया मानान्तराव-
धिगतस्य जडत्वेन स्वतोऽप्यनुपस्थितस्य तस्य त्वन्म-
लक्ष्यत्वायोगाच्च । अस्मन्मते लक्ष्यस्य ब्रह्मणो मान-
न्तरादनुपस्थितस्यापि स्वप्रकाशत्वेनोपस्थितत्वाद्यु-
ज्यत एव लक्ष्यत्वमिति भावः । ब्रह्मादिपदार्थशबल-
परोक्षत्वादमुत्रेत्युक्तम् । शबले शक्तिग्रहसंभवस्य फ-
लमाह । इति शास्त्वेति । इति हेतोरदःपदं शास्त्रप्रमाण-
सन्तो बादरायणादयः शास्त्रयोनित्वादित्यादिना वद-
न्तीत्यर्थः ॥ ३५८ ॥

जातः सुतः सकलवंशविवर्द्धनस्ते
विप्रेति वाक्यसमनन्तरमस्य बुद्धिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रोतुर्मुखाकृतिवशेन तु पुत्रजन्म-
वस्तुन्यवश्यमनुमीयत एव बालैः ॥ ३५९ ॥

एवं प्रवर्त्तकवाक्याधीनामेव प्राथमिकीं व्युत्पत्ति-मभ्युपेत्य लाघवाद्योग्येतरान्वित एव शब्दार्थो न तु तादृशकार्यान्वित इत्युक्तमिदानीं सिद्धार्थकवाक्यादपि प्रथमव्युत्पत्तेः संभवान्न प्रवर्त्तकवाक्याधीना सा,तत्र च कार्योपस्थित्यभावान्न कार्यान्वयी सर्वशब्दार्थ इत्याश-येनाह । जातः सुत इति । वाक्यसमनन्तरं वाक्यश्र-वणानन्तरम्,अस्य श्रोतुर्विप्रस्य मुखाकृतिर्मुखविका-सादिस्तद्वशेन तेनैव लिङ्गेन,तुरवधारणे,पुत्रजन्मवस्तुनि पुत्रजन्मरूपवस्तुविषया बुद्धिरनुमीयत इति सम्बन्धः। पुत्रस्ते जात इतिवाक्यश्रवणान्तरं पितुर्मुखविकासं दृष्ट्वा ज्ञातपुत्रादिपदार्थस्तटस्थोऽयमिदानीमिष्टज्ञानवा-न्प्रसन्नवक्त्रत्वात्संमतवदिति तस्येष्टविषयं ज्ञानमनुमि-नोति । तच्चेष्टं वस्तु पुत्रजन्मैवेति पुत्रजन्मवस्तुनी-त्युक्तम् । एवं च न सिद्धवाक्यात्परस्मिन् ज्ञानजन्मा-नुमानं संभवति लिङ्गाभावादित्यसदितिभावः ॥ ३५९ ॥

भूतार्थनिष्ठवचनादपि शब्दशक्तिः
शक्या ग्रहीतुमुदितेन यथाऽनभिज्ञैः ॥
तत्र प्रवर्त्तकनिवर्त्तकवाक्यमूल-
शक्तिग्रहैकनियमस्य न हेतुरस्ति ॥ ३६० ॥

एवमपि कथं पुत्रजन्मादिज्ञानसिद्धिस्तत्राह । भूता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थनिष्ठेति । उदितेन यथा उक्तेन मुखविकासाद्युपा
न पूर्वोक्तलिङ्गेनेष्टज्ञानानुमानानन्तरं किं तदिष्टमिति
ज्ञासमानः पुत्रस्ते जात इति वक्त्रैव प्रदर्शितेन तत
नुलिप्तकुङ्कुमाद्यङ्कितवाससा तर्केण स्वस्मिन्सुखनि
त्ततयावगतं पुत्रजन्मैव तन्नान्यत्प्रियासुखप्रसवादि
निश्चित्येदं पुत्रजन्मज्ञानं कुतोऽस्याभवदिति तत्कार
मालोचयन्प्रस्तुतवाक्यश्रवणानन्तरमेव तज्जन्मदर्श
त्तद्वाक्यमेव पुत्रजन्मज्ञाने निमित्तमिति निश्चित्य
ष्ठार्थवाक्यादपि शब्दशक्तिर्ग्रहीतुं शक्यत इति ।
लोके । प्रवर्त्तकनिवर्त्तकवाक्यं मूलं यस्य शक्तिग्रह
स प्रवर्त्तकनिवर्त्तकवाक्यमूलशक्तिग्रहः केवलं तद्वा
रस्य नियमस्य न हेतुरस्तीत्यर्थः ॥ ३६० ॥

सामान्यतः प्रथममेष पदार्थपिण्डो
वाच्योऽस्य वाचकमिदं पदपिण्डरूपम् ॥
इत्याकलय्य पुनरेष विशेषतोऽपि
शब्दार्थसंगतिमवैति जनस्तटस्थः ॥ ॥ ३६१ ॥

नन्वेवं पुत्राद्यनेकपदार्थसंसर्गरूपवाक्यार्थज्ञान
पुत्रादिपदसमुदायात्मकवाक्यजन्यत्वनिश्चयेऽप्यस्य
दस्यास्मिन्नर्थे शक्तिरिति कथं प्रवृत्त्या विना नि
शक्यत इत्याशङ्क्याह । सामान्यत इति । संमुग्धा
रेण पदार्थपिण्डः पदार्थसमूहः पदार्थसंसर्ग इति
त् । अस्य प्रकृतवाक्यस्य । वाचकमस्य वाक्यार्थस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेषः । पुनः सामान्यतो वाक्यतदर्थज्ञानयोर्हेतुहेतुमत्त्व-ग्रहानन्तरम् । एष व्युत्तिपत्सुः । विशेषतोऽपि शब्दा-र्थसङ्गतिं पुत्रादिपदस्य तत्तदर्थविशेषे संगतिम् । अवैति अवगच्छति । सामान्यतोऽर्थसमूहे पदसमूहस्य गृहीत-सङ्गतिको हि बालः स्वात्मन्यवगतपुत्रार्त्यनिष्टसाध-नभावः प्रतिपन्नदेवदत्तपुत्रार्तिर्देवदत्त तव पुत्र आर्त्त इति वाक्यश्रवणानन्तरं तस्मिन्नतिमलिनं मुखादि दृ-ष्ट्वा पूर्ववदनिष्टज्ञानमनुमाय तस्य च वाक्यजन्यत्वं निश्चित्य सुताद्यर्थविशेषे पुत्रादिपदस्य योग्येतरान्वि-ते पृथक्पृथक् संगतिमवगच्छति, अतः प्रथमव्युत्पत्तेः प्रवर्त्तकवाक्याधीनत्वनियमोक्तिः परस्य भ्रान्तिमूलेति भावः ॥ ३६१ ॥

काष्ठैः स्थाल्यां पचति विविधैरोदनं पूर्णिकेति
श्रुत्वा बालः सपदि मनुते काष्ठशब्दस्य शक्तिम् ॥
दृष्ट्वा तस्मिन्पचनकरणं प्रज्वलत्काष्ठजातं
न्यायोपायादितरवचसां शक्तिषु प्राक् प्रवीणः ॥ ३६२ ॥

एवं प्रसिद्धपदसमभिव्याहारादप्यप्रसिद्धपदस्य विनै-व कार्यान्वयप्रतीतिं योग्येतरान्विते संगतिग्रहणाद-पि न शब्दार्थस्य कार्यान्वयित्वनियमः, न च तत्रा-पि पदान्तरस्य कार्यान्विते प्रथमावगतशक्त्यनुरोधेन कार्यपदाध्याहारोऽस्त्विति वाच्यम्, योग्येतरान्वित ए-व प्रथमं संगतिग्रहोपपादनादित्याशयेनाह । काष्ठैः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थाल्यामिति । पूर्णिका दासी । इतरवचसां काष्ठप
व्यतिरिक्तपदानाम् । शक्तिषु अमत्रादिविषयास्वि
शेषः । प्रागेतस्मात्प्रयोगात्पूर्वं प्रवीणो निपुणो विद्व
न्बालः पूर्णिका विविधैः काष्ठैः स्थाल्यामोदनं पचतं
श्रुत्वा पचनकरणं प्रज्वलत्काष्ठजातं च दृष्ट्वा तस्मिन्वा
न्यायोपायान्न्यायबलेन तत्तदर्थविशेषे स्थाल्यादिप
नां शक्तेर्निश्चयात्परिशेषादिन्यायेन काष्ठशब्दस्य श
सपदि मनुत इति संबन्धः ॥ ३६२ ॥

न च किमपि नः कार्यं नाम प्रमाणपथानुग
यदिह तु पुनर्लिङ्लोडादेरुपैष्यति वाच्यताम् ।
न खलु तदितो धात्वर्थादेः पृथग्व्यवसीयते
व्रजतु तदिह श्रेयोहेतुर्लिङादिपदार्थताम् ॥ ३६

इदानीं प्रथमव्युत्पत्तेः प्रवर्तकवाक्याधीनत्वनियमे
पि न कार्यान्विते शक्तिः क्रियातिरिक्तकार्यस्यैव लोके
सिद्धत्वादित्याह । न च किमपीति । नः प्रमाणपथा
गमिति संबन्धः । न तावल्लोके धात्वर्थातिरि
कार्यमस्ति । नापि धात्वर्थ एव तत्, तस्य धा
नैवाभिहितत्वेन लिङादिनाप्यभिधानायोगात्,
नन्यलभ्यस्यैव शब्दार्थत्वात् । न च कार्यत्वाकारेण त
लिङर्थत्वमिति वाच्यम् । कार्यत्वस्य कृतिसाध्य
रूपत्वे तस्या अति प्रसक्तत्वेनाऽप्रवर्तकत्वात् प्र
र्तकाभिधायिलिङर्थत्वायोगात् । तस्मात्कार्यं दुर्नि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्यर्थः । ननु शब्दार्थनिरूपणप्रस्तावे किमिदं कार्यखण्डनं तत्राह । यदिहेति । तुरवधारणे यदेवेत्यर्थः। कार्यस्य लिङर्थत्वं न संभवतीति वक्तुं तदिति नासंगतमित्यर्थः । पुनःशब्दोऽलङ्कारार्थः । ननु मयेदं कर्त्तव्यमिति कार्यमेवानुभूयते इति कथं तदप्रमाणकमित्याशङ्क्य कृतिसाध्यतया धात्वर्थस्तदिच्छा वा तदाकारा चिकीर्षाख्या तथाऽनुभूयते न तदतिरिक्तं किं चिदित्याह । न खल्विति । धात्वर्थः क्रिया, आदिपदात् कारकादिग्रहः । कटः कर्तव्यः तृप्तिः कार्येति कारकफलयोरपि कर्तव्यत्वप्रतीतेरितः प्रसिद्धाद्धात्वर्थादेः पृथग् न खलु तत्कार्यं व्यवसीयत इत्यन्वयः । ननु कस्तर्हि प्रवर्त्तको यो लिङादिनोच्यते शब्दभावनादेर्बालादिव्यवहाराहेतुत्वेन मध्यमवृद्धप्रवृत्त्याऽननुमितस्य लिङर्थत्वकल्पनायोगादित्याशङ्क्य सत्यं श्रेयःसाधनत्वमेव ज्ञायमानं बालादिप्रवृत्तौ करणतया क्लृप्तं प्रकृते लिङाद्यभिधेयं कल्प्यमित्याह । व्रजत्विति । इह लोके । श्रेयोहेतुरिष्टसाधनम् । भावप्रधानो निर्देशः ॥ ३६३ ॥

न खलु जगति श्रेयोहेतुप्रतीत्युदयादृते
पुरुषवचनात् क्वापि प्राज्ञः प्रवर्त्तितुमर्हति
पुरुषवचनाच्छ्रेयोहेतुप्रतीत्युदयात् पुन-
स्तदनुवशगो रागोत्पत्तौ ततः स हि चेष्टते ॥ ३६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थाल्यामिति । पूर्णिका दासी । इतरवचसां काष्ठप-
व्यतिरिक्तपदानाम् । शक्तिषु अमत्रादिविषयास्विति
शेषः । प्रागेतस्मात्प्रयोगात्पूर्वं प्रवीणो निपुणो विद्वा-
न्बालः पूर्णिका विविधैः काष्ठैः स्थाल्यामोदनं पचतीति
श्रुत्वा पचनकरणं प्रज्वलत्काष्ठजातं च दृष्ट्वा तस्मिन्न-
न्यायोपायान्न्यायबलेन तत्तदर्थविशेषे स्थाल्यादिपदा-
नां शक्तेर्निश्चयात्परिशेषादिन्यायेन काष्ठशब्दस्य शक्तिं
सपदि मनुत इति संबन्धः ॥ ३६२ ॥

न च किमपि नः कार्यं नाम प्रमाणपथानुगं
यदिह तु पुनर्लिङ्लोडादेरुपैष्यति वाच्यताम् ।
न खलु तदितो धात्वर्थादेः पृथग्व्यवसीयते
व्रजतु तदिह श्रेयोहेतुर्लिङादिपदार्थताम् ॥ ३६३ ॥

इदानीं प्रथमव्युत्पत्तेः प्रवर्तकवाक्याधीनत्वनियमो-
ऽपि न कार्यान्विते शक्तिः क्रियातिरिक्तकार्यस्यैव लोके-
ऽसिद्धत्वादित्याह । न च किमपीति । नः प्रमाणपथानु-
गमिति संबन्धः । न तावल्लोके धात्वर्थातिरिक्तं
कार्यमस्ति । नापि धात्वर्थ एव तत्, तस्य धातु-
नैवाभिहितत्वेन लिङादिनाप्यभिधानायोगात्, अ-
नन्यलभ्यस्यैव शब्दार्थत्वात् । न च कार्यत्वाकारेण तस्य
लिङर्थत्वमिति वाच्यम् । कार्यत्वस्य कृतिसाध्यत्व-
रूपत्वे तस्या अति प्रसक्तत्वेनाऽप्रवर्तकत्वात् प्र-
र्तकाभिधायिलिङर्थत्वायोगात् । तस्मात्कार्यं दुर्नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्यर्थः । ननु शब्दार्थनिरूपणप्रस्तावे किमिदं कार्यखण्डनं तत्राह । यदिहेति । तुरवधारणे यदेवेत्यर्थः । कार्यस्य लिङर्थत्वं न संभवतीति वक्तुं तदिति नासंगतमित्यर्थः । पुनःशब्दोऽलङ्कारार्थः । ननु मयेदं कर्त्तव्यमिति कार्यमेवानुभूयते इति कथं तदप्रमाणकमित्याशङ्क्य कृतिसाध्यतया धात्वर्थस्तदिच्छा वा तदाकारा चिकीर्षाख्या तथाऽनुभूयते न तदतिरिक्तं किंचिदित्याह । न खल्विति । धात्वर्थः क्रिया, आदिपदात् कारकादिग्रहः । कटः कर्त्तव्यः तृप्तिः कार्येति कारकफलयोरपि कर्त्तव्यत्वप्रतीतेरितः प्रसिद्धाद्धात्वर्थादेः पृथग् न खलु तत्कार्यं व्यवसीयत इत्यन्वयः । ननु कस्तर्हि प्रवर्त्तको यो लिङादिनोच्यते शब्दभावनादेर्बालादिव्यवहाराहेतुत्वेन मध्यमवृद्धप्रवृत्त्याऽननुमितस्य लिङर्थत्वकल्पनायोगादित्याशङ्क्य सत्यं श्रेयःसाधनत्वमेव ज्ञायमानं बालादिप्रवृत्तौ करणतया क्लृप्तं प्रकृते लिङाद्यभिधेयं कल्प्यमित्याह । व्रजत्विति । इह लोके । श्रेयोहेतुरिष्टसाधनम् । भावप्रधानो निर्देशः ॥ ३६३ ॥

न खलु जगति श्रेयोहेतुप्रतीत्युदयादृते
पुरुषवचनात् क्वापि प्राज्ञः प्रवर्त्तितुमर्हति
पुरुषवचनाच्छ्रेयोहेतुप्रतीत्युदयात् पुनस्तदनुवशगो रागोत्पत्तौ ततः स हि चेष्टते ॥ ३६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु समिधमाहरेत्याचार्यवचनेन माणवकः प्रवर्त्त-
नं च तस्य किं चित्तत इष्टं लभ्यते प्रत्युत दुःखं
महद्भवति तत्कथं श्रेयोहेतुत्वं प्रवर्त्तकं येन तद-
र्थी भवेदिति तत्राह । न खलु जगतीति । पुरुषव-
नात् आचार्यादिवचनात् । प्राज्ञः प्रेक्षावान् । माण-
कस्यापि बलवच्छ्रेयस्करमाचार्याज्ञापालनमदृष्टं
तादृशमस्त्येव श्रेय इति तत्साधनत्वमेव तत्रापि प्र-
वर्त्तकं यदि तदुभयार्थी माणवको न स्यात्तर्हि न प्र-
वर्त्ततैव, दृश्यन्ते हि दुष्टाः शिष्यास्तथाविधा इ-
भावः । अस्तु तर्ह्यव्यवधानाद्रांग एव प्रवर्तक इत्या-
शङ्क्याह । पुरुषवचनाच्छ्रेयोहेत्विति । सत्यं चिकी-
रूपो धात्वर्थरागः प्रवृत्त्यव्यवहितप्राक्कालेऽस्ति, परं
चार्यादिवचनादिष्टसाधनत्वज्ञानोदयात्पुनः पश्चाद्
गोत्पत्तिः, ततस्तदनुवशगो रागाधीनः स माणवका-
प्रवर्त्तत इत्यर्थः । तथा च चिकीर्षाया यन्निमित्त-
ष्टसाधनताज्ञानं तदेव बाह्यचेष्टायामपि कारणमि-
र्थः । ननु श्रेयःसाधनत्वमतीतादिसाधारणं कथं
वर्त्तकमिति चेन्न । कृतियोग्येष्टसाधनत्वस्य प्रवर्त-
त्वेनातिप्रसङ्गाभावादित्युक्तत्वादिति ॥ ३६४ ॥

नयनिपुणधीर्बालश्चेष्टां समीक्ष्य समीहितुः
फलतदुचितव्याप्तिज्ञानः पुरा निज आत्मनि ।
परतनुगतं श्रेयोहेतुप्रतीत्युदयोत्थितं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चरितविषये रागं तस्य प्रवर्त्तकमिङ्गति ॥ ३६५ ॥

एवमिष्टसाधनताज्ञानस्य मतद्वयसंप्रतिपन्नस्य प्रवृत्तिकारणत्वमुपपाद्य तत्र लिङादेः संगतिग्रहं वक्तुं प्रथमं प्रवृत्तिं प्रत्यव्यवहितप्राक्कालीनचिकीर्षानुमानं तद्धेत्विष्टसाधनताज्ञानानुमानं च व्युत्पित्सोराह । नयनिपुणधीरिति। अनुमाने कुशलधीरित्यर्थः । समीहितुः प्रवर्त्तमानस्य । कृतं तस्यानुमानस्योचितं व्याप्तिज्ञानं येन स कृततदुचितव्याप्तिज्ञानः । निज आत्मनि स्वात्मनि । परस्य प्रवर्त्तमानस्य तनुगतं श्रेयोहेतुप्रतीत्युदयात्कृतिसाध्येष्टसाधनताज्ञानोत्पत्तेः रूत्पन्नात्तज्ज्ञानादुत्थितमुत्पन्नं चरितविषये तादृशेष्टसाधनतयाऽवगतधात्वर्थे तस्य प्रवर्त्तमानस्य रागमिङ्गत्यनुमिनोति । गामानयेत्यादिलिङादिसमभिव्याहृतं वाक्यं श्रुत्वा प्रवर्त्तमानवृद्धस्य गवानयनादिचेष्टां दृष्ट्वा बालः पूर्वं स्वात्मनि प्रवृत्तेश्चिकीर्षाजन्यत्वेन व्याप्तिनिश्चयवान् विमता प्रवृत्तिश्चिकीर्षाजन्या प्रेक्षावत्प्रवृत्तित्वान्मदीयभोजनादिप्रवृत्तिवदिति, मध्यमवृद्धे चिकीर्षामनुमाय, सापि वर्णितश्रेयःसाधनताज्ञानजन्या चिकीर्षात्वान्मम भोजनादिचिकीर्षावदिति कृतिसाध्येष्टसाधनताज्ञानं चानुमिनोतीत्यर्थः ॥ ३६५ ॥

प्रवर्त्तकोत्थाननिबन्धने ततः
समीहितोपायविशेषवस्तुनि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गिरोऽनुमाय प्रतिपत्तिहेतुतां
विशेषसिद्धौ तु समीहते पुनः ॥ ३६६ ॥

ततः किं तत्राह। प्रवर्तकोत्थानेति । ततः पर-गतरागानुमानानन्तरं प्रवर्त्तकस्य गवानयनादिप्रवृ-जनकस्य गवानयनादि कर्त्तव्यमिति रागस्योत्थान-त्पत्तिर्येन तस्य श्रेयःसाधनताविशेषज्ञानस्य निरू-ने विषये समीहितोपायविशेषवस्तुनि कृतिसाध्य-विशिष्टेष्टसाधने प्रतिपत्तिहेतुतां गिरो लिङादिम-क्यस्यानुमाय पुनर्विशेषसिद्धयै तु लिङादिपदवि-स्यार्थविशेषे शक्तिसिद्धयै च समीहते वक्ष्यमाणप्र-रेण फलवान्भवतीत्यर्थः ॥ ३६६ ॥

पदान्तरस्यागमनादिहान्यत-
स्तथा पदस्योद्धरणादितो गिरः ॥
विशेषसिद्धिं लभते प्रयत्नवान्
पदार्थसंबन्धगतां विचक्षणः ॥ ३६७ ॥

नन्वेवमपि किमाख्यातमात्रस्य तत्र शक्तिः किं लिङ्लोडादेस्तद्विषस्यैवेति कथं विवेक्तव्यमित्या-ङ्क्य तमेव यत्नविशेषं दर्शयितुमादौ गवादिपदसा-घां तद्विवेकोपायमाह । पदान्तरस्येति । अन्यतो क्यान्तरात्पदस्य प्रयुक्तवाक्ये श्रुतस्य पदस्य। इतो रोऽस्माद्व वाक्यादुद्धरणात्त्यागाद्विशेषस्य सिद्धिं लभते । प्रयत्नवान् प्रयुक्तपदविशेषस्योद्धारे यस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेषस्य ज्ञानं न भवति अन्यत आनीतपदविशेषज्ञाना-
च्च यस्यार्थविशेषस्य ज्ञानं भवति तयोः पदविशेषयो-
स्तावेवार्थौ भवतस्तज्ज्ञानस्य तदन्वयाद्यनुविधानादि-
ति न्यायानुसन्धानयत्नवानित्यर्थः। अत एव विचक्ष-
णो मेधावी। पदार्थसंबन्धगतां पदतदर्थसंबन्धस्त-
च्छक्तिस्तद्विषयां विशेषसिद्धिमिति संबन्धः॥ ३६७॥

लङादिशब्देऽपगते लिङादौ
प्रत्यागतेऽभीप्सितसाधनत्वम्॥
प्रतीयते तेन लिङादिशब्द-
स्तदर्थवाचीति स वेत्ति बालः॥ ३६८॥

उक्तेन सामान्यन्यायेन लिङादिविशेषस्य श्रेयःसा-
धनतारूपेऽर्थे संबन्धं साधयति। लङादिशब्द इति।
येन गामानयतीति प्रयुक्ताद्वाक्यात्तदानयनस्य नेष्टसा-
धनत्वं प्रतीयते यदा पुनर्लङादि परित्यज्य तत्रैव वा-
क्ये आनयेत्यादि विधिपदं प्रयुज्यते तदा तत्प्रतीयते
तेन स बालो लिङादिशब्दस्तदर्थवाचीति वेत्तीति सं-
बन्धः। एवं च न लिङादिर्लङादिसाधारणाख्यातत्व-
रूपेण श्रेयःसाधनत्ववाची किं तु लिङ्त्वादिनैवेति भा-
वः॥ ३६८॥

योग्येतरान्वितत्तया न च वाच्यताऽस्य
कार्यान्वितत्ववपुषा सुतरां न चेष्टा॥
किं त्वन्वितत्ववपुषा न विशेषणस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं चित्प्रयोजकमिहास्ति निरूपणायाम् ॥३५॥
एवं योग्येतरान्विते गवादिपदानां शक्तिः, कृतिं
ग्येष्टसाधनताज्ञानं प्रवर्त्तकं तत्रैव लिङादेः शक्ति
तु कार्ये न वा गवादिपदस्य योग्येतरकार्यान्वये
रवादित्युक्तम्, नन्वेवमतिलाघवादन्वित एव श
रस्तु न योग्येतरान्वित इत्याशङ्क्येष्टमेव तदस्माकं
द्धार्थवादिनामित्याह । योग्येतरेति । वाच्यता ग
दिपदवाच्यता । अस्य गवादेः । तत्किं कार्या
शक्तिरिष्टा न तस्यातिगौरवदुष्टत्वादित्याह । क
न्वितत्वेति । तर्हि किं शुद्धे पदार्थे शक्तिः तदपि न
न्वयप्रतीतेराकस्मिकत्वप्रसङ्गादित्याशयेनाकाङ्क्षापू
माह । किं त्वन्वितत्वेति । नन्वयोग्येनानितरेण
न संभवतीति तदपि तत्र विशेषणमिति चेत्सत्
विना नान्वयप्रतीतिरस्ति तथापि शब्दार्थतायां
प्रयोजकं तेन विनाप्यन्वयमात्रस्य शब्दार्थत्वे
षणस्य प्रयोजकत्वे नानिरूपणादित्याशयेनाह ।
शेषणस्येति । कार्यत्वस्य वा योग्येतरत्वस्य वे
प्रयोजकं तदभावे बाधकम् । इह शब्दाभिधेये
यत्किं चिदन्विते गवादौ किं गवादिपदस्य शक्तिः
नयनादिपदाभिहितान्विते । नाद्यः । वाक्या
मप्रसङ्गेन कदा चिद्गामानयेति वाक्यादश्वमा
वारयेत्यनुभवप्रसङ्गात् । न द्वितीयः । परस्पर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तेः, आनयनपदेन गोपदाभिहितान्विताभिधाने तदर्थान्वितां गां गोपदमभिदध्यादेवमानयनपदमपीति चेन्न। गवादिपदेन हि स्वस्वार्थे स्मृतिस्तत्संस्कारोद्बोधो वाधीयत इति वक्तव्यम्, अन्यथा प्रमुष्टसंस्काराणामपि वाक्यार्थानुभवप्रसङ्गात्,संस्कारोद्बोध एव पदाधेय इति तत्त्वम्,अन्यथा पदार्थस्मृतिः संस्कारोद्बोधश्च पदजन्याविति गौरवात्,स्मृतेराशुविनाशित्वेन तत्तत्पदजन्यपदार्थस्मृतिव्यतिरिक्तसकलपदार्थविषयस्मृत्यन्तरप्रसङ्गाद्वाक्यार्थानुभवसामग्र्या तत्प्रतिबन्धाच्च, संस्कारोद्बोधस्तु यावत्कार्यभावीति नोद्बोधान्तरप्रसङ्गः, यदर्थसंस्कारः पदेनोद्बोध्यते स आसन्न इत्युच्यते, एवमाकाङ्क्षितयोग्यसन्निहितान्वितं पदान्यभिदधतीति न परस्पराश्रयः। वाक्योत्थानुभवस्यैवैवंविधपदार्थान्वयविषयत्वनियमात्तत्तत्पदोद्बोधितसंस्कारगोचरार्थविशेषनिरूपितान्वयस्य सामान्यान्वयशक्तैरपि पदैरभिधानाद्वाक्यार्थविशेषसिद्धिश्चेति भावः ॥ ३६९ ॥

यत्केचिदाहुरभिधाय निजान्पदार्था-
नेतावतोपरतवन्ति पदानि तेभ्यः ॥
पश्चाद्विशेषणविशेष्यतया तु तेषां
संसर्गबुद्धिरपराऽवतरिष्यतीति ॥ ३७० ॥

अभिहितान्वयवादिनां मतमिदानीं दूषयितुमनुवदन्ति। यत्केचिदिति। यदाहुरिति संबन्धः। तदुक्तिमे-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाह । अभिधायेति । पदार्थाननन्वितानिति शे
एतावता पदार्थमात्राभिधानेन तूपरतवन्ति पर्यव
न्नानि सन्ति न वाक्यार्थानुभवं जनयन्तीत्यर्थः ।
थं तर्हि वाक्यार्थबोधस्तेन विना वा कथं श्रोतुः प्र
त्त्यादिरित्यत आह । तेभ्य इति । पदाभिहितपदार्थे
इत्यर्थः । पश्चात्पदव्यापारोपरमानन्तरम् । तुरवधा
तेभ्यस्त्विति संबन्धः । तेषां पदार्थानां विशेषणवि
ष्यतया संसर्गबुद्धिरिति संबन्धः । अपरा पदजन्यप्र
तेरन्या । अवतरिष्यति उत्पत्स्यत इत्यर्थः । पदानां
पदार्थबोधेनैव पर्यवसानमन्यथा विरम्य व्यापारा
ज्ञात् । पदाभिहिताश्च पदार्था विशेषणविशेष्यतया
स्परं संसृष्टं स्वस्वात्मानं बोधयन्तीति न वाक्यार्था
भवस्यानुपपत्तिः, न वा श्रोतृप्रवृत्तेः । न चाभि
मानानामतीताद्यर्थानां कथमनुभावकत्वमिति वाच्यं
परमते तादृशपदादेरिव ज्ञायमानतयातीतादि
ज्ञानकारणत्वोपपत्तेरन्यथा पदेष्वपि तदनुपपत्तेर्दु
रिहरत्वात्तथा चात्यन्तलाघवाच्च द्वार्थ एव पदे
शक्तिरिति भावः ॥ ३७० ॥

तद्ध दुर्घटं न खलु किंचिदपि प्रमाण-
मस्याः प्रसाधकमुदीरितकल्पनायाः ॥
येनोपलब्धिविषयत्वमुपागतानि
संसृष्टमेव तु पदानि पदार्थमाहुः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यमनन्वितार्थशक्तावतिलाघवं तथापि शब्दाद्विशिष्टानुभवस्यानुभवादप्रामाणिकीयं त्वत्कल्पनेत्याह। तद्द दुर्घटमिति । त्वदुक्तं दुरुपपादमित्यर्थः । कुतस्तत्राह। न खल्विति। कुतो न प्रमाणमिति चेन्न। येन पदानामेव संसृष्टार्थबोधकत्वमनुभवसिद्धं तेन त्वदुक्तं विमानमित्याह। येनेति। संसृष्टमेवेति। परस्परमिति शेषः। गवादिपदानि ह्यभियुक्तैर्विशिष्टार्थप्रत्ययोद्देशेनैव प्रयुज्यन्ते तस्यैव श्रोतुः पुरुषार्थजनकत्वात्, तदुद्देशेनैव प्रेक्षावतां शब्दप्रयोगाच्छ्रोतारोऽपि ततस्तमेव बुभुत्सन्ते न पदार्थमात्रमिति न पदानां तावतैव पर्यवसानं युक्तमतः किं चिद्गौरवेऽपि प्रामाणिकतया तस्यान्विते पदानां शक्तिरुक्तयुक्त्यनुभवकार्यबलेन च कल्पनीयेति त्वदुक्ता कल्पना न प्रामाणिकीति भावः ॥ ३७१ ॥

नासंसृष्टपदार्थबुद्धिपदयोः पूर्वापरत्वप्रमां
मुक्त्वा कारणकार्यतावगतये कश्चित्समर्थस्तयोः ॥
पौर्वापर्यमुदीक्ष्य हेतुफलतां सर्वत्र संगृह्णते
नो चेत्सर्वमसंगतं भवति वः सर्वव्यवस्थाहतेः ॥३७२॥

ननु शब्दात्परंपरया विशिष्टबोधसंभवे नान्विते शक्तिः कल्पनीया तावतैवाभियुक्तप्रयोगाद्युपपत्तेरित्याशङ्क्य शुद्धपदार्थबोधस्य पदस्य चान्वयव्यतिरेकानवगमान्न हेतुहेतुमत्ता सिद्ध्यति, न हि गामानयेतिवाक्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रयोगे पदार्थस्मृतिः पृथगनुभूयते येन पदस्य [illegible]
ता सिद्धेयद्वाक्यार्थानुभवस्तु ततोनुऽभूयत इत्यन्वित
शक्तिर्युक्तेत्याह । नासंसृष्टेति । तयोरसंसृष्टपदार्थ[illegible]
पदयोः । नियतपूर्वभावित्वं कारणत्वं तादृशापर[illegible]
वृत्तित्वं कार्यत्वं तदेतदुभयं तयोः पूर्वापरत्वज्ञानं[illegible]
ना न संभवतीत्यर्थः । उक्तमेवार्थं सामान्यतोऽन्वय[illegible]
नाप्याह । पौर्वापर्यमिति । हेतुफलयोरिति शेषः ।[illegible]
वंत्र दण्डघटादौ । विपक्षे बाधकमाह । नो चेदिति ।[illegible]
र्वापरत्वज्ञानं विनापि हेतुफलभावग्रहश्चेदित्यर्थः ।[illegible]
साङ्गत्ये हेतुमाह । सर्वव्यवस्थाहतेरिति । दण्डा[illegible]
कारणं घटादिः कार्यमित्येवं हेतुहेतुमद्भावस्य [illegible]
स्थाविलोपप्रसङ्गादित्यर्थः ॥ ३७२ ॥

> पूर्वापरान्वयबलेन हि कारणत्व-
> कार्यत्वसंगतिमिह प्रतियन्ति लोके ॥
> नो चेद्भवेदनियमो न च तत्र कर्तुं
> कार्याणि कारणविशेषमुपाददीरन् ॥ ३[illegible]

उत्तरार्द्धं विवृण्वन् कार्यकारणव्यवस्थाऽभावेऽनिष्ट[illegible]
सञ्जयति । पूर्वापरान्वयेति । पूर्वापरकालान्वया[illegible]
तिबलेनेत्यर्थः । अनियमः कार्यकारणभावानियम[illegible]
तत्रानियमे कार्याणि घटादिरूपाणि कर्तुं कारणवि[illegible]
दण्डादि कारणं नैव कुलालादय उपाददीरन्नित्यर्थः[illegible]
अतो वाक्यार्थज्ञानाय प्रयुक्तपदतदर्थस्मृत्योः पौर्वा[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्यज्ञानासंभवेन कार्यकारणत्वग्रहासंभवात् पदानां पदार्थमात्रज्ञाने पर्यवसानं कल्पयितुं न युक्तमिति भावः ॥ ३७३ ॥

पदजातबुद्धिजनिता भवति
व्यतिषक्तबुद्धिरिति तावदिह ॥
न विगानमस्ति भवतामपि चेद्
व्यवधानकल्पनमकारणकम् ॥ ३७४ ॥

ननु भवतु पदानां वाक्यार्थज्ञानादृते न पर्यवसानं न चैतावता संसर्गे शक्तिः सिद्ध्यति गौरवात्,लाघवेन पदार्थमात्रे क्लृप्तशक्तिकैः पदैः स्वार्थस्मृतिद्वाराकाङ्क्षादिसहकारिबलेन संसर्गज्ञानसंभवात्,एवं च शक्तिबलात्पदार्थस्मृतिर्विशिष्टज्ञानं विना पदानामपर्यवसानं संसर्गे च न पदशक्तिरिति त्रितयं सिद्धमिति चेत्तत्राह । पदजातबुद्धीति । पदसमूहबुद्धिजनितेत्यर्थः । व्यतिषक्तबुद्धिरिति । विशिष्टार्थबुद्धिरित्यर्थः । इह वृद्धव्यवहारस्थले । विशिष्टार्थबुद्धिस्तावत् पदजातबुद्धिजनिता भवतीति भवतामपि चेन्न विगानमस्ति तदा पदार्थस्मृतिव्यवधानकल्पनमकारणकमप्रमाणमिति संबन्धः । अयमाशयः । यदि संसर्गज्ञानं पदजन्यं तर्हि कार्यानुरोधेन पदानां तत्र शक्तिरावश्यकी शक्तेः कार्यान्वेयतया यथाकार्यं कल्प्यत्वात् , अन्यथा पटजननाशक्ताद्घटादिव पटःपदात्संसर्गज्ञानं न जायेत । न च कार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णतारूपा तन्निर्वाहिका शक्तिरन्या दण्डादौ, शब्दे न्याऽभिधारूपा शक्तिः सा च न संसर्ग इति वाच्यम् दण्डादिशक्त्या सदृश्या एव तस्याः स्ववाच्यसंबन्धा क्षशब्दवृत्तित्वेनाभिधात्वे संभवति तद्भेदे प्रमाणा वात्। लाक्षणिकशब्दवृत्तिकारणता तु नैवम्। अन्वय तिरेकनियमाद्यनुपपत्तिकल्प्यत्वाविशेषेण च तद् एवोचितः। न चैवमपि पदार्थशक्त्यैव परम्परया गंज्ञानमन्यथासिद्धमिति वाच्यम्। यतस्तथा सति क्यार्थे तवापि मते लक्षणैव स्यात्, शक्त्या परम्प बन्धस्यैव लक्षणात्वात्, अन्यथा तीरादेरपि तथैव ङ्गादिपदाज् ज्ञानमस्त्विति लक्षणैव लुप्येत। त संसर्गे लक्षणामनभ्युपगच्छतस्तत्र शक्तिरवश्यं वा ति ॥ ३७४ ॥

व्यतिषक्तबुद्धिजनकं सकलं
पदजातमित्यनुमतं यदि वः ॥
व्यवधानकल्पनविडम्बनया
किमिहाञ्जसैव जनकं भवतु ॥ ३७५ ॥

नन्वेवमपि व्यवधानकल्पनमकारणकमित्यनु वाक्यार्थबुद्धेः पदार्थविशिष्टबुद्धितया पदार्थज्ञा न्यत्वात्तस्य च पदाभिहितस्मृत्यन्यस्यासंभवात्, वाक्यार्थज्ञाने पदमेव करणमिति तद्व्यापार सावश्यं वाच्येति चेत्तत्राह। व्यतिषक्तबुद्धीति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धानकल्पनैव विडम्बना नटना तयेत्यर्थः। अञ्जसा साक्षाच्छक्त्यैवेति यावत्। न तावन्मध्ये स्मृतिः कल्पनीया गौरवात्। अन्यत्रापि विशिष्टज्ञानस्य विशेषणज्ञानाजन्यतया प्रकृते तदनपेक्षणात्। न चैवमगृहीतशक्तेरपि वाक्यार्थधीप्रसङ्गः। संबन्धज्ञानजन्यसंस्कारस्य पदज्ञानोद्बुद्धस्यान्वयव्यतिरेकाभ्यां हेतुत्वावधारणेनातिप्रसङ्गाभावात्। करणव्यापारोऽप्यावश्यकश्चेत्संस्कारोद्बोध एवास्तु। न चैवं संस्कारजन्यत्वेन वाक्यार्थज्ञानस्य स्मृतित्वं स्यादिति वाच्यम्। समानविषयसंस्कारजन्यस्यैव स्मृतित्वाद्वाक्यार्थज्ञाने च तदभावात्। संस्कारकरणकं च ज्ञानं स्मृतिः, करणता च कारणतेव शक्तिविशेषः, वाक्यार्थज्ञाने च वाक्यमेव करणं न संस्कार इति व्यवधानकल्पनमकारणकमेवेति भावः॥ ३७५॥

पारम्पर्यं ह्यगतिकगतिं कारणादाश्रयन्ते
नोत्सर्गेण स्फुरति विदुषां यत्र तत्र प्रनाडी॥
श्रुत्या सोमक्रयमनुगतः साधनत्वेन हित्वा
साक्षाद्भावं ह्यरुणिमगुणः प्रापदेनामशक्तेः॥३७६॥

नन्वेवमपि न तदकारणकं विशकलितपदप्रयोगे हि ततः पदार्थस्मृतिरनुभूयत इति पदस्य स्मारकत्वं क्लृप्तम्, अतः संश्लिष्टपदप्रयोगेऽपि पदात्सावश्यकी, एवं च तत्रैव पदव्यापारः, वाक्यार्थबोधे तु पदार्थानामेवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काङ्क्षादिमतां हेतुत्वम्, न चैवं वाक्यार्थबोधस्याशाब्द-
पत्तिः पदार्थाख्यमानान्तरमपि प्रसज्येतेति वाच्य;
परम्परया शब्दजन्येऽपि शब्दस्य तात्पर्येण तच्छा-
त्वोपपत्तेः, अत एव वृद्धानां तदुद्देशेन शब्दप्रयोगो
न विरुध्यते, पदार्थमानत्वमपि वक्ष्यमाणदृष्टा-
प्रसिद्धमिति नालौकिकमत्र किं चिदस्ति चेन्न त्या-
पारम्पर्यमिति। यत्र विद्वांसोऽगतिकगतिं मुख्यगति-
न्यानां गतिसदृशं पारम्पर्यमाश्रयन्ते तत्र तेषां वि-
कारणाद्बलवदनुपपत्तितः सा प्रनाड़ी स्फुरति न तूत्स-
स्वभावतः स्फुरतीत्यर्थः। यत्र हि यस्य कारणत्वं
मितमथ च साक्षान्नोपपद्यते यथा यागस्य स्वर्गं
कारणता तत्रानुपपत्तिबलाद्विधान्तराभावनिमित्तं
रूपराकारणत्वं पण्डिता आश्रयन्ते यथा मध्येऽपूर्व-
स्यनया यागस्य, नैवमिह संसृष्टज्ञाने स्मृत्या
साक्षात्कारणत्वे शब्दस्य काप्यनुपपत्तिरस्ति वि-
ज्ञानत्वादिप्रयुक्तानुपपत्तेः परिहृतत्वात्। न चान्त-
मूहालम्बनैकस्मृतिविषयतावत्पदेभ्यो मध्ये स्मृति-
भूयत इत्युक्तम्। एवं पदानामेव स्वतात्पर्य-
विशिष्टज्ञानजनकत्वे संभवति पदार्थाख्यप्रमाणा-
मपि न कल्पनीयम्। वक्ष्यमाणदृष्टान्तेऽपि न प्रमा-
न्तरं संप्रतिपन्नमिति वक्ष्यत इति भावः। साक्षा-
त्करणत्वासंभवेऽन्यद्वारा तदुपपादनीयमित्यर्थ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टान्तमाह । श्रुत्येति । साधनत्वेन सोमक्रयमनुगतः सोमक्रयेण संबद्धः । साक्षाद्भावं साक्षात्साधनत्वम् । एनां प्रनाडीं प्रापयत् । अशक्तेः शक्त्यभावात् । अरुणिमगुणो हि अरुणयेत्यादिवाक्येऽरुणयेति तृतीयाश्रुत्या सोमक्रयं प्रति साधनत्वेन बोधितः स्वस्यामूर्तत्वेन साक्षात्क्रयसाधनत्वाशक्तेः साक्षाद्भावं विहाय द्रव्यावच्छेदद्वारा परम्परया साधनत्वं प्राप्नदित्यर्थः ॥ ३७६ ॥

श्वेतिमानमभिपश्यतः पुरः
श्रृण्वतस्तदनु हेषितध्वनिम् ॥
तद्वदत्र खुरमुद्गरस्वनं
श्वेतरूपतुरगोऽटतीति धीः ॥ ३७७ ॥

यत्तु पदार्थाख्यं मानं लोकसिद्धमिति पूर्वपक्षिणोऽनुशयमवोचाम तदिदानीं शङ्कते । श्वेतिमानमिति । श्वेतं रूपमित्यर्थः। पुरः अग्रे। हेषितध्वनिम् अश्वध्वनिम्। अनेनाश्वत्वोपस्थितिरुक्ता। अत्र लोके। खुरमुद्गरस्वनं खुरस्य तीक्ष्णशब्दम् । अनेन च तस्य धावनं सूचितम् । लोके हि अग्रे दूरतः श्वेतरूपं पश्यतोऽश्वध्वनिं खुरशब्दं च श्रुत्वा प्रत्येकमश्वत्वाद्यवगच्छतः श्वेतोऽश्वो गच्छतीति बुद्धिर्जायते, सा न तावत् प्रत्यक्षेण दूरादिदोषेण तस्य तदसमर्थत्वात्, नापि लिङ्गेन विशिष्टार्थव्याप्तलिङ्गाभावात्, न तादृशः शब्दस्तत्रास्ति, ततः क्लृप्तमानान्तरासंभवाच्चक्षुरादिनावगतश्वेतादिरूपपदार्थैरेव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वेतोऽश्वो धावतीति धीर्यद्वुद्भवतीत्यर्थः ॥ ३७७॥

तद्वदत्र पदजातबुद्धिभि-
र्बोधिताखिलपदार्थहेतुकः ॥
सर्वशब्दविषयार्थसंगतेः
प्रत्ययो भवति योग्यतादिभिः ॥ ३७८॥

दार्ष्टान्तिकमाह। तद्वदिति। अत्र वाक्ये पदजातबु-
द्धिभिः प्रतिपदं क्रमेणोत्पन्नमतिभिर्बोधिता येऽखि-
लपदार्थास्तद्धेतुकः सर्वेषां गवादिशब्दानां ये प्रतिप-
दार्थास्तेषां परस्परसंगतेः संसर्गस्य योग्यतादिभिरा-
काङ्क्षायोग्यतासन्निधानैः सहकारिभिः प्रत्ययस्तद्विष-
प्रत्ययो भवतीत्यर्थः। अतः पदार्थमानत्वं लोकप्रसि-
द्धमेवात्रास्थितमिति नालौकिकमिति भावः ॥ ३७८॥

नैतत् क्लृप्तनिमित्ततोऽपि घटते संसर्गधीरीदृशी
श्वेतोऽश्वस्त्वरितोऽभिधावतितरामित्यादिकार्योदिता।
कार्यं क्लृप्तनिबन्धनं यदि भवेन्नास्यापरं कारणं
कल्प्यं तेन पदार्थजातजनिता नैषा मतिर्लिङ्गजा ॥३७९॥

सिद्धान्ती प्रत्यक्षादिनैवास्य प्रत्ययस्योपपत्तेर्न तद-
मानान्तरं कल्प्यमिति दूषयति। नैतदिति। कुत इ-
त्यत आह। क्लृप्तनिमित्ततोऽपीति। वक्ष्यमाणक्लृप्तप्र-
माणात्। ईदृशीत्युक्तमेवाह। श्वेतोऽश्व इति। य-
यथानुमानादनवगतं प्रत्यक्षेणाध्यवगच्छन्ति तद्वत्प्र-
प्रमाणावगतमपि पदार्थप्रमाणेनावगच्छन्त्विति तत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह । कार्यमित्यादिना । क्लृप्तं निबन्धनं कारणं यस्य तत् । यत्र ह्युभयमपि क्लृप्तं भवति तत्र केनावगतम-न्येनाप्यवगम्यतां यत्र तु नैवमथ च क्लृप्तेनैव कार्यं निर्वहति तस्यापरं कारणं न कल्प्यं कार्यस्य तेनैव निराकाङ्क्षत्वात् । ततः किं तत्राह । तेनेति । एषा मतिः श्वेतोऽश्व इत्यादिमतिः । किंप्रमाणजा तर्ह्येषा मतिस्त-त्राह । लिङ्गजेति । लिङ्गेति प्रत्यक्षस्याप्युपलक्षणम् ॥३७९॥

पादार्थं न पृथक् प्रमाणमपरं नानाप्रमाणोद्भवं
नाप्येतत्फलमत्र पक्षयुगले कल्प्यं निमित्तान्तरम् ॥
क्लृप्तं लिङ्गमतोऽपि निर्वहति चेत्संसर्गधीरीदृशी
पादार्थी न पृथक् प्रमा न च फलं नानाप्रमाणोद्भवम् ॥३८०॥

न पदार्थजातजनितेत्यादि विवृण्वंस्तर्हि प्रत्यक्षादि-समुदायादेषा मतिरस्त्वित्याशङ्कामपि निराकरोति । पादार्थमिति । पदार्थसबन्धि पादार्थं पदार्थसमुदायरू-पमिति यावत् । पृथक् प्रत्यक्षादिव्यतिरिक्तम् । अपरं प्रत्येकप्रत्यक्षादिफलादतिरिक्तम् । नानाप्रमाणोद्भवंप्र-त्यक्षलिङ्गसमुदायजन्यम् । एतत्फलं संसर्गज्ञानं श्वेतोऽ-श्वो धावतीत्येवंरूपा प्रमा । उभयत्र दूषणमाह । अत्रे-ति । तस्मिन्पक्षद्वय इत्यर्थः । पदार्थसमुदायस्य प्रमाणस-मुदायस्य च प्राक् प्रमाणत्वेनाक्लृप्तत्वात्तदुभयप्रमाणत्व-मवैव कल्पनीयमित्यर्थः । अथ वा पृथक् प्रमाणत्वपक्षे नानाप्रमाणफलत्वे च पक्षद्वये निमित्तान्तरं कल्प्यं यत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यर्थः । तर्ह्यनन्यथासिद्धकार्यबलात्तदन्यतरप्रामा
कल्प्यतामित्याशङ्क्यासिद्धो हेतुरित्याह । क्रु,प्रमि
लिङ्गमिति प्रमाणान्तरस्याप्युपलक्षणम् । इदमिह
प्रेतम् । श्वेतद्रव्येण सममिन्द्रियसंनिकर्षस्तावदस्त
न्यथा श्वेत इति ज्ञानासंभवात्, अश्वत्वादंशज्ञाने
क्षुषो यद्यपि दोषः प्रतिबन्धकस्तथापि हेषादिना
नुमाने तद्विशिष्टेन्द्रियेण प्रत्यभिज्ञेव परोक्षापर
रूपा श्वेतोऽश्वो धावतीति धीर्भवितुमर्हति ।
विमतः श्वेतः अश्वः हेषाकर्तृत्वात्संमतवदिति
तोऽश्व इति विशिष्टज्ञाने, श्वेतोऽश्वो धावति,
वधानेनं नाना देशेषु दृश्यमानत्वात्ताद्दृशदेवदत्त
एवं श्वेतरूपे हेषाखुरमुद्गरस्वनादिकर्तृत्वसाम
धिकरण्यानुपपत्त्याप्येताद्दृशी धीर्भवितुमर्हतीति ।
तदर्था त्वदुक्तकल्पनेत्याशयेनोपसंहरति । पादार्थ
पदार्थसमुदायकरणिकेत्यर्थः ॥ ३८० ॥

नासंसृष्टमतो वदन्ति न च तान्याहुः क्रियास
योग्येनान्वितमेव केवलममून्याहुः स्वमर्थं यतः ।
एवं सत्यपवर्जितक्रियमलं निष्पन्नरूपं सदा
संसर्गादिविवर्जितं च वदितुं वस्तुस्वरूपं श्रुतिः

एवं योग्येतरकार्यान्विते योग्येतरान्विते वा न
त्तां शक्तिरतिगौरवात्, नापि केवलपदार्थे वाक्य
तीतिराकास्मिकतापत्तेः, केवलार्थशक्तेभ्य आका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सहकृतेभ्यः पदेभ्यो न संसर्गधीजन्माऽशक्तात्कार्यासम्भवेन तदा कार्यानुरोधेन शब्दशक्तेरपि तत्रावश्यकत्वात्, कारणताशक्तेरेव स्ववाच्यसम्बन्धानपेक्षशब्दवृत्तित्वेनाभिधाशक्तित्वात्, नापि पदस्मारितपदार्थानामेवाकाङ्क्षादिवशात्परस्परं स्वसंसृष्टविषयज्ञानकारणता, शब्देभ्यः साक्षादेव वाक्यार्थप्रमासंभवे मध्ये स्मृतिकल्पनायोगाद्वाक्यार्थबोधस्य शब्दाजन्यत्वेऽशाब्दत्वं च स्यात्, न च परम्परया शब्दमूलत्वेन शाब्दत्वम्, चाक्षुषरूपादिलिङ्गजानुमितेरपि चाक्षुषत्वापत्तेः, पदार्थाख्यप्रमाणान्तरकल्पनाप्रसङ्गादपि नैते पक्षाः साधव इत्युक्तमिदानीं लाघवेनाकृतिमात्रवाचकशब्देन व्यक्तिरिव पदार्थशक्तपदेभ्यो वाक्यार्थो लक्ष्यतामेवं च न प्रागुक्तो दोषः कोऽप्यत्र प्रसज्यत इत्याशङ्क्यात्रापि प्रतिपिपादयिषाद्यनुरोधेन केवलपदार्थशक्तेरयुक्तत्वे स्थितेऽन्वयबोधस्य शब्दलभ्यत्वान्नातीवास्माकमनिष्टमित्याशयमेतदनिराकरणे द्योतयन्नुपसंहरति । नासंसृष्टमिति । वदन्ति पदानीति शेषः । कार्यान्विते शब्दसङ्गतिं निराकृत्य सिद्धान्विते तत्समर्थनफलमाह । एवं सतीति । सिद्धान्वितस्यापि शब्दार्थत्वसंभवे सतीत्यर्थः । अपवर्जिता परिहृता क्रिया कार्यं यस्मिन् ब्रह्मणि तत् । अलं समर्था ॥३८१॥

अभिहितघटनाऽथ वाऽन्विताना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मभिहितिरस्त्वथ वा न पक्षपातः ।
क्व चिदपि समयेऽस्ति नः कदा चिद्
बहुघटनात्मकवस्तुनिष्ठवाक्ये ॥ ३८२ ॥

एवमभिहितान्वयादि निराकृत्यान्वितमात्रं श[ब्दा]र्थ इत्युक्तम्, ननु कोऽयमभिनिवेशस्तवाभिहिता[न्व]यपक्षेऽपि लक्षणयाऽखण्डब्रह्मसिद्धिसंभवात्, [अन्वित]न्मात्रस्यैव तव मते प्रतिपाद्यत्वादित्याशङ्क्यास्तु तथेत्याशयेनाह । अभिहितघटनेति । अभिहित[-]घटनाऽन्वय इत्यर्थः । पूर्वोक्तनियमकल्पादस्य क[ल्पा]न्तरत्वं द्योतयितुमाद्योऽथ वेति शब्दः, स [...] योजनीयः । क्वचिदपि समये पक्षपातो नो नास्[ती]ति संबन्धः । नन्वखण्डे ब्रह्मणि नोभयमपि संभवति कथं तदङ्गीकार इत्याशङ्क्यान्यत्रैव तदङ्गीकार इ[त्या]ह । बहुघटनेति । बहूनामर्थानां घटनात्मकं य[त्] प्रतिपाद्यं तन्निष्ठे वाक्ये गामानयेत्यादिलौकिके [ज्यो]तिष्टोमेन यजेतेत्यादिवैदिके चाभिहितघटनेत्यादि[सं]बन्धः ॥ ३८२ ॥

अभिहितघटना न चोपपन्ना
परदृशि नाभिहितिस्तथान्वितानाम् ॥
अनधिकविकलार्थगोचरत्वा-
न्न तदुभयं श्रुतिमस्तके पदानाम् ॥ ३८[३] ॥

बहुघटनात्मकेतिविशेषणव्यावर्त्यमाह । अभि[-]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटना न चेति । परदृशीत्यसङ्गस्वप्रकाशचिदात्मनो निर्देशात्तस्यान्वितत्वेनानन्वितत्वेन वाभिधानायोग्यता ध्वनिता । कुतो नेत्यत आह । अनधिकेति । अधिको विकलश्च न भवतीत्यनधिकविकलः, तादृशः शुद्धचिद्रूपोऽर्थो गोचरो येषां तेषां भावस्तत्त्वं तस्मादित्यर्थः । अथ वाधिकेत्यन्वितत्वं विकलेति केवलत्वम् । यद्यप्यात्मवस्तु केवलं तथाप्यन्वयप्रतियोगितया स्वरूपेण वा नाभिधानयोग्यं स्वप्रकाशत्वादिति विकलेत्यभिप्रायो द्रष्टव्यः । उपसंहरति । न तदिति । तत्तस्मात् । उभयम् अभिहितान्वयोऽन्विताभिधानं च ॥ ३८३ ॥

अभिहितघटना यदा तदानीं
स्मृतिसमबुद्धियुगं पदे विधत्तः ॥
परदृशि पुनरन्विताभिधाने
पदयुगलात्स्मृतियुग्ममेव पूर्वम् ॥ ३८४ ॥

ननु पक्षद्वयेऽपि वाक्यस्याखण्डार्थप्रतिपादने किं कश्चिद्विशेषोऽस्तीत्याकाङ्क्षायामस्ति कश्चिदित्याह । अभिहितघटना यदेति । स्मृतिसमबुद्धियुगमिति । भट्टपक्षे हि पदानां पदार्थमात्रबोधे पर्यवसानात्सा पदशक्त्यैव लभ्यत इति न स्मृतिः शब्दमात्रकरणकस्य स्मृतित्वायोगात् । किं तु संबन्धावगमकाले प्रसिद्धार्थविषयतयानुवादत्वेन स्मृतिसमेति । पदे तत्त्वंपदे । त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मिन्पक्षे स्मृतिसममेव बुद्धियुगं परमात्मनि वि
जनयतः । अन्विताभिधाने तु पदानां शक्त्यान्व
तिपादन एव व्यापारात्पदार्थज्ञानं संबन्धिविषयैव
दजमिति न तत्पदकरणकं किं तु प्रसिद्धस्मृतिवत्सं
रकरणकमेवेति स्मृतिरेवातस्तत्त्वंपदयुगलाद्वाक्या
प्रतीतेः पूर्वं स्मृतिद्वयमेव भवतीति विशेष इत्यर्थ
एतच्च परमताङ्गीकारेणोक्तमिति द्रष्टव्यम् । अत
यमतानुरोधेन तत्त्वंपदार्थविषया धीः स्मृतिसमा
तिरेव वेति यथा तथास्तु, एतावताप्यखण्डार्थ
ता वाक्यस्य न विहतेति भावः ॥ ३८४ ॥

स्मृतिसमपदजन्यबुद्धियुग्मात्
परदृशि मोहनिवर्त्तनं परेषाम् ॥
परदृशि पदजस्मृतिद्वये स्यात्
पदयुगलात्प्रमितेः समुद्भवो नः ॥ ३८५ ॥

एवं तत्त्वंपदजन्यपदार्थबोधे पक्षद्वये विशेषमु
खण्डवाक्यार्थबोधोत्पत्तौ विशेषमाह । स्मृतिसम
ति । स्मृतिसमे च ते पदजन्ये च ते च बुद्धी त
ग्मं तस्मादित्यर्थः । मोहनिवर्तनं साक्षात्कारः । त
पदजन्यस्मृतिसमलक्ष्यपदार्थद्वयज्ञानादेवाभिहिता
वादिनामात्मसाक्षात्कारो भवेन्न तु शब्दादितरे
दजन्यस्मृतिद्वये सति तत्त्वंपदाभ्यामेव वाक्यार्थ
तेः समुद्भव इति महान्विशेषः । एवं च न इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ता सांक्षात्कारस्योपनिषज्जन्यत्वेन ब्रह्मणः स्वमते औपनिषदत्वसिद्धेरिदमेव ज्याय इति दर्शितम् ॥ ३८५ ॥

औदासीन्यप्रच्युतिप्रापकेऽर्थे
लिङ्लोड़ादेर्लोकतो ज्ञातशक्तेः ॥
पुंसो वेदे प्रेरकत्वेन कल्प्या
लिङ्लोड़ादेर्भावनैवानृतन्त्रे ॥ ३८६ ॥

एवं लोके शब्दानां कार्यान्विते व्युत्पत्तिबलेन वेदान्तानां सिद्धब्रह्मख्यप्रामाण्यमिति मतं निराकृत्य तत्र तेषां प्रामाण्यं स्थापितम्, इदानीं भावनावाक्यार्थवादी त्र्यंशभावनारूपपुंप्रवृत्तिपर एव सकलोऽपि वेद इत्याशयेन प्रथमं शब्दभावनाया लिङर्थत्वमाशङ्कते । औदासीन्येति । औदासीन्यस्य प्रवृत्तिप्रागभावस्य प्रच्युतिरभावः प्रवृत्तिरिति यावत् । तस्याः प्रापके निमित्तेऽर्थे प्रेरणायामित्यर्थः । लोकतो लोके पुंस औदासीन्यप्रच्युतिप्रापकेऽर्थे ज्ञातशक्तेर्लिङ्लोड़ादेर्वेदेऽर्थवत्त्वेन लिङ्लोड़ादेर्भावना लिङ्लोड़ादिव्यापाररूपा भावना कल्प्या। कुत इत्यत आह । पुंसः प्रेरकत्वेनेति । लिङ्लोड़ादेरित्यनुषञ्जनीयम्, प्रेरकव्यापारः प्रेरणा वेदे च लिङ्लोड़ादेरेव पुमांसं प्रति प्रेरकत्वात्तद्व्यापार एव भावना तत्र लिङर्थ इत्यर्थः । ननु लोके चेतनानामेव प्रेरकत्वं दृष्टं तत्कथमचेतनलिङादेस्तदिति तत्राह । अनृतन्त्र इति । अपौरुषेय इत्यर्थः । मा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मयं प्रेरयतीति यद्व्यापारं ज्ञात्वा चेतनः प्रवर्त्तते सं पारवान् प्रेरकस्तद्व्यापारश्च प्रेरणा स चापौरुषेये वेदे ङादिरेव यजेत जुहुयादित्यादितद्व्यापारश्रवणानन्तरं व पुरुषस्य प्रवृत्तेः स एव प्रवर्त्तक इत्यर्थः। एव भवति। माणवक गामानयेत्याचार्यवचःश्रवणानन्तरं वर्त्तमानं माणवकं दृष्ट्वा व्युत्पित्सुरित्थमनुमिनो विमता प्रवृत्तिः प्रेरणाज्ञानपूर्विका नरान्तरायत्तप्र त्तित्वान् मम स्तनार्थिनो रोदनेन प्रेरिताया मातुः नदानप्रवृत्तिवदिति। स्वभोजनादिप्रवृत्तिवारणाय रान्तरेति। तत्र चान्वयव्यतिरेकाभ्यां लिङादेः शक्तिं ल्पयतीति तत्र व्युत्पन्नलिङादेर्वेदे तद्व्यापार एव वना तदर्थः सिद्ध्यतीति ॥ ३८६ ॥

आज्ञाद्यर्थः प्रेरकः पौरुषेये
लिङ्लोडादेर्भावना वेदवाक्ये ॥
पुंसोऽभावात्तद्गताज्ञाद्यभावात्
पुंसंबन्धात्प्रेरकास्ते हि वाक्ये ॥ ३८७ ॥

ननु किं लोकेऽपि लिङादिव्यापार एव प्रेरणा नेत्या आज्ञाद्यर्थ इति। आदिपदेनाभ्यर्थनादिग्रहः; आ दिरूपोऽर्थ इत्यर्थः, प्रेर्यते प्रवर्त्त्यतेऽनेनेति प्रेरकः प्रे लौकिकवाक्यस्य पौरुषेयतयाचार्यादिपुरुषसंबन्धा स एव प्रेरकस्तद्व्यापाररूपाज्ञादिरेव प्रेरणा, पुं स्तत एव संभवेन लिङादेस्तत्र प्रेरकत्वायोगादित्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं च तद्वैविध्यं सिद्ध्यतीत्याशयेनाह । लिङ्लोडादे-रिति । ननूक्तव्यवस्थायां किं नियामकमित्याशङ्क्य त-योः संभवासंभवावेव व्यवस्थापकावित्याशयेनाह । पुं-सोऽभावादिति । अभावादिति च्छेदः । तद्गतेति । वेदगतेत्यर्थः । ते पुमांसः आज्ञादयो वा । तथा च न लिङादेः प्रेरणा तत्रास्तीति भावः । एवं च प्रेरणात्म-नि लिङादिशक्तेर्लोकवेदयोः समत्वान्न कार्यवादिन इ-व भावनावादिनो वैयधिकरण्यादिवैषम्यमिति भावः ॥ ३८७ ॥

लिङ्लोडादिर्भावकस्तत्र भाव्या-
नुष्ठेयेऽर्थे पुंप्रवृत्तिः प्रसिद्धा ॥
लिङ्लोडादेः पुंप्रवृत्त्यंशनिष्ठो
व्यापारो यस्तं विदुर्भावनेति ॥ ३८८ ॥

ननु भावनायाश्चेतनव्यापारत्वेन प्रसिद्धत्वात्कथं लिङ्लोडादेर्व्यापारो भावनेत्याशङ्क्य सत्यमर्थभावना तथैव शब्दभावना तु ततो विलक्षणा ततस्तत्र भाव-कादिवैलक्षण्यं युज्यत इत्याशयेन तस्या भावकं भाव्यं चाह । लिङ्लोडादिरिति । भावको भावनाश्रयस्तत्क-र्त्रेति यावत् । तत्र शब्दभावनायां भाव्या साध्या अनु-ष्ठेये कृतिसाध्ये अर्थे धात्वर्थे पुंप्रवृत्तिः अर्थभावना-रूपा पुरुषप्रवृत्तिः सप्तम्यौ च समानाधिकरणे विष-यत्वार्थे । यद्यपि धात्वर्थोऽर्थभावनाया न भाव्यः किं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु करणं तथापि तत्साध्य एव स भाव्यावच्छि- व्यापाररूपायां तस्यां करणतयान्वेतीति तस्य तत्- ध्यत्वानपायादर्थे पुंप्रवृत्तिरित्युक्तम्। प्रसिद्धा धा- र्थनिष्पत्तिबलात्सिद्धा। तथा च धात्वर्थातिरिक्ता भावना नेति शङ्का न कार्येत्यर्थः। ननु क्लेशात्मि- यां प्रवृत्तेर्भाव्यत्वायोगात्स्वर्गादिरेव भाव्यो वा- स चार्थभावनाया एव भाव्यो न शब्दभावनाया- पीत्याशङ्क्याह। लिङ्लोडादेरिति। पुंप्रवृत्तिरूपो- भाव्योऽशस्तन्निष्ठस्तत्पर्यवसायी, प्रेरणारूपस्य ङादेर्व्यापारस्य प्रेर्यप्रवृत्तिरूपा सैव भाव्यत्वं- ति तन्निष्ठैव शब्दभावनेति भावनावादिनो मन्यन्- त्यर्थः ॥ ३८८ ॥

करणमिह लिङादेर्ज्ञानमेवाङ्गभागः
पुनरभिरुचिहेतुर्दृश्यते च प्रशंसा ॥
विधिरयमिह तन्त्रे जैमिनीये न कार्यं
न च भवति विधिर्नः श्रेयसो हेतुरर्थः ॥ ३८९ ॥

ननु शब्दभावनाया अपि भावनात्वात्त्र्यंशत्वं- व्यं तत्र प्रवृत्तिर्यद्यपि प्रथमांशः सिद्धस्तथापि त्करणमितिकर्तव्यता च न सिद्धे, तत्र न तावत् करणं तस्य तत्कर्तृत्वात्, न च तदतिरिक्तं किं चि- णमस्ति, नापि प्रयाजादिरिव तदितिकर्तव्यता- चिदनुभूयते इत्याशङ्क्य तदुभयमाह। करणमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इह शब्दभावनायाम् । लिङादेस्तस्यां गृहीतसंगतिकलिङादेः। अङ्गभाग इतिकर्तव्यता । अभिरुचिहेतुः धात्वर्थानुष्ठानेच्छाहेतुः । प्रशंसा स्तुतिस्तज्ज्ञानमिति यावत् । शब्दभावनाया वाचकत्वेन लिङादिज्ञानानन्तरमेव तच्छ्राविणां प्रवृत्तिदर्शनेन तद्धेतुतया कल्प्यशब्दभावनाया अपि तदानीमेव भावात्तज्ज्ञानं तत्करणम्, एवमर्थवादार्पितधात्वर्थप्राशस्त्यज्ञानं तत्र रुच्युत्पादनद्वारा शब्दभावनासाध्यप्रवृत्तौ साहाय्यमाचरतीति तत्रेतिकर्तव्यतेति सा त्र्यंशा सिद्धेत्यर्थः । ननु भवतु शब्दभावनाया एवं त्र्यंशता भावनाज्ञानं कुतो भवेत् लिङादिनैवेत्याह । विधिरिति । प्रवर्त्तकलिङाद्यर्थ इत्यर्थः । अयं भावनारूपः शब्दव्यापारः । तन्त्रे शास्त्रे । नन्वलौकिकजातीयेन किं तेन लोकप्रसिद्धजातीयस्य कार्यस्य श्रेयःसाधनत्वस्य वा लिङाद्यर्थत्वमस्त्वित्याशङ्क्य तस्यापि प्रवर्त्तकव्यापारतया लोकप्रसिद्धजातीयत्वात् परमते चातिप्रसङ्गान्नेत्याह । न कार्यमित्यादिना । नोऽस्माकं जैमिनीयानां न कार्यं विधिर्लिङाद्यर्थः, यागाद्यर्थोऽपि श्रेयःसाधनत्वेन न विधिरित्यर्थः ॥ ३८१ ॥

विधिरिह गुणभूतः प्रत्ययार्थोऽपि नित्यं
भवति च पुरुषोत्था भावनाऽस्य प्रधानम् ॥
भवति दशलकारप्रत्ययैः साभिधेया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधिविहितलकारैर्भावना शब्दहेतुः ॥

नन्वस्या भावनायाः प्रत्ययार्थत्वेन प्राधान्यं वा-
म्, एवमर्थभावनाया अपि तद्भाव्यतया प्राधान्यं
कथं प्रधानद्वयमेकवाक्यार्थः स्यादिति तत्राह।
धिरिति। इहास्मिंस्तन्त्रे प्रत्ययार्थोऽपि लिङाद्यर्थ
विधिः शब्दभावनारूपो गुणभूत एव न प्रधान-
त्यर्थः। नित्यं शब्दात्प्रतीतिकालेऽर्थभावनानिष्पा-
काले च, चोऽवधारणे, पुरुषोत्था पुरुषजन्या तद्व्या-
ररूपा भावना अर्थभावनैव अस्य विधेरभिधारूपस्य
धानम्, यद्यपि शब्दभावना प्रत्ययाभिधेया यद्यपि
न्यः प्रत्ययार्थः प्रधानं तथापि प्रत्ययार्थतया पुरु-
भाव्यतया च प्रधानीभूतार्थभावनां प्रति भावना-
र्थवादे विधिप्रत्ययार्थोनिर्वर्त्तकतयाऽपुरुषार्थभा-
या च गुणभूत एव, ततश्च न प्रधानद्वयप्रयुक्तो दोष
र्थः।ननु प्रत्ययस्य शब्दभावनार्थत्वात्कथमर्थभाव-
त्वमपि, अनिमित्तानेकार्थताया अन्याय्यत्वादि-
ङ्क्याह।भवतीति। लड़ादिदशलकारप्रत्ययैस्तत्स्थानि-
ततिबादिभिः साऽर्थभावनाऽभिधेयाभवति, विधि-
तलिङ्लोड्लेड्भिः शब्दहेतुः शब्दकर्तृकाभावना अ-
या भवतीत्यनुषङ्गः।ओदनं पचतीत्यादिलड़ादिप्र-
त्ययोदनपाकंकरोतीत्येवंकृतिप्रतीतेः केवलधातुप्र-
तदभावादित्यन्वयव्यतिरेकाभ्यां लड़ादिदश

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णामाख्यातत्वसामान्येन तत्र शक्तिर्निश्चीयते लः कर्मणि चेति सूत्रसामर्थ्यादपि तन्निश्चीयते लिङादीनां तु लिङ्त्वसामान्येन प्रयत्नवाचिनामपि विधिनिमन्त्रणादिसूत्रेण विध्यर्थे पुनर्विधानाल्लिङ्त्वाद्याकारेण तदर्थत्वमविरुद्धम्, दृश्यते ह्येकस्यापि दीपस्य तेजस्त्वदहनत्वरूपभेदेन तमोऽपहतिपाकनिर्वर्त्तकत्वं तद्वल्लिङादेरप्युभयार्थत्वमिति भावः ॥ ३९० ॥

भवति च पुरुषार्थकर्मकेयं
पुरुषनिमित्तकभावना न तद्वत् ॥
भवति तु विधिशब्दकर्तृकान्या
न हि निरवद्यपुमर्थताप्रवृत्तेः ॥ ३९१ ॥

इदानीमर्थभावनायाः पुरुषार्थभाव्यकत्वमाह । भवति च पुरुषार्थेति । पुरुषेण अभिलषितोऽर्थः स्वर्गादिः कर्म भाव्यं यस्याः सा तथा। पुरुषो निमित्तं कर्ता यस्यां भावनायाः सा पुरुषनिमित्तकभावना। भवति चेति चकारेण प्रसङ्गात्तत्र यागादिधात्वर्थः करणं प्रयाजादि चेतिकर्त्तव्यतेति दर्शितम्। अर्थभावनाया हि समानपदोपात्तमपि यागादिधात्वर्थं स्वतोऽपुरुषार्थं विहाय भिन्नपदोपात्तमपि स्वतः पुरुषेणाभिलषितं स्वर्गाद्येव भाव्यं कल्प्यते अन्यथा विधेः प्रेरकत्वानुपपत्तेरिति सा पुरुषार्थभाव्यनिष्ठैव। एवं समानपदोपात्तो यागादिर्व्यापाररूपायां तस्यां योग्यतया करणत्वेनान्वेति। प्रक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणपाठात् प्रयाजादिरितिकर्त्तव्यतयेति त्र्यंशाः
भावः । शब्दभावना तु न पुरुषार्थभाव्येत्युपसंहर
ह । न तद्वदित्यादिना । अन्या शब्दभावना । लिं
शब्दकर्तृका लिङादिशब्दव्यापारात्मिका । ननु श
भावनाया अपि परम्परया पुरुषार्थनिष्ठत्वमस्ती
शङ्क्य प्रवृत्तेः प्रेरणारूपायास्तस्याः प्रेर्यव्यापारमात्रे
र्यवसानादिति प्रागुक्तमर्थं स्मारयति । न हि कि
द्येति ॥ ३९१ ॥

अभिमतपशुपुत्त्रवृष्टिनाक-
प्रभृतिकभाव्यगता हि भावनेयम् ॥
अनभिमतसुदुष्करातिदुःखां
नयति तु भाव्यपदं प्रवृत्तिमन्या ॥ ३९

भावनयोरुक्तमेव भाव्यवैलक्षण्यं विशदयति । अ
मतेति । नाकः स्वर्गः । प्रभृतिशब्देन ग्रामादि ग्र
अभिमतपश्वादिभाव्यनिष्ठेयमर्थभावनेत्यर्थः । अन
मता स्वतोऽनभिलषिता सुदुष्करा बह्वन्तराय
भूता चासावतिदुःखा अत्यन्तं दुःखमिश्रिता
वृत्तिमिति संबन्धः । भाव्यपदं भाव्यस्थानम् । अन्य
ब्दभावना अनभिमतत्वादिविशिष्टां प्रवृत्तिं स्व
त्वेन कल्पयतीत्यर्थः ॥ ३९२ ॥

प्रत्ययप्रकृतिशब्दतो बहि-
र्विद्यतेऽभिहितसङ्गतिश्च नः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्ययप्रकृतिशब्दयोः पुन-
र्नित्यमन्वितधियो निमित्तता ॥ ३९३ ॥

नन्वभिहितान्वयवादे यागभावनयोर्भावनयोर्वा कथमुक्तान्वयबोधः स्यान्न हि यागो भावने च पृथक्पृथगभिहिताः येनाकाङ्क्षाद्यनुरोधेन पश्चादन्वयबोधो भवेदित्याशङ्क्याह । प्रत्ययप्रकृतिशब्दत इति । प्रत्ययो लिङ्लोडादिः, प्रकृतिर्धातुः, प्रकृतिप्रत्ययशब्दाभ्यां बहिरन्यत्रैव, चोऽवधारणे, अभिहितसंगतिः अभिहितयोः संबन्धः, नोऽस्माकं भट्टानां मते प्रकृतिप्रत्ययातिरिक्तयोर्यजेतस्वर्गकामपदयोर्गवादिनयनादिपदयोश्चपरस्परनैरपेक्ष्येणोपस्थितयोस्तथैव स्वस्वार्थाभिधानसंभवादभिहितयोस्तदर्थयोरन्वयबोध आकाङ्क्षाद्यनुरोधेन भवेत् प्रकृतिप्रत्ययोस्तु प्रत्येकमप्रयोगान्नियमेन मिलितप्रयोगे मिलितयोरेव तदर्थयोरभिधानमिति तत्रान्विताभिधानमेव, अन्यथा तत्राप्याकाङ्क्षादिसाचिव्यमपेक्ष्येत, न च तदस्तीति नोक्तदोष इति तदेतदाह । प्रत्ययप्रकृतीत्यादिना । पुनःशब्दो यस्मादर्थे, प्रकृतिप्रत्ययशब्दयोर्यस्मादन्वितधियोऽपृथग्बुद्धेर्निमित्तता विशिष्टैकबुद्ध्युत्पादकता नित्यं सदैव, अनुभवसिद्धेति शेषः ॥ ३९३ ॥

भावनाद्वयमतोऽवबोध्यते
धातुवाच्यघटितं लिङादिभिः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्ययार्थगुणवस्तुवाचिनो
धातवः प्रकृतयो हि धातवः ॥ ३१५ ॥

भावनाद्वयं व्युत्पादितं निगमयति । भावनाद्व-
मिति । अत उक्तन्यायात् । धातुवाच्यघटितं धात्व-
करणकम् । यद्यप्येकैव भावना धातुवाच्यघटिता त-
थापि प्राणभृत उपदधातीतिवत् भावनाद्वयं तद्घ-
टितमित्युक्तम् । धातुवाच्यघटितत्वमुपपादयति । प्र-
त्ययार्थेति । प्रकृतिप्रत्ययौ प्राधान्येन प्रत्ययार्थं स-
ह्रूत इत्यभियुक्तवचनात् प्रत्ययार्थं प्रति गुणभूतार्थवा-
चिनो धातव इति धात्वर्थघटितैव भावनेत्यर्थः । न-
नु प्रकृत्यर्थस्य प्रत्ययार्थं प्रति गुणत्वे धात्वर्थे कि-
गतमित्याशङ्क्य धातुरपि प्रकृतिरेवेत्याशयेनाह । प्र-
कृतय इति । यस्मादुपरि प्रत्ययो विधीयते सा प्रकृ-
तिः धातोश्च प्रत्ययविधिरिति धातवः प्रकृतय इत्य-
र्थः । अथ वा । ननु यागेन स्वर्गं भावयेदिति धा-
त्वर्थकरणिकैकैव भावना प्रतीयते न भावनान्तरम-
तो भावनाद्वयोक्तिर्वाक्यप्रमाणविरुद्धेति तत्राह । भा-
वनाद्वयमिति । धातुवाच्यघटिततत्प्रतीतिबलात्
तद्गोचरभावनान्तरप्रतीतिरवश्यं वक्तव्या, त-
भाव्यत्वप्रतीतिमन्तरेण धात्वर्थस्य तत्करणत्वे-
न्वयायोगात् । समभिव्याहृतार्थवादार्पितप्राशस्त्य-
वाक्यार्थेऽन्वयाय च भावनान्तरप्रतीतिरवश्यं वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः । शेषं पूर्ववत् ॥ ३९४ ॥

भव्याय भूतमुपदिश्यत इत्यवोचन्
पूज्यास्ततः सकलमेव तु वेदशास्त्रम् ॥
कार्यप्रधानमिति निश्चिनुमोऽस्मदीये
तन्त्रे च कार्यमुदितः पुरुषप्रयत्नः ॥ ३९५ ॥

एवं भावनाद्वयं विधिवाक्यप्रतिपाद्यमुपपाद्य तत्रैव सर्वस्य वेदस्य शबरस्वामिवचनेन पर्यवसानमिति दर्शयन्नुपसंहरति । भव्याय भूतमिति । यद्यपि प्रागिदं वचनमुदाहृत्य ब्रह्मणि वेदान्तप्रामाण्याविरोधेन नीतं तथापि भावनावादिनेदानीं तदुपन्यस्तमिति न दोषः । पूज्याः शबरस्वामिनः । वेद एव शास्त्रं वेदशास्त्रम् । कार्यमनुष्ठेयभावना प्रधानं यस्य वेदशास्त्रस्य तत् । ननु कार्यं कृतिसाध्यं गुर्वभिमतं किं न स्यात्तत्राह । अस्मदीय इति । पुरुषप्रयत्न इति । अर्थभावनेत्यर्थः । प्राभाकराभिमतकार्यस्याप्रमाणिकत्वाज्जैमिनीयेऽस्मिन् शास्त्रे पुरुषप्रयत्न एव कार्यमुक्तमित्यर्थः ॥ ३९५ ॥

अभिदधाति करोति च लिङ्पदं
श्रुतिवचःसु निजामपि भावनाम् ॥
न च करोति न वक्ति च तां पुन-
र्नरवचःस्विति दुःशकमुच्यते ॥ ३९६ ॥

इदानीं लोकवेदयोर्लिङादीनां विलक्षणार्थत्वकल्पनमयुक्तं सुतरां वैदिकलिङादीनां स्वकर्तृकव्यापाराभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धायित्वं तस्य दुर्निरूपत्वादपि नैतन्मतं युक्तमिति
षयति । अभिदधातीति । निजां स्वव्यापाररूपां
भावनामभिदधाति वदति करोति निष्पादयति चाभि
वनामपि शब्देन स्वविशिष्टव्यापारे स्वस्य वृत्तौ
त्मन्यपि वृत्तिप्रसङ्गेन विरोधं द्योतयति । तां स्व
पाररूपाम् भावनाम् । नरवचःस्विति । लिङ्पद
त्यनुषञ्जनीयम् । लोके आज्ञादेरेव लिङर्थत्वेन
शब्दभावनाया अभावाल्लौकिकलिङादिर्न तां क
न च तामभिधत्त इति विभागकथनं दुःशकं दुरुप
दनमयुक्तमुच्यते इत्यर्थः ॥ ३१६ ॥

वक्तृत्वमेव घटते यदि लिङ्पदस्य
सर्वत्र नार्द्धजरतीयमिदं प्रशस्तम् ॥
सामर्थ्यमेकरसमेव यदोपपन्नं
नानारसं न खलु तत्परिकल्पनीयम् ॥ ३१

ननु किमिति दुःशकं तदुपपादनादित्याशङ्क्या
वक्तृत्वमिति । अभिधातृत्वं बोधकत्वमिति या
सर्वत्र प्रत्यक्षादिप्रमाणे लिङादौ च लोके क्लृप्तेन
र्थबोधनेनैव वैदिकलिङादीनामपि प्रामाण्यं यदि
टेत तदा यथा कस्याश्चित्स्त्रिया युवत्या एव भर्त्रा
योजनानुसारेणार्द्धशरीरेण जरतीत्वमपीच्छति वैदि
माणिकं तन्न सिद्ध्यति तथा तत्तुल्यमिदं प्रवर्तनं
शस्तम् अन्यत्र प्रमाणेषु तस्यादर्शनेन वैदिकलि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्वपि तदयोगादित्यर्थः । ननु वेदे लिङादेरप्रेरकत्वे कथं पुंसः प्रवृत्तिः स्यात्तत्र प्रेरकान्तराभावादित्या-शङ्क्यानुमानादेर्लौकिकलिङादेरिव च स्वप्रवर्तकज्ञाने सति पुरुषः स्वेच्छयैव तां करोति । तदाह श्रुतिः । काममय एवायं पुरुषः स यथाकामो भवति तत्क्रतुर्भवति तत्कर्म कुरुत इत्याद्या, स्मृतिरपि यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति । तथा च प्रमाणं किमपि न प्रवर्त्तकमित्याशयेनाह । सामर्थ्यमिति । एकरसं प्रत्यक्षादिप्रमाणेन सममेकरूपं स्वप्रमेयज्ञानानुकूलमेव एकरसमिति प्रेरणानुकूलत्वं वा व्यावर्त्तयति । नानारसं प्रत्यक्षादिविलक्षणं बोधप्रवृत्त्युभयानुकूलत्वम् ॥ ३१७ ॥

श्रेयोहेतुत्ववाची यदि भवति तदा संभवत्येकरूपा
शक्तिस्तस्याभिधाने न तु भवति तदा कारकोयं प्रवृत्तेः ॥
श्रेयोहेतुश्च वाच्यः श्रुतिवचसि तदा पौरुषेये च तुल्यः
क्ल‍ृप्तश्चासौ न कल्प्यः श्रुतिवचसि यथा भावना लिङ्विवद्धा॥३१८

वक्तृत्वमेव घटते, सामर्थ्यमेकरसमिति चोक्तं स्वमतेन वैदिकलिङादेरुपपादयति । श्रेयोहेतुत्ववाचीति । वैदिकलिङादिरिति शेषः । तदा तस्य लिङादेरभिधाने स्वार्थबोधने एकरूपा शक्तिर्भवति । एवं सति प्रमाणरूपस्य वेदस्य कारकत्वदोषोऽपि परिहृतः स्यादित्याह । न तु भवतीति । अयं लिङादिः तदा श्रेयोहेतु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्ववाचित्वे प्रवृत्तेः कारको न भवति प्रवर्त्तको न भ
ति,तस्याः श्रेयोहेतुत्वज्ञानेनान्यत एव सिद्धत्वादित
ननु श्रेयोहेतुत्वज्ञानं वा लिङ्व्यापारः कल्प्यतां
र्त्तना वा को विशेष इत्याशङ्क्याह । श्रेयोहेतुश्चे
यदा लिङादेः श्रेयोहेतुः श्रेयोहेतुत्वं वाच्यं भवति
दा स श्रुतिवचसि पौरुषेये च तुल्यस्तथा च लिङ
श्रेयोहेतुत्वबोधनं नापूर्वमिति न प्रेरणातौल्यं
त्यर्थः । किञ्च मन्मते गामानयेत्यादिवाक्ये लिङादेः
योहेतुत्वबोधकत्वं क्लृप्तं न तु शब्दभावनाबोधकत्व
चान्यत्र धात्वर्थे वा त्वन्मते श्रेयोहेतुत्ववत् शब्द
वना क्वचिदपि क्लृप्तास्तीति प्रमेयस्वरूपं प्रमा
तद्बोधकत्वं च अलौकिकमेव कल्प्यं तच्चायुक्तं
नैवोपपत्तावित्याह । क्लृप्तश्चेति । असौ श्रेयोहेतु
माणस्य तद्बोधनव्यापारश्च । लिङ्निबद्धा लिङ्
रूपेत्यर्थः । इदमत्राभिप्रेतम् । अस्ति तावल्लो
तामपि भोजनादौ प्रवृत्तिः सा तावच्छब्देन वा
वा केन चित्प्रेर्यमाणस्य न भवति अपि तु हि
धनत्वज्ञानादिति भवतोऽपि संप्रतिपन्नम्, बाल
न्यदाने मात्प्रवृत्तिरपि तदिष्टमावश्यकं च बाल
नाद्युद्दिश्यैव न तु तत्प्रेरणयैव, भोजनादौ क्लृ
रेव तस्यां कल्पयितुमुचितत्वाच्च, अतः प्रवर्त
क्वापि प्रवृत्तिहेतुत्वस्याक्लृप्तत्वान्न माणवकप्रवृ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दनुमानमिति न लिङादेः प्रवर्त्तनासामान्येऽपि लोकतः शक्तिः सिद्धयत्यपि तु श्रेयोहेतुत्व एवेति कथं वैदिकलिङादिः प्रवर्त्तनां प्रतिपादयेत्, तदभावे वा कथं तस्य प्रवर्त्तनाव्यापारः कल्प्यः, व्यापारोऽपि निरवयवे विभौ शब्दे परिणामः परिस्पन्दो वा न संभवति, न चान्यः कश्चित्तद्व्यापारो निरूपयितुं शक्यः, एवं शब्दभावनात्वविशेषोऽपि लिङादितो न सिद्धयेत् तस्य प्रवर्त्तनासामान्यनिष्ठत्वात्, वाच्यार्थसंबन्धितयान्यतोऽनवगते तस्मिन् लक्षणानुपपत्तेश्च, तस्मादप्रामाणिकमिदं कल्पनमिति श्रेयोहेतुत्वमेव सर्वत्र लिङाद्यर्थ इत्यर्थ इति ॥ ३९८ ॥

धात्वर्थतोऽन्या न च भावनास्ति
याम् भावनां वक्तुमलं लकारः ॥
धात्वर्थमुद्दिश्य न पुंप्रयत्नो
लोके यतो भाति निरूपणायाम् ॥ ३९९ ॥

एवं लिङ्त्वाद्याकारेण शब्दभावना लिङाद्यर्थ इति भाट्टमतं निराकृत्य लत्वाकारेणाख्यातार्थोऽर्थभावनेति तन्मतमर्थभावनाया अप्रामाणिकत्वेन दूषयति । धात्वर्थत इति । भावना अर्थभावना । लकारः लड़ादिप्रत्ययः । न तावत्प्रयत्नरूपार्थभावनायां प्रत्यक्षं प्रमाणं भवति सुखदुःखादिवत् प्रयत्नरूपस्य कस्यचिदननुभवात् । अत एव करोमीति प्रत्यक्षसिद्धः स

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति निरस्तम् । हस्तादिव्यापारदशायामेव निवं
भवतोऽस्यानुभवस्य तन्मात्रविषयत्वात् । अत एवा
गच्छतीत्याद्यनुभवोऽपि । बाह्यव्यापाराभावेऽप्या
उद्योगरूपोऽर्थः कश्चिदनुभूयत इति चेन्न । तस्य
शरीरान्तरप्रदेशचेष्टाविषयत्वादतो न प्रत्यक्षं तत्र
माणमित्यर्थः । ननु प्रयत्नवदात्मसंयोगासमवायिका
रणकत्वाच्चेष्टायास्तया सोऽनुमीयत इति चेत्तत्राह
त्वर्थमुद्दिश्येति । चिकीर्षानन्तरमेव चेष्टादर्शनेन
श्रयसंयोगो मनःसंयोगविशेषो वा तदसमवायि
णं भविष्यतीति धात्वर्थहेतुतयापि लोके वर्णितप्र
ण विचारे क्रियमाणे प्रयत्नो नाम कश्चिदतो न भा
तो भावना नास्तीति संबन्धः। यत्त्वन्नयोत्पादानुकू
र्तृव्यापारो भावना स च धात्वर्थादन्यः । अन्यथा
तस्यानर्थक्यापत्तेः, पाकयागादेर्धात्वर्थस्य पचि
दिधातुभिरेवाभिहितत्वात्, स च रथी गच्छती
वप्यस्त्येव, एवं परस्परव्यावृत्तधात्वर्थेभ्यः सक
त्वर्थानुगतत्वादपि तस्य ततोऽन्यत्वम्, प्रतीयते
चति यजेतेत्यादिप्रयोगे सर्वत्र करोत्यर्थः, सैव
प्रयत्न इति । तन्न । न तावत्प्रत्ययार्थवत्त्वाय धा
दन्यो व्यापार एषितव्यः लङादिरूपस्याख्यात
श्यकश्रेयःसाधनताभिधायित्वे नातदर्थत्वाद्, लिङ
पि धात्वर्थगतसाध्यताभिधायित्वात्, अत एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यादिना यागादेः साध्यत्वविशिष्टश्रेयःसाधनत्वं प्र-
तीयते अन्यथा ततः प्रवृत्त्यनुपपत्तेः । काष्ठैः पचतीति
काष्ठादेः पाककरणत्ववत्।नाप्यनुगततया तस्य धात्वर्था-
त्पृथग्व्यापारत्वम्, आख्याताभिधेयस्य धर्ममात्रत्वेना-
प्यनुगतत्वोपपत्तेः, ततो नास्ति भावनेति भावः ॥३९९॥

न कर्मकाण्डेऽपि ततो नियोगो
न भावनाप्युक्तनयेन तस्मिन् ॥
न तद् द्वयं वेदशिरःसु तस्मा-
त्ततो न कार्यार्थपराणि तानि ॥ ४०० ॥

एवं वेदान्तानां सिद्धब्रह्मपरत्वव्युदासाय नियोगरू-
पे कार्ये भावनारूपे वा पर्यवसन्नो वेद इति प्रत्यव-
स्थानं कर्मकाण्डस्यापि न तदर्थत्वं तद्गतलिङादीनां
श्रेयःसाधनतार्थत्वेन तदन्वितार्थपरत्वात्तस्येत्युपपा-
दनेन प्रत्युक्तम्, भव्याय भूतमिति भाष्याशयश्च प्रा-
गेवोक्त इति न तद्बलादपि कार्यपरत्वमित्यभिप्रेत्यो-
पसंहरति । न कर्मकाण्डेऽपीति । ततः प्राग्वर्णितन्या-
यान्न नियोगोऽस्तीति शेषः । तस्मिन् कर्मकाण्डे । य-
दा कर्मकाण्डेऽपि तयोरियं गतिस्तदाऽखण्डब्रह्मपरे वे-
दान्ते तदुभयं नेति किमु वक्तव्यमित्याशयेनाह । न
तद् द्वयमिति । नियोगो भावना चेत्यर्थः । तर्हि द्रष्ट-
व्यः पश्येदित्यादिज्ञानविधीनां का गतिरित्याशङ्क्या-
ह । तत इति । ज्ञानविधेरप्युपरिष्टान्निरसिष्यमाणत्वा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्न तद्विधिपरं वेदशिरः किं त्वखण्डब्रह्मपरमिति
वः ॥ ४०० ॥

अपि च प्रतिषेधचोदना-
विषयः स्यात्प्रतिषिद्धकर्मणः ॥
फलगर्द्धिनिवृत्तिरेव सा
न नियोगो न च तस्य गोचरः ॥ ४०१ ॥

एवं वेदान्तानां कार्यपरत्वं निराकृत्य ब्रह्मपरत्वं स्था-
पितम्, इदानीं वेदान्तवाक्यं कार्यपरं वेदवाक्यत्वा-
दग्निहोत्रादिवाक्यवदित्यनुमानं ब्राह्मणं न हन्यात् सु-
रां न पिबेदित्यादिप्रतिषेधवाक्ये व्यभिचारेण दूषयति
अपि चेति । प्रतिषेधचोदना प्रतिषेधवाक्यं प्रतिषि-
कर्मणः प्रतिषिद्धस्य हननादेः या फलगर्द्धिनिवृत्तिः
लाकाङ्क्षौदासीन्यरूपोपरतिः सैव प्रतिषेधचोदनाया वि-
षयः स्यात् । ततः किं तत्राह । सेति । सा निवृत्तिः
योगः कार्यं न भवति प्रागभावरूपत्वेन तस्याः सिद्ध-
भावत्वात् तर्हि किं तद्विषयो विधेयः तथा च निषे-
विधिनिष्ठता नेत्याह । न चेति । तस्य नियोगस्य
चरो विषयः तस्याननुष्ठेयत्वात्, नियोगग्रहणं
नाया अप्युपलक्षणम्, नापि भावना भाव्यो वा
त्यर्थः । निषेधवाक्यस्य हि निषिध्यमानहननादि
यःसाधनत्वाभाव एवार्थः, न च स नियोगो भा-
न वा तस्य गोचरः,विधेर्भावार्थगोचरत्वनियमादि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्वाक्यं कार्यपरमतस्तत्र वेदवाक्यत्वं व्यभिचरतीत्यर्थः ॥ ४०१ ॥

नञः स्वसम्बन्धिपदार्थवस्तुनो
निवृत्तिरर्थः सहजप्रसिद्धितः ॥
अनीक्षणादौ व्रतशब्दसंगतेः
परप्रयुक्ता खलु मानसी क्रिया ॥ ४०२ ॥

ननु निवृत्तिरेव नञर्थ इति कथम्, यावता नेक्षेतोद्यन्तमित्यत्रेक्षणविरुद्धमानसक्रियाविधिर्यथाश्रीयते तद्वद्धननादिविरुद्धक्रिया प्रकृतेऽपि विधीयतामित्याशङ्क्य दृष्टान्तवैषम्येण परिहरति । नञ इति । स्वसम्बन्धि यत्पदं तदर्थः स एव वस्तु तस्येत्यर्थः । नञ्पदं येन पदेन सम्बध्यते तस्य तदर्थाभाव एव सहजार्थो मुख्योऽर्थः, कुतः वृद्धव्यवहारे तथा प्रसिद्धितः, न तद्विरुद्धत्वादिः, नानार्थत्वप्रसङ्गात्, तच्चैकस्य शब्दस्य सति गत्यन्तरेऽनुपपन्नम् । एतदुक्तं भवति । न हन्तव्य इत्युक्ते स्वरसतः स्वसम्बन्धिनिवृत्तेरेव पुरःस्फूर्तिदर्शनात्सैवार्थो न पर्युदासस्तथेति मुख्यार्थसम्भवे नार्थान्तरं कल्प्यमित्यर्थः। कथं तर्हि नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदा चन नोपरक्तं न वारिस्थं न मध्यं नभसो गतमित्यादौ पर्युदासाश्रयणमिति चेद्बलवद्बाधवशादित्याह । अनीक्षणादाविति । नेक्षेतेत्यादौ मानसी क्रिया ईक्षणविरुद्धा मानसी क्रिया परप्रयुक्ता खलु मुख्यार्थपरिग्रहबलवद्बा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनिमित्तैव । किं तद्बलवद्बाधकं व्रतशब्दसंगतेः न वाक्यस्योपक्रमे अथातः प्रजापतिव्रतमिति व्रतशब्द श्रवणाद् व्रतस्य चानुष्ठेयत्वादनुष्ठेयपरं तत्प्रकरणं नञः मुख्यार्थस्याभावस्याननुष्ठेयत्वान्नञानुष्ठानयोग्या मान क्रिया तत्र लक्ष्यत इति तद्वाक्यं विधिपरम्, न चैत त्र मुख्यार्थान्वये किं चिद्बाधकमस्तीति नैतद्विधि मित्यर्थः ॥ ४०२ ॥

अपि च प्रतिषेधचोदना
न तु भिद्येत भवन्मते विधेः ॥
विधिरेव तु चोदनाखिला
न हि वेदे वचनं निवर्त्तकम् ॥ ४०३ ॥

किं च प्रतिषेधवाक्यस्यापि निवृत्तिक्रियाविधि त्वे सर्वमेव वाक्यं विधिपरमिति विधिप्रतिषेधवि न स्यादस्ति च स फलबुद्धिप्रमेयाधिकारिबोधक तः पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोरिति कलमहाजनाद्धत इत्याशयेनाह । अपि च प्रतिषे दनेति । विधेरिति पञ्चमी । कुत इत्यत आह धिरेव त्विति । भवन्मत इत्यनुषङ्गः । ननु प्रवर्त्तको धिः निषेधवाक्यं च निवर्त्तकमिति कथं तस्य वि त्वं तत्राह । न हि वेद इति । अत्रापि भवन्मत इ षङ्गनीयम् । निषेधेऽपि विधीयमानायाः क्रियाया त्तिविशेषत्वान्न भवन्मते तद्वाक्यं प्रतिषेधानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः ॥ ४०३ ॥

प्रतिषेधवाक्यवदतः सकलं
विधिशून्यमेव फलवद्भवतु ॥
वचनं त्रयीशिरसि तत्त्वमसि-
प्रभृति प्रतीचि तमसोऽपहतेः ॥ ४०४ ॥

एवं संक्षेपेण प्रतिषेधवाक्यस्य सिद्धनिष्ठत्वमुपपाद्य तद्वदेव समस्तं वेदान्तवाक्यं विधिशून्यमेव फलपर्यवसायि प्रमाणमस्तु इत्युपसंहरति । प्रतिषेधवाक्यवदिति । अत उक्तन्यायात् । तत्त्वमसिप्रभृति तत्त्वमस्यादि वचनमिति संबन्धः । फलवत्त्वमेवाह । प्रतीचीति । तमसोऽनाद्यज्ञानस्य अपहतेर्बाधनादित्यर्थः ॥ ४०४ ॥

नामधातुसहितो नञिष्यते
पर्युदासविषयो मनीषिभिः ॥
न प्रसक्तविनिवृत्तिवाचको-
ऽब्राह्मणादिषु तथोपलम्भनात् ॥ ४०५ ॥

एवं नञो मुख्यया वृत्त्या प्रसज्यप्रतिषेधार्थत्वात् तस्य च कार्यविषयत्वासंभवादनीक्षणादावनुष्ठेयार्थव्रतशब्दसमभिव्याहारबलेन नञः पर्युदासलक्षणया ईक्षणविरुद्धमानसक्रियार्थत्वान्निपेधवाक्ये च तादृशस्य मुख्यार्थत्यागनिमित्तस्य कदा चिदप्यभावान्निषेधवाक्यं निषेधनिष्ठं न कार्यनिष्ठं तद्वदेव वेदान्तवाक्यं सर्वमेव ब्रह्मनिष्ठमित्युक्तमिदानीं नञर्थे भट्टाभ्युपगमविशेषं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूषयितुमनुवदति । नामधातुसहित इति । सुबन्तेन धातुना वा सहित इत्यर्थः । न केवलं प्रसक्तस्याभाव एव नञो मुख्यार्थोऽपि तु तदन्यतद्विरोधिनावपि । अत्र नामधातुसहितो नञ् पर्युदासविषय इष्यते, पर्युदासो नाम नञ्संबन्धिपदार्थपरिवर्ज्जनम्, नामधातुभ्यां योगे प्रसक्तस्य विनिवृत्तिरभावस्तन्मात्रवाची न कुतः अब्राह्मणादिषु अग्रे अब्राह्मणस्तिष्ठति इच्छोऽयमधर्मीत्यादौ ब्राह्मणातिरिक्ते धर्मविरुद्धे पापे ततः प्रतीतिदर्शनादित्यर्थः । तदुक्तम् । नामधातुयोगी तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनाविति ॥ ४०५ ॥

अब्राह्मणाधर्मगिरोर्नञेष
नामान्वयादाश्रितपर्युदासः ॥
अन्यं विरुद्धं च सदाभिधत्ते
नोद्यन्तमित्यादिषु धातुयोगात् ॥ ४०६ ॥

उक्तमेव दृष्टान्तं प्रकटयन्नामधातुयोगिनोऽपि नञस्तदन्यविरुद्धार्थत्वे क्रमेणोदाहरणमाह । अब्राह्मण आश्रितोऽर्थत्वेन स्वीकृतः पर्युदासो येन नञा नोद्यन्तमिति । नेक्षेतोद्यन्तमादित्यमित्यादिष्वित्यर्थः एष नञ् धातुयोगाद्धातुरीक्षणं तत्संबन्धात् पर्युदासस्या विरुद्धमीक्षणविघातकमन्यसंकल्पं सदाभिधत्ते इति योजना ॥ ४०६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोद्यन्तमित्यत्र नञीक्षणार्थ-
समीपकार्यान्तरमुच्यते हि ॥
ततश्च नेक्षिष्य इतीदृशी स्यात्
संकल्पना संनिहितत्वहेतोः ॥ ४०७ ॥

नन्वत्र वाक्ये कीदृशः पर्युदासो नञा लभ्यते तमाह। नोद्यन्तमिति। अत्रास्मिन्वाक्ये ईक्षणार्थस्य ईक्षणधात्वर्थस्य समीपं संबन्धि यत्कार्यान्तरम् ईक्षणविरुद्धम् ईक्षणकार्यात्कार्यान्तरं धातुयोगिनापि नञा तदर्थविरुद्धमेव वस्त्वन्तरमभिधीयते नान्यदिति समीपेत्युक्तम्। तदेव विविच्य दर्शयति। ततश्चेति। नेक्षिष्य इतीदृशी संकल्पनास्मिन्वाक्ये नञभिधेया स्यादीक्षणविरोधिसंकल्पस्येक्षणविरोधितया तत्संबन्धित्वेन सन्निहितत्वाद्धेतोरित्यर्थः ॥ ४०७ ॥

द्विजं न हन्यान्न कलञ्जमद्या-
दित्यादिवाक्ये विधिनास्य योगात् ॥
प्रसज्यमानार्थनिवृत्तिमात्रं
नञोऽर्थ इत्याश्रितमादरेण ॥ ४०८ ॥

क्व तर्हि प्रसज्यप्रतिषेधावकाशस्तमाह। द्विजं न हन्यादिति। अद्याद्भक्षयेत्। आदिपदेन न सुरां पिबेदित्यादि संगृह्यते विधिना लिङादिपदेनास्य नञः प्रसज्यमानस्य भ्रान्त्या प्रसक्तस्य हननादिगतस्यार्थस्य श्रेयःसाधनत्वस्य निवृत्तिरभावस्तन्मात्रमित्यर्थः। द्विजं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हन्यादित्यादिवाक्ये नञो लिङादिसंबन्धवशात्
र्थस्य श्रेयःसाधनत्वस्याभावमात्रमर्थ इत्यङ्गीकृतं प
त्यर्थः ॥ ४०८ ॥

नाद्यां न हन्यां न पिबेयमित्यपि
वाक्येषु नञ्वत्सु वदन्ति मानसीम् ॥
संकल्परूपां विधिवन्धिनीं क्रियां
नोद्यन्तमित्यादिवचःस्विवापरे ॥ ४०९ ॥

अत्रापि प्राभाकराणामभ्युपगममाह । नाद्यां न
न्यामिति । अपरे प्राभाकराः नञ्वत्सु न हन्यादि
दिषु वाक्येषु नाद्यां न हन्यामित्यादिसंकल्परूपां
धिवन्धिनीं विद्वग्नुवन्धरूपां क्रियां वदन्तीति संब
तत्र दृष्टान्तो नोद्यन्तमित्यादीति, न हन्यादित्याद
हननपानादि न कुर्यामिति हननादिक्रियाविरोधि
ल्पक्रियाविधिरेवार्थ इति प्राभाकरा वदन्तीत्यर्थः

वाक्येषु नञ्वत्सु निवृत्तिमात्रं
प्रमेयमित्यभ्युपगम्यमाने ॥
प्रत्यक्षमानेन विरुद्ध्यते हि
निवृत्तिशास्त्रं न च युज्यते तत् ॥ ४१० ॥

ननु न हन्यादित्यादौ प्रसज्यप्रतिषेधार्थत्वसंभवे
मिति पर्युदासाश्रयणमित्याशङ्क्य तत्संभवोऽस्ती
त्याह । वाक्येष्विति । प्रत्यक्षमानेनेति । वक्ष्यमाण
या श्रेयःसाधनत्वस्य हननादेर्ब्राह्मणादेर्वा निवृ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वः प्रत्यक्षमानेन हि विरुद्धयत इति नञस्तत्प्रमेयत्वम-भ्युपगन्तुं न शक्यतेऽतस्तच्छास्त्रं निवृत्तिशास्त्रमिति न युज्यत इति सर्वमेव शास्त्रं प्रवर्त्तकमित्यर्थः ॥४१०॥

प्रवर्त्तकं वाक्यमुवाच चोदनां
निवर्त्तकं नैवमुवाच भाष्यकृत ॥
ततश्च विघ्नो न हि चोदनाऽस्ति सा
प्रवर्त्तिका या न भवेदिति स्थितिः ॥ ४११ ॥

किं च चोदनेति क्रियायाः प्रवर्त्तकं वचनमिति शाबरभाष्यकारोऽपि निषेधचोदनाया अपि प्रवर्त्तक-त्वं दर्शयति, विधिनिषेधविभागस्तु धात्वर्थतद्विरो-धिक्रियाविधित्वरूपतदवान्तरविशेषनिमित्त इति सा-पि प्रवृत्तिनिष्ठेत्याशयेनाह। प्रवर्त्तकमिति। अन्यथा नि-षेधवचनं निषेधचोदनेत्यपि स ब्रूयान्नैवमत्रोचदित्याह। निवर्त्तकमिति। ततः किं तत्राह। ततश्चेति। या प्र-वर्त्तिका न भवेत्सा चोदना न ह्यस्तीति स्थितिरिति विघ्न इति सम्बन्धः। तथा च न हन्यादित्यादिनिषेध-चोदनापि संकल्पक्रियायां प्रवर्त्तिकेति भावः ॥ ४११॥

न नामयोगो न च धातुयोगो
लिङादियोगोऽपि न कारणं नः ॥
नञः स्वसम्बन्धिनिवृत्तिमात्रं
स्वतोऽभिधेयं परतोऽन्यदस्य ॥ ४१२ ॥

इदानीमाद्यमते यद्यप्युक्तविधयापि न हन्या-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दित्यादिनिषेधवाक्यस्य सिद्धमात्रपर्यवसानं सिद्धं तथापि यदि नेक्षेतेतिवाक्यस्थनञेक्षणविरुद्धार्थप्र त्यनुरोधेन तस्य मुख्यार्थत्वं वदेत्तर्हि ततस्तत्प्र शक्तिं विना गत्यन्तरमुक्तमेव, यद्युपपत्तितः तर्हि तत्र नास्त्येव, प्रत्युत विपक्ष एव सेत्याशयेन नाम दियोगव्यवस्थया तुल्यवन्नञर्थत्रैविद्ध्यमुक्तं दूषय न नामयोग इति । कारणं व्यवस्थयान्यत्वादिप्रति दन इति शेषः । नः अस्मन्मते । कुतस्तत्राह । नञ ति । स्वसंबन्धिनो निवृत्तिरभावस्तन्मात्रम् । स्वतः मु वृत्त्या । तर्हि ब्राह्मणादिप्रयोगेषु अन्याद्यर्थप्रतीतिः थं तत्राह । परत इति । अस्य नञोऽन्यत्वसज्यप्रति धातिरिक्तं तदन्यत्वादि परतो लक्षणया प्रतीयत ति शेषः । तथा चान्यलभ्यत्वादनेकशक्तिकल्पने वाच्च तदन्यतद्विरोधिनौ नञो न मुख्यार्थावित व: ॥ ४१२ ॥

तथाहि नाग्रे करिणीति नाम्ना
गजोऽत्र नास्तीति च धातुयोगे ॥
लिङादियोगेऽपि निवृत्तिरर्थो
विषं न खादेदिति नञ्पदस्य ॥ ४१३ ॥

ननु नामादियुक्तेन नञा नियमेन प्रतीयमानं दन्यविरोधिनोः कथं लाक्षणिकत्वमित्याशङ्क्य ति न ततस्तत्प्रतीतिरसिद्धेत्याशयेन तदकारणत्वमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृणोति । तथाहीति । नाग्रे करिणीति वाक्य इति शेषः, अग्रे करिणी नेति वाक्ये नञ्पदस्य नाम्ना योगेऽपीत्यनुषङ्गः । एवं गजोऽत्र नास्तीत्यादावपि योजना। निवृत्तिः प्रसज्यप्रतिषेधः। न खादेन्न भक्षयेत्, लोके हि नाग्रे करिणीत्यादिवाक्ये प्रयुक्तान्नञो नामादिसंबन्धविशेषे सत्यपि लिङादियुक्तात्ततस्तदर्थाभाव इव करिण्यादेरभाव एव प्रतीयते न ततोऽर्थान्तरमिति कुतस्त्वदुक्तो नियमः, कुतस्तरां नामादेर्नञ्सम्बन्धस्य त्वदुक्तव्यवस्थितनञर्थप्रतीतिहेतुत्वमिति भावः ॥ ४१३ ॥

> तथा श्रुतौ नेति वचःसु नाम्नि
> नानेह नास्तीति च धातुयोगे ॥
> तथा विधाने न कलञ्जमद्या-
> न्नञोऽविशेषेण निवृत्तिरर्थः ॥ ४१४ ॥

ननु लोके यथा तथास्तु, श्रुतौ तूक्तव्यवस्था भविष्यतीत्याशङ्क्य तत्रापि लोकसाम्यमेवाह । तथा श्रुताविति । नेतिनेतीति वाक्यद्वयं स एष नेतिनेतीति वाक्यं चापेक्ष्य नेतिवचःस्विति बहुवचनम् । नाम्नि नामयोगे इतिशब्दस्य नामत्वाच्छ्रुतौ नेति वचःसु नञो नामयोगे सत्यपि, तथा नेह नानास्तीति वाक्ये अस्तीति धातुना योगेऽपि, नानेह नास्तीति छन्दोऽनुरोधेन व्यत्ययः, तथा न कलञ्जमद्यादिति वाक्ये विधाने विधायकपदयोगेऽप्यविशेषेण त्वदुक्तविशेषं विनैवेतिश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्दपरामृश्यप्रपञ्चादिनिवृत्तिरेवार्थो भवति, तथैव... र्थस्य बादरायणादिभिः प्रकृतैतावत्त्वं हि प्रतिषे... त्यादिन्यायेन निरूपितत्वात्, अतो वेदेऽपि नामयो... दिना नञो न व्यवस्थितार्थत्वमित्यभाव एव स्वतो... भिचारान्नञर्थः पर्युदासस्तु लाक्षणिक एवेति भावः।

औदासीन्यं पुरुषगतमेवाविशेषान्नञोऽर्थो
भ्रान्तिप्राप्तेऽसति तु विषये यत्रयत्रैष दृष्टः।
नौदासीन्यं पृथगिह भवेदात्मचिन्मात्ररूपात्
सिद्धे वस्तुन्यवसितमतो वेदवाक्यं निषेधे॥ ...॥

एवं नामादियोगेन नञः स्वतोऽर्थविशेषनिष्ठत्वं... राकृत्य मुख्यया वृत्त्या प्रसज्यप्रतिषेधार्थत्वमुक्त... पसंहरति। औदासीन्यमिति। प्रसज्यप्रतिषेध इ... र्थः। भावप्रपञ्च इवाभावोऽप्यात्मन्येव बाध्य इति... शंयितुं पुरुषगतमेवेत्युक्तम्। नञर्थो भवेदिति शे... तुरवधारणे। विषये नामाद्यर्थे। भ्रान्तिप्राप्ते ... तोऽविद्यमाने भ्रान्त्या प्रसक्ते सति। यत्रयत्र ... एष नञ् दृष्टः तत्र सर्वत्राविशेषान्नामादियोगकृत... षाभावात् पुरुषगतमौदासीन्यमेव नञर्थो भवेदि... वन्धः। ननु नेतिनेतीतिवाक्यस्यात्मपरत्वात्कथं... षेधपरत्वम्, अन्यथा तस्यानात्मनिष्ठत्वापत्तेरा... ऽद्वयत्वव्याघाताच्च इत्याशङ्क्य सोऽपि प्रपञ्चाधिष्ठा... त्मैवेति नोक्तदोष इत्याशयेनाह। नौदासीन्यमि...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इह ब्रह्मणि ॥ ४१५ ॥

प्रवर्त्तकं वाक्यमुवाच चोदनां
निधाय बुद्धौ वचनं निवर्त्तकम् ॥
द्वितीयसूत्रे भगवान् बहुश्रुतो
न चोदनाद्वित्वनिवारणाय तत् ॥ ४१६ ॥

इदानीं नाद्यां न हन्यामित्यादिना प्राभाकरोक्तं निषेधवाक्यस्य प्रवृत्तिनिष्ठत्वं सोपस्करमाशङ्क्य निराकरिष्यन्प्रथमं शाबरभाष्याद्द्विविधोऽपि विधिः प्रवृत्तिनिष्ठ एवेति तदुक्तं दूषयति । प्रवर्त्तकमिति । द्वितीयसूत्रे चोदनालक्षणोऽर्थो धर्म इति सूत्रे । भगवान् बहुज्ञः तत्र हेतुर्बहुश्रुतः अत एव सहस्रशाखा अर्थतोऽपि वेत्ति शबरस्वामीत्यैतिह्यम् । चोदनानां प्रवर्त्तकत्वनिषेधकत्वरूपेण द्वित्वस्य द्वैविध्यस्य निवारणाय न तद्भाष्यमित्यर्थः । भाष्यकारो हि निवृत्तिनिष्ठामपि चोदनां बुद्धौ निधायैव वेदे निषेधकपरमपि वाक्यमस्तीति जानन्नेव प्रक्रान्तधर्मनिरूपणाय प्रवृत्तस्तत्प्रमाणं प्रवर्त्तकं वाक्यं चोदनामुवाच न तु निवृत्तिमात्रनिष्ठां चोदनां निवारयितुम् । अन्यथोक्तविधया निषेधवाक्यस्य प्रवृत्तिनिष्ठत्वासिद्धेस्तस्य तदज्ञानप्रसङ्गान्न बहुश्रुतत्वं संभवेदिति भावः ॥ ४१६ ॥

ननु निवृत्तिपरत्वमुदीरितं
विघटयामि निषेधगिरामहम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हि कलञ्जमिति प्रतिपाद्यते
यदि तदा नयनेन विरुध्यते ॥ ४३७ ॥

एवं भाष्यवाक्यबलान्निषेधवाक्यस्य निवृत्ति-
र्थत्वमाशङ्कितं निरस्तमिदानीं प्राभाकरः प्रतिज्ञा-
निषेधनिष्ठत्वं दूषयति । ननु निवृत्तीति । किं क-
जाद्यभावो निषेधवाक्ये नञर्थः, किं वा भक्ष-
भावः, उत प्रत्ययार्थाभाव इति विकल्प्याद्यं प्र-
विरोधेन दूषयति । न हीति । यदीह कलञ्जं
ति निषेधवाक्ये नञर्थः प्रतिपाद्यते तदा नयने-
क्षेण विरुद्ध्यते, तस्य तत्र प्रत्यक्षेणानुभवादित्यर्थः

अथ कलञ्जपदार्थगभक्षणं
न हि तदप्यमुनैव विरुद्ध्यते ॥
अथ तदीय फलस्पृहयान्वयो
न हि तदप्यनुभूतिपराहतम् ॥ ४३८ ॥

द्वितीयं दूषयति। अथेति।अनेनार्थान्तरतोक्ता क-
जपदार्थगभक्षणं तस्य भक्षणं न हीति यदि प्रतिपा-
त्यनुषङ्गः, तदपि पूर्ववत्प्रत्यक्षेणैव बाध्यते तदी-
चैतस्य स्वसामग्रीद्वारा प्राप्तत्वादित्याशयेनाह ।
ति।तृतीयेऽपि किं प्रत्ययार्थः फलरागः,उत भक्ष-
योगः। आद्यमनूद्य प्रत्याह।अथ तदीयेति। कल-
णादिसंबन्धि यत्फलं तस्य स्पृहा रागः तयान्व-
इति शेषः। तदपि एतदपि न हीति संबन्ध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तद्रागिणोऽनुभूतिपराहतमिति ॥ ४१८ ॥

अथ तदीयनियोगनिवर्त्तनं
भवतु भक्षणमस्तु तदिच्छया ॥
न हि नियोगनिवृत्तिनिवेदने
सति कलञ्जमभक्ष्यमितीङ्ग्यते ॥ ४१९ ॥

प्रत्ययार्थो नियोगो निषेद्धव्य इति पक्षमनुवदति । अथ तदीयनियोगेति । कलञ्जभक्षणे नियोगो विधिर्नेति निषेधवाक्यार्थ इति शङ्कितुराशयः । एतावता न तवेष्टसिद्धिरिति दूषयति । भवत्विति । अयं निषेधवाक्यार्थ इति शेषः । मा भूत्तस्य विधिः नैतावता तद्भक्षणनिवृत्तिः सिद्ध्येत् भोजनादेरिवान्यतोऽपि तत्संभवेन निषेधवैयर्थ्यादित्याशयेनाह । भक्षणमस्त्विति । उक्तमेव व्यतिरेकमुखेनाप्याह । न हि नियोगेति । इङ्ग्यते ज्ञायते ॥ ४१९ ॥

इह कलञ्जपदेन नञन्वयो
भवति वास्य नञोऽदिसमागमः ॥
अदिगतेन लिङादिपदेन वा
सह समेति नञत्र गतिस्त्रयी ॥ ४२० ॥

अस्तु तर्हि यदभावस्तत्र केनापि मानेन न बाध्यते तदभाव एव नञर्थ इत्याशङ्क्य शब्दोपस्थितस्यैव शाब्देन नञर्थेनान्वयो वक्तव्यः नामधातुप्रत्ययव्यतिरिक्तशब्दस्येहाभावेन कलञ्जाद्यतिरिक्तस्य नञर्थान्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यिनः कस्य चिच्छब्दस्यासंभवादित्याशयेनाह। कलञ्जपदेनेति । इह प्रकृतवाक्ये अदिना भक्षि चिधातुना वा समागमः सम्बन्धः अदिगतेनाऽऽ गतेन लिङादिपदेन प्रत्ययार्थेन वा सह समेति। ध्नाति अन्वितो भवतीत्यर्थः । अत्र न कलञ्जादि वाक्ये । गतिः ज्ञानोपायोऽन्वयः। त्रयी त्रिविधा

उदितपक्षपरिग्रहकारिणां
न च निषेधगिरामुपपादने ॥
भवति शक्तिरतश्च निषेधगा-
रपि नियोगपराभ्युपगम्यताम् ॥ ४२१ ॥

एवं च उक्तान्यतमपक्षे निषेधवाक्यस्य निषेध त्वोपपादनाशक्तेर्निषेधवाक्यमपि निवृत्तिनियोग वाभ्युपगन्तव्यमिति प्राभाकरः स्वमतमुपस्थाप उदितेति । उक्तपक्षत्रयान्यतमपरिग्रहकारिणां नामित्यर्थः । निषेधगिरां प्रामाण्यस्येति शेषः। उक्तरीत्या निषेधवाक्यस्य प्रामाण्यं न संभवति इत्यर्थः । चकारेण शब्दार्थस्य कार्यान्वयनियमं यति ॥ ४२१ ॥

यथा च यागाद्यनुबन्धभेदाद्
द्विन्नेषु शास्त्रेषु नियोगभेदः ॥
निवृत्तिभेदादपि तद्वदस्य
निवृत्तयोऽपि ह्यनुबन्धभूताः ॥ ४२२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु वेदे निवृत्तिनियोगस्यैकत्वे भक्षणादिनिवृत्तिनियोगसिद्धावपि पानादिनिवृत्तिनियोगसिद्धिर्न स्यादिति पानादौ यथेष्टं प्रवर्त्तेत, तन्निवृत्तिनियोगभेदस्तु तन्मतेऽनुपपन्न एव, अनुबन्धभेदाधीनशास्त्रभेदे सत्येव नियोगभेदस्य तदभ्युपगमात्, न हीह यागदानादिरिवानुबन्धो भिद्यत इत्याशङ्क्येहापि पानभक्षणादिभेदेन तत्प्रतियोगिकनिवृत्तिक्रियारूपानुबन्धभेदसंभवान्निवृत्तिनियोगोऽपि यागदानादिनियोगवद्भिद्यत इत्याशयेनाह । यथा च यागादीति । आदिपदेन दानहोमसंग्रहः । अनु पश्चाद्बध्नाति व्यवच्छेदकतयेति यागादिधात्वर्थोऽनुबन्धः तद्रूपोऽनुबन्धो नियोगविषयस्तद्भेदाच्छास्त्रेष्वसन्निकृष्टार्थप्रतिपादकवाक्येषु भिन्नेषु सत्सु यथा यागादिनियोगभेदस्तद्वदत्र भक्षणादिनिवृत्तिक्रियाभेदादपि निवृत्तिशास्त्रभेदादस्य नियोगस्य भेद इत्यनुषङ्गः । ननु यागादीनामनुष्ठेयत्वात् कृतिसाध्यनियोगानुबन्धत्वं युज्यते न निवृत्तीनामित्याशङ्क्य तासामपि प्रवृत्तिविरोधिमनोव्यापाररूपतयानुष्ठेयत्वात्तदनुबन्धत्वं युज्यत इत्याशयेनाह । निवृत्तयोऽपीति । अपिशब्देन तासां यागादिसाम्यं द्योतयति। हि यस्मान्निवृत्तयो यागादिसमास्तस्मादनुबन्धभूता नियोगसाधनकृत्यवच्छेदकतया तद्वारा निरूपकाः स्युरित्यर्थः॥२२

निवृत्तिसिद्ध्यापि नियोगसिद्धिः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवर्त्तमानस्य न गर्त्तपातः ॥
निषिद्धचेष्टा निरयस्य हेतु-
र्नियोगतो नाध्यवसीयते हि ॥ ४२३ ॥

नन्वेवमपि कस्तत्र नियोज्यः न हि तेन विना न
व्यापाररूपायाः कृतेर्लिङादिनाभिधानं पर्यवस्येदित्या
शङ्क्य निवृत्तिनियोगस्य निवर्त्तनव्यापारसामर्थ्यप्रा
निवर्त्यप्रवृत्त्युन्मुखस्यैव नियोज्यत्वात् तन्निवृ
मात्रादेव नियोगसिद्धेरत एव विश्वजिन्न्यायात्स्व
कामोऽत्र नियोज्योऽस्त्विति निरस्तं सामर्थ्यप्राप्ते
योज्ये संभवति तन्न्यायस्यानवतारादित्याशयेनाह
निवृत्तिसिद्ध्यापीति । ननु कलञ्जभक्षणादिनिवृ
निरयादिपातो न भवतीति तत्परिहारकाम एव नि
ज्योऽस्त्विति चेन्न । नियोगस्य तदाकाङ्क्षाया अन्य
व शान्तत्वेन तत्कल्पनायोगात् । किं च यदि त
णादिना निरयपातो भवेत्तर्हि तद्वर्जनेन सोऽपि व
तः स्यात्, न चैवमस्ति प्रमाणाभावादित्याशयेनाह
वर्त्तमानस्येति। ननु यो ब्राह्मणायावगुरेत्तं शतेन
यादित्यादिवाक्यान्निषिद्धप्रवृत्तेर्निरयहेतुत्वं प्रतीयत
ति चेत्तत्राह । निषिद्धचेष्टेति । हेतुपदानन्तरमि
दमध्याहर्त्तव्यम्, नियोगतो विधित इत्यर्थः । अर्थ
दो हि नियोगाकाङ्क्षितमेवार्थं प्रतिपादयति । नि
श्च स्वनियोज्यसिद्धयेऽर्थवादसामर्थ्यलभ्यमपि फल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काङ्क्षतीत्यन्यतो लब्धे नियोज्ये नियोगस्य तदपेक्षोपरमान्न नियोगसामर्थ्येन ततस्तदध्यवसातुं शक्यत इत्युक्त एव नियोज्य इति भावः। हिशब्देन जरत्प्राभाकरमत एतत्सुप्रसिद्धमिति द्योतयति ॥ ४२३ ॥

नियोग एवैष पुमान्नियुज्यते
नियोगसिद्ध्यै तु पुनर्नियुज्यते ॥
परत्र कर्मस्वथ वा निवृत्तिषु
स्थितिः प्रसिद्धेति नियोगवादिनाम् ॥ ४२४ ॥

ननु निरयपातपरिहारेच्छां विना चेतनः कथं नियोगेन नियुज्येत प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तत इति न्यायादित्याशङ्क्य प्राभाकरसिद्धान्तरहस्यमाह। नियोग एवेति। एष नियोज्यः। नियोगे इति सप्तमी। नियुज्यते नियोगेनेति शेषः। नियोज्यो हि लोके कार्ये लिङादिव्युत्पत्तिबलान्नियोगमेव लिङादितः स्वकृतिसाध्यत्वेनावगच्छंस्तदुन्मुखो भवति। अयमेव नियोज्यस्य नियोगे तन्नियोगो नाम स्वर्गादिकमपि हि नियोगः स्वसिद्ध्यनुकूलनियोज्यसिद्धये प्रयच्छतीति स एव मुख्यः साध्यः। तदुक्तम्। स्वात्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये। कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव न इति। नियोगमुद्दिश्यैव पुमान्प्रथमं प्रवर्त्तत इत्यर्थः। नन्वव्यापाररूपे तस्मिन्कथं पुंसो नियोगो भवेदित्याशङ्क्य तदनन्तरं तेनैव नियोगेन तद्विषये या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गादिधात्वर्थे तत्सिद्धये स नियुज्यत इति तद्द्वारा सं
योगं साधयिष्यतीत्याशयेनाह । नियोगसिद्ध्या इ
तुरवधारणे । तत्सिद्ध्यर्थमेवेत्यर्थः । पुनः पश्चात् ।
त्र नियोगविषयेषु । तानेवाह । कर्मस्वित्यादिना ।
र्मसु नियुज्यत इत्यनुषङ्गः । स्थितिः सिद्धान्तः ॥

> प्रवृद्धरागस्य निवृत्तयोऽस्थिरा-
> स्ततः स्थिरत्वाय नियुज्यते पुमान् ॥
> निवृत्तिदेशेषु नियोगबुद्धितो
> निवृत्तिमूर्ध्वं परिपालयिष्यति ॥ ४२५ ॥

ननु यदि निवृत्तिसिद्ध्या तन्नियोगः सिध्येत्तर्हि
षिद्धेऽन्यतोऽपि प्रवर्त्तकरागाद्यभावे निवृत्तिसिद्धे
नियोगस्य पृथङ् नियोगेनेत्याशङ्क्याह । प्रवृद्धराग
ति । यद्यप्युक्तरीत्या सकृन्निवृत्तिर्भवेत्तथापि नि
न तन्नियोगाभावे प्रथममिव पुंसः पुनरपि तत्र
उत्पद्येतेति निषेध्यान्निवृत्तयोऽस्थिराः स्युरिति
स्ततो हेतोः निवृत्तिस्थैर्ये निवृत्तिरूपदेशेषु पुमा
युज्यते । एवं हि सति प्रवृत्त्युन्मुखः पुमान्निवृ
योगमेव कार्यमवगच्छेदिति निवृत्तयः स्थिराः स्यु
त्याशयेनाह । नियोगबुद्धित इति । ऊर्ध्वं ऊर्ध्व
त्यर्थः । परिपालयिष्यति । अविच्छिन्नप्रवाहां तां
रोतीत्यर्थः ॥ ४२५ ॥

> अनाद्यजग्धेश्च निवृत्तिरिष्टा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टदन्तोष्ठनिविष्टसंवित् ॥
अनन्यसंसर्गिपदार्थसंवि-
न्निवृत्तिरित्येष हि राजमार्गः ॥ ४२६ ॥

ननु केयं निवृत्तिर्नाम ननूक्तं प्रवृत्तिविरोधिमानसी क्रियेति ननु तत्राप्युक्तमेवं सति नञः स्वार्थत्यागप्रसङ्ग इति सत्यं निवृत्तिस्थैर्याय सोऽप्युचित एव ननु प्राभाकरनयेऽभावाभावात्कथं तेन लक्षणा मुख्यार्थसंबन्धासंभवादित्याशङ्क्य प्राभाकरमते भावरूपभक्षणाद्यभावं नञो मुख्यार्थं निवृत्तिलक्षणार्थमाह । अनाद्येति । न आद्यमनाद्यं तस्य भक्षणानर्हस्य कलञ्जादेर्जग्धेर्भक्षणादित्यर्थः । चोऽवधारणे । निवृत्तिरभावः। विशिष्टदन्तोष्ठनिविष्टसंविदेव । अविशिष्टेति वा छेदः केवलदन्तोष्ठविषयज्ञानमित्यर्थः । जग्धेरिति षष्ठी वा । अन्यत्समानम् । भक्षणाद्यकालीनदन्तोष्ठादिव्यावृत्तये विशिष्टेत्युक्तम् । तत्र हेतुत्वेन तत्सिद्धान्तं दर्शयति । अनन्यसंसर्गीति । अन्यो निषेध्यः तत्संसर्गी न भवतीत्यनन्यसंसर्गी तादृशो यः पदार्थः निषेध्यानधिकरणं तत्संवित्केवलाधिकरणज्ञानमिति यावत् । राजमार्गः निर्दोषः । प्राभाकरपक्षे हि यत्राभावव्यवहारस्तस्य प्रतियोग्यसंसर्गिणो ज्ञानमभाव इति प्रसिद्धम् । एवं च भक्षणादिनिवृत्तिरपि केवलदन्तोष्ठादि तदेव तत्र नञोच्यते । अतो न निवृत्तिर्लक्ष्यत इत्यर्थः । एवं-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूप एवाभावो निवृत्तिः प्रकृते विधेयास्तु तथा
लक्षणेति चाशयः ॥ ४२६ ॥

ननु समीहितसाधनता लिङ्गो
लशुनगृञ्जनभक्षणसंश्रया ॥
भवति वाच्यतयाभिमतास्य नो
नञपि तद्विनिवृत्तिनिवेदकः ॥ ४२७ ॥

एवं स्वमतं प्रसाध्येदानीं सिद्धान्त्यभिमतं निषे
क्ये नञर्थं दूषयितुमनुवदति । ननु समीहितेति ।
नादिकं लोकप्रसिद्धम् । अस्य लशुनादिभक्षणस्या
न्मते।तस्याः समीहितसाधनतायाः विनिवृत्ति
तस्या निवेदको बोधक इत्यर्थः । प्रत्ययेन संबद्धो
नञ् लशुनादिभक्षणगतेष्टसाधनत्वस्य लिङ्गर्थस्य
वं बोधयतीत्यर्थः ॥ ४२७ ॥

तदसदिष्टफलोद्भवदर्शना-
ल्लशुनगृञ्जनपर्युषिताशनात् ॥
न हि निषिद्धपदार्थनिमित्तकः
सुखलवः पुरुषस्य न विद्यते ॥ ४२८ ॥

तद्दूषयति । तदसदिति । तदप्यसदित्यर्थः । कुत
नादिभक्षणादिष्टफलस्य सुखादेरुद्गम उदयः त
दित्यर्थः । उक्तमेव व्यतिरेकेनिषेधेन द्रढय
हीति । स्पष्टमन्यत् । तस्मात्सर्वो वेदः कार्यपर
भावः ॥ ४२८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदृष्टदोषं परिहृत्य शंसतः
कलञ्जमास्वाद्य सुखित्वमात्मनः ॥
पुमानबोधोपहतः समीहते
तदीहिताभावपरा निषेधगीः ॥ ४२९ ॥

उच्यते । यदि निषेधवाक्यस्थलिङादिना कार्यमुपस्थाप्येत तदा तस्य कथं चिदुक्तरीत्या नञर्थो विषयः कल्प्येत । न त्वेतदस्ति । लोके धात्वर्थातिरिक्तकार्याभावेन तस्य च धातुसिद्धत्वेन लिङादेस्तदर्थत्वाभावात् । न च धात्वर्थ एव कार्यतया लिङाद्यर्थं इति वाच्यम् । कृतिसाध्यताया एव कार्यतात्वेऽतिप्रसक्तायास्तस्या लिङाद्यर्थत्वायोगात् । न च कृतीप्सितता तस्य कार्यतेति वाच्यम् । बहुक्लेशसाध्यतया तस्य स्वतस्तदयोगात् इष्टसाधनत्वेन तस्य कृतीप्सितत्वेऽवश्यं प्रथमोपस्थितस्य तस्यैव प्रवर्त्तकत्वं लिङर्थत्वं चेति न कार्यं लोके लिङर्थ इति कथं निषेधवाक्यस्थलिङादिना तत्राविदितसंगतिकेन तदुपस्थाप्येत । तस्माच्छ्रेयःसाधनत्वमेव लोकव्युत्पत्तिबलेनात्रापि लिङर्थः कल्प्यत इति तदभाव एव नञर्थः । न चैवं कलञ्जभक्षणादेः सुखसाधनत्वानुभवविरोधः । यद्यपि प्रवृत्तौ कृतिसाध्यश्रेयःसाधनत्वज्ञानं कारणम् तथापि तस्य श्रेयसः प्रबलानर्थसम्बन्धित्वज्ञाने प्रवृत्तिर्न भवतीति तदज्ञानं प्रतिबन्धकाभावतयाऽवश्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्तव्यमिति निषिद्धे प्रवर्त्तमानस्यापि तत्साध्य
बलवदनर्थसाधनत्वाज्ञानं वाच्यम् एवं च सामग्री
जादिदं बलवदनिष्टाननुबन्धीष्टसाधनमिति भव
वतीति भ्रान्तिप्राप्तं तदेव विशिष्टेष्टसाधनत्वं लिं
वाक्येन नञर्थान्वयाय लक्षणयानूद्य निषिध्यते भोः
दिव्यापारे तस्य लिङ्वाच्यसंबन्धित्वावगमादिति
नुभवविरोध इत्याशयेनाह । अदृष्टदोषं परिहृत्य
यतः पुमान्कलञ्जभक्षणादेर्बलवदनिष्टानुबन्धित्व
नेनोपहतः सन् समीहते प्रवर्त्तते ततश्चात्मनः स्वक
लञ्जं विषलिप्तशरहतमृगमांसमास्वाद्य भक्षयित्वा
दृष्टदोषं परिहृत्य अनादृत्य सुखित्वं शंसतः प्रा
स्तस्येहितमभिलषितं यद्बलवदनिष्टाननुबन्धीष्ट
नत्वं तदभावपरा निषेधगीरिति संबन्धः । स्व
कलञ्जभक्षणेन बलवदनिष्टाननुबन्धीष्टं भवतीति
र्थयतस्तस्याभिलषितसुखसाधनत्वं लिङादिना
निषेधवाक्यं निषेधति । यतः पुमानज्ञानादेव तादृ
षापूर्वं करोतीत्यर्थः । अबोधोपहत इत्यनेन भ्र
प्राप्त इति प्रागुक्तः प्रसज्य प्रतिषेधविषयो दर्शितः

नरकपातविवर्जनवर्त्मना
भवतु विप्रवधात्परमार्थतः ॥
मम सुखित्वमितीच्छति यत्पुमा-
न्न तदितीह निषेधगिरोच्यते ॥ ४३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदृष्टदोषमित्याद्युक्तमेव विवृणोति। नरकपात इति। नरकपातस्य विशेषेण वर्जनं यस्मात्तेनोपायेन, इत्थंभावे तृतीया,नरकपातवर्जनाभिमानमात्रव्यावृत्तये परमार्थत इत्युक्तम्। भवति ह्यत्यन्ताविवेकिनस्तीव्ररोषवशात्तादृशाभिमानः। तत्तादृशसुखहेतुत्वम्। इह विप्रवधादौ ॥ ४३० ॥

प्रमाणतो नास्ति निषिद्धकर्मणः
फलस्पृहाऽदृष्टभयं विना तव ॥
भ्रमादबोधप्रभवात्प्रवर्त्तते
न तात मानेन फलस्पृहाऽत्र ते॥ ४३१ ॥

नन्वनुभवसिद्धं सर्वेषां कलञ्जभक्षणादेस्तादृशसुखसाधनत्वं कथं नञा निषेद्धुं शक्यमित्याशङ्क्य भ्रान्तिसिद्धमेव तन्न प्रमाणसिद्धं तत्प्रमाणस्य श्रुतेस्तत्राभावात्, प्रत्यक्षादेश्च पारलौकिकानर्थाभावावेदनेऽसमर्थत्वादित्याशयेनाह। प्रमाणत इति। फलस्पृहा फलसाधनत्वम्। अदृष्टभयं विना पारलौकिकबलवद्दुःखभयपरिहारेण। कथं तर्हि तत्र प्रवृत्तिरिति तत्राह। भ्रमादिति। बलवदनिष्टानुबन्धित्वाज्ञानप्रभवादिदं बलवदनिष्टाननुबन्धीति भ्रमादित्यर्थः। उपसंहरति। न तातेति। यथाबालं मातानिष्टान्निवर्त्तयति एवं श्रुतिरपि त्वदभिमतफलसाधनत्वमत्र नेति निवारयतीति तातेत्यनेन सूचितम् ॥ ४३१ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रुतिः शास्ति निषिद्धकर्मणि
प्रवृत्तिमन्तं पुरुषं नञन्विता ॥
न चायमर्थोऽपहृतः प्रमान्तरै-
र्न हि प्रमाणैरपरैर्विरुद्धयते ॥ ४३२ ॥

निषिद्धेषु वर्णितफलसाधनत्वस्य भ्रमसिद्धत्वोपपा-
फलमाह। इतीति। उक्तप्रकारेणेत्यर्थः। श्रुतिः निषेध-
क्यं शास्ति प्रतिपादयति। निषेधाधिकारिणमाह। नि-
षिद्धेति। प्रवृत्तिमन्तं प्रवृत्त्युन्मुखम्। न चैवं सति प्रमा-
णान्तरविरोध इत्याह। न चेति। अयं बलवदनि-
ष्टाननुबन्धीष्टसाधनत्वाभावः। अपहृतः बाधितः। तत्राऽवि-
रोधे हेतुमाह। न हीति। विशेष्यांशस्य तत्र सत्त्वेऽपि वि-
शेषणांशस्याभावेन तद्विशिष्टस्याप्रामाणिकत्वाद्विशे-
मात्रग्राहिभिर्न विरोधः। यद्यपीष्टसाधनत्वमेव लि-
ङर्थ इति वक्ष्यति। तथापि नञर्थान्वयायात्र वर्णित-
न्तिप्राप्तं विशिष्टेष्टसाधनत्वमेव लिङादिलक्षितं न-
निषिद्धयते। न चैवं नञ एव निवृत्तौ लक्षणास्त्विति वा-
च्यम्। प्रतिपिपादयिषितार्थतया प्रधाननञनुरोधे-
दर्थप्रतियोगितया गुणभूतश्रेयःसाधनत्ववाचिलिङ-
वेवानुवादेन लक्षणाया न्याय्यत्वाल्लक्षितं च तत्त्वप्रामा-
णिकमेवेति न प्रमाणान्तरविरोध इति भावः। अथ-
कृतश्रुतिर्न स्वार्थपरेत्यपि नाशङ्कनीयमित्याह। न वे-
अध्ययान।म नेकार्थत्वादपशब्द उपशब्दार्थे, माना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रापित इत्यर्थः। अनेनानुवादकत्वन्निरस्तम्। गुणवादाशङ्कापि नास्तीत्याह। न हीति। विरोधिप्रमाणान्तरानिरूपणादित्यर्थः ॥ ४३२ ॥

भुजङ्गभोगं सुकुमारशीतलं
निदाघसंतापनिवृत्तये शिशुम् ॥
भ्रमादुपादित्सुमुदीक्ष्य कातरा
निवर्त्तयेत्तज्जननी यथा तथा ॥ ४३३ ॥

न तात मानेनेत्यनेन सूचितदृष्टान्तानुवादपूर्वकं दार्ष्टान्तिकं विशदयति। भुजङ्गभोगमिति द्वयेन। सर्पशरीरमित्यर्थः। सुकुमारशीतलं मृदु शीतलं चेत्यर्थः। निदाघस्तीव्रातपस्तत्कृतो यः शरीरस्य संतापस्तन्निवृत्तये भ्रमाद्बलवदनिष्टाननुबन्धितया निवृत्तिसाधनमिति भ्रमादुपादित्सुं ग्रहणेच्छुं कातरा दुःखपरवशा निवर्त्तयेत् मा गृहाणेति हस्तेन निवारयेत् यथा तथेत्युपरि श्लोके योजनीयम् ॥ ४३३ ॥

भ्रमादनर्थस्य निदानमादरा-
त्कृतार्थतायै लशुनादिभक्षणम् ॥
नरान्विता वैदिकचोदनाप्यसौ
विधित्सुमालक्ष्य निवर्त्तयिष्यति ॥ ४३४ ॥

लशुनादिभक्षणादिविधित्सुमालक्ष्यासौ वैदिकचोदनापि निवर्त्तयिष्यतीति संबन्धः ॥ ४३४ ॥

क्रियानुप्रवेशं विना प्रागभावः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसक्तक्रियाया न निर्वोढुमीशः ॥
गुणद्रव्यवन्नित्यनिष्पन्नभावात्
पदत्वं नियोगस्य भावार्थवद्भः ॥ ४३५ ।

एवं स्वमते निषेधवाक्यस्थनञः प्रसज्य प्रतिषेधा-
त्वमुपपाद्य परमतं दूषयितुमारभते । तत्र किं नञ्-
क्षितो निवृत्तिक्रियाविशेषो विधीयते किं वा तन्मुख्-
र्थः। नाद्यः लक्षणाया अन्याय्यत्वादित्युक्तम् । द्विती-
पि प्रत्ययार्थनियोगाभावं न तावद्विधातुं शक्नोति
नियोगाभावस्य नियोगगोचरतालक्षणविधेयत्वा-
वादतो धात्वर्थाभाव एव त्वया विधेयो वाच्यः तत्रा-
न तद्ध्वंसः प्रसक्तक्रियानिष्पत्तिं विना तदयोगात्-
च सत्यां निषेधवैयर्थ्यादिति तत्प्रागभाव एव वि-
यः स्यात्सोऽपि न स्वरूपेण विधेयो भावार्थत्वादना-
सिद्धत्वाच्चाधिकरणज्ञानस्यापि वक्ष्यमाणज्ञानविधि-
रासेनैवाविधेयत्वात् । तस्माद्दध्यादिवत्क्रियोपरक्त-
कारेण तद्विधेयत्वं वाच्यं न तस्य तदस्तीत्याह । क्रि-
यानुप्रवेशमिति । वः प्रसक्तक्रियायाः प्रागभावः क्रि-
संबन्धं विना नियोगस्य पदत्वं विषयत्वं गुणद्रव्य-
न्निर्वोढुं न शक्नोति नित्यनिष्पन्नभावाद्भावार्थवदपी-
श इति सम्बन्धः । गुणः आरुण्यादि । द्रव्यं दध्या-
दि । न च प्रसक्तक्रियाभावो भावार्थवद्व्यापाररूपो
वा दध्यादिवत् क्रियासाधनत्वेन क्व चित्प्रमितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधेयः स्यादिति भावः ॥ ४३५ ॥

न पाल्यत्वयोगादलंभूष्णुभावो
यतः पालनं श्रूयते नात्र वाक्ये ॥
न खल्वश्रुतं गृह्यते न्यायहाना-
द्यथा न श्रुतं त्यज्यते तद्द्वयेन ॥ ४३६ ॥

ननु प्रागभावस्यापि परिपालनक्रियायोगेन विधेयत्वं भविष्यतीत्याशङ्क्याह । न पाल्यत्वयोगादिति । अलमत्यर्थं भूष्णुभावः भवनकर्त्तृत्वं साध्यत्वमिति यावत् । प्रागभावस्येति शेषः । कुतो नेत्यत आह । यत इति । नन्वश्रुतमपि तत्त्वज्ञा लक्ष्यताम्,न श्रुतसंभवे लक्षणाया अयोगादित्याह । न खल्विति । तत्र दृष्टान्तमाह । यथा न श्रुतमिति । तद्द्वयेन श्रुतपरित्यागायोगरूपन्यायहानभयेन, अतस्तदुभयपरिहाराय परिपाल्यतयाऽपि प्रागभावो न विधेयः । किं च तत्प्रवर्त्तकरागे सति नियोगशतेनापि प्रागभावपरिपालनं न संभवत्येव,रागनिवृत्तिश्च विना न दोषदर्शनं संभवतीति किं नियोगेनेति भावः ॥ ४३६ ॥

उदासीनता च श्रुता नञ्पदार्थो
नियोगे सति त्याज्यतां याति सद्यः ॥
अतद्योग्यभावादयोग्यः पदार्थो
न वाक्यार्थभागिष्यते जैमिनीयैः ॥ ४३७ ॥

निषेधवाक्ये श्रुतं दर्शयन् परपक्षे तत्त्यागस्याश्रुतक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ल्पनायाश्च प्रसङ्गं विवृणोति । उदासीनेति । क
न्नियोगस्याश्रुतत्वं सूचयति । लिङादेरतदर्थत्वा
योगे सतीत्यनेनाश्रुतकल्पनां सूचयति । त्याज्यत
ति । श्रुतहानिरुक्ता । अस्तु तर्हि श्रुतस्यैवौदा
स्य विधिरिति न तद्वद् द्वयप्रसङ्ग इत्याशङ्क्य तस्य
वार्थत्वादिति प्रागुक्तं मनसि निधायाह । अतद
भावादिति । औदासीन्यस्य धात्वर्थत्वाभावेन नि
विषयतायोग्यताशून्यत्वादित्यर्थः । ततः किं त
अयोग्य इति । वाक्यार्थभाक् वाक्यार्थान्वयी औ
यैरपि ॥ ४३७ ॥

निषिद्धक्रिया प्रत्यवायाय नेति
स्वकर्णौ जनः प्रोर्णुते पापभीरुः ॥
समाकर्ण्य दुर्भाषितं पार्श्ववर्ती
न पापाक्षरं किं चिदेतादृगन्यत् ॥ ४

एवं निषेधवाक्यस्य गुरुमतानुवर्त्तिकल्पितनि
र्थत्वं संदूष्य निषिद्धानुष्ठानस्य प्रत्यवायजनकत्व
तदुक्तमपि प्रथमं महाजनसंवदनविरोधेन दूष
निषिद्धक्रियेति । प्रोर्णुते गाढं पिधत्ते । पार्श्ववर्ती
निषिद्धक्रिया प्रत्यवायाय नेति प्राभाकरस्य दु
समाकर्ण्य पापभीरुः सन् स्वकर्णौ प्रोर्णुते तस्य
स्याशयमाह । न पापाक्षरमिति । एतादृशमन्यत
दपि दुष्टवचनं नेत्याशयेनेत्यर्थः । अतः सक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थमहाजनव्यवहारविरोधाददतितुच्छमिदं मतमिति भावः ॥ ४३८ ॥

निषिद्धक्रिया प्रत्यवायाय नो चे-
त्तदा दुःखमाकस्मिकं सर्वपुंसाम् ॥
सुखं पुण्यमूलं यथा सर्वपुंसां
तथा दुःखमप्यस्तु वः पापमूलम् ॥ ५३९ ॥

किं च निषिद्धक्रियायाः पापजनकत्वेऽनुभूयमानं दुःखमाकस्मिकं स्यात् तस्य तदेकनिदानत्वादिति सदृष्टान्तमाह । निषिद्धक्रियाप्रत्यवायाय नो चेदिति । आकस्मिकमकारणकमित्यर्थः । वो युष्माकमपि संमतमिति शेषः । भवद्भिरपीदमवश्यमङ्गीकार्यमित्यर्थः ॥४३९॥

निषिद्धक्रियां चोदितस्याक्रियां वा
विना नास्ति पापस्य निष्पत्तिहेतुः ॥
ततस्तद्द्वयं पापनिष्पादकत्वा-
द्भवेत्प्रत्यवायस्य नित्यं निदानम् ॥ ४४० ॥

ननु निषिद्धक्रियायाः पापामूलत्वेऽपि विहिताकरणनिमित्तपापेन दुःखं भविष्यतीत्याह । निषिद्धक्रियामिति । चोदितस्य नित्यस्याक्रियाम् अननुष्ठानं यत इत्यादौ योजनीयम् । तद्द्वयं निषिद्धक्रिया विहिताननुष्ठानं च । प्रत्यवायस्य दुःखस्य।यदि विहिताकरणं पापजनकं तव मते स्यात्तदा निषिद्धानुष्ठानमपि पापजनकं कथन्न स्यान्नरकवर्जनफलाकाङ्क्षायाः निषिद्धान्निव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्त्तमानेपि तुल्यत्वात् नियोगपुरुषार्थतायाश्च नि
योगेपि संभवादित्युभयं तुल्यमेवेति भावः ॥ ४५० ॥

निषिद्धक्रिया दुःखनिष्पत्तिहेतु-
र्भवेल्लक्षणं चोदितस्याक्रियास्य ॥
अभावाद्ध भावस्य निष्पत्तिरिष्टा
भवेल्लक्षणं ज्ञायमानस्त्वभावः ॥ ४५१ ॥

विहिताकरणस्य पापनिदानत्वमापाततदृष्ट्याङ्गीकृतं
स्तुतस्तु निषिद्धक्रियैव पापहेतुः तस्या अनर्थहेतु
प्रमाणस्य वक्ष्यमाणत्वात् विहिताकरणं तु पापल
क्षणमात्रं न तु स्वयं पापजनकम्। तदुक्तं भट्ट
अकुर्वन्विहितं यस्तु करोत्यन्यदचेतनः। प्रत्यवाय
तेनैव नाभावेन स जन्यत इति। विहितमकुर्वत
णार्थे शतृप्रत्ययः। लक्ष्यमेवाह। तत्काले यदन्य
वेकी करोति निषिद्धमनिषिद्धं वा तत एवास्य प्र
यः स्वतोऽनिषिद्धस्यापि तत्कालीनतया निषिद्ध
न त्वभावात्पापोत्पत्तिरिति श्लोकार्थः। अत इ
माणिकमित्याशयेनाह। निषिद्धक्रिया दुःखेति
क्षणं ज्ञापकमस्य दुःखहेतोः पापस्य। कुत एवमि
आह। अभावादिति। न चैवं प्रागभावस्य
ता न स्यादिति वाच्यम्। तस्यैवाभावात्। प्रति
काभावतया तत्सत्त्वेऽपि तस्य निःस्वभावत्वान्निर
त्वाच्च तदतिरिक्तदण्डादिभ्य एव कार्यनिष्पत्तेः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानमपि प्रतियोग्यनुपलम्भेन साक्षिण एवास्मिन्मते भवतीति नाभावस्य क्वचिदपि भावकारणत्वमिति भावः। तर्हि लक्षणं वा कथं विहिताकरणं स्यादित्यत आह। भवेल्लक्षणमिति। अविद्यमानस्यापि धूमादेरिव वह्न्यादिकं प्रत्यस्यापि ज्ञायमानतया लक्षकत्वमविरुद्धमिति भावः॥ ४४१॥

निवृत्तिनिष्ठे तु निषेधवाक्ये
निषिद्धकर्माचरणादनर्थः॥
प्रतीयतेऽर्थादिति तत्र युक्तं
दुःखं नृणां दुश्चरितैकमूलम्॥ ४४२॥

ननु भवन्मतेऽपीष्टसाधनत्वाभावस्यैव नञर्थत्वान्निषिद्धक्रियाया निरयपातहेतुत्वं कुतोऽवसीयत इत्याशङ्क्य बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावस्य नञर्थस्यानुपपत्त्या तत्सिद्ध्यति, निषिद्धक्रियाया दृष्टसुखजनकत्वेन विशेषणाभावादेव विशिष्टाभावस्य तत्र वक्तव्यत्वाद्विशेषणं च बलवदनिष्टाननुबन्धित्वमिति तदभावो बलवदनिष्टसाधनत्वं सिद्ध्यतीत्याशयेनाह। निवृत्तिनिष्ठ इति। तुशब्देन परमताद्विशेषं दर्शयति। तमेव विशेषं निषिद्धेत्यादिना दर्शयति। अर्थादुक्तानुपपत्त्या। निषिद्धक्रियायाः पापजनकत्वे स्वमते प्रमाणोपन्यासफलमाह। तत्र युक्तमिति। एकशब्देन विहिताकरणस्य तन्मूलत्वं निषेधति॥ ४४२॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समीहितोपायतया लिङन्वयात्
प्रतीयमानस्य तु भक्षणादिनः ॥
न पर्युदासाश्रयणेन नञ्पदा-
दनिष्टहेतुत्वमतिर्भविष्यति ॥ ४४३ ॥

एवं स्वमते निषेधवाक्यस्याभावमात्रनिष्ठत्वमर्थाद्वि-
षेध्यप्रवृत्तेर्बलवदनिष्टहेतुत्वसिद्धिश्चेत्युपपादितम्, इ-
प्रति निषेधवाक्यस्य बलवदनिष्टसाधनत्वमर्थं पर्यु-
दासलक्षणया ये आश्रयन्ते तन्मतमनूद्य निषेधति
समीहितोपायेति । लिङन्वयान्निषेधवाक्य इति शेषः
निषेधवाक्यस्थभक्षयेदित्यादेर्लिङन्वयाल्लिङान्वयो य-
नञ्पदस्य तल्लिङन्वयं तस्मादिति विग्रहः समीहितो-
पायतया प्रतीयमानस्य भक्षणादिनः भक्षणमादिर्य-
पानस्य तस्य नञ्पदात्पर्युदासाश्रयणेनानिष्टहेतुत्वम-
तिर्भविष्यतीति यत्तन्नेति सम्बन्धः। इदमत्र तदाकूतम्,
यत्र निषेद्धं भ्रान्त्या प्रसज्यते तत्र नञः प्रसज्यप्रति-
षेधोऽर्थः, यत्र तु तदस्त्येव तत्र तस्य निषेधायोगात्प-
र्युदासलक्षणा आश्रयणीया, प्रकृतेऽपीष्टसाधनत्व-
सत्त्वात्तदनिष्टसाधनत्वमेव नञर्थो वक्तव्यः, एवं
प्रवृत्त्युन्मुखस्य ततो निवृत्तिरप्युपपन्नेति । एतदर्थः
र्थः ॥ ४४३ ॥

तथाहि सम्बन्ध्युपमर्दबुद्धये
समर्थमुत्सर्गमपेक्ष्य नञ्पदम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न पर्युदासाय विनापवादकं
ततो निवृत्त्यर्थपरं तदिष्यते ॥ ४४४ ॥

कुत इत्यत आह । तथाहीति । नञ्सम्बन्धिपदार्थस्य य उपमर्दोऽभावस्तद्बुद्धये उत्सर्गं मुख्यवृत्तिमपेक्ष्य औत्सर्गिकस्वभावेन । तर्हि किं नञः पर्युदासो नार्थ इत्याशङ्क्य यत्रोत्सर्गप्राप्तमुख्यार्थस्याभावस्यापवादकं बाधकं किंचिदस्ति तत्र पर्युदास आश्रीयते न च प्रकृते तदस्तीत्याशयेनाह । न पर्युदासायेति । फलित माह । तत इति । ततः कारणात्पूर्वोक्तमार्गेण प्रार्थनानिवृत्तिपरं निषेधवाक्यमित्यर्थः ॥ ४४४ ॥

अतः प्रसज्यप्रतिषेधसम्भवा-
न्न पर्युदासाश्रयणं प्रशस्यते ॥
न पर्युदासाश्रयणं विना भवे-
दनिष्टहेतुत्वनअर्थकल्पना ॥ ४४५ ॥

ननु कथमिष्टसाधनस्य भक्षणादेस्तत्र निषेधः कथं वा तदनिष्टसाधनतावगमं विना प्रवृत्त्युन्मुखस्य ततो निवृत्तिर्भवेदिति तदाशयं दूषयन्नुपसंहरन्नाह । अत इति । यतो मुख्यार्थबाधे सत्येव पर्युदासलक्षणा अत इत्यर्थः। प्रसज्यप्रतिषेधसंभवादिति। निवृत्तेरप्येतदुपलक्षणम्, बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य निषेध्यस्य तत्र भ्रान्त्या प्रसक्तत्वेन निषेधसंभवाद्विशिष्टनिषेधसामर्थ्याद्बलवदनिष्टसाधनत्वस्यापि सिद्धेर्निवृत्तेरप्यु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पपत्तेर्न पर्युदास आश्रयणीय इत्यर्थः । मा भूत्पर्युदास इत्याशङ्क्य तदा भवदिष्टं न सिद्ध्यतीत्याह न पर्युदासाश्रयणमिति ॥ ४४५ ॥

अभीष्टहेतुत्वलिङर्थपृष्ठतो
ह्यनर्थहेतुत्वनञर्थकल्पना ॥
न पर्युदासं परिहृत्य कल्प्यते
न पर्युदासः प्रतिषेधसंभवात् ॥ ४४६ ॥

द्वितीयार्द्धार्थमेव विवृणोति । अभीष्टहेतुत्वेति । अभीष्टहेतुत्वस्य लिङर्थत्वात्तद्वति तन्निषेधायोगेन प्रस्तुते नञोऽनर्थहेतुत्वकल्पना वाच्या, सा च न पर्युदासलक्षणां विना संभवति सापि मुख्यार्थसंभवे नेत्यर्थः । नन्विष्टहेतुत्वस्य प्रत्यक्षविरोधादेव निषेधासंभवात्पर्युदास आश्रीयतामिति चेन्न । इष्टसाधनत्वांशनिषेधासंभवेऽपि इच्छांशस्य प्रमाणमूलनिषेधसंभवस्योक्तत्वात् । तस्मान्निषेधवाक्यं निवृत्तिपरमेवेति सिद्धम् ॥ ४४६ ॥

प्रमाणमिच्छन्प्रतिषेधचोदनां
समस्तवेदस्य न कार्यगोचरम् ॥
प्रमाणभावं प्रतिपत्तुमीश्वरो
निषेधवाक्ये तदसंभवाद्यतः ॥ ४४७ ॥

एवं निषेधवाक्यस्य प्रतिषेधमात्रनिष्ठत्वे सिद्धे वेदवाक्यस्य कार्यगोचरत्वनियमाभावात्तद्वदेव वेदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यमप्युक्तन्यायेन सिद्धब्रह्मपरं स्वीकर्त्तव्यमित्युपसंहरति।प्रमाणमिति सार्द्धेन।कुतो नेश्वरस्तत्राह।निषेधवाक्य इति। तदसंभवात् कार्यगोचरत्वासम्भवात्,एवं वेदस्य कार्यार्थत्वानियमो यतः अत इत्युत्तरेण संबन्धः ॥४४७॥

अतो न वेदान्तवचस्सु विद्यते
विधिर्नियोगो न च शब्दभावना ॥
न कर्मकाण्डेऽपि नियोगतोऽस्त्यसौ
यतो निषेधेषु न विद्यते विधिः ॥ ४४८ ॥

विधिः कर्तुरिष्टाभ्युपायः। एतदेव कैमुतिकन्यायेनाप्याह। न कर्मकाण्डेऽपीति। नियोगतो नियमतः। असौ विधिः ॥ ४४८ ॥

उपेत्यवादं परिगृह्य चोच्यते
नियोगनिष्ठास्तु निषेधगीरपि ॥
तथापि वेदान्तवचःसु विद्यते
विधेर्न गन्धोऽपि विरोधकारणात् ॥ ४४९ ॥

इदानीं निषेधवाक्यस्य निवृत्तिविधिनिष्ठत्वमुपेत्यापि वेदान्ते विध्यसंभवमाह। उपेत्यवादमिति। अभ्युपगमवादमित्यर्थः। तमेव प्रकटयति। नियोगनिष्ठेति। गन्धो लेशः, उत्पत्त्यादिरूप एकोऽपि विधिर्न संभवतीत्यर्थः। विरोधकारणादिति। वेदान्तानामद्वैते तात्पर्यग्राहकप्रमाणविरोधादित्यर्थः ॥ ४४९ ॥

ज्ञानं विधातुं हि न शक्यमेत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्न शक्यते कर्तुमकर्त्तुमेतत् ॥
अतोऽन्यथा कर्त्तुमशक्यमेतत्
प्रमाणमेयैकनिबन्धनत्वात् ॥ ६५० ॥

प्रकारान्तरेणापि तदसंभवमाह । ज्ञानं विधा
ति । न तावद्वेदान्तानां कर्मविधिपरत्वं संभवति
त्प्रतिपाद्यस्यात्मनः कर्मशेषत्वासंभवेन विनियो
करणाद्यभावेन तेषां तदयोगात् । नापि वेदान्ता
पासनाविधिशेषत्वम् , मुमुक्षोरुपासनया प्रयोज
वेन तमधिकृत्य प्रवृत्तानां तेषां तदनुपपत्तेः।
तर्ह्यात्मन्येवात्मानं पश्येदितिश्रुतज्ञानविधिपरत्वं
ने मुमुक्षोरेवाधिकारादिति चेन्न । एतदलौकिका
त्मविषयकं ज्ञानं हि यतो विधातुं न शक्यम्।
विधातुं न शक्यं तत्राह । न शक्यत इति । यद्धि
मकर्त्तुं शक्यते पुरुषप्रयत्नेन निष्पाद्यते तदभावं
यथातिरात्रे षोडशिग्रहणम् , यच्चान्यथापि कर्तुं
यथानुदितहोम उदितहोमाद्विलक्षणस्तदेव वि
ज्ञानं तु नैवं तस्य प्रमाणप्रमेयैकतन्त्रतया पुरुषेच्छा
त्वाभावादित्यक्षरार्थः । विधिजन्येष्टसाधनता
धीना यत्र चिकीर्षोदेति तज्जन्यया कृत्या यत्
तद्विधिविधेयम् यथाग्निहोत्रादि, ज्ञानं च नैवं
ज्ञानं चिकीर्षया निष्पाद्यते अनिच्छतोऽपि त
न्नापि कृत्या अयतमानस्यापि तद्दृष्टेरिति ज्ञा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधेयतया न वेदान्तास्तद्विधिपरा इति भावः ॥४५०॥

ब्रह्मज्ञानं जानता ब्रह्मबुद्धेः
कर्तव्यत्वं शक्यते ज्ञातुमेतत् ॥
न ह्यज्ञात्वा ब्रह्मबुद्धिं तदीयं
कर्त्तव्यत्वं कश्चिदीष्टे ग्रहीतुम् ॥ ४५१ ॥

किं चात्मानं पश्येदितिवाक्यार्थावगमात्प्राग्विधेयात्मज्ञानं न ज्ञातं किं वा ज्ञातम्, आद्योऽनुपपन्न इत्याह। ब्रह्मज्ञानमिति। ज्ञानस्य विधिसंसर्गरूपवाक्यार्थनिश्चयहेतुत्वेन तदभावे स न स्यादित्यर्थः ॥ ४५१ ॥

ब्रह्मज्ञानं ब्रह्मणि ज्ञायमाने
ज्ञातुं शक्यं नान्यथा तच्च तद्वत् ॥
विज्ञातं चेद् ब्रह्मणस्तत्त्वमस्य
प्राप्ता मुक्तिर्नास्ति कृत्यं विधीनाम् ॥ ४५२ ॥

द्वितीयेऽपि तद्विषयो ब्रह्म ज्ञातमिति वाच्यम्, अन्यथा विषयनिरूप्यज्ञानस्य ज्ञातुमशक्यत्वात, एवं च ब्रह्मणो यत्तत्त्वज्ञानं मोक्षाय विधीयते तदपि ज्ञानवद्विज्ञातमित्यस्याधिकारिणो ज्ञानान्मुक्तिः प्राप्तेति नास्ति विधीनां प्रयोजनमित्याह। ब्रह्मज्ञानमिति ॥४५२॥

दृशो विराट्सूत्रशरीरगोचरं
परस्पराध्यासमबोधसंभवम् ॥
अनर्थमाहुः श्रुतिमस्तके स्थिता-
स्ततोऽस्य विद्यासमयैव मुक्तता ॥ ४५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मणि ज्ञाते ज्ञानं विधीयते इति पक्षे न केवलं योजनाभावाज्ज्ञानविध्यसंभवः किं तु तन्निमित्तक कर्तृकरणादिभेदासंभवादपि विधिर्न संभवति इ ह। दृशो विराड़िति। परस्य दृशः प्रत्यक्चैतन्यस्य राट् स्थूलभूततत्कार्यात्मस्थूलप्रपञ्चः, सूत्रं सूक्ष्मभू त्कार्यलिङ्गशरीरमस्मदादीनाम्, शरीरं व्यष्टिरूपं त परस्पराध्यासमहं ममेत्यवभास्यावभासात्मकमन बोधादज्ञानात्संभवं श्रुतिमस्तके वेदान्ते स्थिताः निष्ठिता आहुः। उक्ताध्यासस्याज्ञानसमुत्थत्वे फ माह। तत इति। अस्याधिकारिणो ज्ञातुः। विद्या समय एवोत्पत्तिसमयो यस्याः सा तथा मुक्तता अ द्यातत्कार्यसंसाररााहित्यम्। ततो भेदाभावात्कथंवि र्थावगमोऽनुष्ठानं वाधिकारिणो भवेदिति भावः॥

अनाद्यविद्यापटनेत्रबन्धनं
प्रसह्य वेदान्तनिबन्धना मतिः॥
स्वजन्ममात्रेण दृढात्मगोचरा
समूलदाहं दहतीति हि श्रुतिः॥ ४५१॥

ननु विद्यासमयैव मुक्ततेति कथं ज्ञानसहकारि दानीं नियमेनासंभवान्न ह्यसहकृतमेव किं वि जनयद्दृष्टमित्याशङ्क्यान्यत्तथैव, ज्ञानं त्वविद्यानि स्वोत्पत्तिमात्रेण समर्थमित्याशयेनाह। अनाद्यवि ति। अविद्यायाः स्वरूपप्रकाशकार्यप्रतिबन्धक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्पटवत्सा नेत्रबन्धनमित्युक्तम्, ज्ञानोत्पत्त्यनन्तरं तद्विरोधेनानादिरप्यविद्या तत्कार्यं वा स्थातुं न शक्नोतीति सद्येति सूचितम्। आपातज्ञानव्यावृत्तये दृढेति, समूलदाहं मूलं संसारमूलं विविधवासनास्तद्दाहसहितं यथा स्यात्तथा दहति नाशयतीति श्रुतिः भिद्यते हृदयग्रन्थिः, तरति शोकमात्मविदित्याद्या दर्शयतीत्यर्थः ॥ ४५४ ॥

विज्ञाते ब्रह्मणि स्याद्विधिरयमफलः प्रत्यये तस्य तद्वद्ब्राज्ञातब्रह्मकर्मा विधिविषय इति प्रत्ययो बुद्धियोग्यः ॥
ब्रह्मात्मप्रत्ययेऽतो विधिरनवसरः सर्वथा चिन्त्यमान-
स्तस्माद्ब्रह्मात्मवस्तुन्यवसितमखिलं विद्धि वेदान्तवाक्यम् ॥ ४५५ ॥

नन्वस्तु ब्रह्मणि वाक्यात्परोक्षनिश्चये सति तज्ज्ञाने विधिरिति चेन्न तावत्तदेव ज्ञानं विधेयं सिद्धस्य साध्यत्वायोगात्, नापि तज्जातीयान्तरं तस्य पूर्वज्ञानवद्विधिं विनैव शब्दात्संभवात्, फलं च तस्य न दृश्यते मोक्षस्य विधिफलत्वेऽनित्यत्वापत्तेः, नापि साक्षात्कारस्तत्फलं तस्य प्रमाणैकफलत्वेनानैयोगिकफलत्वात्, अत एव साक्षात्कारोऽपि न विधेय इत्याशयेनाह। विज्ञात इति। शब्दतो विज्ञातेऽपीत्यर्थः। तस्य प्रत्ययेऽयं विधिरफलः स्यादिति संबन्धः। यदा परोक्षमपरोक्षं वा ब्रह्मणि ज्ञाते तज्ज्ञानं वाक्यावगतमपि न विधेयं त-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दात्यन्ताज्ञातब्रह्मकर्मकं ज्ञानमशक्यनिरूपणत्वात्तु
न विधेयमित्युक्तमेव स्मारयति । तद्वन्नाज्ञातेति ।
ज्ञातं ब्रह्म कर्म विषयो यस्य प्रत्ययस्य स विधि
इति बुद्धियोग्यो न स्यादित्यर्थः । उक्तरीत्या ज्ञानं
धिविषयानिरूपणफलमाह । अतो ब्रह्मात्मप्रत्यय
ति । अनवसरः अयुक्तः सर्वथा स्वरूपतो विषय
ज्ञातत्वाज्ञातत्वाभ्यां परोक्षत्वापरोक्षत्वाभ्यां च वि
राहंविषयासंभवादयुक्त इत्यर्थः । विध्यसंभवफलमाह
तस्मादिति । कृत्स्नस्य कर्मकाण्डस्य नियोगार्थत्वे
उक्तन्यायेन वेदान्तेषु तदसंभवात्तेषां सिद्धे ब्रह्मणि
पर्य्यवसानमिति भावः ॥ ४५५ ॥

विरुद्धत्रिकस्य द्वयापत्तिदोषा-
न्न शक्यं विधानं धियः संग्रहीतुम् ॥
यथा वाजपेये गुणस्येह तद्व-
त्ततो नास्ति वेदान्तवाक्ये विधानम् ॥ ४

प्रकारान्तरेणापि सदृष्टान्तं ज्ञानविध्यसंभवमाह ।
रुद्धत्रिकस्येति । विरुद्धानां त्रयाणां समूहो विरु
तस्येत्यर्थः । वक्ष्यमाणप्रकारेण विरुद्धत्रिकस्य यद्
तदापत्तिस्तत्प्रसङ्गः स एव दोषस्तस्माद्धियो विधानं
ग्रहीतुम् अवगन्तुम्, वाजपेये वाजपेयनाम्नि कर्मणि
णस्य वाजपेयाख्यगुणस्य । दार्ष्टान्तिकमाह । इहेति
द्वाजपेयगुणवत् । ततो विरुद्धत्रिकद्वयापत्तेः । वि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानस्येति शेषः । यथा वाजपेये वक्ष्यमाणविधया विरुद्धत्रिकद्वयप्रसङ्गेन गुणस्य विधानमङ्गीकर्तुं न शक्यते तद्वत्तत एव दोषादिह वेदान्तवाक्ये धियो विधानं नास्तीत्यर्थः ॥ ४५६ ॥

उद्दिश्यमानत्वमनूद्यमान-
भावः प्रधानत्वमितीदमेकम् ॥
तथाप्युपादेयविधेयशेष-
भावप्रभेदं त्रिकमन्यदत्र ॥ ४५७ ॥

किं तद्विरुद्धत्रिकद्वयमिति जिज्ञासायामाह । उद्दिश्यमानत्वमिति । किंचिद्विधातुं सिद्धवन्निर्दिश्यमानत्वमित्यर्थः। प्रागवगतस्य पश्चाद्वादोऽनुवादस्तद्विषयोऽनूद्यमानस्तस्य भावः । प्रधानत्वं शेषित्वमनूद्यमानभावश्च प्रधानत्वं चेति समाहारैकवचनम् , अनूद्यमानभाव इति सविसर्गः पाठः सुगमः । इति अनेन प्रकारेण एकं त्रिकमिति शेषः । उपादेयम् अनुष्ठेयतया निर्देश्यम् । विधेयम् अज्ञातं सज् ज्ञाप्यम् । शेषं गुणभूतं तेषां भावस्तत्प्रभेदो यस्मिंस्त्रिके तत्तथा, भावशब्दस्योपादेयादिभिः प्रत्येकं संबन्धः । अपिशब्दस्यान्यदपीति संबन्धः । अत्र त्रिकद्वयसमुदाये ज्ञानविधौ वाजपेयगुणविधौ चोद्दिश्यमानत्वमनूद्यमानत्वं प्रधानत्वं चेतीत्यमिदमेकं त्रिकं तथोपादेयत्वविधेयत्वशेषत्वप्रभेदमन्यदपि तद्विरुद्धं त्रिकं स्यादित्यर्थः ॥ ४५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकेन वाक्येन धियो विधानं
प्रत्यक्प्रमित्सा च यदि प्रतीचि ॥
त्रिकद्वयं तत्र विरुद्धमेतत्
प्रसज्यते कष्टमतः किमन्यत् ॥ ४५८ ॥

ननु वाजपेयपूर्वपक्ष इवात्मा वारे द्रष्टव्य इत्यत्र विध्यश्रवणात् कथं विरुद्धत्रिकद्वयप्रसङ्गः, स च वाजपेय इव धात्वर्थेऽन्यत्र वेत्यपि न ज्ञायत इत्याशङ्क्य त्यं गुणविधिप्रयुक्तं प्रकृते न वैरूप्यं किं त्वन्यथा, हि ज्ञानविधिमभ्युपगच्छतः किं तेनैव वाक्यजन्ययज्ञानेन ब्रह्मणः सिद्धिरभिमतोतान्येन, न तावत् संभवति ब्रह्मणः प्रत्यक्षाद्ययोग्यत्वात्, नापि वाक्यान्तरजन्यज्ञानेन तस्यापि लिङादियुक्तत्वे प्रस्तुतत्वात्, तत्र लिङादिराहित्ये वा सिद्धमेव तर्हि वेदान्तानां ब्रह्मनिष्ठत्वं ततश्च प्रयोजनलाभ इति किं ज्ञानविधिना, तस्माद्यद्वाक्यजं ज्ञानं विधेयं तत एव ब्रह्मणः सिद्धिर्वक्तव्या, तत्र चोक्तवैरूप्यप्रसङ्ग इत्याशयेनाह । एकेन वाक्येनेति । धिय आत्मज्ञानस्य । प्रमातुमिच्छा प्रत्यक्प्रमित्सा प्रमित्सितप्रत्यक्त्विति त्यर्थः । यदि भवेदिति शेषः । तत्र तदा प्रतीचि द्विरुद्धत्रिकद्वयं प्रसज्यते, अतोऽस्मादन्यत्किं कष्टमित्यर्थः ॥ ४५८ ॥

उद्दिश्यमानं तदनूद्यमान-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतं प्रधानं च धियो विधाने ॥
प्रमीयमाणं पुनरात्मवस्तु
तदास्पदं स्यादितरत्रिकस्य ॥ ४५९ ॥

ननु विधेयज्ञानस्य ब्रह्मसाधकत्वे प्रतीचि किं त्रिकं कथं प्रसज्यत इति वीक्षायां विभज्य तदुभयत्रिकप्रसङ्गं दर्शयति । उद्दिश्यमानमिति । आत्मवस्तु धियो विधानेऽभ्युपगम्यमाने उद्दिश्यमानं भवति, एवं तदात्मवस्त्वनूद्यमानभूतं तथा प्रधानं चेत्येकस्य त्रिकस्य प्रतीचि प्रसङ्ग इत्यर्थः । इतरत्रिकप्रसङ्गमाह। प्रमीयमाणमिति। विधेयज्ञानेन प्रसाध्यमानं पुनस्तदात्मवस्त्वितरत्रिकस्योपादेयत्वविधेयत्वशेषत्वरूपत्रिकस्यास्पदं स्यादिति संबन्धः।एतदुक्तं भवति।मुमुक्ष्वभिलषितं प्रत्यग्ब्रह्मात्मकं मोक्षमुद्दिश्य मुमुक्षुरात्मानं जानीयादिति ज्ञानविध्यभ्युपगमे मोक्षात्मकब्रह्मणः सिद्धवन्निर्देश्यत्वरूपमुद्देश्यत्वं तावत्सिद्धं तच्च तस्य प्रागनवगतस्य न संभवतीति तदनुवादपूर्वमेव वक्तव्यम् इति तस्यानूद्यमानत्वं च स्यादेवमुद्दिश्यमानस्य फलतया प्राधान्यं चेत्येकं त्रिकम् । तथा विधेयज्ञानप्रमेयत्वे उद्देश्यत्वविरुद्धमुपादेयत्वं प्रमितिजन्यफलवत्तयानुष्ठेयत्वं तथा प्रागज्ञातस्यैव प्रमेयतया तस्यानूद्यमानत्वविरुद्धमज्ञातत्वमेवं तस्य प्रधानत्वविरुद्धं विधेयज्ञानक्रियाविशेषणतयाऽप्रधानत्वं चेति मुमुक्ष्वभिलषितमोक्षोद्देशेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानविधौ ब्रह्मणि वैरूप्यं प्रसज्यत इति ॥ ८९ ॥

प्रथमत्रिकं यजिनिगद्यगतं
गुणसंगतेरवगमे भवति ॥
चरमत्रिकं यजिनिगद्यगतं
फलसंगतेरवगमे तु पुनः ॥ ४९० ॥

इदानीं दृष्टान्तेऽपि विरुद्धं त्रिकद्वयं विविच्य द… ति । प्रथमत्रिकमिति । उद्दिश्यमानत्वादिकत्रिक… त्यर्थः । यजिनिगद्यो यागः तद्गतमित्यर्थः । गुणसं… रवगमे गुणविधिपरत्वाभ्युपगम इत्यर्थः । वाज… स्वाराज्यकामो यजेतेत्यत्र पूर्वपक्षे यज्यर्थं यागमु… श्य वाजपेयाख्यगुणसंबन्धविधानेऽभ्युपगम्यमाने… गगतमुद्देश्यत्वादित्रिकं भवेत् । एवं फलसङ्गते… स्वाराज्यफलोद्देशेन तद्यागविधाने चरमत्रिकमु… यत्वादित्रिकं भवेदेवेत्यर्थः ॥ ४९० ॥

सकृदुच्चरन्यजतिरेष गुणं
न फलं च सङ्गमयितुं क्षमते ॥
कथितत्रिकद्वयविरोधवशाद्
यजिवस्तुनीति ननु नीतिविदः ॥ ४९१ ॥

ननु फलं प्रति यागस्य साधनत्वं गुणं प्रति … त्वमित्यन्यान्यनिरूपितयोस्तयोरेकत्र न विरोधः … दण्डसाध्येन घटेनोदकमानयेति न व्यवह्रियते … एव फलं प्रत्युपादेयत्वं फलसाधनतयाऽज्ञातता…

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धेयत्वं च गुणं प्रत्युद्देश्यत्वानूद्यमानत्वाभ्यां न विरुद्ध्यत इत्याशङ्क्याह । सकृदुच्चरन्निति। सकृदुद्गच्छन्सकृच्छ्रूयमाण इति यावत्। सकृच्छ्रुतो हि यजतिः सकृदेव यागं प्रकाशयेत्, स यदि यागेन स्वाराज्यं भावयेदिति करणत्वविशिष्टतया यागमुपस्थापयति तदा करणेन तेन गुणस्य करणतयान्वयासंभवात्तदर्थं तदानीमेव तं साध्यतयाप्युपस्थापयतीति वाच्यम्, अन्यथाकाङ्क्षायोग्यतयोरसंभवात्, करणत्वं च तदा सिद्धसत्ताकस्यैव धर्मः साध्यत्वं च तदाऽसिद्धसत्ताकस्येति तयोरन्यनिरूपितयोरपि युगपदसंभवात्स्वरूपतः प्रतीतितश्च विरोध एव, अग्रे पूर्वमिति च शब्दाभावाद्गुणफलसमभिव्याहृतयजिना तत्साध्यत्वसाधनत्वविशिष्टयोरभेदप्रतीतेस्तयोरपि यौगपद्यस्य वक्तव्यत्वात्, दण्डसाध्येत्युक्तदृष्टान्तेपि विशिष्टयोर्विरोधः, एवमुपादेयत्वोद्देश्यत्वयोरपि सिद्धासिद्धधर्मयोर्युगपद्विरोध एव, तथा विधेयत्वानूद्यमानत्वयोरिति यजिना सकृत्प्रकाशिते वर्णितं त्रिकद्वयं नान्वेतुमर्हति । अथ करणत्वादित्रिलयविशिष्टविषया प्रतीतिरन्यान्या च साध्यत्वादित्रिकविषयेति चेन्न । सकृच्छ्रुतयजेस्तदयोगात्, वैरूप्ये च तन्त्रानवतारादतः स्वाराज्यकामो यजेत यजेत वाजपेयेनेति यज्यावृत्त्या प्रतीतिद्वये वाक्यभेदः स्यात्, स चैकवाक्यत्वसंभवे न युक्तः, तस्माद्वाजपेयेने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति न गुणविधिः किं तु कर्मनामेति प्राचि तन्त्रे
तम् , तदिदं नीतिविद आहुरिति दर्शितम्। अ
र्थः स्फुट एव, सङ्गमयितुं यजिवस्तुनीति संबन्धः।

इति वाजपेयगतनीतिवशा-
दपि नात्मवस्तुविषयावगतौ ॥
विधिरस्ति तेन विधिशून्यतया
परमात्मवस्तुविषयोपनिषत् ॥ ४६२ ॥

यथा वाजपेये वैरूप्यप्रसङ्गाद्‌ गुणविधिर्न सं
एवमात्मावगतावपि तत एव विधिर्न संभवती
मुपसंहरति । इति वाजपेयेति । विध्यसंभवफल
तेनेति ॥ ४६२ ॥

सगुणवाक्यमपीह समन्वितं
भवति निर्गुणवस्तुनि सर्वशः ॥
न खलु निर्गुणवस्तुसमन्वयं
न सहते सगुणस्य समन्वयः ॥ ४६३ ॥

एवं निर्गुणवाक्यानां विधिशून्ये स्वप्रधाने
समन्वयो निरूपितः, इदानीं सर्वं खल्विदं ब्रह्मे
सगुणवाक्यानामपि निर्गुणे ब्रह्मणि समन्वये
मस्त्येव, वस्तुतो निर्गुणब्रह्मण एव मायया गु
या प्रतीतेरित्याशयेनाह । सगुणवाक्यमिति । इ
न्ते सर्वशः सर्वसगुणब्रह्मवाक्यमिति संबन्धः।
गुणविषयवाक्यस्य निर्गुणतात्पर्यं विरुद्धमित्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्ष्यमाणविधया नास्ति विरोध इत्याशयेनाह । न खल्विति । सगुणस्य तद्विषयवाक्यस्य ॥ ४६३ ॥

सत्यासत्यवपुस्तथाहि सगुणं ब्रह्मास्य विद्या तथा
तद्वत्तद्विषयस्य वेदवचसस्तात्पर्य्यमेवंविधम् ॥
तेनावान्तरमस्य वेदवचसस्तात्पर्य्यमन्यादृशं
चान्यन्निर्गुणवस्तुतत्त्वविषयं संकीर्त्यते भागशः॥४६४॥

ननु सगुणं कथं वस्तुतो निर्गुणं येन वाक्यस्य तत्र तात्पर्यं तत्रापि तद्वदित्याशङ्क्य निर्गुणे गुणसंसर्गस्याध्यस्तत्वेन तदधिष्ठानस्य तदापि निर्गुणत्वानपायादित्याशयेनाह । सत्यासत्येति । न खलु निर्गुणवस्त्वित्यादिनोक्तमर्थं तथाहीति परामृशति । तथाहि सगुणं ब्रह्म सत्यासत्यवपुस्तस्य विद्या तद्गोचरं ज्ञानं तथा सत्यासत्यवपुः सत्यासत्यविषयेति यावत् । तद्वज्ज्ञानवत्तद्विषयस्य सगुणब्रह्मविषयस्य वेदवचसस्तात्पर्य्यमप्येवंविधं सगुणनिर्गुणविषयं सगुणज्ञानस्योभयविषयत्वात्तज्जननसामर्थ्यरूपं तद्वाक्यतात्पर्य्यमपि तथेत्यर्थः । नन्वेकस्य वाक्यस्यैवं तात्पर्य्यभेदो न युक्तः तद्भेदप्रसङ्गादित्याशङ्क्यैकमेव सगुणविषयं तात्पर्य्यं विषयोपाधिना भिन्नम् , तत्रापि गुणांशस्य कल्पितत्वात्परमपुरुषार्थत्वाभावाच्चावान्तरम् , ब्रह्मांशे तु तत् परमपुरुषार्थसाधनतया सत्यविषयतया च परममिति न तात्पर्य्यस्य स्वतो भेदो न वा तदुभयत्र तुल्यमतो न



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यभेद इत्याशयेनाह । तेनेति । अस्य सगुणवि
स्यान्यादृशं निर्गुणवाक्यतात्पर्य्याद्विलक्षणम् मु
इति शेषः। भागशो भिन्नविषयप्रयुक्तभेदेनेत्यर्थः॥

रूप्यज्ञानं रजतमिदमित्येवमुत्पद्यमानं
सत्यासत्यं विषयमपृथग्दर्शयत्येकमेव।
तद्वन्मानं सगुणविषयं सत्यमिथ्यावभासं
संसृष्टार्थद्वयमिति दृढं दर्शयत्येकमेतत्॥

सगुणवाक्यजन्यं ज्ञानं ब्रह्मणि गुणवैशिष्ट्यं
ब्रह्म च विषयीकरोतीत्येतल्लौकिकभ्रमदृष्टान्तेना
रूप्यज्ञानमिति । एकमेव रूप्यज्ञानमिति संब
सत्यं चासत्यं चेति द्वन्द्वैकवद्भावः । अपृथक्कल्पित
म् । दार्ष्टान्तिकमाह । तद्वन्मानमिति । सत्यमि
स्तुनोरवभासो यस्मान्मानात्तत्सत्यमिथ्यावभासं
नु किं पृथक्पृथक्तयोरवभासः नेत्याह । संसृष्टा
मिति । परस्परं संसृष्टमर्थद्वयमित्यर्थः । इतिशब्द
ष्टान्तिकोपसंहारार्थः। दृढं निःसंदिग्धम्। तद्वद्र
नवत् एतदेकं सगुणविषयं सत्यमिथ्यावभासं मा
ष्टार्थद्वयं दृढं दर्शयतीति संबन्धः ॥ ४६५ ॥

तद्बुद्धिमात्रफलतैव च तत्परत्वं
वेदान्तवादिसमये न तु शेषभावः ॥
शेषत्वमक्षरकलापगताप्तिमात्रं
मत्येवं नाध्ययनमर्थधियोऽपि शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं वेदान्तानां सगुणनिर्गुणब्रह्मविषयाणां निर्गुणे ब्रह्मणि तात्पर्य्यमित्युपपादितम्,ननु भवन्मते वेदस्य तात्पर्य्यमेव न सिंद्ध्यति तत्प्रतीतीच्छयोच्चरितत्वं हि शब्दे तात्पर्य्यम्, न चापौरुषेये तत्संभवतीत्याशङ्क्य तत्र तात्पर्य्यस्वरूपमाह । तद्बुद्धिमात्रेति । शब्दस्य यत्रार्थे तात्पर्य्यं संमतं तद्बुद्धिमात्रानुकूलशक्तिरेव तत्र तात्पर्य्यमित्यर्थः । इयमेव शब्दस्य तात्पर्य्यं न तु वक्तुरिच्छा,वेदे तदभावात् । लौकिकवाक्येऽपि तद्वृत्तिशक्तिविशेषस्यैव तत्तात्पर्य्यत्वे संभवति व्यधिकरणेच्छायास्तत्कल्पनायोगात्,इच्छयोच्चरितत्वस्यापि सापेक्षत्वान्निरपेक्षशक्तिविशेषस्यैव तस्योचितत्वात्, लौकिकवाक्ये वक्तुरिच्छा तात्पर्यग्राहकतयाऽपेक्षितेति नोन्मत्तादिवाक्ये तत्प्रसक्तिरिति लोके वेदे च तद्बुद्धिमात्रफलतैव तात्पर्य्यमित्यर्थः। अर्थवादादीनां तदर्थप्रतीतिफलत्वेऽपि विधावेव तात्पर्य्याभ्युपगमात्तत्रातिव्याप्तिपरिहाराय मात्रेत्युक्तम् । एवं च तेषां तद्बुद्धिमात्रं न फलमपि तु विधिवाक्यार्थबुद्धिरिति न स्वार्थे तात्पर्य्यप्रसङ्ग इति भावः । महातात्पर्य्याभिप्रायं वा मात्रपदम्, बुद्ध्यन्तराशेषफलवद्बुद्धिफलकत्वं महातात्पर्य्यम्,प्रत्येकमङ्गप्रधानवाक्यगतावान्तरतात्पर्य्ये प्रसक्तिवारणाय बुद्ध्यन्तराशेषेति । अङ्गप्रधानवाक्यैकवाक्यरूपमहावाक्यस्यैव महातात्पर्य्यं तच्चोक्तरूपमेवेति नासंभवः । नन्वध्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यनविधेरर्थावबोधफलत्वाद्वेदस्यार्थावबोधशेषत्वं तात्पर्य्यमिति जैमिनीयैराश्रितम्, एवं भवद्भिरपि किमिति नाङ्गीक्रियते इत्याशङ्क्याह । वेदान्तवादि वेदान्तप्रामाण्यवदनशीलानां सिद्धान्त इत्यर्थः ॥ इत्यत आह । शेषत्वमिति । अध्ययनस्येति अक्षरकलापः अक्षरसमूहस्तद्गताप्तिमात्रं प्रत्येव अध्ययनविधेः स्वाध्यायावाप्तिमात्रफलतया तां त्येव तस्य शेषत्वमिति न तद्बलाद्वेदस्यार्थावबोध त्वमित्यर्थः । एवकारव्यवच्छेद्यमाह । नाङ्ग मिति ॥ १६६ ॥

> तच्छेषभावमनपेक्ष्य च तत्फलं स्या-
> दाधानवन्न हि तदङ्गमिह क्रतूनाम् ॥
> अग्न्यङ्गमेव हि तदिष्टमथापि तस्य
> सर्वक्रतुष्वधिकृतिः फलमभ्युपेतम् ॥ १६

नन्वक्षराप्तेरपुरुषार्थत्वात्कथमध्ययनविधेस्तत् त्वम्, न चावाप्तेभ्योऽक्षरेभ्योऽर्थावबोधो भवतीति च्यम्, तर्ह्यर्थावबोधशेषत्वमेवोचितमिति चेन्न । नादिवत्परम्परया पुरुषार्थस्यापि भाव्यत्वसंभवे यनस्य तच्छेषत्वात्, वस्तुतोऽध्ययनस्यार्थावबो लं तथापि न तस्य तच्छेषत्वं मानाभावात्, अर्थाव धफलवादिनाप्यध्ययनस्य तथावगतं स्वाध्याय परित्यज्यैव तत्फलशेषत्वस्यैव वक्तव्यत्वात्, तत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यास्तच्छेषत्वेनाव्याप्तत्वाच्चेत्याशयेनाह । तच्छेषभा-
वमिति । तदर्थज्ञानं फलमस्याध्ययनस्य तत्तत्फलम् ।
तत्फलस्यापि तदशेषत्वे उदाहरणमाह । आधानवदि-
ति । अग्न्याधानवदित्यर्थः । दृष्टान्तं निषेधमुखेन
विशदयति । न हीति । हिर्हेतौ । तदाधानम् । क्रतूनां द-
र्शपूर्णमासादियागानाम् । यस्मादाधानं न दर्शादिक्रतु-
प्रकरणे विहितमनारभ्याधीतत्वात्, नापि पर्णतान्यायः
स्वतो व्यापाररूपत्वात् अग्निशेषत्वाच्च , तस्मात्तद्दर्शा-
देर्नाङ्गं किन्त्वग्नीनिति श्रुत्याऽग्नीनां शेषित्वावग-
मात्तदङ्गमेव तदिष्टम् , एवमपि तदधीनाग्न्यायत्ता
उत्तरक्रतूनां सिद्धिः साग्नीनुद्दिश्यैव दर्शादिविधानात् ,
त्रैवर्णिकानां तेष्वधिकृतिश्च तत्फलं मीमांसकैरभ्युपे-
तमिति न तत्फलता तच्छेषत्वनियता येनाध्ययनस्या-
पि तच्छेषत्वं भवेदिति भावः ॥ ४६७ ॥

मन्त्रार्थवादगतमध्ययनं तदर्थ-
मात्रप्रतीतिफलमित्यपि नाभ्युपेतम् ॥
विद्वद्भिरर्थबुद्धिमनुसृत्य फलावसानां
सा तद्वतीति तदतत्परतोपपत्तिः ॥ ४६८ ॥

तद्बुद्धिमात्रफलतैवेति तात्पर्यलक्षणे मात्रचो व्या-
वर्त्यमर्थवादादीति यदवादिष्म तदर्थमर्थवादादेः स्वार्थे
तात्पर्याभावं दर्शयति । मन्त्रार्थवादेति । इषेत्वेत्या-
दिर्मन्त्रः, वायुर्वै क्षेपिष्ठेत्यादिरर्थवादः, तद्विषयक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्ययनं तस्य मन्त्रादेः शब्दशक्त्या प्रतीयमानोऽ-
र्थस्तन्मात्रे मन्त्रादिजन्या या प्रतीतिस्तदेव फल-
स्य तत्तथा नाभ्युपेतम्, मीमांसकादिभिरिति शे-
कुत इत्यत आह । विद्धयर्थबुद्धिमिति । शाखाध्ये-
यव्यश्वेतालम्भनादिविद्धयर्थबुद्धिं स्वतः फलावसा-
नुसृत्य तद्द्वारेण सा मन्त्राद्यर्थप्रतीतिस्तद्वती फल-
ति यतोऽतस्तस्यार्थवादादेरतत्परता स्वार्थपरताभा-
स्योपपत्तिरित्यर्थः । मन्त्रार्थवादाभ्यां यत्स्वार्थ-
नं जन्यते तदेव तत्फलमिति केनापि नाभ्युपेतं
न तयोः स्वार्थपरता भवेत्किं तु मन्त्रस्यानुष्ठे-
स्मृतिद्वारार्थवादस्य विधेयप्राशस्त्यधीद्वारा फ-
सानत्वमिति तत्रैव तयोस्तात्पर्य्यमित्यस्वार्थपरतै-
वेति भावः ॥ ४६८ ॥

> सप्रयोजनकबुद्धिकारणं
> वाक्यमाहुरिह तत्परं बुधाः ॥
> सप्रयोजनकबुद्धिशेषधी-
> हेतुमन्यपरमाश्रयन्ति च ॥ ४६९ ॥

नन्वर्थवादादेः स्वार्थप्रतीतिजनने किमिति वा-
तिर्न तत्फलं तज्जन्यस्यैव तत्फलत्वादतस्तयो-
र्थेपि तात्पर्य्यं भवेदित्याशङ्क्याह । सप्रयोजनं
इह लोके वेदे च शब्दजन्या प्रतीतिर्यद्विषया क-
मीहितपर्य्यवसायिनी भवति स शब्दस्तत्पर इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आहुरित्यर्थः । एवमतत्पराणामपि स्वरूपं बुधसंमतमाह । सप्रयोजनकबुद्धिशेषेति । अर्थवादार्थबुद्धिः प्रशस्तविधेयबुद्धिद्वारा फलवती भवति , एवं मन्त्रार्थधीरनुष्ठेयार्थस्मृतिद्वारा तथा, एवं च सप्रयोजनकबुद्धिं प्रति शेषभूता याऽर्थवादादिजन्या धीस्तद्धेतुं वाक्यमन्यपरं विधेयपरमेव चोऽवधारणे न स्वार्थपरमाश्रयन्तीत्यर्थः । यस्मिन्नर्थे वाक्यजन्यमपि ज्ञानं पुरुषार्थहेतुर्न भवति तद्वाक्यं तत्परं न भवति परं तु यमन्यमाश्रित्य फलपर्य्यवसायि स्यात्तत्परमेवेत्यर्थः ॥ ४६९॥८

मन्त्रार्थवादवचसामपि गोचरेषु
सौवेष्ववान्तरमुशन्ति च तत्परत्वम् ॥
के चित्त्रयीशिरसि खिन्नधियो मुनीन्द्रा-
स्तद्बुद्धियो विधिषु शेषतया निवेशात् ॥४७०॥

एवं मीमांसकानां मते अर्थवादादिमात्रस्य स्वार्थे तात्पर्य्याभावमुक्त्वा स्वमते मानान्तराविरुद्धतदसिद्धार्थार्थवादादेः स्वार्थेऽप्यवान्तरतात्पर्य्यमस्तीत्याह । मन्त्रार्थवादवचसामिति । देवताविग्रहादेः स्वर्गादेश्च प्रतिपादकमन्त्रार्थवादवचसामित्यर्थः।सौवेषु स्वीयेषु।अवान्तरम् फलवद्बुद्धिशेषबुद्धिफलकत्वमवान्तरत्वम्।तत्परत्वं तात्पर्य्यं तच्च फलवद्बुद्धिफलकत्वमिति विभागः । उशन्ति अङ्गीकुर्वन्ति । के चिद्वैयासिकमतानुसारिणः । त्रयीशिरसि वेदान्ते । खिन्नधियः परिश्रमशा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिनः । ननु किमिति तर्हि मन्त्रादेर्विद्वदर्थे ता
कल्प्यते तदभावे च विधिना त्वेकवाक्यत्वादिवि
यविरोधस्तत्राह । तद्वदिति । स्वार्थवद्विधिष्वपि
न्त्रार्थवादवचसां तत्परत्वमित्यनुषङ्गः । तत्र हेतुः
यः शेषतया निवेशादिति । मन्त्रादिजन्यतदर्थज्ञान
ध्यानाग्निहोत्रादिविधेयानुष्ठानशेषतया निवेशादि
र्थः । अत एव मन्त्राद्यर्थज्ञानं फलवद्भवेत् । अथ वा
न्त्रादेः स्वार्थेऽवान्तरतात्पर्ये हेतुमाह । तद्वद्धिय इ
मन्त्राद्यर्थविशिष्टधिय इत्यर्थः । तथा च मन्त्रार्थज्ञ
स्यापि विधिद्वारा फलवत्त्वादुक्तं तत्र तात्पर्यलक्षण
स्त्येव,अन्यद्वारा च तदिति विधितात्पर्यापेक्षया त
न्तरं चेत्यर्थः । तत्तदिति पाठे तत्तद्धियो देवतादि
स्वर्गादिधिय इत्यर्थः । देवताधिकरणे देवताना
ब्रह्मविद्याधिकारश्रवणात्तेषामपि मन्त्रार्थवादप्रति
ग्रहादिमत्त्वं बादरायणादिभिराश्रितमिति म
स्वार्थेऽवान्तरतात्पर्यं तत्संमतम्, परमतात्पर्यं तु
न्त्रादिजन्यतदर्थज्ञानस्य विद्वदर्थे शेषतया प्रवेशा
ति भावः ॥ १७० ॥

श्रेयःसाधनता लिङर्थ इति च प्रागुक्तमत्यादरा-
च्छ्रेयःसाधनयागदानहवनाद्यर्थैकनिष्ठं ततः ॥
सर्वं कर्मवचो नियोगपरता तस्यापि नालोचने
वक्तव्या किमुतास्य वेदशिरसः सा नेति भूयोऽपि न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं वेदान्तानां सिद्धे ब्रह्मणि तात्पर्य्यमुक्तं तात्पर्य्यं च शब्दस्य स्वाभिमतं निरूपितमिदानीं वेदस्य सिद्धार्थनिष्ठत्वे जैमिनीयवचनविरोधं परिहर्तुं प्रागुक्तमर्थमनुवदति । श्रेयःसाधनतेति । न इत्यादौ द्रष्टव्यम् । अत्यादरान्नञ्ञायपूर्वम् । ततः किं तत्राह । श्रेयःसाधनयागेति । ततः श्रेयःसाधनतायाः लिङर्थत्वव्युत्पादनात्सर्वं हि कर्मवाक्यं लिङाद्यर्थनिष्ठं लिङादेश्च श्रेयःसाधनमर्थ इत्युक्तमेवं च सर्वं कर्मवचः श्रेयःसाधनयागाद्यर्थनिष्ठमेवावश्यमभ्युपेयमित्यर्थः । एकेति नियोगनिष्ठतानिराकरणं कृतं सूचयति । ततश्च नः अस्मान्प्रति भूयः पुनरपि तस्य कर्मवचसोऽप्यर्थालोचने नियोगपरता न वक्तव्या न शङ्कितुं युक्ता अस्य वेदशिरसः सा नियोगपरता न वक्तव्येति किमुतेति सम्बन्धः ॥ ४७१ ॥

श्रेयःसाधनयागदानहवनाद्यर्थेषु कार्य्यात्मसु
सर्वं कर्मवचः प्रमाणमिति तु ग्राह्यं वचो जैमिनेः ॥
भाष्यं पश्यत शाबरं स्फुटतरं यो यागमित्यादिकं
श्रेयःसाधनयागमात्रवचनं धर्माभिधानं वदत् ॥४७२॥

नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादिसूत्रैः सिद्धार्थस्यापि वेदस्य जैमिनिर्नियोगनिष्ठत्वमवोचत्तत्कथं वेदस्य तदर्थताशङ्का न कर्त्तव्या, कथं वा वेदान्तानां सिद्धार्थत्वमित्याशङ्क्य, जैमिनेराम्नायशब्दः कर्मभागमात्रपरस्तदर्थस्यैवाथातो धर्मजिज्ञासेति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचार्य्यतया तदुपक्रमात्तत्रापि तदभिमता क्रिया श्रेयःसाधनं यागादिरेव तदन्यस्यासंभवादित्याशयेनाह श्रेयःसाधनेति। कार्य्यात्मसु कृतिसाध्यस्वभावेषु। तदेवं वच इति सूत्रस्थाम्नायशब्दार्थ उक्तः। तु शब्दोऽवधारणे। सर्वं कर्मवाक्यं श्रेयःसाधनयागादिकार्येषु प्रमाणमित्येतावत्येवार्थे जैमिनेर्वचो ग्राह्यं न तु सर्वः स्वार्थनियोगे प्रमाणमिति तत्सूत्रार्थो ग्राह्य इत्यर्थः। ननु केन बलादेवं तत्सूत्रं व्याख्यायत इत्याशङ्क्य जैमिनिनाभिहितं दनाप्रमेयधर्मस्य तद्भाष्यकारेण यागादिरूपत्वाभिधानबलादित्याशयेनाह। भाष्यं पश्यतेति। स्फुटतरं स्यात्। भाष्यमेवाह। यो यागमिति। योयागमनुतिष्ठति तं धार्मिकमित्याचक्षत इत्येवंरूपम्। नन्वत्र धार्मिकपदेन यागकर्तुर्नियोगनिष्ठत्वमेवोच्यते धर्मशब्दस्य नियोगवचनत्वादपूर्ववचनत्वादित्याशङ्क्याह। श्रेयःसाधनयागमात्रेति। धर्म इति शब्दः श्रेयःसाधनयागमात्रवचनमिति वदच्छाबरं भाष्यमिति संबन्धः। यागकर्तुर्धार्मिकत्वकथनाद्यागमेव भाष्यकारो धर्म इति प्रतीतीति भावः॥ १७२॥

पुल्लिङ्गतापि घटते क्रतुवाचिनोऽस्य
सूक्ष्मात्मना भवति हि क्रतुरप्यपूर्वम्।
तेन क्रतोरुपचरन्नभिदां पुमान्स्याद्
क्लीवस्तु धर्ममिति हि क्रतुवाचकत्वे॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु चोदनालक्षणोऽर्थो धर्म इति पुल्लिङ्गो धर्मशब्दो जैमिनिना प्रयुक्तः स चापूर्ववचन एव पुल्लिङ्गधर्मशब्दस्य तदेतत्क्षत्रस्य क्षत्रं यद्धर्म इत्यादिवेदे तत्रैव प्रयोगात् अतो भाष्यं तदनुसारेणैव नेतव्यम्, यद्यपि क्रतावपि धर्मशब्दोऽस्ति तथापि स नपुंसक एव तानि धर्माणीति तस्यैव तत्र श्रुतौ दर्शनादित्याशङ्क्याह। पुल्लिङ्गतापीति। भाष्यकारोक्त्यैव सूत्रार्थस्य प्रत्येतव्यत्वादेतद्भाष्यबलात्पुल्लिङ्ग एव धर्मशब्दोऽपूर्ववाची तत्तादात्म्यात्क्रतावुपचरितो जैमिनिनेति अपूर्वस्य क्रतुसूक्ष्मरूपत्वेन हेतुना क्रतोरपूर्वेणाभिदामभेदमुपचरन्पुमान्पुल्लिङ्गः स्याद्धर्मशब्द इति शेषः। क्रतुवाचकत्वे तु विवक्षिते धर्ममिति क्लीवः स्यान्न त्वौपचारिकप्रयोगेऽपि, अतः सूत्रकारस्य पुल्लिङ्गधर्मशब्दप्रयोगोऽपि तस्य नियोगाशयं न सूचयतीति भावः॥ १७३॥

इष्टाभ्युपायवचनो लिङिति स्थितौ च<br>
स्याद्भावनावचनतास्य यदा तदा च॥<br>
कर्तुर्भवेदधिकृतिस्तु नियोगवादे<br>
स्वाम्ये स्थिते सति भवेदथ कर्तृभावः॥१७४॥

ननु सूत्रकारेणैव षष्ठाद्ये स्वर्गकामपदस्य नियोज्यपरत्वं वदता प्रत्ययार्थो नियोगोऽभ्युपेतो नियोगकार्यताबोद्धुरेव नियोज्यत्वेन तेन विना व्युत्पादनायोगादित्याशङ्क्य सत्यं प्राभाकरैरेवं तदधिकरणार्थ उक्तः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स न तथाधिकारित्वव्युत्पादनस्यैव स्वर्गकामपदस्य फलपरत्वव्युत्पादनेन तत्र विवक्षितत्वात् । नन्वधिकारित्वमेव स्वर्गकामस्य नियोज्यत्वपूर्वकमिति चेत्सत्यं नियोगवादे तथैव, श्रेयःसाधनस्य वाक्यार्थत्ववादे तत्र त्वन्वयपूर्वक एव तदन्वय इत्याशयेनाह । दृष्टानुसारिणीति । स्थितौ मते । प्रधानपदार्थाकाङ्क्षानुसारेण पदान्तराणामर्थबोधकत्वं वाच्यम् । लिङाद्यर्थः श्रेयःसाधनं च प्रधानं स च धात्वर्थः कर्त्तृव्यापारात्मकक्रिया क्रिया च कर्तारं प्रथममपेक्षत इति क्रियाक्षिप्तं कर्तारं स्वर्गकामपदं विशिनष्टीति प्रथमं स्वर्गकामः कर्त्रा नान्वयं प्राप्य पश्चाच्छ्रेयसो भोक्त्रपेक्षायां स एव स्वर्गकामः स्वाभिलषितस्वर्गसाधने धात्वर्थे मदर्थं कर्मेत्यवगच्छन्नधिकारित्वमपि प्रतिपद्यते तदिदं कर्त्तुर्भवेदधिकृतिरिति । किं च जैमिनीयमतानुसारिभिर्भट्टैरप्येवमाश्रितत्वात्तस्यापि तदेव संमतमित्याह । स्याद्भावनेति । अस्य लिङादेर्भावनायामपि क्रियारूपत्वेनोक्तरूपेणैव स्वर्गकामोऽन्वेतीति भावः । नियोगवादे कथं तदन्वयवैलक्षण्यमित्याशङ्क्याह नियोगेति । तत्र हि नियोगाकाङ्क्षयैव स्वर्गकामान्वय इति ममायं नियोग इति स्वामित्वं प्रतिपद्य तद्विषये यागेऽपि नियोगबलादधिकारान्वयं तत्कर्त्तृत्वं च प्राप्नोतीति तत्र वैपरीत्यमिति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्ये स्वर्गकामस्येति शेषः । अथानन्तरम् ॥ ४७४ ॥

इष्टाभ्युपायो विधिरात्मनीच्छा-
मुत्पादयन्प्रेरकतामुपैति ॥
इष्टाभ्युपायेऽवगते लिङादे-
रिच्छा फलादेनमुपैति सद्यः ॥ ४७५ ॥

ननु नियोगानङ्गीकारे कथं स्वर्गकामस्य यागे प्रवृत्तिः स हि तत्प्रेरित एव प्रवर्त्तत इत्याशङ्क्य पुरुषार्थकामनाप्रयुक्ता हि तत्प्रवृत्तिः पुरुषार्थश्च श्रेयःसाधनं यागादिरतस्तदधीनचिकीर्षयैव स प्रवर्त्तते न तु नियोगेनापुरुषार्थेनेत्याशयेनाह । इष्टाभ्युपाय इति । विधीयत इति विधिः । आत्मनि स्वस्मिन्यागादेः श्रेयःसाधनत्वेन लिङादिनावगमात्तच्चिकीर्षा भवति ततः प्रवर्त्तत इत्यर्थः। ननु यागादेः क्लेशात्मकत्वात्कथं नियोगं विना स्वतन्त्रस्य तस्येच्छा भवेदित्याशङ्क्य स्वर्गादेःस्वत इष्यमाणत्वात्तस्य साधनानुष्ठानमन्तरेण। सिद्धेस्तत्साधनतया लिङाद्यवगते यागादौ तत्फलेच्छया तच्चिकीर्षा भवतीति नोक्तदोष इत्याशयेनाह। इष्टाभ्युपायेऽवगत इति । लिङादेः सकाशादिष्टाभ्युपायेऽवगत इति संबन्धः। फलात्फलेच्छानन्तरमेव तत्साधनतयावगते चिकीर्षा भवतीति फलादित्युक्तम् । एनं धात्वर्थमिच्छा सद्यस्तत्क्षणमेव नियोगनिमित्तमनपेक्ष्य उपैति तत्रेच्छा भवेदित्यर्थः । फलेच्छा साधनेच्छाहेतुः साधनेच्छा च प्रवृ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तिहेतुः सा च साधनज्ञानाधीनेति न नियोगः प्रवृ-
पयुज्यत इति भावः ॥ ४४५ ॥

नियोगकोट्यापि नरो न कश्चि-
दिच्छां विना दुःखनिदानभूतम् ॥
करोति कर्मेह पुमर्थरागात्
प्रवृत्तिरेवेति हि राजमार्गः ॥ ४७६ ॥

एवं स्वपक्षे यागादौ स्वतन्त्रचेतनप्रवृत्तिमुपपाद्य
योगवादे तदसंभवमाह। नियोगकोट्यापीति। अने-
योगैरित्यर्थः । नरः स्वतन्त्रः स्वर्गकामादिः स्वत-
शात्मके यागादौ स्वाभिलषितस्वर्गासाधने इच्छा-
वात्स्वतन्त्रस्तन्न करोतीत्यर्थः । इह जगति । स्व-
प्रागुक्तरीत्या यागादौ प्रवृत्तौ लोकानुसारमाह। पुम-
ति। भोजनादिव्यापारे दुःखसाधनेऽपि पुमर्थसा-
यावगते इच्छया लोकप्रवृत्तिरस्त्येवेति राजमार्गः
दोषरहितः प्रसिद्धः पन्थाः निर्दुष्टोयमुपाय इत्यर्थः।

इष्टाभ्युपायस्य च कार्यभावः
प्रयत्ननिष्पाद्यतयोपपन्नः ॥
स चावसेयो वचनाल्लिङादेः
प्रत्यक्षतो रागनिबन्धनस्तु ॥ ४७७ ॥

नन्विष्टसाधनताज्ञानस्य चन्द्रादौ सत्वेऽपि न
तत्र प्रवर्त्तत इति कथं तत्प्रवर्त्तकमित्याशङ्क्य,
साध्येष्टसाधनताज्ञानं प्रवर्त्तकं तच्च न चन्द्रादा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति न तत्र तस्य व्यभिचार इत्याशयेनाह । इष्टाभ्युपायस्येति । च उक्तशङ्कानिवर्त्तकः । कार्यभावः कार्यत्वम् । ननु कृत्युद्देश्यस्यैव कार्यत्वं तच्च स्वतः पुरुषार्थस्यैवेति न धात्वर्थस्य तदस्तीत्याशङ्क्याह । प्रयत्ननिष्पाद्यतयेति । तृतीयेत्थंभावे प्रयत्ननिष्पाद्यतारूपः स तस्योपपन्न इत्यर्थः। ननु कार्यभावो लिङादिना ज्ञायते चेत्स एव लिङर्थोऽस्तु किमिष्टाभ्युपायत्वस्यापि तदर्थत्वकल्पनयेत्याशङ्क्य प्रयत्ननिष्पाद्यतारूपकार्यभावज्ञानस्यातिप्रसङ्गेनाप्रवर्त्तकत्वात्प्रवर्त्तकस्यैव लिङर्थत्वात्तद्विशेषितेष्टसाधनत्वं लिङर्थ इत्याशयेनाह। स चेति। कृतिसाध्येष्टाभ्युपाय एवेत्यर्थः । ननु यागादेरिष्टसाधनतया कृतिजनकेच्छाविषयतारूपकृत्युद्देश्यताप्यस्तीति तदात्मकमेव कार्यत्वं लिङर्थः किं न स्यादित्याशङ्क्य तस्य प्रत्यक्षसिद्धत्वान्न शब्दार्थत्वमित्याह । प्रत्यक्षत इति । रागनिबन्धनः फलेच्छानिबन्धनः, फलेच्छयैव हि साधनेच्छा भवतीति तथोक्तम् ॥ ४७७ ॥

कार्यत्वमिच्छावशवर्त्ति किं चि-<br>
दिष्टाभ्युपाये निजमस्य किं चित् ॥<br>
निजं लिङादेरवसेयमस्य<br>
साक्षिप्रसादादितरप्रतीतिः ॥ ४७८ ॥

उक्तं कार्यताद्वैविध्यं विशदयति । कार्यत्वमिति। इष्टाभ्युपाये यागादौ, किं चित्कृत्युद्देश्यतारूपं कार्यत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्। इच्छावशवर्त्ति फलरागनिमित्तम्। निजं स्वा-
विकं कृतिसाध्यत्वरूपम्. तस्य धात्वर्थस्वरूपक्रिया-
युक्तत्वान्निजत्वम्। अस्येष्टाभ्युपायस्य। कार्यत्वं कि-
तत्र लिङर्थमाह। निजमिति। अस्येतीष्टाभ्युपा-
सूचितम्. कृतिसाध्येष्टाभ्युपायत्वं लिङाद्यवसेयमि-
र्थः। प्रत्यक्षतो रागनिबन्धन इत्युक्तं स्पष्टयति। सा-
सादादिति। प्रत्यक्षत इत्यर्थः। इतरप्रतीतिः। इ-
द्देश्यतारूपकार्यत्वप्रतीतिः। चिकीर्षितत्वं हि कृत्यु-
श्यत्वं चिकीर्षा तु रागः स च जायमान एव निय-
षयः सन् साक्षिणावभास्यमान एव जायते मनसा-
यतया वेति प्रत्यक्षत इतरप्रतीतिरित्यर्थः॥ ४७०॥

जानात्यर्थे लिङ्पदं गौणमाहु-
र्जानात्यर्थः कर्तृतन्त्रो न हीष्टः॥
यागाद्यर्थे कर्तृतन्त्रे हि मुख्यो
लिङ्लोडादिः श्रेयसो हेतुभूते॥ ४७१॥

ननु कृतिसाध्येष्टसाधनत्वं कथं लिङाद्यर्थः
त्मानं पश्येदित्यादौ लिङस्तदर्थत्वायोगान्न हि
कृतिसाध्यमित्याशङ्क्य, सत्यमत एव ज्ञाने न लिं
किं तु तत्र लिङ्पदं गौणमेवेत्याह। जानात्यर्थे
ज्ञान इत्यर्थः। तत्र हेतुः। जानात्यर्थः कर्तृतन्त्र
हिर्हेतौ। यस्माज्ज्ञानात्यर्थः कर्तृतन्त्रः कर्तुरिच्छा
न तस्मात्तत्र लिङ्पदं गौणमित्यर्थः। तर्हि यागा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानात्यर्थे लिङ्पदं गौणमाहु-
र्जानात्यर्थः कर्तृतन्त्रो न हीष्टः ॥
यागाद्यर्थे कर्तृतन्त्रे हि मुख्यो
लिङ्लोड़ादिः श्रेयसो हेतुभूते ॥ ४७९ ॥

ननु कृतिसाध्येष्टसाधनत्वं कथं लिङाद्यर्थः, आत्मानं पश्येदित्यादौ लिङस्तदर्थत्वायोगान्न हि ज्ञानं कृतिसाध्यमित्याशङ्क्य, सत्यमत एव ज्ञाने न विधिः किं तु तत्र लिङ्पदं गौणमेवेत्याह । जानात्यर्थ इति । ज्ञान इत्यर्थः । तत्र हेतुः । जानात्यर्थः कर्तृतन्त्र इति । हि-हेतौ । यस्माज्जानात्यर्थः कर्तृतन्त्रः कर्तुरिच्छाधीनो न तस्मात्तत्र लिङ्पदं गौणमित्यर्थः । तर्हि यागादावपि तत्तथैवास्त्वित्याशङ्क्य मुख्यत्वे संभवति तस्य न गौणत्वं न्याय्यमित्याह । यागाद्यर्थ इति ॥ ४७९ ॥

जानात्यर्थे श्रेयसो हेतुभाव-
भागोऽवुद्धो बोध्यते लिङ्पदेन ॥
यागाद्यर्थे श्रेयसो हेतुभावो
मुख्यो बोध्यः कर्तृतन्त्रो न गौणः ॥ ४८० ॥

केन तर्हि मुख्यार्थगुणेन ज्ञाने लिङ्पदप्रवृत्तिरिति जिज्ञासायामाह । जानात्यर्थे श्रेयस इति । लिङर्थे हि कृतिसाध्यत्वं श्रेयःसाधनत्वं चेति भागद्वयमस्ति तत्रात्मज्ञाने सर्वानर्थमूलाविद्यानिवृत्तिरूपश्रेयःसाधनत्वभागो लिङ्पदेनान्यतोऽनवगतो बोध्यत इति कृ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तिसाध्यताभागाभावादेव तत्तत्र गौणमित्यर्थः। य
दौ तु तद्द्वयमस्तीति तत्र तन्मुख्यमेवेति प्रागुक्तं
दयति। यागाद्यर्थ इति। कर्तृतन्त्र इत्यनेन या
कृतिसाध्यत्वमपि सूचितमतस्तत्र मुख्य एव लिङ्
त्यर्थः ॥ ४८० ॥

यागाद्यर्थे मुख्यता यद्वदस्य
ब्रह्मज्ञानस्यान्तरङ्गेषु तद्वत् ॥
तर्कादीनां कर्तृतन्त्रत्वहेतो-
र्ज्ञानादर्वाग्गौणता हेत्वभावात् ॥ ४८१ ॥

तर्हि किं वेदान्ते ज्ञान इव न क्वापि विधिर्लि
ङ्क्य ज्ञानोपाये श्रवणादौ पुरुषेच्छावशवर्तिनि
स्तीति सदृष्टान्तमाह। यागाद्यर्थे मुख्यतेति। मु
मुख्यार्थता। अस्य लिङादिपदस्य। अन्तरङ्गेषु
त्तिपर्य्यन्तमुमुक्षानन्तरमवश्यानुष्ठेयेषु श्रवणादिषु
हेतुमाह। तर्कादीनामिति। श्रवणं ह्यद्वितीये ब्र
वेदान्तानां तात्पर्य्यावधारणहेतूपक्रमोपसंहारैक्या
पत्तिप्रतिसंधानम्। एवं वियदादेश्चेतनं कर्तारं विना
यत्वाद्यनुपपत्तिज्ञानं मननम्, तच्च ब्रह्मणि तर्क ए
थोक्तम्। एवमद्वैतब्रह्मणो निरन्तरानुसन्धानरूपं
दिध्यासनमपि कर्तृतन्त्रमेव। तथा च ब्रह्मज्ञान
ने श्रवणादौ तर्करूपेण कृतिसाध्यताभागस्यापि
वाद्यागादाविव लिङादेर्मुख्यार्थतेति भावः। तत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मावगतिसमये क्रियाकारकाद्यभावात्कथं लिङादि-
मुख्यार्थसंभवस्तत्राह। ज्ञानादर्वागिति। अविद्यादशा-
यां विधिनिमित्तं सर्वमस्त्येव। न चैवमात्मनः श्रव-
णादिविधिशेषत्वापत्तिः, तेषामेव तच्छेषत्वेनात्मनोऽ-
नन्यशेषत्वादिति भावः ॥ ४८१ ॥

भूतस्य भव्याय यथोपदेशः
क्रियापरे वस्तुपरे तु काण्डे ॥
न हीष्टमेवं विपरीतमस्मिन्
भव्यस्य भूताय सदोपदेशः ॥ ४८२ ॥

ननु भूतं भव्यायोपदिश्यत इति शबरस्वामिवचना-
त्सिद्धस्य सर्वस्य भव्यार्थत्वप्रतीतेः कथमात्मनोऽनन्य-
शेषत्वमित्याशङ्क्य प्रागुक्तमर्थं व्यवधानेन तद्विस्मर-
णसंभवात् स्मारयति। भूतस्येति। व्रीहिकपालादेरित्य-
र्थः। वस्तुपरे ब्रह्मपरे। विपरीतं भूतभव्यपरत्वविपरी-
तम्, भव्यस्य यज्ञादेः श्रवणादेश्च, भूताय सिद्धस्वरूपमो-
क्षाय ॥ ४८२ ॥

भव्यप्रतीतावुपयोगभाजो
भवन्ति कार्त्स्न्येन च सिद्धवादाः ॥
क्रियाप्रधाने न तथात्र किं तु
भूतप्रतीतौ खलु भव्यवादाः ॥ ४८३ ॥

उक्तविभागमेवोपपत्तित उपपादयंस्तद्वाक्ययोरपि त-
थैव शेषशेषितेत्याशयेनाह। भव्यप्रतीताविति। व्री-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिकपालादेर्हि साक्षात्परंपरया वा यागादिक्रिया... त्तिद्वारा कार्यार्थत्वमस्तीति क्रियाप्रधाने कर्मकाण्डे... तं भव्यार्थमुक्तमिति न्यायमूलं तद्भाष्यं तद्विषय... पपन्नमत्र तु तन्न्यायाभावान्न तद्भाष्यं प्रवर्त्तत इत्य... येनाह। न तथेति। अत्र ब्रह्मकाण्डे अद्वैतब्रह्मणः... पि कथमपि कार्ये उपयोगाभावात्प्रत्युत ब्रह्मसा... त्कार एव श्रवणादेर्भव्यस्य पर्य्यवसानमिति तत्... वैपरीत्यमेव युक्तमिति भावः ॥ ४८३ ॥

भव्यप्रतीतौ न हि कश्चिदर्थो
भूतप्रतीतौ पुनरस्ति मुक्तिः ॥
श्रोतव्य इत्यादि ततो विधानं
भूतोपदेशानुगुणं समस्तम् ॥ ४८४ ॥

नन्वात्मप्रतीतेर्भव्यतया तदर्थश्रवणादेः कथं भूत... त्वमित्याशङ्क्य तत्प्रतीतेरपि तदभिव्यञ्जकतया... त्वात्तद्धेतोरपि तदर्थत्वमेवेत्याशयेन भूतप्रतीतौ... भव्यवादा इत्युक्तमेव विवृणोति। भव्यप्रतीता... ति। अर्थो मुख्यप्रयोजनम्। फलितमाह।... इति। ततः श्रवणादेः स्वतो मुख्यप्रयोजनत्वाद... व्य इत्यादिरूपं समस्तं विधानं सिद्धाद्वैतब्रह्मोपदे... गुणमिति तत्तच्छेपमित्यर्थः ॥ ४८४ ॥

आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-
र्भव्यप्रतीतिजनकैः सह भूतवादाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संबन्धिनो विधिवचःसु तथात्र सर्वे
भव्यार्पणाः परिबृढप्रतिपादकेन ॥ ४८५ ॥

एवं भव्यानां भूतानां च काण्डद्वयेऽपि परस्परं विपरीतं शेषशेषित्वमुपपाद्य तद्वाक्ययोस्तु वायुक्षेपिष्ठत्वादेर्भव्यार्थत्वाभावेन तदभावमाशङ्क्य तदुपपादयति। आदायेति। विधिवचस्सु विधिप्रकरणेषु ये भूतवादा भूतार्था अर्थवादादयस्ते मुख्यगुणलाक्षणिकवृत्तीरादाय मुख्यादन्यतमया वृत्त्या स्वर्गाद्यादित्यादिसादृश्यप्राशस्त्यादि बोधयन्तो भव्यप्रतीतिजनकैरनुष्ठेयार्थविधायकैः सह सम्बन्धिनो भवन्ति सम्बध्यन्ते यथा तथात्र काण्डे भव्यार्पणा भव्यबोधकाः श्रोतव्यादिशब्दाः परिबृढस्य प्रभोर्ब्रह्मणः प्रतिपादकेन वाक्येन सम्बन्धिन इत्यनुषङ्गः ॥ ४८५ ॥

सिद्धार्थवादिवचनेषु न गौणतादि-
दोषाय कर्मपरवाक्यगतेषु यद्वत् ॥
कार्यार्थवादिवचनेषु न गौणतादि-
दोषस्तथोपनिषदीति समानमेतत् ॥ ४८६ ॥

एवं ब्रह्मादिशब्दानां वेदान्तगतभव्यार्थशब्देभ्यः प्राधान्यमुपपाद्य तत्फलं गुणे त्वन्याय्यकल्पनेतिन्यायेन ब्रह्मादिपदानुगुण्येनैव भव्यं नेयमिति सदृष्टान्तमाह। सिद्धार्थवादीति। कर्मपरवाक्यानि विद्व्युद्देशास्तद्गतानि तदेकवाक्यतामापन्नानि यानि सि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वार्थबोधकपदानि तेष्वित्यर्थः । न गौणतादिर्दोषं
ति । तेषां गुणभूतार्थत्वाद् गुणवचने च प्रधानानुगुं
गौणतादिर्न दोषायेत्यर्थः । दार्ष्टान्तिकमाह । कां
वादीति । ब्रह्माप्येति ब्रह्मैव भवतीत्यादिवचनं
त्यर्थः । एतद्‌ गुणेऽन्याय्यवृत्तिकल्पनम ॥ ४८६ ॥

मानेन मेयावगतिश्च युक्ता
धर्मस्य जाड्याद्विधिनिष्ठकाण्डे ॥
मेयेन मानावगतिस्तु युक्ता
वेदान्तवाक्येष्वजड़ं हि मेयम् ॥ ४८७ ॥

किं च यथा मानमेयभावः काण्डद्वये विपरीत
भूतभव्ययोर्गुणप्रधानभाववैपरीत्यमपि न्याय्यमेवे
शयेनाह । मानेनेति । श्रुत्यादिप्रमाणेनेत्यर्थः
यस्य धर्मस्यावगतिः । चोऽवधारणे । मानेन सम्भ
ते । तत्र हेतुः । धर्मस्य जाड्यादिति । मेयेन स्वप्रक
चैतन्येनैव वेदान्तप्रतिपाद्येन मानस्य वेदान्तज
वृत्त्यादेरवगतिर्युक्ता चैतन्येनैव हि जड़स्यावगति
दौ दृष्टेत्यर्थः । मेयान्मानावगतौ हेतुं मनसि निधा
वेदान्तेति । यद्यपि स्वाविद्यानिवृत्तौ वेदान्तं तज्ज
वृत्तिं चापेक्षते ब्रह्म, तथापि स्वसिद्धौ नापेक्षते अ
वद्धस्वप्रकाशसाक्षिणस्तदनपेक्षत्वाज्जड़ं च सर्वं
स्यामिति वेदान्तादर्यपि तेनैवावगन्तव्यमित्यर्थः ॥ ४८

कर्मप्रधानेऽतिगते च काण्डे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यत्वमाख्यातपदप्रयुक्तम् ॥
ब्रह्मप्रधाने श्रुतिमस्तकेऽस्मि-
न्नामप्रधानं वचनं समस्तम् ॥ ४८८ ॥

नन्वस्तिर्भवन्तीपरः प्रयोक्तव्य इतिकात्यायनवचनात् क्रियापदनिमित्तैव पदानामेकवाक्यता, वेदान्ते च न क्रियापदं भवद्भिरिष्यते, अतो वेदान्तवाक्येष्वजडं हि मेयमित्यनुपपन्नमित्याद्याशङ्कां निराकृतामपि विस्मरणशीलं प्रति पुनर्निराकरोति । कर्मप्रधान इति । अतिगते अतिक्रान्ते । नामप्रधानं ब्रह्मात्मादि सुबन्तपदप्रधानम् । कात्यायनवाक्यं हि वृद्धव्यवहारमूलम्, वृद्धाश्च यत्र क्रियां तत्संसृष्टं वा प्रतिपिपादयिषन्ति तत्रैव चाख्यातपदं प्रयुञ्जते यत्र तु नैवं किं तु संबन्धिविशेषं प्रकारविशेषं वा विजिज्ञापयिषन्ति तत्र देवदत्तस्येदं गृहं कुसुमितं वनमिति च तेन विनैव प्रयुञ्जतेऽतः कर्मकाण्डस्य क्रियाप्राधान्यात्तत्रैव वाक्यत्वं क्रियापदनिमित्तमिति कात्यायनस्याप्याशयः । ब्राह्मे काण्डे तु नामार्थप्राधान्यान्नामपदमेवैकवाक्यतायां निमित्तमित्याशयः ॥ ४८८ ॥

कार्यप्रधानमखिलं च पदं सुबन्त-
माख्यातमेव फलतः खलु कर्मकाण्डे ॥
तद्वत्तिङन्तमपि वेदशिरःसु सर्वं
नामैव तद्धि परिनिष्ठितवस्तुनिष्ठम् ॥ ४८९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु वेदान्तेऽप्यस्त्यादिक्रियाश्रवणात्सर्वत्र क्रि[illegible]दनिमित्तमेव वाक्यत्वमस्त्वित्याशङ्क्य यथा कर्म[illegible] सुबन्तमपि पदं भव्यार्थं फलत आख्यातव्यवहा[illegible]मेव भवति एवमत्र तिङन्तमपि फलतो नाम[illegible] साध्यार्थक्रियापदाभावान्नामप्रधानमेव वेदान्त[illegible]मित्याशयेनाह । कार्यप्रधानमिति । अनुष्ठेयार्थ[illegible] सुबन्तं सुबन्तमप्याख्यातम् आख्यातव्यवहा[illegible] फलतोऽनुष्ठेयार्थप्रतीतेः । तिङन्तं तिङन्ततया प्र[illegible]मानम् । नाम नामव्यवहारार्हम् । अत्र हेतुस्तद्धीति[illegible]

> आग्नेयमाश्विनमथैन्द्रमितीदृशं हि
> सर्वं सुबन्तमपि भव्यपरं प्रसिद्धम् ॥
> साऽस्येति तद्धितसमन्वितसन्निधाने
> नामैव तद्भवति यद्भवतीति तद्वत् ॥ १९०॥

किं नाम पदं भव्यार्थं सदाख्यातं दृष्टान्ते विव[illegible]मितिजिज्ञासायामाह । आग्नेयमिति । अग्निर्दे[illegible]ऽस्येत्याग्नेयः पुरोडाशः । एवमाश्विनादावपि । [illegible] च सुबन्तेनापि तेन द्रव्यदेवतासंबन्धद्वाराऽनुष्ठेय[illegible]तीतेस्तदाख्यातवद्भव्यपरमित्यर्थः । इदानीमाख्या[illegible]स्यापि नामत्वे दृष्टान्तमाह । सास्येतीति । सास्य दे[illegible] सूत्रेण विहितो यस्तद्धितस्तत्समन्वितं यदाग्नेया[illegible] तत्सन्निधाने भवतीति यत्पदं तन्नामैव भवति । तद[illegible]न्यव्यापारत्वे नाननुष्ठेयत्वादिति यद्वत्तद्वदित्यर्थः [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्त्यस्म्यसीति च तिङन्तपदानि सन्ति
वेदान्तवाक्यनिलयानि तथापि तानि ॥
नाख्यातशब्दनिजशक्तिधुरं वहेयु-
रस्तित्वमात्रविषया हि निषक्तिरेषाम् ॥ ४९१ ॥

तद्वदिति सूचितं दार्ष्टान्तिकमाह । अस्त्यस्म्यसीति । आख्यातशब्दस्य या निजा शक्तिस्तस्या धुरं भव्यार्थप्रकाशं न वहेयुरित्यर्थः । कुतो न वहेयुस्तत्राह । अस्तित्वमात्रेति । अस्तिप्रकृत्यर्थमात्रनिष्ठा ह्येषां पदानां निषक्तिः संबन्ध इत्यर्थः ॥ ४९१ ॥

पूर्वापरीभूतपदार्थनिष्ठ-
माख्यातमाख्यातविदो वदन्ति ॥
कूटस्थसत्तावगतिप्रधान-
माख्यातवत्साधु तिङन्तमाहुः ॥ ४९२ ॥

कस्तर्हि आख्यातपदस्य मुख्योऽर्थो यस्य नाख्यातशब्दनिजशक्तिधुरं वहेयुरित्यनेनास्त्यादिशब्दात्प्रतीतिर्निषिध्यत इत्याकाङ्क्षायामाह । पूर्वापरीभूतेति । गच्छति पचतीत्यादिना हि गम्यादिधात्वर्थः पूर्वापरीभूतानेकक्षणनिचयरूपः प्रतीयत इति स एवाख्यातान्तपदस्य मुख्योऽर्थ इत्याख्यातविदो वैयाकरणा वदन्तीत्यर्थः । एवं चात्मस्वरूपसत्तापर्य्यवसाय्यस्त्याद्यपि आख्यातवत्साधु शब्ददोषरहितं तिङन्तमात्रं भवति न तु पचत्यादिरिव मुख्यार्थमित्याह । कूटस्थसत्तेति ॥ ४९२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्तित्ववस्तुविषयोपनिषन्निषक्ति-
राश्रीयते यदि तदा प्रमितं प्रमेयम्॥
तस्यास्तवापतति मानमितत्वमेव
ह्यस्तित्वमात्मगतमभ्युपयन्ति धीराः ॥४९३॥

कूटस्थसत्तावगतिमात्रनिष्ठमस्त्यादिसमभिव्याहृत-
पि वेदान्तवाक्यमित्युक्तमाक्षिपति । अस्तित्वेति । अ-
स्तित्ववस्तु सत्ता, वेदान्तानां तन्निष्ठत्वे मानान्तरप्र-
तप्रमेयता तत्सिद्धानुवादता तव प्रसज्येत। कुतस्तत्राह
मानमितत्वेति । मानविषयत्वमेव हि सर्वत्रास्ति-
मिति धीरा धृष्टाः प्राभाकरा अङ्गीकुर्वन्तीत्यर्थः। आ-
त्मगतमिति तु प्रस्तुताभिप्रायम् ॥ ४९३ ॥

अथ वा मितियोग्यतास्तिता
निरवद्यास्तु समस्तवस्तुषु ॥
परमात्मनि तत्प्रतीतये
सकलं वेदशिरः प्रवर्त्तताम् ॥ ४९४ ॥

ननु मानविषयत्वस्यास्तित्वे सुषुप्त्यादावात्मादे-
स्त्वापत्तिरित्यरुचेराह । अथ वेति । निरवद्या निर्दु-
सुषुप्त्याद्यावात्मादेः सत्त्वोपपत्तेरित्यर्थः । एवं चास्त-
निष्ठत्वे वेदान्तानां परमात्मनि तदनुवादायैव स-
वेदशिरः प्रवर्त्ततां प्रवर्त्तेत तच्चानुपपन्नम् । अप्राम-
प्रसङ्गादस्त्यर्थनिष्ठा वा तेषां मा भवत्विति क्रियार्थ-
वास्त्वित्याशयः ॥ ४९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदसुन्दरमात्मसंविदो-
र्पि सत्ता भवताभ्युपेयते ॥
न तयोर्विषयत्वहीनयो-
र्मितियोग्यत्वमितित्वसंभवः ॥ ४९५ ॥

सिद्धान्ती तद् दूषयति । तदसुन्दरमिति । एवं वदता प्राभाकरेणाप्यात्मनस्तत्समवायिज्ञानस्य च सत्ताभ्युपेयेतैव । सैवं सति न सिद्धेत्तयोरविषयत्वात् । अत एव तद्योग्यताभावाज्ज्ञानस्य स्वप्रकाशत्वादात्मनस्तदाश्रयतया त्वया भानस्याभ्युपेयत्वादित्यर्थः ॥ ४९५ ॥

क्षितिजलदहनानिलाम्बराणां
जनिमनुमाय विभक्तताबलेन ॥
जगति हि जनिमद्विभज्यमानं
घटघटिकादि समीक्ष्यते समस्तम् ॥ ४९६ ॥

नन्विदं समन्वयनिरूपणं निरालम्बनं कर्तुं कथं शक्यम्, न च ब्रह्मैवालम्बनमिति वाच्यम्, तस्याप्रसिद्धत्वात्, न हि गवादिवत्तत्प्रसिद्धमस्ति, न च समन्वयनिरूपणात्प्राक् शब्दतोऽपि तत्सिद्धम्, न चासंभावितं प्रमाणेन निश्चेतुं शक्यम्, तदुक्तम्, संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हत इति, न च जगत्कार्यतल्लिङ्गानुमानात्तत्सिद्धिः, समन्वयनिरूपणवैयर्थ्यात्, महापृथिव्यादेः कार्यत्वासिद्धेश्चेति । मैवम् । प्रपञ्चाख्यकार्यलिङ्गत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्कसंभावितचेतनकारणस्यैवाद्वयनित्यशुद्धज्ञानानन्द स्वरूपेण वेदान्तैः प्रतिपाद्यमानत्वान्नोक्तदोष इत शयेन जन्माद्यस्य यत इति सूत्रन्यायं व्युत्पादयितुमु मते,तत्र श्रोतृजिज्ञासानुरोधेन साक्षात्पुरुषार्थतया प्रत्यगभिन्ने ब्रह्मणि तत्त्वमादिवाक्यार्थे न्यायतो नि रूपिते तस्यैव तदर्थं तत्पदवाच्यतल्लक्ष्यस्वरूपज्ञानजि ज्ञासानुसारेण व्युत्क्रममाश्रित्य द्वितीयसूत्रन्यायमव तारयन् प्रथमं चेतनं जगत्कारणमनुमातुं कार्यत्वलि ङ्गस्य वियदादिपक्षधर्मत्वसिद्ध्यर्थं वियदादेः कार्यत्वं साधयति । क्षितिजलदहनेति। जनिमुत्पत्तिम्। विभक्त ताया भिन्नत्वस्य बलं जनिव्याप्तिपक्षधर्मत्वयोर्ज्ञानं न। तत्र तस्य पक्षधर्मत्वं सिद्धमिति व्याप्तिं दर्शयति जगतीति।हिर्हेतौ। यस्माज्जगति विभज्यमानं घटपट कादि समस्तं जनिमत्समीक्ष्यते ततो विभक्तताबलेन क्षि तिजलादीनां जनिमनुमाय, तर्कयन्त्यधिकारि श्चेतनकारणमित्यग्रिमेण संबन्धः। क्षित्यादिमहाभूता नि जायन्ते विभक्तत्वाद् घटादिवत् । ननु ब्रह्मणि व्यभिचारस्तस्यापि प्रपञ्चाद्विभक्तत्वात् । न च पदा र्थतो विभक्तत्वं हेतुस्तत्र नास्तीति वाच्यम्। पक्षदृष्टान्त योरपि सिद्धान्ते तदभावादिति चेन्न । स्वसमानक कविभक्तत्वस्य हेतुत्वात्। प्रपञ्चे तस्य सत्त्वाद् ब्रह्मणि तन्नास्तीति नोक्तदोषः । न चैवमप्यविद्यादौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चार इति वाच्यम् । साध्यस्यापि तत्र सत्त्वादध्यस्तता हि जन्म वियदादेः साध्यम्, न तु प्रागसतः सत्तायोगित्वम्, तस्य क्वाप्यभावात् । न चाध्यस्तत्वमपि घटादौ परस्यासंप्रतिपन्नमिति वाच्यम्, स्वार्थानुमानस्यैवमप्यविरोधात्प्रसिद्धभ्रमस्य परं प्रति दृष्टान्तत्वसंभवाच्च । न चैवं वियदादेरप्यज्ञानवदध्यस्तत्वसंभवेन तच्चेतनकारणानुमानं वक्ष्यमाणं न स्यादिति वाच्यम् । चेतनाधिष्ठानत्वस्यैव वक्ष्यमाणप्रतिज्ञयाभिप्रेतत्वात् । न चाप्रयोजकतास्य हेतोरिति वाच्यम् । श्रुत्यवधृताद्वितीयत्वस्य विपक्षे बाधप्रसङ्गात् । अथ वा वियदादिमहाभूतानि भूतत्वे सत्यनादीनि न भवन्ति, विभक्तत्वाद् घटादिवत् । इदं च साध्यं ब्रह्मण्यज्ञाने च विशेषणाभावकृतमस्त्येव, परप्रसिद्धं च निषेध्यमिति न कोऽपि दोषः । विपक्षे बाधकं चोक्तमेवात्राप्यनुसन्धेयमिति भावः ॥ ४१६ ॥

क्षितिजलदहनेषु तत्प्रदेशाज्
जनिसहितानुपलभ्य तद्बलेन ॥
क्षितिजलदहनत्वलिङ्गमार्गा-
दपि जनिमेष्वनुमाय तर्कयन्ति ॥ ४१७ ॥

किं च महापृथिवी जन्मवती क्षितित्वात् खातपूरितक्षित्येकदेशवत् । एवं महज्जलं जन्मवज्जलत्वाच्चन्द्रकान्तान्निःसृतजलवत् । एवं मथनादुद्भूतदहनादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टान्तेन महतस्तेजःप्रभृतेरपि तदनुमेयमित्याह
तिजलदहनेष्विति । स्पष्टम् ॥ ४९७ ॥

जनिमदभवदेतच्चेतनादेव हेतो-
र्घटवदिति पुनस्तत्कारणे चेतनत्वम् ॥
अनुमिमत उदर्के कार्यतालिङ्गतोऽमी
जगति हि परिदृष्टं चेतनादेव कार्यम् ॥

एवं कार्यत्वहेतोः पक्षधर्मत्वे सिद्धे तद्धेतुकं
न्तीति सूचितं चेतनकारणानुमानं दर्शयति ।
दिति । एतन्महापृथिव्यादीति पक्षनिर्देशः ।
दिति तत्र सिद्धे हेतुनिर्देशः । पुनःशब्दः
विशेषद्योती । तमेव विशेषमाह । चेतनादेवेति ।
तमुपादानाभिन्नचेतनप्रभवं कार्यत्वात्सम्मतवद्
टादेरपि सिद्धान्ते तथात्वान्न साध्यवैकल्यम् ।
दिकं वा परं प्रति दृष्टान्तोऽस्त्विति तत्कारणे
तस्य पृथिव्यादेश्चेतनकारणकत्वम् । उदर्के
सिद्ध्यनन्तरं मुमुक्षवोऽनुमिमत इत्यर्थः । तत्रापि
दौ कुलालादिजन्ये उक्तसाध्यव्याप्तिरस्तीत्याशयं
जगतीति । हिः प्रसिद्धौ कार्यलिङ्गमनुमानमपि
नकारणस्वरूपनिर्धारणे न निरपेक्षं समर्थमपि
तस्वरूपं प्रसाधयन्त्याः श्रुतेरुक्तविधया चेतन
परस्थापयदर्थं सम्भावयतीति तत्र तर्क एवेति तर्कं
सूचितम् ॥ ४९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगदुदयनिमित्तं चेतनं किं नु नाना
किमु भवतु तदेकं सर्ववित् सर्वशक्ति ॥
इति भवति तु पश्चात् कारणे चेतनेऽस्मि-
न्ननवगतिनिमित्तः संशयो दुर्निवारः ॥ ४११ ॥

नन्वनुमानाच्चेतनकारणसिद्धौ वैशेषिकादिमत इव तदेव सर्वज्ञसाधकं तत्र प्रमाणमस्तु किं तस्य तर्कताभ्युपगमेन ततश्च वेदान्तवैयर्थ्यमित्याशङ्क्य यद्यप्युक्तविधया तेन सामान्यतश्चेतनरूपं किं चिज्जगतो निदानं सिद्ध्यति तथापि तस्मिन्नेकत्वनानात्वसंशयानिवृत्तेस्तत्सर्ववित्सर्वशक्ति किं वा विपरीतमित्यादिसंशयो न निवर्त्तेत तन्निदानस्य तदेकत्वाज्ञानस्यानिवर्त्तितत्वात्, एवं जगदुपादानस्य निर्विशेषत्वादिसिद्धिरपि ततो न स्यादिति तर्क एव तदित्याशयेनाह। जगदुदयेति। जगत्कारणे चेतने अनुमानात्सिद्धेऽपि तस्मिन्पश्चात्तत्स्वरूपानवगतिनिमित्त इतीत्थं संशयो दुर्निवारो भवत्येवेत्युक्तं संशयप्रकारमभिनयेनाह। जगदुदयनिमित्तमिति। यदि तदेकं भवेत्तदा फलितं सिद्धान्तलाभमाह। सर्ववित्सर्वशक्तीति। ननूक्तानुमानादेव लाघवसहकृतात्कारणैकत्वसिद्धेस्तत्सर्वज्ञं सर्वशक्ति चेति सिद्ध्यतीति कथमनुमानानन्तरं तदेकत्वादिसंशय इति चेत्। सत्यम्। यद्यनुमानात्तदेकत्वं निश्चीयेत स न सम्भवति लोके च विचित्रप्रासादादेर्बहु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्तृकत्वदर्शनेन तदनुसारिलिङ्गेन तद्विपरीता
सम्भवात्। सम्भवल्लघुविषये हि लाघवतर्को
त्तैत। न च लोके कर्तृणामसर्वज्ञासर्वशक्तिक
चित्रकार्य एकस्य कर्तुरसम्भवेऽपि सर्वज्ञेश्वरस
म्भवाल्लाघवावकाशोऽस्तीति वाच्यम्। एवं
न्याश्रयात्कथमपि लाघवप्रवृत्तेः प्राक् तस्मि
त्वादिसम्भावनातुषस्याप्यभावात्। किं च
यदेकत्वसंख्या तर्हि तज्ज्ञानात्वेऽपि सा सिद्ध
कुतस्ततः सर्वज्ञत्वादिसिद्धिः। यदि च कर्त्रे
कता तर्ह्यस्मादनुमानात्प्राक् क्षितिजलादीनां क
स्तत्प्रतियोगिकभेदस्यानुपस्थितस्याभावो नानुमि
षयः स्यात्। न हि प्रतियोगिज्ञानं विना भेद
वो वा सिद्ध्येत्। तस्मादनुमानात्कर्त्रैकत्वानिश्चय
एवेति सर्वज्ञत्वादिसिद्धिः कथमपि ततो न
भावः॥ ४११॥

श्रुतिवचनविशेषाच्चेतने कारणेऽस्मि
यत इति निरवद्यादेकताधीरथागात्
प्रकृतिरिति च तस्मिन् कारणे पञ्चमी
जनयति दृढबुद्धिं तद्विधानादिहैव॥

कथं तर्हि भवन्मतेऽपि कारणैकत्वं सिद्ध्ये
यतो वा इमानि भूतानि जायन्ते येन जाता
न्ति यत्प्रयन्त्यभिसंविशन्तीति जगत्कारणवाक्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त इति यच्छब्दैकवचनादनुमानसिद्धकारणानुवादगता-
त्तत्सिद्धिरित्यभिप्रेत्याह । श्रुतिवचनेति । अथोक्तानु-
मानानन्तरं यत इति श्रुतिवचनविशेषादेकवचनरूपा-
न्निरवद्यादनुमानोक्तशङ्काकलङ्कशून्यादस्मिन् चेतने ज-
गत्कारण एकताधीरगादागच्छेत् । यद्यपि यत इति ब-
हुत्वसाधारणम् तथापि येन जातानीत्युपरितनैकव-
चनेन तस्याप्येकवचनत्वं निर्णीतमिति भावः । नन्व-
नुमानसिद्धचेतनकारणानुवादियच्छब्दैकवचनाज्जगत्क-
र्त्तुरेकत्वं सिद्धयेन्न तु भवदभिमतं तस्य तदुपादा-
नैक्यमपीत्याशङ्क्याह । प्रकृतिरिति । चकारेणैकताधि-
यं समुच्चिनोति । तस्मिन्कारणे इयं पञ्चमी प्रकृतिरि-
ति च दृढबुद्धिं जनयतीति संबन्धः । तत्र हेतुमाह ।
तद्विधानादिति । जनिकर्त्तुः प्रकृतिरितिसूत्रेणेह प्रकृ-
तित्वे पञ्चमीविधानादेवेत्यर्थः । यद्यपि पुत्रात्प्रमोदो
जायत इत्यादिप्रयोगानुरोधेन निमित्तोपादानसाधार-
णीह प्रकृतिः तथापि प्रकृतेऽपेक्षितस्य जगदुपादानत्व-
स्य ततः प्रतीतिसंभवान्न कश्चिद्दोषः । प्रत्युतापेक्षित-
निमित्तत्वमपि ततः सिद्धयतीति गुण एव । श्रुत्यन्तरे
च तदैक्षत बहु स्यां प्रजायेयेत्येकस्यैव चेतनस्योभय-
विधं कारणत्वं स्पष्टं श्रूयते । ननूपादानस्य नानात्व-
नियमादुपादानकर्त्त्रोश्च तथात्वादेतद्बाधितमिति चेत् ।
न तावदुपादानत्वं नानात्वनियतं रूपोपादाने घटा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दौ व्यभिचारात् । न च द्रव्योपादानेऽयं नियमः, ए-
स्या एव रज्ज्वाः सर्पाद्यधिष्ठानत्वात् । रज्जुसर्पादे-
व वियदादेरप्यज्ञातब्रह्मविवर्त्तत्वेनाविशेषात् । एक-
कस्मादात्मन उपादानाद्द्विविधस्वप्नप्रपञ्चोदयादपि न
स्ति सिद्धान्तेऽयं नियमः । अत एवोपादानकर्तृत्वे-
ऽपि न नियतः । किं च सर्वत्र कार्ये चैतन्यस्यैक-
कुलालादिशरीरावच्छेदेन निमित्तत्वं मृदाद्यवच्छेदे-
पादानत्वमिति तद्भेदे नास्त्येवोदाहरणं परमतेऽपि
देवदत्तो जानातीच्छतीत्यादिप्रतीत्यनुरोधेन ज्ञानादि-
पादानस्यैव कर्त्तृत्वमेवमीश्वरात्मघटसंयोग एक-
तदुभयमिति नैव पराप्रसिद्धमस्माभिरुच्यत इति अ-
त्मप्रकृतिरेका तदधिष्ठात्री चेति सिद्धम ॥ ५०० ॥

एकत्वमेकवचनादवगम्यमानं
यच्छब्दवाच्यनिलयं यत इत्यमुष्मिन् ॥
वाक्ये जगत्प्रकृतिगामितया न विद्मः
संख्यां विभक्त्यभिहिते वचनं हि नाह ॥

एका प्रकृतिरित्येतदाक्षिपति । एकत्वमिति । यत
त्यमुष्मिन्वाक्ये एकवचनादवगम्यमानमेकत्वं यच्छ-
वाच्यनिलयं यच्छब्दप्रकृत्यर्थमात्राश्रयं जगत्प्रकृति-
मितया विभक्त्यर्थजगत्प्रकृतित्वविशिष्टाश्रयतया न
द्मः । कुतः वचनं विभक्त्यभिहिते स्वाभिधेयां सं-
नाह न वदेद्यत इत्येकवचनस्य पञ्चमीविभक्तिप्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वप्रकृतित्वविशिष्टे स्वाभिधेयसंख्यां वक्तुमसामर्थ्या-
देका प्रकृतिरिति धीः कुतो भवेदिति भावः ॥ ५०१ ॥

न हि विभक्त्यभिधेयपदार्थगं
वचनमाह निजं विषयं क्वचित् ॥
वचनवाच्यगतं न वदन्ति च
स्वमभिधेयमशेषविभक्तयः ॥ ५०२ ॥

वचनस्य विभक्त्यर्थविशिष्टस्वार्थाभिधायित्वं न क्वापि दृष्टमिति न प्रकृतिरेकेति धीः संभवतीत्याह । न हि विभक्तीति । अस्तु तर्हि विभक्तेर्वचनार्थविशिष्टान्वित-स्वार्थजगत्कारणत्वाभिधायित्वं तथा चैका प्रकृतिरिति धीर्युक्तैवेत्याशङ्क्याह । वचनवाच्येति । एवं चैकवचनस्य यद्वाच्यमेकत्वं तद्विशिष्टगतं विभक्त्यर्थप्रकृतित्वं प्रस्तुते न सिद्ध्येदित्यर्थः ॥ ५०२ ॥

प्रातिपदिकार्थगतमेव वचनानि
स्वंस्वमभिधेयमभिधातुमलमर्थम् ॥
प्रातिपदिकार्थगतमेव निजमर्थं
वक्ति च विभक्तिरपि नेह वचनार्थे ॥ ५०३ ॥

ननु किमिति विभक्तिवचनाभ्यां परस्परार्थान्वित-स्वार्थाभिधानं न कर्त्तव्यमित्याकाङ्क्षायामाह । प्रातिपदिकार्थेति । प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्व-नियमस्य व्युत्पत्तिसिद्धत्वाद्वचनविभक्त्योः प्रकृत्यर्थान्वितस्वार्थाभिधान एव सामर्थ्यं न तु वचनस्य विभ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यर्थान्वितार्थाभिधानेऽपि । एवं विभक्तेरपि न ज्ञा नार्थान्विताभिधानेऽपि । तयोः प्रत्ययत्वाविशेषा भावः ॥ ५०३ ॥

पशुनेति पदे तृतीयया
करणत्वं हि पशोर्निवेद्यते ॥
वचनेन पशोरिहैकता
न पुनः सा करणस्य कथ्यते ॥ ५०४ ॥

ननु पशुना यजेतेति वाक्यात्पशुरेकः करणमिति प्रतीयते तद्वदेका जगत्प्रकृतिरिति शाब्दी प्रतीतिः किमिति न भवेदित्याशङ्क्य दृष्टान्तासंमत्योत्तरमाह पशुनेतीति । पशुनेति पदे या तृतीया तयेत्यर्थः पशुनेतिपदे । सा एकता । करणस्य तृतीयार्थकर विशिष्टस्य । इदमपि प्रागुक्तप्रत्ययाश्रितन्यायेनैवेति द्रष्टव्यम् ॥ ५०४ ॥

अनुपपत्तिबलेन विधेस्तयोः
करणतैकतयोरवगम्यते ॥
करणतैकपशोरिति संगति-
र्न घटते हि विधिर्विरहय्य ताम् ॥ ५०

कथं तर्हि पशुरेकः करणमिति धीरित्याशङ्क्य अनुपपत्तीति । पशुविशिष्टयागविध्यनुपपत्तिबलेन र्थः । विधेरनुपपत्तिबलेन तयोः करणतैकतयोः तैकपशोरित्येवंरूपेण संगतिरवगम्यते हि यस्मा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतिं विरहय्य विधिर्न घटते तस्माद्विधेरनुपपत्तिबले-नेत्यधस्तनेन संबन्धः ॥ ५०५ ॥

उपादानतः संख्यया संगतिः स्या-
दवच्छेदकत्वेन संख्यानिवेशात् ॥
पशोरेतयोस्तेन मार्गेण कार्ये
निवेशोपपत्तेरुपादानमानात् ॥ ५०६ ॥

ननु नियोगस्य तां विना कानुपपत्तिरित्याकाङ्क्षायां विध्यनुपपत्तिनिमित्तां तदुभयसंगतिमुपपादयति । उ-पादानत इति । विध्यनुपपत्तिबलात्पशोः संख्यया सं-गतिः स्यात्तत्संगतिविशेषमेव दर्शयन्सामर्थ्यरूपलिङ्ग-सिद्धं संख्यास्वभावं तत्र हेतुत्वेनाह । अवच्छेदकत्वेन संख्यानिवेशादिति । स्वाश्रयद्रव्यावच्छेदकत्वेन हि सर्वत्र संख्या द्रव्ये निविशते नात्र सा पशोरवच्छेदक-त्वेनान्वेतीत्यर्थः । ततः किं तत्राह । एतयोरिति । क-रणत्वैकत्वयोरित्यर्थः । तेन पश्वन्वयेन । मार्गेण द्वा-रेण । कार्ये पशुयागकार्ये । निवेशोपपत्तेरित्यनन्तरं प-शुरेकः करणमिति धीरुपपन्नेति शेषः । एतदुक्तं भव-ति । पशुना यजेतेत्यत्र पशुप्रातिपदिकेन पशुर्विभक्ति-वचनाभ्यां करणत्वमेकत्वं चावगम्यते तेषां च विधि-नैव संबन्धः सर्वस्यापि तत्प्रकरणेऽवगतस्य तेनैवान्व-यात्, संख्या चोपादेयविशेषणतया विवक्षिता तत्र सा-क्षात्तेषां नियोगान्वयानुपपत्तेर्नियोगस्य च स्वविषय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धात्वर्थकरणमन्तरेण कार्यत्वावगमापर्यवसानात्तद्धा-
त्वर्थकरणतया योजयति । करणीभूतपशोश्चानेक-
दकसंख्याविशेषमन्तरेण विधेः पुनरपि सानुपपत्ते-
दवस्थेति तत्सामर्थ्यानुसारेण करणपशोरवच्छेदक-
न संख्यां गृह्णातीति सिद्धं वचनविभक्त्यर्थयो-
दानमानात्पशुना परस्परं च संसर्गः पशुत्वकरणत्व-
कार्येण संबन्ध इति ॥ ५०६ ॥

न चैवं विधिः कश्चिदत्रेति न स्या-
दुपादानतः संगतिर्यत्पदार्थे ॥
विभक्त्यर्थसंख्यार्थयोर्नेह कश्चि-
द्यतो वा इमानीति वाक्ये विधिर्नः ॥५

नन्वेवं यतो वा इमानीति वाक्येऽपि वचनवि-
र्थयोरेवमेवान्वयोऽस्त्वित्याशङ्क्य नैवं युक्तम् अत्र
धेरभावादित्याह । न चैवमिति । यथा पशुनेति
क्ये विधिरेवमत्र यत इत्यादिवाक्ये कश्चिदुत्प-
नियोगादिविषयः कोऽपि विधिर्न, भावार्थवि-
तस्य शुद्धसिद्धार्थेऽसंभवादित्यर्थः । विद्धसंभवे
तमाह । न स्यादित्यादिना । संख्यात्र तद्वाक्य-
चनम् । नन्वत्रापि तद्विजिज्ञासस्वेति विधिः
इत्याशङ्क्य ब्रह्मस्वरूपवाक्यात्तस्यावान्तरवाक्यभे-
तदाकाङ्क्षया स्वरूपवाक्यस्थपदार्थान्वयो युक्त इ-
येनाह । नेह कश्चिदिति । स्वस्याव्युत्थितत्वबो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न इति शिष्यस्योक्तिः । तस्मादेतस्माद्वाक्यादेका प्रकृतिरिति धीर्न संभवतीति भावः ॥ ५०७ ॥

अवितथमिदमेवमेतदस्मि-
न्न खलु विधेर्वचनं पठन्ति वाक्ये ॥
यत इति घटते तथापि योगो
वचनविभक्तिनिगद्ययोरिहापि ॥ ५०८ ॥

इदानीं सिद्धान्ती पश्वेकत्वकरणत्वयोरिव प्रकृतेऽपि यत्पदार्थे वचनविभक्त्यर्थान्वयो युज्यते इति तदुक्तं विद्वद्भावमङ्गीकुर्वन्नाह । अवितथमिति । सत्यमित्यर्थः। पश्वेकत्वकरणत्वयोर्विधिसामर्थ्यादेव परस्परं संसर्ग इत्येतदिदमा परामृशति । यत इति । वाक्ये विद्वद्भाव इत्येतदप्यङ्गीकरोति । एवमेतदिति । एतदप्यवितथमित्यर्थः । अङ्गीकृतमेतदेवाह । अस्मिन्निति । यत इत्यस्मिन्वाक्य इति संबन्धः । कथं तर्हि तयोरन्वयः स्यादित्याशङ्क्याह । घटत इति । यद्यपीह विधेर्वचनं न पठन्ति तथापि वचनविभक्तिनिगद्ययोर्वाच्ययोरेकत्वप्रकृतित्वयोरिहापि योगो घटत इति संबन्धः॥५०८॥

एकत्वमेकवचनेन समर्पितं य-
च्छब्दवाच्यनिलयं यत इत्यमुष्मिन् ॥
पञ्चम्युपात्तमपि यत्प्रकृतित्वमस्मिन्
संगच्छते तदुभयं पशुवस्तुनीव ॥ ५०९ ॥

ननु प्रतिज्ञामात्रेण न वस्तुसिद्धिः, न चात्र तयोर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वयप्रापकं हेतुं कं चित्पश्याम इत्याशङ्क्याह।
त्वमिति। यत इत्यमुष्मिन्वाक्य एकवचनेन यद
वाच्यनिलयं यच्छब्दार्थजगत्कारणाश्रयं यदेकत्व
मर्पितम् एवं यत इति पञ्चम्योपात्तं तद्गतं
तित्वं तदुभयमप्यस्मिन् जगत्कारणे परस्परं सं
ते। तत्र दृष्टान्तः। पशुवस्तुनीति। संख्याकरण
रिति शेषः। इदं हि वाक्यं वाक्यशेषावगतब्रह्मल
क्षणं बोधयति तच्च जगत्प्रकृतित्वमात्रेण न सि
जगत्प्रकृतीनामनेकत्वे एकस्य ब्रह्मणस्तदात्मत्वा
दिति जगत्प्रकृतित्वविशिष्टस्य वचनार्थैकत्वेन
न्यो लक्ष्यब्रह्मणापेक्षित इत्येका प्रकृतिरिति सि
ति भावः ॥५०१॥

एका या प्रकृतिः समस्तजननी तद्ब्रह्म जिज्ञास
मित्यत्रापि हि वस्तुनिष्ठवचने शक्यैव तत्संग
विज्ञातुं विधिमन्तरेण च तथानर्थक्यभीत्या न
स्वाध्यायाध्ययनैकगोचरविधेरायातमर्थं विना

ननु ब्रह्मणो लक्ष्यताबलाद्विभक्तिवचनार्थयो
तिरित्युक्तमयुक्तं सिद्धान्ते हि जगत्कारणत्वं
णरीत्या तटस्थलक्षणं गृहस्येव काकः। तत्त्वं
ज्ज्ञातस्यैवेति वाच्यम्। न च जगत एकप्रकृति
न्यतोऽवगतम्, न चास्मादेव वाक्यात्तदवगमः
वाक्यस्य कारणैकत्वतदभिन्नब्रह्मस्वरूपप्रतिपाद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गादत एव तस्य लक्षणत्वायोगात्कथं तदनुपपत्तश्च त-त्सिद्धिरित्याशङ्क्यावान्तरतात्पर्य्यभेदेन यत इत्यादिवा-क्यं जगत्प्रकृतावेकत्वं प्रसाध्य तदनुवादेन तद्ब्रह्मेति वाक्येनैकत्वं गच्छद्ब्रह्मस्वरूपपरमिति नोक्तदोष इत्या-शयेनाह। एका या प्रकृतिरिति। जिज्ञास्यतामिति विजिज्ञासस्वेति पदार्थो दर्शितः विचार्यतामित्यर्थः। विचारविधेरपि ब्रह्मण्येव महातात्पर्यमिति वस्तुनिष्ठ-वचन इत्युक्तं तयोर्वचनविभक्त्यर्थयोः संगतिर्यथा वि-धिना ज्ञायते तथा तं विनाप्यानर्थक्यभीत्या प्रयोज-नाभावप्रसङ्गभीत्या विज्ञातुं शक्यैवेति संबन्धः। ननु न प्रमाणं प्रयोजनानुसारेण स्वार्थं साधयति येन त-दभावप्रसङ्गभयेनालौकिकोर्थस्तस्य कल्प्येतेत्याशङ्क्याह। न हि स्वाध्यायेति। न हि यतो वा इत्यादिवचनमर्थं विना स्वस्य श्रोतृसमीहितार्थपर्य्यवसानं विना स्वा-ध्यायाध्ययनविधेः प्रापकादायातं प्राप्तं स्यादध्ययन-विधिर्ह्यध्येतुः फलवदर्थप्रतीतिप्रयोजनमेव वाक्यम-ध्यापयतीति तद्रहितं वाक्यं नाध्ययनविधिना प्राप्ये-त। यतो वाइत्यादिवाक्यं चाद्वैतब्रह्मलक्षणज्ञानायैवा-ध्ययनविधिनाधीतमिति तदभावे तदध्ययनं न फलव-द्भवेदतस्तत्परिहाराय तस्य विवक्षितलक्षणतात्पर्य्यसि-द्ध्यर्थं तदुभयसंगतिर्द्रष्टव्येति भावः। अथ वा स्वा-ध्यायाध्ययनविधेरायातोयोऽर्थस्तं विना तदभावे आ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नर्थक्यभीत्या तत्संगतिर्विज्ञातुं न हि शक्या शक
काङ्क्षा दर्शयतीति योजनीयम् ॥ ५१० ॥

वचनार्थविभक्तिवाच्ययो-
रुपपन्नान्वयबुद्धिरर्थतः ॥
पशुनेति पदे यथा तथा
यत इत्यादिपदेऽपि लक्षणे ॥ ५११ ॥

तथेति सूचितं दृष्टान्तं दार्ष्टान्तिकं च विशदय
मार्गेण तदुभयसंबन्धसिद्धिमाह । वचनार्थेति । व
नार्थश्च विभक्तिवाच्यं च तयोरित्यर्थः । अर्थतः अ
पस्थितः । पशुनेतिपदे यथा वचनार्थेत्यादिसंब
लक्षणे अद्वैतब्रह्मलक्षणवाक्ये ॥ ५११ ॥

विधिनिष्ठवाक्यमपि बोधयति
स्वसमपेक्षितं विषयमर्थवशात् ॥
परमात्मनिष्ठमपि तुल्यमिदं
वचसोर्द्वयोरपि तु रूपमतः ॥ ५१२ ॥

ननु सिद्धार्थवाक्यस्य कथं विधिवाक्येन तुल्यता
धिर्हिस्वसामर्थ्यादलौकिकमर्थराशिं प्रतिपादयेत्
क्तं शबरस्वामिभिः चोदना हि भूतं भवन्तं भ
न्तमित्यादीत्याशङ्क्य सिद्धवाक्यमपि तात्पर्य
र्थं प्रतिपादयेत्तदपेक्षितमर्थान्तरमपि कथं न प्र
दयेदन्यथा तत्तात्पर्य्यानिर्वाहात् । विधिवा
तद्बलादेव तथा सामर्थ्यमन्यथा वसन्ते ज्योति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेत्यत्रापि कर्मान्तरं ग्रहं संमार्ष्टीत्यत्राप्येकत्वं विशेषणं किमिति न कल्प्येतेत्याशयेनाह। विधिनिष्ठवाक्यमिति। स्वं स्वीयं परमात्मनिष्ठमपि स्वमपेक्षितं विषयमर्थवशाद्बोधयतीत्यनुषङ्गः। फलितमाह। तुल्यमिति। यत एवमतः सिद्धार्थविधिनिष्ठवचसोर्द्वयोरपीदमर्थान्तरप्रतिपादकत्वं रूपं तुल्यमेवेत्यर्थः ॥ ५१२ ॥

एकं चेतनमस्य यत्प्रकृतितामापन्नमुत्प्रेक्षते
तद्ब्रह्मेति निशामयेति निपुणं ब्रूते परब्रह्मणः ॥
सिद्धं लक्षणमादरेण महता व्यावर्त्तयद्ब्रह्मण-
स्तत्त्वं तत्त्वमसीति वाक्यनिलयं तच्छ्वद्लक्ष्यं वचः ५१३

वस्तुतस्तु जगत्कारणे प्रकृतित्वं विभक्तिर्न प्रतिपादयति तस्यानुमानादेव सिद्धत्वात्प्राप्तानुवादेनानेकार्थविधानासंभवाच्च किं तु वचनार्थमेकत्वमेव तद्वाक्यं प्रतिपादयति। तत्र चेतनमात्रोद्देशेनैकत्वविधानासंभवाज्जगत्कारणत्वेन तदधिष्ठानमेवोद्दिश्य वचनार्थः प्रतिपाद्यत इति नात्र कश्चिद्दु दोषतुषोपीत्याशयेनाह। एकं चेतनमिति। अस्य वियदादिप्रपञ्चस्य यच्चेतनं प्रकृतितामापन्नमुत्प्रेक्षतेऽनुमिनोति तदेकमिति प्रथमन्वयः। पश्चात्तदप्यनुवाद्यकोटौ निक्षिप्याह। तद्ब्रह्मेति। निशामय शृणु विचारयेत्यर्थतस्तद्विजिज्ञासस्वेत्यस्य ग्रहणम्। एवमादिवचोऽत्र प्रागुक्तशङ्काभावान्निपुणं यथा स्यात्तथा परब्रह्मणोऽनुमानसिद्धं जगत्का-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणत्वरूपं लक्षणं महतादरेण ब्रूत इति संबन्धः॥
क्षणमिति तद् ब्रह्मेत्यादेरुपलक्षणम् । अत एव
तादरेणेत्युक्तम् । यदेकं जगत्कारणं तद् ब्रह्मेति
जिज्ञासस्वेति डित्थमेनं विजानीहीतिवत् तस्य
संज्ञापरमिदं न लक्षणपरमित्याशङ्क्य तस्योपरि
रसिष्यमाणत्वाज्जगत्कारणतया सांख्यादिकल्पि
धानादिव्यावृत्तये ब्रह्मलक्षणमेवेह श्रुत्यभिप्रेतमित्य
येनाह । व्यावर्त्तयदिति । तच्छब्दलक्ष्यं ब्रह्मण
मद्वयानन्दं प्रधानादिभ्यो व्यावर्त्तयदिति संबन्धः
टस्थेश्वरस्यैवेदं लक्षणमिति भ्रमापनोदनाय तत्त्वम
ति वाक्यनिलयं तदेकवाक्यमिति वचसो विशेष
क्तम् ॥ ५१३ ॥

लक्ष्यस्य लक्षणमिह त्रिविधं प्रसिद्धं
लोके स्वलक्षणममुष्य विशेषणं वा॥
यद्वोपलक्षणमिमानि च लक्षणेन
व्यावर्णयामि पृथगेव तु तत्प्रतीहि ॥ ५१

नन्वेकस्य वस्तुन एकेनैव लक्षणेनेदं प्रयोजनं सि
त्यस्ति चात्र श्रुतिप्रसिद्धं तत्सत्यज्ञानादीति किमने
पि लक्षणेनेत्याशङ्क्यैकस्यैव लोके लक्षणत्रैविध्यप्र
रिहाप्यनेकलक्षणं न दोषाय प्रत्युतानेन विना
दिलक्षणमेव दुर्ज्ञानमित्याशयेनाह । लक्ष्यस्येति।
ध्यमेवाह । स्वलक्षणमिति । स्वरूपभूतं लक्ष

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थः । अमुष्य लक्ष्यस्य । वेति चार्थे । यद्वेति यच्चेत्यर्थः । लक्ष्यस्य किं चित्स्वरूपभूतं लक्षणं किं चिच्च तस्य विशेषणमन्यच्चोपलक्षणमितीह लोके लक्ष्यस्य त्रिविधं लक्षणं प्रसिद्धमिति संबन्धः । नन्वेषां किमन्योऽन्यं भेदकमित्याकाङ्क्षायामाह । इमानीति । स्वरूपलक्षणादीनीत्यर्थ. । व्यावर्णयामिविशेषतो वर्णयामि तत्त्वं प्रतीहि जानीहीत्यर्थः ॥ ५१४ ॥

लक्ष्यार्थनिष्ठमुपलब्धमतोऽन्यतोऽर्था-
न्निःशेषतो यदतिरिच्य तदर्थवस्तु ॥
लक्ष्यं निवेदयति लक्षणमेतदाहुः
सामान्यलक्षणमिदं त्रिषु लक्षणेषु ॥ ५१५ ॥

प्रथममेतेषां साधारणं लक्षणमाह । लक्ष्यार्थनिष्ठमिति । लक्ष्यार्थनिष्ठमुपलब्धं सदन्यतःसजातीयादेर्निःशेषार्थादतिरिच्य व्यावर्त्त्य लक्ष्यं स्वाश्रयमर्थवस्तुनि वेदयति । तदेतल्लक्षणमित्याहुः । इदं च त्रिष्वपि लक्षणेषु लक्षणत्वसामान्यलक्षणमिति संबन्धः । असंभवाव्याप्तिदोषदुष्टेऽतिव्याप्तिपरिहाराय लक्ष्यार्थनिष्ठमुपलब्धमिति । यावल्लक्ष्ये प्रतीतमित्यर्थः । निःशेषतो व्यतिरिच्येति विशेषणान्नातिव्याप्तिदुष्टेऽप्यतिप्रसङ्ग । नन्विदं स्वरूपलक्षणे नास्ति तस्य स्ववृत्तित्वासंभवादिति चेत्सत्यम् । यत्प्रमितं सद्व यस्य तत्सजातीयादिभ्यः सर्वेभ्यो व्यावर्त्तकं तत्तल्लक्षणमिति विवक्षितत्वान्न कोऽपि दो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष इत्याशयः ॥ ५१५ ॥

लक्ष्यस्वरूपमपि सद्यदमुष्य साक्षा-
दर्थान्तराद्भवति भेदकमेतदाहुः ॥
अस्य स्वलक्षणतयैव तु लक्षणं खं
छिद्रं द्रवं जलमितीदृशमत्र लोके ॥ ५१६ ॥

इदानीं स्वरूपलक्षणस्य स्वरूपमाह । लक्ष्यस्वरूपमि-
ति । साक्षात्स्वभावतो लक्ष्यस्वरूपमपि सद्यदमुष्य ल-
क्ष्यस्यार्थान्तराद्भवति भेदकमेतत्तु लक्षणमस्य लक्ष्यस्य
स्वलक्षणतयैवाहुस्तत्रोदाहरणमाह । खं छिद्रमिति॥ लौकि-
कप्रतीतिमनुसृत्येदमुदाहृतमिति द्रष्टव्यम् ॥ ५१६ ॥

स्वानुरक्तमतिजन्मकारणं
यत्पुनर्भवति लक्ष्यवस्तुनि ॥
तद्विशेषणतयास्य लक्षणं
केसरादिकमिवाश्ववस्तुनः ॥ ५१७ ॥

इदानीं विशेषणलक्षणस्य स्वरूपं कीर्त्तयति । स्वानु-
रक्तेति । यत्पुनर्लक्षणं सल्लक्ष्यवस्तुनि स्वविशिष्टबुद्धि-
जन्मकारणं भवति तदस्य विशेषणतया लक्षणमाहुरित्य-
नुषङ्गः । स्वरूपं तटस्थं च लक्षणं व्यावर्त्तयितुं स्वानुर-
क्तेति, लक्ष्यविशेषणतया प्रतीयमानमित्यर्थः । अश्वाद्
दण्डादि व्यावर्त्तयितुं लक्षणमिति । उदाहरति । केस-
रादीति ॥ ५१७ ॥

स्वानुरक्तमतिजन्महेतुतां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्यवस्तुनि निरस्य लक्षणम् ॥
अस्वरूपमपि तस्य यद्भवे-
त्काकवत्तदुपलक्षणं विदुः ॥ ५१८ ॥

तटस्थलक्षणस्वरूपमाह । स्वानुरक्तेति । विशेषणलक्षणेऽतिव्याप्तिवारणाय निरस्येत्यन्तम् । स्वरूपेतिव्याप्तिपरिहाराय अस्वरूपमिति । लक्ष्याविशेषणं सद्यद स्वरूपं लक्षणं तदुपलक्षणं विदुः । तद्देशीयतत्कालीनगृहवृत्तिकाकसंबन्धस्यानतिप्रसक्तस्य लक्षणतया काकवदित्युदाहरणम् ॥ ५१८ ॥

विश्वोद्भवस्थितिलयप्रकृतित्वमस्य
चिद्वस्तुनो यदसहायपरिग्रहस्य ॥
तद्वर्णनीयमुपलक्षणमेव कस्माद्
ब्रह्मेति लक्ष्यपदशक्त्यविरोधहेतोः ॥ ५१९ ॥

एवं त्रिविधं लक्षणमुक्त्वा तर्हि जन्मादिकारणत्वं ब्रह्मणः किं लक्षणमित्याकाङ्क्षायामाह । विश्वोद्भवेति । प्रकृतित्वमिति कर्तृत्वस्याप्युपलक्षणम् । अत एवासहायपरिग्रहस्यातिरिक्तसहायापेक्षाशून्यस्यैकस्येति यावत् । अस्य चिद्वस्तुनो विश्वोद्भवादिप्रकृतित्वं यत्तदुपलक्षणमेव वर्णनीयम् । नन्वस्वरूपस्य तस्य विशेषणत्वसंभवात्कस्मादुपलक्षणत्वमुच्यत इत्याशङ्कते । कस्मादिति । यावल्लक्ष्यस्वरूपं तद्धर्मो भूत्वा यल्लक्षयति तदेव विशेषणलक्षणम् । जगत्कारणत्वमपि यावल्लक्ष्यभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वि चेद्ब्रह्म परिच्छिन्नं स्यादिति तत्पदशक्तिर्वक्ष्य
बाध्येत तत्परिहारायोपलक्षणत्वमेवास्य युक्तम्।
वं च तल्लक्ष्यमखण्डं सिद्ध्यतीत्याशयेनाह। ब्रह्मेति।

विश्वोद्भवस्थितिलयप्रकृतित्वरूप-
मेकाकिनो यदिह लक्षणमुच्यमानम्॥
तद् ब्रह्मणो यदि विशेषणरूपमिष्टं
ब्रह्मेति लक्ष्यविषयस्य पदस्य भङ्गः॥

ननु यत इत्याद्यनेकपदमुख्यार्थानुरोधेन ब्रह्मप
त्रशक्तिविरोधोऽपि न दोषः स्यादिति तद्विशेषणं
व न्याय्यम्। अन्यथा काकतत्पदयोरिव बहुप
लक्षणैव स्यादित्याशङ्क्य लक्ष्यपदानुरोधेनोपलक्षण
व न्याय्यमित्याह। विश्वोद्भवस्थितिलयप्रकृतित्व
ति। स्पष्टम्॥ ५२०॥

लक्ष्यार्थवाचि पदमत्र हि लक्षणार्थे
वाक्ये प्रधानमितरद् गुणभूतमाहुः॥
ब्रह्मेति लक्ष्यविषयं च पदं समर्थं
भूमानमेव वदितुं न तु मर्त्यमल्पम्॥

यदर्थप्रमित्यर्थं लक्षणं मृग्यते तद्धि प्रधानम्
धानानुरोधेन चाप्रधानेषु लक्षणा न्याय्या गुणे
स्यकल्पनेति न्यायात्, न त्वप्रधानानेकानुरोधेना
धानभङ्ग इत्याशयेन सामान्यन्यायपूर्वकमुक्तमेवा
दयति। लक्ष्यार्थेति। लक्ष्यमर्थोऽभिधेयं यस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न् । इतरल्लक्षणपदम् । सामान्यन्यायं प्रस्तुते योजयति । ब्रह्मेति । ततः किमित्याशङ्क्य ब्रह्मपदं मुख्यार्थमाहेत्याह । भूमानमिति । त्रिविधपरिच्छेदशून्यम्, तद्धात्वर्थस्य वृहत्त्वस्य तत्रैव पर्य्यवसानात् । मर्त्त्यं कालतः परिच्छिन्नम् । मर्त्यं वदितुं न समर्थमित्यत्र हेतुतया मर्त्यस्वरूपमाह । अल्पमिति । श्रुतिर्हि यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति भूमानं निरुच्य तद्दार्ढ्याय तदन्यदल्पमनित्यं चेति निन्दति । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् अथ यदल्पं तन्मर्त्यमिति । एवं च ब्रह्मणि तदतिरिक्तसंसर्गाभ्युपगमे भूमवाचिब्रह्मपदशक्तिर्बाध्येत, कथं वा ब्रह्मपदमल्पं वदितुं समर्थं स्यादत इदं विशेषणलक्षणं न भवतीत्युपलक्षणमेवेत्यर्थः ॥ ५२१ ॥

तस्मात्प्रधानपदभङ्गभयाद्गुणानां
युक्तं ग्रहीतुमुपलक्षणगोचरत्वम् ॥
ब्रह्मेति चैतदुपलक्ष्यसमर्पणार्थ-
मेवं समञ्जसमिदं पदजातमस्मिन् ॥ ५२२ ॥

उक्तमर्थं न्यायपूर्वकमुपसंहरति । तस्मादिति । उक्तन्यायात्प्रधानपदं ब्रह्मपदं तस्य भङ्गभयात्तच्छक्तिभङ्गप्रसङ्गेन गुणभूतानां लक्षणपदानामुपलक्षणगोचरत्वमेव ग्रहीतुं युक्तमेवं ब्रह्मेत्येतत्पदं चोपलक्ष्यसमर्पणप्रयोजनकं ग्रहीतुं युक्तमिति संबन्धः । एवं च सति न



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेषिपदभङ्गप्रसङ्ग इत्याह । एवं समञ्जसमिति। अ
न् यत इत्यादिलक्षणवाक्ये ॥ ५२२ ॥

लक्ष्यस्वरूपकथनाय न लक्षणानि
नाप्यस्य वाचकमिदं पदमित्यमुष्मै ॥
व्यावृत्तमेतदखिलादितरार्थजाता-
दित्येतदेव वदितुं ननु लक्षणानि ॥ ५२३ ॥

एवं जन्मादिकारणत्वस्य तटस्थलक्षणत्वमुपपाद्य
स्य व्यावृत्तिप्रयोजनकत्वं पराभिमतं व्यावर्त्तयद्
ह्मणस्तत्त्वमित्यत्राभ्युपेतमुपपादयितुमुपक्रमे ।
व्यावर्त्तयद्ब्रह्मणस्तत्त्वमित्युक्तमयुक्तं लोके लक्षण
क्यानां लक्ष्यस्वरूपज्ञानाय गवादिपदेन व्यवहारा
र्थे वा प्रयोगदर्शनादित्याशङ्क्यासिद्धो हेतुरित्याह।
क्ष्यस्वरूपेति । लक्षणानि तद्वाक्यानि। अस्य लक्ष
गवादिपदं वाचकपदमित्यमुष्मै ज्ञापनायेत्यर्थः।
स्नादिमती गौर्गन्धवती पृथ्वीत्यादिलक्षणेन न गवा
स्वरूपं प्रतिपाद्यते , गवादेः प्रत्यक्षसिद्धत्वेन तत्
वैयर्थ्यात्। नापि सास्नादिमती व्यक्तिर्गवादिशब्द
त्यपि प्रतिपाद्यम् , सास्नादेस्तदर्थत्वाभावात्।
तदा सास्नादिमती गौरिति प्रतीतिः स्यादतो
यं लक्षणवाक्यप्रयोजनमिति व्यावृत्तिबोध एव
योजनं वक्तव्यमित्याशयेनाह । व्यावृत्तमिति।
ति निश्चये ॥ ५२३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्यस्वरूपमुपलभ्य तदेकनिष्ठं
दृष्ट्वा च लक्षणमनेन तदेव लक्ष्यम् ॥
व्यावर्त्य बोधयितुमुत्सहते जनोऽयं
तत्त्वान्तरादिति यतः प्रतिपन्नमेतत् ॥ ५२४ ॥

किं च चक्षुषः सास्नादिवैशिष्ट्यं बोधयतस्तद्द्वारा व्यावृत्तिबोधः प्रयोजनं दृष्टम्, एवं लक्षणवाक्यस्यापि तदेव युक्तमित्याशयेन प्रथमं दृष्टान्तमाह । लक्ष्यस्वरूपमिति । उपलभ्य चक्षुषेति शेषः । अयं व्यवहर्ता ॥ ५२४ ॥

संज्ञासंज्ञिसमन्वयावगतये नेष्टं क्वचिल्लक्षणं
व्यावृत्तिप्रतिपत्तिमात्रजनकं लक्ष्ये भवेदन्यतः ॥
लक्ष्यं लक्षणवर्त्मना हि जगति व्यावर्त्तयन्तोऽन्यत-
स्तत्तल्लक्षणमादरेण महता संगृह्णते वादिनः ॥५२५॥

उक्तनिषेधानुवादपूर्वकं दार्ष्टान्तिकमाह । संज्ञासंज्ञीति । गवादिपदस्य लक्ष्यस्य च वाच्यवाचकरूपो यः समन्वयस्तदवगतय इत्यर्थः । एतच्च प्रागुक्तस्वरूपकथनाय नेत्यस्योपलक्षणम् । किं च संज्ञासंज्ञिसमन्वयाय लक्षणवाक्यं वदन्नपि व्यावृत्तिप्रतिपत्तिप्रयोजनं तस्याङ्गीकुर्यादेवान्यथानतिप्रसक्तस्वरूपेण संज्ञिनोऽनवगमे तत्रैव संज्ञासंबन्धस्य दुरवगमत्वात्, अतस्तदेव प्रयोजनमित्याशयेनाह । व्यावृत्तिप्रतिपत्तीति । तस्माल्लोके गवादिलक्षणानामेतदेव प्रयोजनं वृद्धसंमतमित्युप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संहरति। लक्ष्यं लक्षणवर्त्मनेति। लक्षणवर्त्मनेत्यनेन॰
क्षणवाक्यस्य लक्षणया व्यावृत्तिबोधप्रयोजनकत्वं
चितम्। तत्तल्लक्षणं तस्य तस्य गोघटादेर्लक्षणम्॥
तस्माद् ब्रह्मणि वाच्यवाचकयुजासिद्ध्यै श्रुतिर्नाम॰
ज्जन्माद्यस्य समीक्षितस्य जगतो यद् ब्रह्मणो लक्ष॰
नापीदं स्वकरूपबोधनपरं संकीर्तितं ब्रह्मणः
किं त्वब्रह्मपदार्थतोऽस्य सकलाद् व्यावृत्ततासिद्धये॥

एवं लोकेऽस्वरूपलक्षणानां व्यावृत्तिमात्रप्रयोजन॰
त्वमुक्तम्, एवं सृष्टिवाक्यार्थजगत्कारणत्वमपि ब्र॰
णस्तदितरव्यावृत्तय एव श्रुत्यानूद्यते, किं चाश्रुत॰
वहारादिकल्पनाप्रसङ्गान्न वाच्यवाचकसंबन्धसिद्धि॰
त्प्रयोजनं नापि ब्रह्मस्वरूपसिद्धिस्तस्याखण्डैक॰
जगत्कारणत्ववैशिष्ट्यविषयवाक्यप्रतिपाद्यत्वायोग॰
त्याशयेनोपसंहरति। तस्मादिति। अस्य समीक्षि॰
जगतो जन्मादि जन्मस्थितिभङ्गन्तत्कारणत्वं यद्ब्र॰
लक्षणं तच्छ्रुतिर्ब्रह्मणि वाच्यवाचकयुजासिद्ध्यै ना॰
धात्, नापीदं लक्षणवाक्यं ब्रह्मणः स्वरूपबो॰
तदर्थं सत्संकीर्तितं किं त्वस्य ब्रह्मणः सर्वस्माद॰
दार्थतो व्यावृत्ततासिद्ध्य इति संबन्धः। एतच्च
कारेण "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजन॰
ति परोक्तमेकं पक्षमाश्रित्योक्तं न तु स्वमतम्।
ष्टप्रकाशादिलक्षणवाक्यस्य चन्द्रस्वरूपार्थताया॰

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तत्वाल्लक्षणवाक्यमात्रस्य सिद्धान्तिभिरखण्डार्थताभ्युपगमाच्च । किं च लक्षणवाक्यं मुख्यवृत्त्या न व्यावृत्तिं प्रतिपादयितुं शक्नोति । नापि लक्षणया तद्बीजानुपपत्तेरभावात् । लक्षणयापि लक्ष्यस्वरूपमप्रतिपाद्य कस्येतरव्यावृत्तिं प्रतिपादयेद्धर्मिविशेषविशिष्टतयैव तस्या ज्ञातुं शक्यत्वात्।न च लक्षणवाक्यं गवादिकं बोधयदेव तस्येतरव्यावृत्तिं बोधयतीति वाच्यम्।आवश्यकत्वाच्छब्दस्य विरम्य व्यापाराभावाच्च तस्य तत्रैव व्यापारो न तु व्यावृत्तावपि। न च लक्षणवाक्येन लक्षणसंसर्गे प्रतिपादिते लिङ्गादितरव्यावृत्तिसिद्धिरिति वाच्यम्।विशिष्टस्वरूपाभिधानमात्रस्यैव शब्दव्यापारतया व्यावृत्तेः प्रमाणान्तरव्यापारसाध्यत्वप्रसङ्गेन व्यावृत्तमेतदखिलादित्यादिना प्रक्रान्तविरोधात्।अर्थादपि सिद्धयन्त्यास्तस्याः शब्दव्यापारगोचरत्वायोगाच्च । संज्ञासंज्ञिसंबन्धार्थत्वनिराकरणं तु युक्तमेव । एतच्च सर्वं प्रागुपपादितमप्याचार्याणामेतत्संमतमितिभ्रमापनोदनायास्माभिरुक्तम् ॥ ५२६ ॥

परिच्छिन्नवस्तुव्यवच्छेदसिद्ध्यै
जगाद श्रुतिर्लक्षणं ब्रह्मणस्तत् ॥
परिच्छिन्नता प्रापिता पूर्वपक्षे
परब्रह्मणस्तन्निषेधार्थमेतत् ॥ ५२७ ॥

एवं च ब्रह्मतटस्थलक्षणवाक्यं सांख्यादिकल्पितपरि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छिन्नप्रधानाद्यसंभवविलक्षणकथनमुखेन तल्लक्षित
सत्यादिवाक्यसिद्धाखण्डस्वरूपे पर्यवस्यति, न हि
पञ्चस्योपादानाभिन्नचेतनकारणे बुद्ध्यसन्निहिते
सत्यादिविधिनिषेधवाक्यानां तत्त्वमस्यादिवाक्य
च समन्वयनिरूपणं संभवति निरालम्बनतन्निरूप
योगात्तत्र चार्थात्परभ्रमविषयपरिच्छिन्नप्रधानादि
वृत्तिरपि सिद्ध्यति न तु सा लक्षणवाक्यस्य साक्षा
योजनमित्याशयेनाह । परिच्छिन्नेति । वस्तुतः प
च्छिन्नं यज्जगत्कारणं सांख्याद्यभिमतं तद्व्यवच्छे
सिद्ध्या इत्यर्थः । लक्षणमभिन्ननिमित्तोपादानत्व
म् । न हीदं लक्षणं सांख्याद्यभिमते जगदुपादाने
तञ्जलाद्यभिमतेश्वरे वा संभवति । ब्रह्मणि तु
बाधितमिति तल्लक्ष्यस्य ब्रह्मणः प्रधानादिव्यावृ
र्थात्सिद्ध्यतीति भावः । नन्वर्थादपि परिच्छिन्नता
वृत्तिः कथं लक्षणवाक्यप्रयोजनं न ह्यनादिसिद्धा
तिरादिमत्पुरुषभ्रमसिद्धव्यावृत्तये स्वार्थं प्रतिपाद
ति युक्तमिति चेन्न । तेषामपि पक्षाणामसत्त्ववाद
स्येवानादिपूर्वपूर्वभ्रमसिद्धतयानादित्वेन श्रुत्यैव नि
कार्यत्वादित्याशयेनाह । परिच्छिन्नतेति । प्रब्रह्म
जगत्कारणस्य । एतदभिन्ननिमित्तोपादानत्वं लक्ष

कालस्वभावपरमाणवसुभृत्प्रधान-
स्कन्धप्रतीत्यखिलशून्यकथाप्रसङ्गे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जन्मादिसूत्रमवतीर्णमियं श्रुतिश्च
तस्मादिदंपरमिदं द्वितयं प्रवृत्तम् ॥ ५२८ ॥

जगत्कारणे परिच्छिन्नत्वप्रसञ्जकं पूर्वपक्षं विवृण्वं-स्तन्निवृत्त्यर्थत्वं श्रुत्यादेराह। कालस्वभावेति । वस-न्तादिकाल एव नियमेन कार्यविशेषदर्शनात्काल एव कारणमिति केचित् । कारणं विनैव कार्यं भवतीति स्वभाववादिनः । सूक्ष्मेभ्यस्तन्त्वादिभ्यः स्थूलस्य पटा-देरुत्पत्तिदर्शनात्सूक्ष्मं स्थूलस्य कारणमेवं तन्त्वादेरपि तदवयवाः सूक्ष्माः कारणमिति यतोऽन्यन्न सूक्ष्मं संभव-ति ते निरवयवाः परमाणवो जगन्मूलकारणमिति वै-शेषिकादय आहुः । असुभृज्जीवः स्वकर्मद्वारा कारण-मिति मीमांसकाः । त्रिगुणात्मकस्य जगतः कार्यस्य स-दृशं त्रिगुणात्मकं प्रधानमेव कारणमिति सांख्याः । स्कन्धवादी बाह्यार्थास्तित्ववादी सौत्रान्तिकादिर्बौद्धः । स हि परमाणुसङ्घातरूपं पृथिव्यादि रूपविज्ञानवेद-नासंज्ञासंस्कारात्मकपञ्चस्कन्धात्मकमाध्यात्मिकं जग-दित्याह । प्रतीतिः क्षणिकविज्ञानम् , तत्र कल्पितमेव जगदिति विज्ञानमात्रतत्त्ववादी बौद्धः। अखिलशून्यवा-दी सर्वं शून्यमिति वदति माध्यमिकः । स हि शून्य-मेव पूर्वपूर्वालीकवासनावशाद्विचित्रप्रपञ्चाकारेण प्रथ-त इत्याह । एतेषां कालादीनां या कथा चर्चा तत्प्रस-ङ्गे जगत्कारणस्य परिच्छिन्नत्वप्रसक्तौ तन्निवृत्तये ज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्मादिसूत्रमियं श्रुतिश्च । तस्मादिदं श्रुतिसूत्राल
द्वितयमिदंपरमर्थादेतत्प्रयोजनकं प्रवृत्तमिति सं
न्धः । एतदुक्तं भवति । न हि कालादिः सर्वोऽपि
पञ्चस्य निरपेक्ष उपादानकारणं भवति , चेतनाधि
ष्ठितस्याचेतनस्य कारणत्वादर्शनात् । अस्तु तर्हीश्वरः
ऽधिष्ठाता तदधिष्ठिताः परमाणव उपादानमिति चेत्
कार्यस्य स्वापेक्षयाल्पपरिमाणजन्यत्वनियमाभावे
परमाण्वसिद्धेः । न हि दीर्घेभ्यस्तन्तुभ्यो ह्रस्वः
टो न भवति, न चातिविस्तृतदीर्घदुकूलद्वयेनैका रज्जुः
क्रियते, निरवयसंयोगासंभवेन द्व्यणुकादिकार्यासंभवः
च्च । न हि स्वाभावसमानदेशः संयोगो निष्प्रदेशे
रमाणौ संभवति । तस्येश्वरसंबन्धासंभवेन तदधिष्ठि
चानुपपन्नम् , लाघवेनोपादानाधिष्ठात्रोरेकत्वे सं
ति तद्भेदायोगाच्च । लोकेऽपि तयोर्भेदो न संप्रति
इत्युक्तम् । लोके प्रेक्षावतां नियमेन कार्यविशेषमु
श्य विशिष्टकारणोपादानदर्शनान्न स्वभाववादः प्रा
णिकः।सर्गाद्यकालेऽशरीरिणो जीवस्य ज्ञानासंभवेन
श्वनिर्माणायोगात् । किं बहुना यद्यत्परिच्छिन्नं
त्कार्यमेवेति न कस्यापि कारणमतः सर्वज्ञं सर्व
ब्रह्मैव सर्वजगदुपादानं कर्तृ चेति जन्मादिसूत्र
तो यत इत्यादिश्रुतिप्रतिपाद्यं सिद्धमिति ॥ ५१९ ॥

अधिष्ठात्रधिष्ठेयभावेन योनि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमित्तं च यत्कारणं जन्मभाजाम् ॥
परिच्छिन्नतास्यापि संभाविर्तैव
प्रतीचोऽस्य भेदे परैरुच्यमाने ॥ ५२९ ॥

ननु श्रुतिसूत्राभ्यामेवंविधकारणे सिद्धेऽपि तस्य जडप्रपञ्चपरिच्छेद एव वारितः स्यान्न त्वात्मनानात्वमपि, संभवति हि तादृशस्यापि कारणस्य परैरुच्यमानो जीवाद्भेद इत्याशङ्कते । अधिष्ठात्रधिष्ठेयेति । अधिष्ठात्रधिष्ठानम् अधिष्ठेयमध्यस्तं तद्भावेन विवर्ताधिष्ठानत्वेनेत्यर्थः । योनिरुपादानं निमित्तं कर्तृ च । अथ वा तदात्मानं स्वयमकुरुतेति स्वस्यैव स्वगोचरकृतिशालित्वं स्वाश्रितकृतिविषयत्वं च यच्छ्रुतं तदधिष्ठात्रधिष्ठेयभावः, तेन इत्थंभावे तृतीया अधिष्ठातृभावेन निमित्तमधिष्ठेयभावेन योनिश्चेत्यर्थः । शेषं स्पष्टम् ॥ ५२९ ॥

ततस्तन्निषेधार्थमेतद्ब्रभाषे
श्रुतिर्ब्रह्म तद्भिन्नता तस्य कस्मात् ॥
प्रतीचोऽपि हि ब्रह्मता नित्यसिद्धा
दृशो भेदसिद्धिर्निरालम्बनैव ॥ ५३० ॥

तद्दूषयति । तत इति । यत एवं कारणस्य जीवात्परिच्छेदः परोक्तः सम्भावितस्तत इत्यर्थः । एतत्प्रपञ्चस्याभिन्ननिमित्तोपादानं ब्रह्म । फलितमाह । तदिति । तस्मादित्यर्थः । तस्य ब्रह्मणः । कस्माद्भिन्नता न



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कस्मादपीत्यर्थः । एतदेवोपपादयति । प्रतीचोऽपीति । प्रपञ्चोपादानस्यैकवचनेक्षणश्रुतिभ्यां तत्कार्ये चेतनाभेदे सिद्धे तदुपादानब्रह्मणश्चेतनस्य जीवादपि चेतनाद्भेदो निरस्त एव । दृशोदृगन्तरप्रतियोगिकभेदांशे मिथ्याभेदविषयत्वात् । न हि ज्ञानं ज्ञानान्तरमवि- षयीकृत्य ततः स्वस्य भेदं विषयीकर्तुं शक्नोति न च ज्ञानं ज्ञानान्तरं विषयीकर्तुं विषयस्य जडत्वापत्तेर्वि- षयविषयिणोर्वस्तुतः सम्बन्धासम्भवाच्च विषयिणि कल्पितत्वे च विषय्येव ज्ञानमिति न ज्ञानभेदसिद्धिः । श्चिद्रूपस्य प्रतीचश्चिद्रूपब्रह्मता नित्यसिद्धेत्याशयः ॥

जगत्कारणत्वं पुनर्यत्र दृष्टं
न तल्लक्षणं तत्स्वरूपप्रसिद्धैः ॥
स्वरूपे यतो लक्षणे दृश्यमाने
प्रसिद्धं ततो लक्ष्यवस्तुस्वरूपम् ॥ ५३१ ॥

एवं लक्षणवाक्यं विशिष्टलक्षणाभिधानद्वारा सम- यनिरूपणालम्बनार्पणेन सत्यादिवाक्यार्थे पर्यवस- अर्थाच्च जगत्कारणस्य परिच्छेदव्यावृत्तिरित्युक्तं नन्वस्त्वेवमितरव्यावृत्तेरार्थिकत्वं तथापि जगत्कार- णत्वं यस्य धर्मस्तत्सिद्ध्यर्थमेवेदं लक्षणमस्तु न सत्यादिवाक्यैक्येन तदर्थाखण्डवस्तुसिद्ध्य इत्याशङ्क्या- ह । जगत्कारणत्वमिति । यत्र चेतनसामान्ये । दृष्ट- क्तानुमानेनैतच्छ्रुतेश्चावगतम् । तत्स्वरूपप्रसिद्धैः

चेतनसामान्यस्य कारणत्वविशिष्टस्वरूपनिश्चयाय । कुतोनेत्यत आह । स्वरूप इति । धर्मिण्यवगत एव हि तस्यैवं लक्षणमित्यवगन्तुं शक्यमेवं च यतः स्वरूपे दृश्यमाने लक्षणं तदीयतया प्रसिद्धं भवति, लक्षणाच्च लक्ष्यवस्तुरूपप्रसिद्धावन्योन्याश्रयः । न चानुमानादेव तत्सिद्धमिति वाच्यम् । तत्सिद्धये लक्षणानुपयोगप्रसङ्गात्, श्रुतिश्चात्र केवलानुवादिनी स्यादिति ॥ ५३१ ॥

निमित्तं च योनिश्च यत्कारणं त-
त्परं ब्रह्म सर्वस्य जन्मादिभाजः ॥
इति स्पष्टमाचष्ट एषा श्रुतिर्नः
कथं सिद्धवल्लक्षणं सिद्धिबाह्यम् ॥ ५३२ ॥

एवं प्रपञ्चस्याभिन्ननिमित्तोपादानत्वं ब्रह्मलक्षणमित्युक्तम्, ननु लक्षणमन्यतः प्रसिद्धमेव श्रुत्यानूद्यत इति वाच्यम्, अन्यथा तस्यापि श्रुतिप्रतिपाद्यत्वप्रसङ्गेनाखण्डार्थत्वक्षतेः, न चैकस्योभयरूपं कारणत्वं लोके प्रसिद्धमस्तीति शङ्कते । निमित्तं चेति । नोऽस्मान्प्रत्येषा यतो वेत्यादिरूपा श्रुतिः सर्वस्य जन्मादिभाजो यत्कारणं निमित्तं योनिश्च भवति तत्परं ब्रह्मेति सिद्धिबाह्यं लोकाप्रसिद्धं लक्षणं सिद्धवत् प्रमाणसिद्धमिव कथं स्पष्टमाचष्टेति सम्बन्धः ॥५३२॥

न खल्वीदृशं कारणं लोकसिद्धं
यतोऽनूद्य तल्लक्षणं तेन लक्ष्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यवस्थापयन्ती प्रवृत्तैव मेषा
विधत्ते नु वक्तीति चैतद्विरुद्धम् ॥ ५३३ ॥

सिद्धिबाह्यमित्येतदेव प्रपञ्चयन्नाह । न खल्वि नन्वियमेव श्रुतिरवान्तरतात्पर्येणोभयविधं कारण ब्रह्मणो वदत्विति चेत्तत्राह । यतोऽनूद्येति । यत इ यच्छब्दयुक्तेयं श्रुतिस्तादृशं कारणत्वमनूद्याद्वैत व्यवस्थापयन्ती प्रवृत्तेति तत्प्रागेव तत्सिद्धिर्वाच्ये र्थः । तर्हीयं स्वसामर्थ्यसिद्धमेवार्थमनुवदत्वित्या ङ्क्याह । विधत्त इति । अज्ञातमर्थं प्रतिपादयति अनुवक्ति ज्ञातमर्थं बोधयतीति चैतदुभयमेकस्य वि द्धमन्योन्याश्रयप्रसङ्गादित्यर्थः ॥ ५३३ ॥

अनुवददिदमेव वाक्यमर्था-
दुपनयतीदृशकारणं प्रसिद्धम् ॥
अनुवदनमशक्यमन्यथा स्या-
दवगतगोचरमेव हीदमिष्टम् ॥ ५३४ ॥

सिद्धान्ती यत इति वाक्यस्य यच्छब्दप्रयोगादनु दत्वे स्थिते तत्सामर्थ्यादेव तादृशं कारणत्वमर्थ द्विधास्यति, अन्यथाऽनुवादत्वायोगात्, न चै न्योन्याश्रयः, अनाद्यनुवादसामर्थ्यलब्धविधान प्यनादित्वादित्याशयेनाह । अनुवददिति । प्रसिद्ध ति । स्वसामर्थ्यप्रसिद्धमित्यर्थः । इदमेव वाक्यं प्र मीदृशं कारणमनुवददर्थादुपनयति विधत्ते । तत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थ्यमेव व्यनक्ति । अनुवदनमिति । अन्यथा तद्विध्य-भावे अनुवदनमशक्यमेव स्यात्, कुतः यत इदमनुव-दनमवगतगोचरमेवेष्टमन्यथा सर्वस्यानुवादत्वापत्तेः । न चैवमुक्तरीत्याप्ययं दोषः समान इति वाच्यम् । नि-र्णीतानुवादत्व एव वाक्यस्यैवंविधत्वादिति भावः॥५३४॥

यथा विशिष्टस्य विधानतोऽर्था-
द्विशेषणानां घटते विधानम् ॥
स्थितेऽनुवादेऽपि तथेह योज्य-
मनूद्यमानेऽपि जगन्निदाने ॥ ५३५ ॥

श्रुतिः स्वाभिधानसामर्थ्यसिद्धमेवार्थमाश्रित्य प्रवृत्ते-त्येतन्मीमांसकानामपि सम्मतमिति दृष्टान्तेनाह । यथा विशिष्टस्येति । यथा सोमेन यजेतेत्यादिसोमा-दिविशिष्टयागविधानस्य सामर्थ्याद्विशेषणानां सोमा-दीनामपि विधानं घटते, श्रूयमाणशब्दस्यैव तत्रापि तात्पर्ये वाक्यभेदप्रसङ्गात्, विशेषणाधीनसिद्धेर्विशि-ष्टस्य, तद्विधानं विना विध्यसम्भवात्, एवमिह यतो-वेत्यादिवाक्येऽनुवादत्वे स्थितेऽनूद्यमाने जगन्निदाने जगतोऽभिन्ननिमित्तोपादानेऽर्थाद्विधानं योज्यमिति सम्बन्धः ॥ ५३५ ॥

अथ वानुवादमुपलभ्य ततो-
ऽनुपपद्यमानवपुषः प्रमितेः ॥
अपरं निमित्तमिह कल्प्यमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवदन्ति केचिदभियुक्ततराः ॥ ५३६ ॥

इदानीं दार्ष्टान्तिके प्रागुक्तानुमानसिद्धमेवार्थं ...रनुवदतीत्याशयेनाह। अथ वेति। ततोऽनुवादा... नुपपद्यमानवपुषः पूर्वसिद्धिं विनानुपपद्यमानत्वा...त्। पूर्वप्रमितेरपरमनुमानम्। अभियुक्ततरा उक्त...नेऽतिप्रवीणाः ॥ ५३६ ॥

अपि विशिष्टविधौ वचनान्तरा-
दनुपपत्तिबलानुमितादिह ॥
विधिरशेषविशेषणगोचरो
न तु पुनस्तत एव विधानतः ॥ ५३७ ॥

दृष्टान्तेऽपि विशेषणं लैङ्गिकविनियोगवन्नित्या... श्रुतित एव सिद्ध्यति न तु विशिष्टविधिसाम... अन्यतः सिद्धेऽर्थे विधिव्यापारान्तरकल्पनागौर... गादित्याह। अपि विशिष्टेति। सर्वत्र विशिष्टवि... प्यनुपपत्तिबलानुमिताद्विशेषणसिद्धिं विना वि... विधानानुपपत्तिकल्पिताद्वचनान्तरादशेषविशेष...रो विधिः सिध्यतीत्यर्थः ॥ ५३७ ॥

जन्मादिलक्षणमिदं जगतो यदुक्तं
सद्ब्रह्मणस्तदिह चिन्हतयोपदिष्टम् ॥
नास्मिन् प्रमाणमपरे पुनरेतदेव
ब्रह्मप्रमाणमनुमानमुदीरयन्ति ॥ ५३८ ॥

एवं कार्यलिङ्गसम्भाविताभिन्ननिमित्तचेतनका...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वादेन वादिप्रसिद्धकारणविलक्षणे ब्रह्मणि यतो वेत्या-दिश्रुतिः पर्यवस्यतीत्युक्तम् । सम्प्रति उक्तमर्थमनुव-दन् कार्यलिङ्गकमनुमानमेवेश्वरे प्रमाणमिति मतमनूद्य दूषयति । जन्मादिलक्षणमिति । जगतो यदिदं जन्मा-दि तत्कारणत्वरूपं सन्निर्दुष्टं ब्रह्मणो लक्षणमुक्तं त-दिह ब्रह्मणि चिन्हतया परसिद्धकारणविलक्षणब्रह्मो-पस्थितये उपलक्षणतयोपदिष्टं तदस्मिन् ब्रह्मणि न प्र-माणं ततः सर्वज्ञाद्यसिद्धेरित्युक्तम् । अपरे वैशेषिका-दयः पुनरेतदेव वर्णितसम्भावनामात्रहेतुं कार्याख्यं लि-ङ्गमेव ब्रह्मप्रमाणमनुमानमुदीरयन्ति । क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदिति कार्यलिङ्गकमनुमानं मा-नमीश्वरे वदन्तीत्यर्थः ॥ ५३८ ॥

कार्यानुमानपरतन्त्रमिदं हि शास्त्रं
शास्त्रस्य नोपकरणं तदितीक्षमाणाः ॥
तद्दुर्घटं न खलु कारणमद्वितीयं
चैतन्ययुक्तमिति कार्यवशात् प्रतीमः ॥५३९॥

ननूदाहृतश्रुतिप्रमुखवाक्येषु सत्सु तदर्थसम्भावकत-या तदुपकरणमनुमानमेव तत्र प्रमाणमिति कथं व-दन्तीत्याशङ्क्याह । कार्यानुमानेति । श्रुतिर्हि कार्यलि-ङ्गकानुमाननिर्णेयतात्पर्यकतया तत्परतन्त्रेति तेषाम-भिमानः । शास्त्रस्य नोपकरणमिति । व्याप्तिपक्षधर्म-तायुक्तत्वेन धूमादिलिङ्गवद्वन्ह्यादौ कार्यत्वमपीश्वरे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वतन्त्रमेव प्रमाणं न तु तत् प्रमाणश्रुतेरुपकार त्यर्थः । दूषयति । तद्ध दुर्घटमिति । कुतस्तत्राह खल्विति । श्रुतिः खल्वद्वितीयं सर्वज्ञं जगत्कार तिपादयति, न हि तत् कथमपि कार्यलिङ्गवशा यमवगच्छामः, तस्य तत्रासमर्थत्वादिति भावः

वेदान्तवाक्यमिह येन पथा प्रवृत्तं
लोकप्रसिद्धपदशक्तिमुपाददानम् ॥
विश्वोद्भवस्थितिलयप्रकृतौ निमित्ते
सच्चित्सुखात्मनि परात्मनि नैवमन्यत्

ननु कार्यलिङ्गतोऽपि लाघवाद् विश्वकर्तृ सिद्धे तत्सार्वज्ञ्यमप्यधिकरणसिद्धान्ततया सिद्ध अद्वितीयत्वं तु स्वोपजीव्यानुमानविरोधाच्छ्रु न स्पृश्यत इति कथं कार्यवशान्नेश्वरं प्रतीम तत्राह । वेदान्तवाक्यमिति । न हि कार्यलिङ्ग वेदान्तैः शक्तिनिर्णयायापेक्ष्यते, प्रागुक्तन्यायेन एव तत्सिद्धेः । नापि तात्पर्यनिश्चयाय तस्या मोपसंहारादिपरामर्शादेव सिद्धेः । अतः कथमपि वेदान्तोपजीव्यम् । कार्यलिङ्गतोऽपि जगत्कर्तृ द्धेरुक्तत्वान्न तत्सार्वज्ञ्यं सिद्ध्यति ततस्तदेकत्व पीश्वरस्य नित्यकृतिपक्षे तदनुपयोगाज् ज्ञान सिध्येत कुतः सार्वज्ञ्यं कृतेर्ज्ञानसमानाश्रयत्व तत्सिद्धौ च तद्वन्नित्यदुःखादिकमपि प्रसज्येत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानुमानादीश्वरसिद्ध्याशा कर्तव्या। किं च वेदान्तवाक्यं सृष्ट्यादिकारणानुवादेन लोकप्रसिद्धपदशक्त्यनुसारिलक्षणमार्गेण तत्सच्चित्सुखात्मकमद्वयं प्रत्यगभिन्नमिति प्रतिपादयति, न चैवमनुमानं किमपि साधयितुं शक्नोतीति श्रुतिरेव तत्र प्रमाणं नान्यदनुमानम्। तथा च श्रुतिः, नैषा तर्केण मतिरापनेयेत्याशयेनोक्तम्। येन पथेत्यादिना ॥ ५४० ॥

भङ्क्त्वा कथं चिदनुमानवशेन सिद्धे
सर्वेश्वरे कणभुगादिभिरुच्यमाने ॥
वेदान्तवाक्यमपि योज्यमतोऽनुमाने
सापेक्षतोपनिषदां यदि साहसं तत् ॥ ५४१ ॥

यत्पुनरुक्तं कार्यानुमानपरतन्त्रमिदं हि शास्त्रमित्यनेन श्रुतेरनुमानसापेक्ष्यं स्वार्थप्रतिपादनमिति न तद्विरुद्धोपक्रमादिशब्दन्यायावगताद्वयादिस्पृक्शास्त्रमिति तदप्येवं सति निरस्तम्, विपक्षे वेदाप्रामाण्यप्रसङ्गश्चेत्याशयेनाह। भङ्क्त्वेति। उपक्रमादिनाऽद्वये निर्णीततात्पर्यमपि वेदान्तवाक्यं कथं चिद्भङ्क्त्वा लोकवत्प्राधान्यमात्रपरत्वकल्पनेन स्वार्थात्प्रच्याव्यानुमानसिद्धे कणभुगादिभिरुच्यमाने सद्वितीये सर्वेश्वरे विषये योज्यमतोऽनुमानसापेक्षतैवोपनिषदामिति यदि तत्साहसम्, तथात्वे वेदान्तानामप्रामाण्यप्रसङ्गादित्यर्थः ॥ ५४१ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्कारणं श्रुतिशिरोवचनस्य भङ्गं
ये वर्णयन्ति सहसा स्वमनोरथेन ॥
दीप्तस्य दावदहनस्य न ते किमर्थं
ज्वालां पिबन्ति कथनीयमिदं बहुज्ञैः ॥

साहसमित्येतदेव प्रकटयति । निष्कारणमिति । श्रुतिसिद्धाद्वये बाधकाभावेऽपि तत्त्यागो निष्कारण इत्यर्थः । यदि श्रुतिसिद्धमर्थमबाधितमपि स्वाभ्युपगतसिद्धान्तानुरोधेन त्यक्त्वा तस्यार्थान्तरं वर्णयन्ति । तेषां तर्ह्यशक्यसाहसं किमपि नेति वह्निज्वालामपि दीप्तां कथं न ते पिबेयुरत्र बहुज्ञैर्वैशेषिकैः कारणं किंचिद्वक्तव्यमिति ॥ ५४२ ॥

ननु सच्चिदादिवपुषो जगतः
प्रकृतित्वबोधनमकारणकम् ॥
परमात्मनो न हि पदार्थयुजा
रहितेह संभवति योग्यतया ॥ ५४३ ॥

ननु श्रुतिरपि जगत्प्रकृतित्वेन सच्चित्सुखात्मकं ब्रह्म कथं प्रतिपादयेत्तस्य तदसंभवादिति शङ्कते । नन्विति । अकारणकं प्रमाणरूपकारणशून्यम् । न शब्दप्रमाणमेव तज्जनकमित्याह । न हीति । उक्तरूपे परमात्मनि योग्यतया रहिता पदार्थयुजा वाक्यस्थपदार्थानां संबन्धो न हि संभवतीति भावः ॥ ५४३ ॥

उपादानता सच्चिदानन्दमूर्ते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरुद्धा जडेष्वेव सा दृश्यते हि ॥
विरुद्धैः पदार्थैर्न वाक्यार्थसिद्धि-
र्न खल्वग्निनोक्षेदितीहान्वयोऽस्ति ॥ ५४४ ॥

तस्य तदयोग्यत्वमेव विवृणोति । उपादानतेति । विरोधमेवाह । जडेष्वेवेति। यज्जडं मृदादि तदेवोपादानं दृश्यत इति चेतनस्योपादानत्वं विरुद्धमित्यर्थः । तद्विरोधप्रतिपादनफलमाह । विरुद्धैरिति । तत्र दृष्टान्तो न खल्विति । उक्षेत् सिञ्चेत् ॥ ५४४ ॥

उपादानता चेतनस्यापि दृष्टा
यथा स्वप्नसर्गे विचित्रे प्रतीचः ॥
यथा चोर्णनाभस्य सूत्रेषु पुंसां
यथा केशलोमादिसृष्टौ च दृष्टा ॥ ५४५ ॥

किं चेतनस्य द्रव्योपादानत्वं विरुद्धमुतोपादानत्वमात्रम्। नोभयमपि। सिद्धान्ते हि विवर्त्ताधिष्ठानत्वमेवोपादानत्वम् । तच्च मृदाद्यवच्छिन्नचैतन्यस्य घटादिकं प्रत्यस्त्येव । एवं पुरुषादौ स्थाण्वाद्यारोपेऽपि चेतनस्य द्रव्योपादानत्वम् । तथा स्वप्न आत्मनो विचित्रप्रपञ्चोपादानत्वं प्रतीत्यनुरोधेन वक्तव्यमित्याशयेनोपसंहरति । उपादानता चेतनस्येति । सिद्धान्ते समुच्चयासंभवादपिरवधारणे । मृदादेरपि घटादिपरिणाममाश्रित्य तत्समुच्चयार्थो वा । एवं परिणामवादेऽपि नायं नियम इत्यभिप्रेत्य दृष्टान्तान्तरमाह । यथा चेति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऊर्णनाभो लूताकीटस्तस्योपादानता दृष्टेत्यनुषङ्गः। न-
नु तत्सूत्रं तल्लालापरिणाम एव सा च न चेतनेत्य-
रुच्य तत्रान्यं दृष्टान्तमाह । पुंसामिति । जीवतामि-
र्थः । ननु जीवच्छरीरस्यैव केशलोमाद्युपादानत्वं
तु जीवस्येति चेन्न । मृतशरीरे केशादिवृद्ध्यदर्शनेन
रस्परं तादात्म्येनाध्यस्तयोरप्यविनिगमेन तत्रोपा-
नत्वात् । अत एव श्रुतिः । यथोर्णनाभिः सृजते गृ-
णते च यथा पृथिव्यामोषधयः संभवन्ति यथा स-
पुरुषात् केशलोमानि तथाक्षरात् संभवतीह विश्व-
तिदृष्टान्तेन ब्रह्मणः प्रपञ्चोपादानत्वमाहेति ॥ ५९

बुद्ध्यादिकार्येष्वपि चेतनोऽयं
भवेदुपादानमितीष्यते च ॥
आत्मा गुणी ते च गुणाः प्रसिद्धा
गुणी गुणानां प्रकृतिश्च सिद्धा ॥ ५९६ ।

वैशेषिकादीनामपि यदुपादानं तज्जडमेवेति न-
यमो बुद्ध्याद्युपादाने चेतने व्यभिचारात् । न च
व्योपादानस्यैव तथात्वनियम इति वाच्यम् । गु-
णपादानेष्वपि पृथिव्याद्यष्टसु चेतनत्वादर्शनाद्-
गुणोपादानत्वमपि न स्यात् । न चानुभवाच्चेतन-
गुणोपादानत्वमिति वाच्यम् । घटादावपि सत्ता-
स्त्यनुभवात्सतश्चेतनस्य तदभ्युपगम्यताम् । न च
सत्तास्फूर्त्योस्तदुपादानादन्यता संभवति । न च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्निति सत्तादात्म्यानुभवो वैशेषिककल्पितसत्ताजातिविषयः । तज्जातौ मानाभावात् । न च सदनुगतधीरेव तन्मानम् । तस्याः सत्संबन्धमात्रविषयतया मृद्घट इतिवद्धर्मिविषयत्वेनाप्युपपन्नत्वेन धर्मासाधकत्वात् । न च घटनिष्ठत्वेन प्रतीतेः सा धर्मः । तस्यां बाधायोग्यत्वरूपाया घटेऽवृत्तेः । न हि घटस्याबाध्यत्वे मानमस्ति । तस्मात् कालत्रयाबाध्यश्चिदात्मैव सर्वत्रोपादानतयाऽनुस्यूतः सद्बुद्धिविषयः । जाड्यबुद्धिस्त्वविद्याकृतेति द्रष्टव्यम् । एवं श्रुतिबलादपि चेतनस्य तव मते बुद्ध्याद्युपादानतावद्वियदाद्युपादानत्वमविरुद्धमित्याशयेनाह । बुद्ध्यादिकार्येष्वपीति । आदिशब्देनेच्छादिर्गृह्यते । इष्यते परैरिति शेषः । तेषामङ्गीकारमेवोपपत्तिपूर्वकमाह । आत्मेति । ते बुद्ध्यादयः । ततः किं तत्राह । गुणीति । अनित्यगुणाश्रय इत्यर्थः । अन्यथा गुणगुणिभावो बुद्ध्यादेरात्मनश्च न स्यादिति भावः ॥ ५४६ ॥

आकाङ्क्षादिर्विद्यते योग्यतान्ता
यस्मादस्मिन्नागमाज्जायमाने ॥
सामग्री या वैदिकैरस्य दृष्टा
तस्माद् युक्ता योनिता चेतनस्य ॥ ५४७ ॥

एवमात्मनोऽपि द्रव्योपादानत्वं दृष्टान्तत उपपाद्य तत्र यदुक्तं पूर्ववादिना चेतनो द्रव्योपादानमिति वाक्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योग्यताविरहान्न बोधकमिति तदेवं सति न युक्त- त्याह। आकाङ्क्षादिरिति। योग्यता अन्ते यस्या आका- ङ्क्षादित्रय्याः। आकाङ्क्षा आदिर्यस्या योग्यतान्ता सा तथा। अस्मिन्निति बुद्धिस्थं ब्रह्म प्रपञ्चोपादान- ति ज्ञानं परामृशति। अन्यत्रागमाद्वाक्याज्जायमान- ज्ञाने वैदिकैर्मीमांसकैर्लौकिकैश्च या सामग्री दृष्टा आका- ङ्क्षादियोग्यतान्ता सा अस्मिन् जनयितव्ये यतो इत्यादिपदानामपि यस्माद्विद्यते तस्माद्युक्ताऽस्य नस्य योनितेति संबन्धः। उक्तरीत्या चेतनस्य द्रव्यो- दानत्वे बाधकाभावात्तत्प्रतिपादकवाक्यस्य सह- भूता आकाङ्क्षासंनिधानयोग्यताः सन्तीति ब्रह्म- त् सिद्ध्यतीति भावः॥ ५४७॥

तस्मादेतल्लक्षणं चिन्हमाहु-
र्नैतत्तस्मिन् ब्रह्मणि स्यात् प्रमाणम्।
आम्नायस्य स्वप्रधानत्वहेतो-
र्लिङ्गस्यास्मिन् शेषभावाच्च नित्यम्॥ ५

एवं सृष्टिवाक्यैर्ब्रह्मणोऽभिन्ननिमित्तोपादानत्वं क्तं तत्तस्य चिह्नमेव न तु तस्मिन् प्रमाणं प्रमाणं त्र स्वतःप्रमाणवेदान्तत्रावयमेव, कार्यलिङ्गमपि तद- पपादकतया तत्साहाय्यमाचरंस्तत्र तर्कभावं प्राप्नो- ति स्वाभिमतमुपसंहरति। तस्मादेतदिति। स्पष्टम्।

इत्थं जगत्कारणवादिवाक्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समन्वितं ब्रह्मणि तत्पदार्थे ॥
तल्लक्षणं तस्य तटस्थभूत-
मानन्त्यसिद्धै कथयद्द यथोक्तम् ॥ ५४९ ॥

एवं सृष्टिवाक्यस्य ब्रह्मणि तत्त्वमसिवाक्यस्थतत्पदार्थे निरूपिते परमप्रकृतं समन्वयमुपसंहरति। इत्थमिति। जगत्कारणवादिवाक्यं तस्य ब्रह्मणः सजातीयादिपरिच्छेदराहित्यरूपानन्त्यसिद्धै तटस्थभूतं कल्पिततया तत्स्वरूपात् पृथग्भूतं यथोक्तमभिन्ननिमित्तोपादानत्वरूपं तल्लक्षणं कथयत् तत्पदार्थे ब्रह्मणीत्थं समन्वितमिति संबन्धः ॥ ५४९ ॥

स्वात्मानमेव जगतः प्रकृतिं यदेकं
सर्गे विवर्तयति तत्र निमित्तभूतम् ॥
कर्माखिलस्य रमणीयकपूयमिश्रं
पश्यन् नृणां परिवृढं तदितीर्यमाणम् ॥५५०॥

ननु ब्रह्मैकमेवोपादनं निमित्तं च चेत् कथमस्य प्रपञ्चस्य क्रमेण सृष्टिर्वैचित्र्यं वा वैषम्यं नैर्घृण्यं वा भगवतः कथं न प्रसज्येतेत्याशङ्क्योपादानकर्त्रोरेव श्रुतिबलादेकत्वमवगच्छामो न तु सृज्यमानप्राणिनां विचित्रं कर्म तद्वासनास्तेषां भोगवासना वा नेति वदाम इति तदभिव्यक्तिक्रमवैचित्र्याभ्यामेव क्रमवद्विचित्रसृष्टिरुपपन्ना। अत एवेश्वरस्य न वैषम्यादिकमपि। तथा च श्रुतिः तद्य इह रमणीयचरणा रमणीयां यो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमापद्येरन् कपूयचरणाः कपूयां योनिमित्याद्यां
चित्रां संसारगतिमनुवदतीत्याशयेनाह। स्वात्मानं
ति। यत्तदितीर्यमाणं तत्त्वमसि वाक्ये तत्पदं
परिवृढं ब्रह्म तत् नृणां रमणीयं पुण्यं कपूयं
मिश्रं मिलितं तदुभयं कर्म पश्यज्जानत् सर्गं क
तत्र निमित्तभूतमाकलय्येदं विचित्रं सर्गनिमित्तं
निश्चित्य एकमपि जगतः प्रकृतिं स्वात्मानमेव वि
र्त्तयति अवस्तुतोऽन्यथाभावमापादयतीति संक्षे
एवं सृज्यमानप्राणिकर्मवशान्नोक्तदोषतुषोऽप्रीति
वः। एवं सृष्टिवाक्यानां तटस्थब्रह्मलक्षणानुवाद
तत्पदलक्ष्येब्रह्मणि समन्वयो निरूपितः। ततः स्व
लक्षणमपि सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्यसिद्धं
त इति यच्छब्दप्रकृत्यंशेन चेतनानुवादेनाखण्डै
मात्रमित्यर्थाद्दर्शितमिति द्वितीयसूत्रेण लक्षणद्व
पि सिद्धम् ॥ ५५० ॥

पदवृत्तिसमन्वयावुभौ
प्रतिपाद्यौ प्रथमे हि लक्षणे ॥
तदवान्तरवाक्यवर्त्मना
पदवृत्तिः प्रथमं प्रकीर्तिता ॥ ५५१ ॥

ननु समन्वयसूत्रेणैव वेदान्तवाक्यानां ब्रह्मणि
न्वयो विचारित इति किमनेन सूत्रेणापि तन्निरू
त्याशङ्क्य तेन तत्त्वमस्यादिसमस्तवाक्यानां महा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं निरूप्यम्, द्वितीयसूत्रे तु तत्पदवृत्तिर्निरूपितेति नैत-द्व्यर्थं न हि तत्पदतात्पर्यनिश्चयं विना वाक्यार्थपरिच्छेदः संभवतीत्याशयेनाह । पदवृत्तीति । लक्षणे अध्याये । यस्मादेवं तस्मादवान्तरवाक्यवर्त्मना तत्त्वमसिवाक्यं तत्पदार्थनिष्ठं वाक्यं तदर्थकथनमार्गेण प्रथमं समन्वयविचारात्पूर्वम् ॥ ५५१ ॥

आद्ये सूत्रे त्वंपदस्योदितत्वाद्
वृत्तेरस्मिंस्तत्पदस्योच्यमाना ॥
वृत्तिर्ज्ञेया तत्पदार्थेऽद्वितीये
प्रत्यङ्मात्रे त्वंपदस्योदितैव ॥ ५५२ ॥

नन्वेवं त्वंपदस्यापि वृत्तिर्निरूपणीया स्यादन्यथा वाक्यार्थापरिच्छेदादित्याशङ्क्य प्रथमसूत्रे सा निरूपितैवेति द्वितीयसूत्रे तत्पदवृत्तिरेव निरूप्यत इत्याशयेनाह । आद्ये सूत्र इति । अथातो ब्रह्मजिज्ञासेतिसूत्र इत्यर्थः । अस्मिन् द्वितीयसूत्र इत्यर्थः । ननु द्वितीयसूत्रे तत्पदस्य कस्मिन्नर्थे तात्पर्यं निरूप्यते प्रथमसूत्रे वा कीदृशि त्वंपदस्येत्यपेक्षायामाह । तत्पदार्थ इति । अद्वितीय इति छेदः । अद्वितीये नित्यशुद्धादिस्वरूपे ब्रह्मणि तत्पदार्थे । द्वितीयेन तत्पदस्य वृत्तिर्निरूप्यते प्रथमेन तु प्रमात्रादिविलक्षणापरोक्षसाक्षिचैतन्यमात्रे त्वंपदस्य सा निरूपितेत्यर्थः ॥ ५५२ ॥

अनधिकारिणि शुद्धचिदात्मके


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृगदृशोरितरेतरविभ्रमात् ॥
शमदमादिसमन्वितताेष्यते
भवति तेन चितोऽप्यधिकारिता ॥ ५५३ ॥

ननु प्रथमसूत्रमधिकारिणो ब्रह्मज्ञानाय श्रवण कर्तव्यतां प्रतिपादयति, न तु कस्मिंश्चिदर्थे त्वंपदस्य वृत्ति मिति चेन्न । तत्त्वमसिवाक्ये ह्यधिकारिणि प्रयुज्यमानं त्वंपदं तस्य ब्रह्माभेदयोग्यं रूपं दर्शयति, प्रथम सूत्रं च मुक्त्यधिकारिविषयमिति तेन तन्निरूपितम् । ननु वैराग्यशमदमादिविशिष्टस्य मुमुक्षोर्ब्रह्मविद्याधिकारः तस्य कथं ब्रह्माभेदयोग्यतेति चेत्, सत्यम् । इत्यादिमत एवाधिकारः स च तत्त्वमसिवाक्यसामर्थ्यान्नित्यमुक्तं ब्रह्मैवेति स्वतो नाधिकारी किन्त्वीदृशे तस्मिन् दृग्रूपस्यात्मनोऽदृग्रूपस्याविद्यकाहङ्कारादेश्चेतरेतरात्मताध्यासात्संसारवत्तद्धर्मविवेकवैराग्यशमदमादिमत्तेष्यते तेन चिदेकरसस्याप्यधिकारिता भवति महावाक्ये त्वंपदसामर्थ्यात्सिद्ध्यति । ततश्चाधिकारिनिरूपके प्रथमसूत्रे त्वंपदस्य चिन्मात्रे वृत्तिर्निरूपितेत्याशयेनाह । अनधिकारिणीति ॥ ५५३ ॥

अनधिकारितया दृगवस्थिता
स्वरसतः परमेश्वरविग्रहः ॥
घनतमः पटलावरणान्वया-
दुपगता श्रवणाद्यधिकारिताम् ॥ ५५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वधिकारिण एव मुक्त्यन्वयित्वात्तस्य केवलस्यैवात्मनः शमादिः श्रवणाद्यधिकारश्चेति दृगदृशोरित्याद्यनुपपन्नमिति चेत्तत्राह । अनधिकारितयेति । पूर्वोक्तन्यायेन परमेश्वरस्वरूपत्वादधिकारिस्वरूपभूता दृक् स्वतोऽनधिकारितया स्थितेति प्रागुक्ताध्यासादेव तदधिकार इति भावः । ननु स्वप्रकाशदृश्यध्यास एव कथमित्याशङ्क्य तस्या अप्यज्ञानावरणस्योपपादितत्वात् स उपपन्न इत्याशयेनाह । घनतम इति ॥ ५५४ ॥

अज्ञानतज्जघटना चिदधिक्रियायां
द्वारं परं भवति नाधिकृतत्वमस्याः ॥
नाचेतनस्य घटतेऽधिकृतिः कदा चित्
कर्तृत्वशक्तिविरहादिति वक्ष्यते हि ॥ ५५५ ॥

नन्वेवमहङ्कारादिविशिष्टस्य श्रवणाद्यधिकारे तस्यैव मोक्षोऽपि वाच्य इति न केवलात्मनि त्वंपदवृत्तिरित्याशङ्क्य यथा देहादिद्वारा स्वर्गसाधने कर्मण्यात्मनोऽधिकारो न तु तेन विनैवमहङ्कारादिद्वारा मुक्तस्यैवात्मनोऽमुक्तताभ्रान्त्या मुक्तिसाधनेऽधिकारो न तु तेन विना न वा तस्य मुक्त्यन्वय इत्याशयेनाह । अज्ञानतज्जेति । अज्ञानतज्जाभ्यां घटना संबन्धः, चितोऽधिक्रिया तस्यां द्वारं घटकमुपाधिरिति यावत् । अस्या घटनाया अधिकाराभावे हेतुमाह । नाचेतस्येति । अचेतनत्वात्तस्या अधिकृतिर्न युज्यत इत्यर्थः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अचेतनस्यापि सा किं न स्यादित्यत आह। कर्तृ
ति। अचेतनस्य चेतनधर्मश्रवणादिकर्तृत्वायोगाच्चे
नानधिष्ठितस्य तस्य स्वातन्त्र्येण व्यापारासंभवे
कर्तृत्वशक्तिर्नेति साङ्ख्यनिराकरणावसरे सूत्रकृता प्र
स इत्यर्थः। एवं नित्यमुक्तात्मैव स्वाध्यस्तदेहद्वयव
वैराग्यादिसंपन्नस्तद्द्वारा ब्रह्मविचारेऽधिकारीति तं
ष्ठत्वं पदस्याद्यसूत्रे तत्र वृत्तिर्निरूपितेति भावः ॥५५

उपसत्तिवाक्यमधिकारिणि यत्
कथितं समन्विततया प्रथमम् ॥
इदमेव चेतसि निधाय तु तत्
मुनिना प्रकीर्तितमुदारधिया ॥ ५५६ ॥

ननु शुद्धचिदात्मन एवोक्तरीत्याधिकार इति त
स्य तत्रैव वृत्तिश्चेत्तद्विज्ञानार्थं स गुरुमेवाभिगच्छे
त्यादिश्रुत्यर्थतयोपससाद चतुष्टयसाधन इत्यादिना
कारिनिरूपणप्रस्तावे भवतायमर्थः कथं नोक्त इत्य
ङ्क्य सूत्रार्थत्वादस्य तत्र ममायमभिप्रेत एवेत्या
ह। उपसत्तिवाक्यमिति। तुरवधारणे। यतो मुनि
तत् कीर्तितमेवेत्यर्थः ॥ ५५६ ॥

शिष्योपसत्तिवचनानि समन्वितानि
शिष्ये चिदात्मनि परात्मनि नित्यमुक्ते
इत्येतदत्र कथितं मुनिना त्वमर्थे
स्वंशब्दवृत्तिकथनाय परे प्रतीचि ॥ ५५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननूदाहृतवाक्येऽयमर्थो न प्रतीयत इति कथं मुनिनापि संकीर्तित इत्याशङ्क्योक्तन्यायसिद्धमर्थं स्मारयति। शिष्योपसत्तीति। स्पष्टम् ॥ ५५७ ॥

उपसदनवचो विचारमार्गात्
त्वमितिपदस्य परात्मनीह वृत्तिम् ॥
कथयति भगवान् द्वितीयसूत्रे
तदितिपदस्य परात्मनीति भेदः ॥ ५५८ ॥

एवं प्रथमद्वितीयसूत्राभ्यामद्वये प्रतीचि तत्त्वं पदवृत्तिनिरूपणसमर्थनमुपसंहरति। उपसदनेति। परात्मनि देहेन्द्रियाहंकारादिविलक्षणे साक्षिणि। इह प्रथमे सूत्रे। परात्मनि जगत्कारणेऽधिष्ठानेऽद्वितीये ॥ ५५८॥

आवृत्त्या वा तन्त्रवृत्त्याथ वेदं
सूत्रं युक्तिं वेदवाक्योपयुक्ताम् ॥
अप्याचष्टे बृंहणीमन्तरेण
स्वार्थे युक्तिं वेदवाक्यं न पुष्टम् ॥ ५५९ ॥

ननु यदि द्वितीयसूत्रं यतो वेत्यादिसृष्टिवाक्यं सूचयत्तदर्थेऽद्वये तत्पदवृत्तिनिरूपणपरं तर्हि तदर्थाद्वयसंभावकयुक्तेरसूत्रितत्वात् कथं तत् सिद्ध्येदित्याशङ्क्य तदसूत्रणमसिद्धमित्याशयेनाह। आवृत्त्येति। इदं द्वितीयं सूत्रं ह्येकया वृत्त्योक्तां श्रुतिं सूचयत्यन्यया वृत्त्या जन्माद्यस्य यतः संभवतीत्यध्याहारेण च वेदवाक्यार्थनिर्णयोपयुक्तां युक्तिमपि सूचयति। अथवा त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥

समन्वयाध्यायेऽस्मिन् प्रतिपादितमर्थमुपसंहरति शक्नोतीति । वाक्यं वेदान्तवाक्यं सिद्धं ब्रह्मात्मानं मानान्तरनैरपेक्ष्येणावबोधयितुं शक्नोत्येवेत्युक्तिशेषः । सिद्धार्थव्युत्पत्तिसमर्थनादित्यर्थः । एवमुक्तमपि कार्यरहितं कार्यशेषत्वरहितं नियोगादिनिरपेक्षं स्वप्रधानमेवेत्यर्थः । अत्र पूर्वार्धेन समन्वयसूत्रवर्णनाद्व्यार्थः क्रमेण प्रदर्शितः तत्फलमखण्डब्रह्मावबोधः तत्फलं मुक्तिश्चोत्तरार्धेन । अर्पयितुं ज्ञानद्वारेति शेषः ॥ ५६२ ॥

एतत्समन्वयनिरूपणमेवमस्मिन्
बुद्धिस्थतामुपगते सति वाक्यजन्यम् ।
विज्ञानमद्वयगतं न ततोऽन्यदन्यत्
पुंसोऽपराधकृतमित्युदियात् प्रतीचि ॥ ५६३ ॥

इति श्रीदेवेश्वरपूज्यपादशिष्यश्रीसर्वज्ञात्ममुनेः कृतौ
शारीरकमीमांसाभाष्यप्रकरणवार्तिके
संक्षेपशारीरके प्रथमोऽध्यायः ॥ १ ॥

समन्वय उक्तातिरिक्तमपि किञ्चिन्निरूपणीयमस्ति किमित्याशङ्कां निवर्तयन्नेतावतैव समन्वयविषयसकलाशङ्कानिवृत्तेर्नान्यन्निरूपणीयमित्याशयेनाह एतदिति । ननु निर्णीतपदार्थावगमस्य वाक्यात्तत्तदर्थे लोके पृथङ् न्यायो नापेक्ष्यत इत्याशङ्क्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादिवाक्यार्थस्यातिगहनतया वादिभिः स्वेच्छया पृथक्पृथगर्थकल्पनात्तदर्थतदाभासविवेचनाय वर्णितरूपेण समन्वयोऽपि निरूपणीय एवेत्याशयेनाह । एवमस्मिन्निति । उक्तप्रकारेणास्मिन् समन्वये बुद्धिस्थे सति अद्वयब्रह्मविषयमेव विज्ञानं श्रुतिजन्यं न ततोऽप्यद्वयज्ञानादन्यच्छ्रुतिजन्यं किं तु पुंसोऽपराधकृतं पुरुषस्य वेदान्ततात्पर्याज्ञानादिदोषादुत्थितमिति प्रतीचि स्वात्मनि स्वयमेवोदियात् स्फुरेदित्यर्थः । तस्मादवश्यं समन्वयसूत्रन्यायेनाधिकारिणाखण्डैकरसे ब्रह्मणि सत्यज्ञानादिलक्षणे वेदान्तानां तात्पर्यं निरूपणीयं तच्च निःशेषं निरूपितम् । तथा च वेदान्तवाक्यरूपप्रमाणगतासंभावनानिरासेन वाक्यार्थनिर्णयः समन्वयनिरूपणफलं सिद्ध्यतीति भावः ॥ ५६३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरानन्दसरस्वती
पूज्यपादशिष्यश्रीमन्मधुसूदनसरस्वतीविरचितायां
संक्षेपशारीरकटीकायां प्रथमोऽध्यायः ॥ १ ॥

॥ शुभं भूयात् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तवृत्त्या तासाचष्टे, युगपदनेकार्थविवक्षयोच्चारणं
न्त्रम् । सूत्रत्वादेवानेकार्थत्वमपि नान्याय्यमिति
वः । ननु वेदवाक्यस्यानपेक्षस्य किं युक्त्या सहा
त्याशङ्क्याचेतनप्रपञ्चस्य चेतनोपादानत्ववत्तत्कर्तृ
त्सर्वज्ञत्वसर्वशक्तित्वादीनां लोकाप्रसिद्धानां श्रुतं
मप्युपपादकयुक्तिमन्तरेण विपरीतन्यायबाध्यत्वशङ्
श्रुतिमात्रादसिद्धेः साप्यपेक्षितेत्याशयेनाह । वृं
मिति । स्वार्थे सम्भावनाहेतुं युक्तिं विना वेद
न पुष्टं न स्वार्थनिश्चायकमित्यर्थः ॥ ५५९ ॥

त्वम्पदार्थविषयं समन्वयं
तत्पदार्थविषयं ततः क्रमात् ॥
तस्य शेषसपरं च वर्णय-
न्नुक्तवानथ महावचोगतम् ॥ ५६० ॥

ननु यदि प्रथमद्वितीयसूत्राभ्यां तत्त्वम्पदवृत्ती
पिते समन्वयसूत्रेण च समस्तवेदान्तवाक्यतात्पर्यं
वाक्यार्थविषयत्वेन प्रधानत्वात् सूत्रकारेणापि भा
तदेवादौ निरूपणीयमित्याशङ्क्य शास्त्रारम्भाय
कारिविचारविधौ प्रथमसूत्रेण निरूपिते विचार
ब्रह्मलक्षणासम्भवेन तदाक्षेपे तत्समाधानाय
प्रवृत्तमिति तास्यां पदार्थद्वये सिद्धे तदुभया
क्यार्थे तृतीयसूत्रेण श्रुतेरपौरुषेयतया स्वतःप्रा
सिद्धे तदाक्षेपसमाधानपरसमन्वयसूत्रावकाश

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेण मुनेः सूत्रप्रणयनं युक्तमित्यभिप्रेत्याह । त्वम्पदार्थेति । समन्वयं जीवस्वरूपपरवाक्यानामिति शेषः । तत्पदार्थविषये सत्यादिवाक्यानामिति शेषः, समन्वयमिति चानुषञ्जनीयम् । तस्य समन्वयस्य शेषमनुकूलमपौरुषेयत्वम्, महावचोगतं महावाक्यगतं समन्वयमित्यनुषङ्गः । पदार्थनिश्चयं विना वाक्यार्थावगमायोगादधिकार्यादिनिरूपणव्याजेन पदार्थद्वयनिरूपणपूर्वकं सूत्रकारो वाक्यार्थं न्यरूपयदिति सिद्ध एव क्रमः साधुरिति भावः ॥ ५६० ॥

त्वम्पदस्य दृशि वृत्तिमद्वये
तत्पदस्य च निवेदयन् मुनिः ॥
प्रत्यगद्वयपरं समन्वयं
शेषिणं पुनरथाब्रवीत्तयोः ॥ ५६१ ॥

एवं सूत्रचतुष्टयेन तत्तद्वर्णितार्थे पदद्वयवाक्यवृत्तिनिरूपणसमर्थनमुपसंहरति । त्वम्पदस्येति । दृशि प्रत्यगात्मनि त्वंपदस्य वृत्तिम् । अद्वये ब्रह्मणि तत्पदस्य वृत्तिम् । मुनिर्व्यासः । अथानन्तरं तयोस्तत्त्वंपदवृत्त्योः शेषिणं समन्वयं प्रत्यगद्वयपरं प्रत्यगद्वये ब्रह्मणि ऐक्यरूपेणाब्रवीत्, वाक्यस्येति शेषः ॥ ५६१ ॥

शक्नोति सिद्धमवबोधयितुं च वाक्यं
शक्नोति कार्यरहितं वदितुं च वाक्यम् ॥
शक्नोत्यखण्डमवबोधयितुं च वाक्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥ ...

समन्वयाध्यायेऽस्मिन् प्रतिपादितमर्थमुपसंहरति ... शक्नोतीति । वाक्यं वेदान्तवाक्यं सिद्धं ब्रह्मात्म... मानान्तरनैरपेक्ष्येणावबोधयितुं शक्नोत्येवेत्युक्तं ... शेषः । सिद्धार्थव्युत्पत्तिसमर्थनादित्यर्थः । एवमुक्त... पि कार्यरहितं कार्यशेषत्वरहितं नियोगादिनि... स्वप्रधानमेवेत्यर्थः । अत्र पूर्वार्धेन समन्वयसूत्रवर्ण... द्वयार्थः क्रमेण प्रदर्शितः तत्फलमखण्डब्रह्मावबोध... त्फलं मुक्तिश्चोत्तरार्धेन । अर्पयितुं ज्ञानद्वारेति... षः ॥ ५६२ ॥

एतत्समन्वयनिरूपणमेवमस्मिन्
बुद्धिस्थतामुपगते सति वाक्यजन्यम् ।
विज्ञानमद्वयगतं न ततोऽन्यदन्यत्
पुंसोऽपराधकृतमित्युदियात् प्रतीचि ॥ ५६...

इति श्रीदेवेश्वरपूज्यपादशिष्यश्रीसर्वज्ञात्ममुनेः कृतौ
शारीरकमीमांसाभाष्यप्रकरणवार्तिके
संक्षेपशारीरके प्रथमोऽध्यायः ॥ १ ॥

समन्वय उक्तातिरिक्तमपि किञ्चिन्निरूपणीय... किमित्याशङ्कां निवर्तयन् तावतैव समन्वयविष... लाशङ्कानिवृत्तेर्नान्यन्निरूपणीयमित्याशयेनाह । ए... ति । ननु निर्णीतपदार्थावगमस्य वाक्यात्तदव... मे लोके पृथङ् न्यायो नापेक्ष्यत इत्याशङ्क्य ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादिवाक्यार्थस्यातिगहनतया वादिभिः स्वेच्छया पृथक्पृथगर्थकल्पनात्तदर्थतदाभासविवेचनाय वर्णितरूपेण समन्वयोऽपि निरूपणीय एवेत्याशयेनाह । एवमस्मिन्निति । उक्तप्रकारेणास्मिन् समन्वये बुद्धिस्थे सति अद्वयब्रह्मविषयमेव विज्ञानं श्रुतिजन्यं न ततोऽप्यद्वयज्ञानादन्यच्छ्रुतिजन्यं किं तु पुंसोऽपराधकृतं पुरुषस्य वेदान्ततात्पर्याज्ञानादिदोषादुत्थितमिति प्रतीचि स्वात्मनि स्वयमेवोदियात् स्फुरेदित्यर्थः । तस्मादवश्यं समन्वयसूत्रन्यायेनाधिकारिणाखण्डैकरसे ब्रह्मणि सत्यज्ञानादिलक्षणे वेदान्तानां तात्पर्यं निरूपणीयं तच्च निःशेषं निरूपितम् । तथा च वेदान्तवाक्यरूपप्रमाणगतासंभावनानिरासेन वाक्यार्थनिर्णयः समन्वयनिरूपणफलं सिद्ध्यतीति भावः ॥ ५६३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरानन्दसरस्वती
पूज्यपादशिष्यश्रीमन्मधुसूदनसरस्वतीविरचितायां
संक्षेपशारीरकटीकायां प्रथमोऽध्यायः ॥ १ ॥

॥ शुभं भूयात् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# शोधन पत्रम् ।

| पृ० | पं० | अशुद्धस्य | शोधनम् |
|---|---|---|---|
| १ | १० | तपोवना | तपोवला |
| ३ | १० | प्रतिपादानर्थं | प्रतिपादनार्थं |
| ५ | २० | ग्रन्थकार | ग्रन्थकर |
| ६ | १२ | सुपायदेयम् | सुपादेयम् |
| ७ | १६ | तदेन्नतन्ना | तदेतन्नन्ना |
| ८ | १ | तद्भ्रमा | तद्भ्रमा |
| १० | १६ | चाऽसत्य | चा सत्य |
| १३ | २२ | साचत्का | साचात्का |
| २० | ८ | सम्भवादभाव | सम्भवात्तदभाव |
| २६ | १० | न्द्यक | न्यक |
| ३० | १ | प्रकाशनशक्त्याद्यतिरि | प्रकाशनशक्त्यतिरि |
| ३२ | २२ | नन्नि | ननि |
| ३४ | १५ | नत्वात्मनो | नन्वात्मनो |
| ३५ | ७ | ज्ञानं | ज्ञातं |
| ,, | ,, | ततोऽन्यः | ततोन्यत् |
| ३७ | २२ | मितिव व्य | मिति व्यव |
| ३८ | २ | दिनैव | दिनैव |
| ४० | ६ | भाव | भावः |
| ४० | १२ | प्रेयवि | प्रेयो वि |
| ४५ | ४ | द्दष्टमात्र | द्रष्टमात्र |
| ४८ | १४ | व्रत्यन्तर | व्रत्यन्तरं |
| ५१ | ७ | भ्रान्तिसा | भ्रान्तित्वसा |
| ,, | १२--१३ | प्रागनुभूत | प्रागननुभूत |
| ,, | २० | ज्ञानस्य | ज्ञातस्य |
| ६२ | १३ | क्षिखभ्रमः | क्षिखनुभ्रमः |
| ६५ | ७ | ज्ञानस्य | ज्ञातस्य |
| ६२ | १२ | नन्वात्मनोऽज्ञाना | नन्वात्मनो ज्ञाना |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| पृ० | पं० | अशुद्धस्य | शोधन |
|---|---|---|---|
| ७६ | ८ | मनेनयथेद | मनेन यदं |
| ७७ | ८ | यथास्या | यथाप्ता |
| ८१ | ९ | ज्ञाधाव | ज्ञ.तज्ञत |
| ८३ | २ | तत्र | तत्व |
| ८९ | ११ | परमात्मनोऽहंकार | परात्मनोऽ |
| ९४ | ८ | हिंसादिनियम | हिंसादि |
| १०२ | १४ | प्रवृत्तिप्रसव | प्रतिप्रस |
| ११४ | २१ | यितुं | यतु, |
| १२० | ६ | कुतोऽस्मि | कुतोऽस्मि |
| १४० | ७ | नुगशब्दा | नुगतं शब्द |
| १७६ | १४ | मुख्यो | मुख्यो |
| १८४ | २१ | सत्या तत्त्वादन्या | सत्वा तत् |
| १९० | २१ | पूर्णब्रह्मभेदा | पूर्णब्रह्मा |
| १९२ | १७ | प्राण | प्राणा |
| १९३ | १ | एवा नियमेन | एव नियमे |
| १९४ | १७ | आद्योऽस्मा | आद्योऽस्म |
| १९८ | १० | त्रिंधय: | त्रिगुंध. |
| २०१ | १३ | दृष्टश्च | दृष्ट्व |
| २०५ | १३ | ज्ञनी | ज्ञाता |
| २१५ | १३ | गिरां | गिरा |
| २१६ | ३ | गिरां | गिरा |
| २२४ | १७ | चन्द्रमाधित | चन्द्रमाधि |
| [illegible]६ | १७ | धर्मत्वज्ञाना | धर्मत्वाज्ञा |
| [illegible]७ | १९ | तया वि | तयाऽवि |
| [illegible] | २१ | तिरक्षो | तिरश्चो |
| २३० | २२ | पदेन | केन पदे |
| २५३ | ८ | तन्यप्र | तन्यम, |
| २६१ | ८ | तवाद्दा | तद्दा |
| २६३ | १५ | प्रभा | प्राभा |
| २६१ | ७ | प्रभा | प्राभा |
| २८० | ७८ | मेवमित्य | मेवेत्य |
| २८७ | १३ | युज | युजा |
| २९२ | २० | शब्देपि | शब्दोऽपि |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| पृ० | पं० | अशुद्धस्य | शोधनम् |
| --- | --- | --- | --- |
| २९७ | २२ | षड्मि | षड् इ |
| ३०० | १८ | विषयाभेदेन यसप्तमी | विषयसप्तमी |
| ३१२ | २२ | व्राह्मण: | ब्रह्मण: |
| ३१३ | १८ | स्वप्नो | स्वप्ने |
| ३१९ | ४ | त्युदक्तं | त्युक्तं |
| ३२९ | १८ | स्वाभियधेम् | स्वाभिधेयम् |
| ३४२ | ११ | फलवान् | यत्नवान् |
| ३४७ | १२ | युक्त्यनु | युक्त्यानु |
| ३५९ | १८ | सा पद | सपद |
| ३७१ | १५ | स्वाप्रमा | स्वाप्रामा |
| ३७३ | ५-६ | तत्क्रतुर्भवति | तत्क्रतुर्भवति यत्क्र-तुर्भवति |
| ३८८ | ६ | नञोऽर्थौ | नञर्थौ |
| ४०४ | १३ | धेयो भा | धेयोऽभा |
| ४०६ | १७ | संवदन | संवेदन |
| ४०७ | ७ | पापजनक | पापाजनक |
| ४१७ | ३ | सह्यो | प्रसह्यो |
| ४२४ | २१ | सर्वंसगुण | सर्वं सगुण |
| ४३४ | १८ | वाचिनो | गामिनो |
| ४५६ | १ | निश्चय | निश्चया |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| पृ० | पं० | अशुद्धस्य | शोधनं |
|---|---|---|---|
| ७६ | ८ | मनेनयथेद | मनेन यथे |
| ७७ | ८ | यथास्या | यथास्या |
| ८१ | ९ | ज्ञाधात्र | ज्ञ.तात |
| ८३ | २ | तत्र | तत्र. |
| ८९ | ११ | परमात्मनोऽहंकार | परात्मनोऽहं |
| ९४ | ८ | ह्निसादिनियम | हिंसादिनि |
| १०२ | १४ | प्रवृत्तिप्रसव | प्रतिप्रसव |
| ११४ | २१ | यितुं | यतु, |
| १२० | ६ | कुतोऽस्मि | कुतोऽस्मि |
| १४० | ७ | नुगमच्दा | नुगतं शब्दा |
| १७६ | १४ | मुख्यो | मुख्ये |
| १८४ | २१ | सत्वा तत्त्वादन्या | कल्पता तत्त्व |
| १९० | २१ | पूर्णब्रह्मभेदा | पूर्णब्रह्माभेद |
| १९२ | १७ | प्राण | प्राणा |
| १९३ | १ | एवा नियमेन | एव नियमेन |
| १९४ | १७ | ज्ञाद्यो ऽस्मा | आद्योऽस्म |
| १९८ | १० | त्रिंधयः | त्रिधेयः |
| २०१ | १३ | दृष्टश्च | दृष्टश्च |
| २०५ | १३ | ज्ञनी | ज्ञानी |
| २१५ | १३ | गिरां | गिरा |
| २१६ | ३ | गिरां | गिरा |
| २२४ | १७ | चन्द्रेवाधित | चन्द्रेऽबाधित |
| २२६ | १७ | धर्मत्वज्ञाना | धर्मत्वाज्ञा |
| २२७ | १९ | तया वि | तयाऽवि |
| " | २१ | तिरश्चो | तिरश्चो |
| २३० | २२ | पदेन | केन पदेन |
| २५३ | ८ | तन्यप्र | तन्यम्, |
| २६१ | ८ | तत्राद्दा | तद्दा |
| २६३ | १५ | प्रभा | प्राभा |
| २६१ | ७ | प्रभा | प्राभा |
| २८० | १८ | मेवमित्य | मेवेत्य |
| २८७ | १३ | युज | युञ्जा |
| २९२ | २० | शब्देपि | शब्देऽपि |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| पृ० | पं० | अशुद्धस्य | शोधनम् |
|---|---|---|---|
| २८७ | २२ | षड्मि | षड्द |
| ३०० | १८ | विपयाभेदेन यमसमी | विषयसप्तमी |
| ३१२ | २२ | व्राह्मण: | ब्रह्मण: |
| ३१३ | १८ | स्वप्नो | स्वप्ने |
| ३१८ | ४ | त्युदक्तं | त्युक्तं |
| ३२८ | १८ | स्वाभियधेम् | स्वाभिधेयम् |
| ३४२ | ११ | फलवान् | यत्नवान् |
| ३४७ | १२ | युक्त्यनु | युक्त्यानु |
| ३५८ | १८ | सा पद | सपद |
| ३७१ | १५ | स्वाप्रमा | स्वाप्रामा |
| ३७३ | ५-६ | तत्क्रतुर्भवति | तत्क्रतुर्भवति यत्क्रतुर्भवति |
| ३८८ | ६ | नञोऽर्थों | नञर्थो |
| ४०४ | १३ | धेयो भा | धेयोऽभा |
| ४०६ | १७ | संवदन | संवेदन |
| ४०७ | ७ | पापजनक | पापाजनक |
| ४१७ | ३ | मख्यो | प्रसख्यो |
| ४२४ | २१ | सर्वमगुण | सर्वं सगुण |
| ४३४ | १८ | वाचिनो | गामिनो |
| ४५६ | १ | निश्चय | निश्चया |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

# संक्षेपशारीरकस्य

## शेषास्त्रयोऽध्यायाः ।

लोकोत्तरबुद्धिविद्यावैभवशालि-
श्रीसर्वज्ञमुन्युपनिबद्धाः ।

विश्वविख्यातविद्यश्रीमधुसूदनसरस्वतीतर्कोद्भा-
सितसारसंग्रहाख्यव्याख्यारत्नभूषिताः ।

विलक्षणतर्कविचक्षणसमीक्षणाय श्रीबा-
बूगोविन्ददासगुप्तेन स्वकीये का-
शिके काशिकायन्त्रालये मु-
द्रयित्वा प्रचारिताः ।

तेनैव काशीस्थराजकीयप्रधानपाठालयाध्यापकश्रीद्वि-
वेदहरिनाथमनीषिप्रदर्शितरीतिमनुरुन्धानेन
श्रीबाबूभगवानदासस्यानुजस्य साहा-
य्यात् परिशोधिताः संस्कृताश्च ।

सं० १९४४. विजयदशम्याम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

एवं समन्वयनिरूपणयावबोधो
जातोऽप्यखण्डविषयो ननु वाक्यजन्यः ॥
मानान्तरेण परिपीड़ित एव जातो
भेदप्रकाशनकृताक्षनिबन्धनेन ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

एवं वेदान्तानां सत्यज्ञानानन्दाद्वये ब्रह्मणि समन्वयो निरूपितः, नन्वेवं सत्यद्वये समन्विततयावगतवाक्यादेव तदवगमसंभवात् सिद्धमेव सर्वं विवक्षितमिति किमुत्तरलक्षणेनेत्याशङ्क्य तेनाद्वये मानाभावप्रयुक्तासंभावनायां निरस्तायामप्यनादिभवसमुद्भूतद्वैतग्राहिप्रत्यक्षादिदृढ़प्रामाण्याभिमानेन प्रमेयासंभवं मन्वानस्य जातोऽप्यवगमोऽर्थसाधको न भवति, ततश्च भेदग्राहिप्रत्यक्षाद्यविरोधनिरूपणायाध्यायान्तरमारम्भणीयमित्याशयेन प्रथममुक्तसमन्वयमाक्षिपति । एवं समन्वयेति।नन्विति चोद्ये। प्रथममापाततो वाक्यजन्योऽनन्तरं समन्वयनिरूपणयाऽखण्डविषयनिश्चयो जातोऽपि मानान्तरेण परिपीड़ित एव संजात इति संबन्धः। विरोधार्थं मानान्तरं विशिनष्टि। भेदप्रकाशनकृतेति। भेदप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काशकेन, अक्षं प्रत्यक्षम् तच्चानुमानादेरप्युपलक्षणम्, तन्निबन्धनं कारणं यस्य तेन ॥ १ ॥

मज्जत्यलाबु सहसाप्सु शिलाः प्लवन्त
इत्यादिकादभिहितादिव वाक्यजातात् ॥
जातापि बुद्धिरपबाधितगोचरैव-
मद्वैतबुद्धिरपि भेदधियात्मनि स्यात् ॥ २ ॥

ननु मानान्तरविरोधस्फूर्तौ शाब्दबोध एव न जायते तदस्फूर्तिदशायां तदुत्पत्तिश्चेत् तर्हि समन्वयावगमानन्तरं सकृदुत्पन्नादेव ततः पुरुषार्थसिद्धेः किं लक्षणान्तरेणेत्याशङ्कायोग्यतानिश्चयस्य शाब्दनिश्चयप्रतिबन्धकत्वेऽपि न शाब्दज्ञानमात्रप्रतिबन्धकत्वम् उपेक्षामूलकवाक्यादपि तदर्थप्रतीतिदर्शनादित्याशयेनाह। मज्जतीति । अलाबु शुष्कम् । वाक्यजाताद् वाक्यसमूहात् । दार्ष्टान्तिकमाह । एवमिति । अद्वैतबुद्धिरपि वेदान्तजन्या भेदधियापबाधितगोचरैव स्यादित्यर्थः॥२॥

अध्यक्षगोचरमनर्थमवैमि वाक्यं
निर्मुक्तमाह मम रूपमनर्थहेतोः ॥
एवं च वेदशिरसोऽक्षनिबन्धनेन
ज्ञानेन बाधनमतीव हि दुर्निवारम् ॥ ३ ॥

नन्वेकस्मिन् विरुद्धधर्मद्वयग्राहकं चेत् प्रमाणद्वयं स्यात् तदैकेन बलवतापरं दुर्बलं बाध्येत, न चौपनिषदात्मनि श्रुतिगम्ये प्रत्यक्षादिप्रवृत्तिः संभवतीति कथं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन श्रुतिबाधः स्यादित्याशङ्क्य जीवस्वरूपे प्रत्यक्षादिप्रवृत्तिः संभवतीत्याशयेनाह । अध्यक्षगोचरमिति । ममाहमिति प्रत्यक्षसिद्धं स्वरूपमनर्थमवैमि प्रमातृत्वकर्तृत्वविविधदुःखादिभोक्तृत्वरूपानर्थकलुषितमवगच्छामि । "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । न लिप्यते लोकदुःखेन बाह्यः, अनन्वागतस्तेन भवत्यसंगोऽह्ययं पुरुषः तत्त्वमसी" त्येवमादि वाक्यं मम रूपमनर्थहेतोरविद्यातत्कार्ययोगान्निर्मुक्तमाह । न चैवं विरुद्धविषयं द्वयमपि सत्यं भवितुमर्हतीति सकलमहाजनसंमतेन प्रथमप्रवृत्तेनाध्यक्षादिनिबन्धनेन ज्ञानेन वेदशिरसोऽतीव बाधनं दुर्निवारमेव । यद्यपि ब्रह्म सत्यज्ञानानन्दात्मकं मानान्तरायोग्यमेवौपनिषदत्वश्रुतेः । तथापि प्रत्यक्षादिसिद्धप्रपञ्चसत्यत्वविरोधेन न तस्यानन्त्यं सिद्धेयत् । एवमनुभवसिद्धप्रमात्रादिस्वभावजीवाभेदोऽपि तस्य न सिद्धेयदिति तत्रापि विरोधो दुर्निवार इति भावः ॥ ३ ॥

कर्तृत्वमाह मम कर्मविधिर्नियोग-
संबन्धपूर्वकमपास्तसमस्तभेदम् ॥
मामाह वेदशिरसो वचनं तथा च
सत्यस्य दुःस्थितमिवापतति प्रमात्वम् ॥ ४ ॥

ननु श्रुतिविरोधे परमार्थसत्यत्वांशेन तदनुपजीव्यं प्रथमप्रवृत्तमपि प्रत्यक्षादिकमेव रजताभावज्ञानेन रज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तप्रत्यक्षमिव बाध्यत इति चेन्न। स्वसमकक्षकर्मकाण्डविरोधेन स्वविषयेऽप्रतिष्ठितस्योपनिषत्प्रमाणस्य प्रत्यक्षादिबाधकत्वायोगादित्याशयेनाह। कर्त्तृत्वमिति। दर्शपूर्णमासादिकर्मविधिर्मम नियोगसंबन्धपूर्वकं कामिनो जीवनादिमतो वा मम नियोगान्वयप्रतिपादनपूर्वकं तदनुपपत्त्या कर्तृत्वमाहेत्यर्थः, कर्तृत्वग्रहणं भोक्तृत्वस्याप्युपलक्षणम्। नन्वेतावता कर्मविधिना को विरोध उक्त इति तमाह। अपास्तेति। कर्तृत्वादिविशेषरहितं निर्विशेषमित्यर्थः। अस्य वेदशिरोवचनस्य। प्रत्यक्षाद्यनुग्रहलब्धप्राबल्यकर्मवचनविरोधे श्रुतिशिरःप्रभवज्ञानस्य प्रामाण्यमत्यन्तं दुःस्थितमेव स्यादित्यर्थः॥४॥

प्रत्यक्षकर्मवचसोरुभयोः समूहः
सामर्थ्यवानुपनिषद्विषयापहारे॥
एकैकमेव तु न पारयतेऽपहर्तुं
स्वार्थप्रकाशनविधावुभयोः समत्वात्॥५॥

ननु प्रत्यक्षादिवच्छ्रुतिशिरसोऽपि समन्वयाध्यायेनाद्वये विध्यविरोधेन निरूपितप्रामाण्यस्य कथं तेन बाध इत्याशङ्क्यैकस्य वस्तुनो युगपद् द्वैरूप्यायोगादन्यतरार्थस्य बाधे वक्तव्ये प्रत्यक्षादिसमुदायस्यैव श्रुतिबाधकत्वं युक्तम् दृश्यते हि समबलसेनयोरपि राज्ञोरेकस्य रथगजाश्वाधिक्येनापरबाधकत्वमित्याशयेनाह। प्रत्यक्षेति। पारयते शक्नोति। कुतो न पारय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

ति तत्राह । स्वार्थेति । उभयोर्वेदान्तस्य प्रत्येकं प्रत्यक्षादेश्चेत्यर्थः ॥ ५ ॥

ज्यैष्ठ्यात् समर्थमथ वाक्षजमेकमेव
तस्यैव कर्मविधिरस्तु सहायभूतः ॥
प्रत्यक्षमेव विधिवाक्यसहायमेवं
ब्रह्मात्मवस्त्वपहरिष्यति को विरोधः ॥ ६ ॥

ननु प्रमाणसमुदायो न पृथक् प्रमाणं न वा प्रत्यक्षादि युगपदेव स्वंस्वमर्थं साधयत्यत एवोक्तदृष्टान्तो विषम इत्याशङ्क्य कर्मकाण्डसमुपबृंहितं प्रत्यक्षमनेन श्रुतिशिरोबाधकं प्रत्यक्षादुपोद्बलितकर्मवाक्यं वा तदस्त्वित्याशयेनाह । ज्यैष्ठ्यादिति । अनपेक्षतया प्रथमप्रवृत्तेरित्यर्थः । अथ वेति । समूहपक्ष उक्तमस्वारस्यं द्योतयति । सहायभूत इति । प्रत्यक्षादिप्रमेयस्य कर्मवाक्येनाप्युपदर्शने प्रत्यक्षाद्यप्रामाण्यशङ्काशून्यं भवतीति कर्मविधिस्तत्सहायभूत इत्यर्थः । एवमेव प्रत्यक्षादेरपि विधिवाक्यसाहाय्यं द्रष्टव्यम् । उभयथाप्युक्तसमन्वयबाध एवेत्याह । एवमिति ॥ ६ ॥

अत्रोच्यते न खलु वेदशिरांसि मुक्त्वा
किं चित् प्रमाणमिह तत्त्वनिवेदनाय ॥
शक्नोति येन भवतीह विरोधशङ्का
वेदान्तवाक्यमुखतोऽवगते प्रतीचि ॥ ७ ॥

उच्यते. प्रत्यक्षादेः खलु व्यवहारोपयुक्तार्थनिवेदनश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्ततया व्यावहारिकमेव प्रामाण्यं न तत्त्वावेदकत्वरूपं तदर्थस्य वक्ष्यमाणयुक्तिभिः श्रुतिभिश्च बाध्यमानत्वात्, वेदान्तानां त्वव्यवहार्यब्रह्मविषयाणां तत्त्वावेदकत्वमेव प्रामाण्यमिति तैः प्रत्यक्षादिविषयसत्यत्वबाधेऽपि न तद्व्यावहारिकत्वं बाध्यते येन श्रुत्या संमते तेषां विरोधो भवेदतः कर्तृत्वादिप्रपञ्चस्य प्रत्यक्षादिसिद्धत्वेऽपि तस्य व्यावहारिकत्वादात्मनस्तत्त्वतो नित्यमुक्तत्वादिप्रतिपादकश्रुतेर्न का चित् क्षतिरित्याशयेन समाधत्ते । अत्रोच्यत इति । इह प्रतीचीति संबन्धः । मुखंतस्तात्पर्यत इत्यर्थः ॥ ७ ॥

अज्ञातमर्थमवबोधयदेव मानं
तच्च प्रकाशकरणक्षममित्यभिज्ञाः ॥
न प्रत्यगात्मविषयादपरस्य तच्च
मानस्य संभवति कस्य चिदत्र युक्त्या ॥ ८ ॥

प्रत्यक्षादेरनात्मग्राहिणस्तत्त्वनिवेदनाशक्तत्वमेवोक्तमुपपादयति । अज्ञातमिति । अभिज्ञा भट्टपादा ब्रह्मविदश्च । अनधिगतार्थबोधकं प्रमाणमिति हि ते संगिरन्ते । युक्तं चैतत् । साधकाभावनिमित्तां मेयासत्त्वशङ्कां यद् व्यवच्छिनत्ति तदेव मानं तच्चानधिगतगोचरमेव । अत एव मानाधीना मेयसत्तेत्याहुः । अन्यथा प्रमाणोपन्यासवैयर्थ्यं स्यादित्यनधिगतमेयगमेव प्रमाणमिति । ततः किं तत्राह । न प्रत्यगिति । तदनधि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतबोधनम् । अत्र जगत्यनात्मनोऽज्ञातत्वासंभवाद्व तन्मानं तथाविधमित्यर्थः । इदमिहाकूतम् । न तावत् प्रत्यक्षादिप्रमाणानां प्रामाण्यं विद्यमानार्थत्वम्, शुक्तिरजतादिप्रत्यक्षेऽपि तत्सत्त्वात् । नापि सदर्थकत्वम्, अर्थक्रियायोग्यत्वस्य सत्पदार्थत्वेऽनिर्वचनीयप्रपञ्चेऽपि तत्संभवेन तद्ग्राहकप्रत्यक्षादेः प्रपञ्चतात्त्विकत्वनिषेधश्रुतिविरोधाभावात् । नाप्यबाध्यत्वं प्रपञ्चस्य सत्त्वम्, तात्कालिकाबाध्यत्वस्य स्वप्नदृष्टेऽपि सत्त्वात्, बाधाभावस्य चक्षुराद्यप्रमेयत्वाच्च । अत एव त्रैकालिकाबाध्यत्वं सत्त्वमित्यपि न, अनागतबाधाभावस्येदानीं ग्रहीतुमशक्यत्वाच्च, प्रपञ्चोऽपि न सत्यो दृश्यत्वादिभ्यः शुक्तिरजतवदित्याद्यनुमानैरद्वैतश्रुतिश्रुतार्थापत्तिभ्यां च तस्य बाध्यमानत्वाच्च । तस्मादज्ञातार्थग्राहकत्वं प्रमाणानां प्रामाण्यं वाच्यम् । अज्ञानं चात्मनि प्राङ् निरूपितमिति नासंभवः, न वा घटादिप्रमाणेष्वव्याप्तिस्तस्यापि तदवच्छिन्नाज्ञातात्मगोचरस्य तदंशे प्रमाणत्वात् । न चैकस्मिन् ज्ञाने सति तद्गोचरज्ञानान्तरसत्त्वे प्रमाणमस्तीति न तत्राप्यव्याप्तिः । अज्ञाननिवृत्तिव्यतिरेकेण प्रमाणफलासंभवाच्च व्यवहारस्य तां विनाऽसंभवात् । परोक्षज्ञानेपि संशययोग्यतादिनिवृत्तिः फलमस्त्येव । सा चाज्ञातता चिदात्मन एव न जडस्येत्युक्तमिति न जडग्राहकं प्र-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माणमस्ति ततो नात्मैकत्वश्रुतेः प्रत्यक्षादिबाध इति। तदिदमुक्तं युक्त्येति ॥ ८ ॥

सर्वं पराग्विषयमेव हि मानजातं
वेदावसानवचनानि तु वर्जयित्वा ॥
यद्भौतिकं किमपि भौतिकगोचरं त-
द्रूपप्रदीपकनिदर्शनतः प्रसिद्धम् ॥ ९ ॥

ननु तर्हि कर्त्रादिस्वभावात्मनोऽज्ञाततासंभवात्तद्ग्राहिप्रत्यक्षादिप्रमाणविरोधादात्मनो नित्यमुक्तत्वादिग्राहकश्रुतेर्बाध इति चेत्तत्राह । सर्वमिति । वेदावसानवचनानि वर्जयित्वा वेदान्तातिरिक्तं सर्वं कर्त्रादिविषयं मानजातं पराग्विषयमेव, अनात्ममात्रविषयं वेदान्तातिरिक्तानुभवकारणत्वाद्घटादिप्रत्यक्षवत् । न चैवं बाधः कर्तृत्वादिधर्मकाहङ्कारस्य तद्विशिष्टस्य च शुद्धात्मनि कल्पिततया पराक्त्वात् तत्साक्षिण एव शुद्धस्यात्मत्वात् । न च तस्मिन् स्वप्रकाशे भेदग्राहकं किंचिदस्तीति न तच्छ्रुतिविरोधः । अत एव दृष्टान्तेऽपि तत्तद्विशिष्टचैतन्यविषयत्वेऽपि न साध्यवैकल्यमिति भावः । तुशब्देन वेदावसानस्याध्यक्षादितो विशेषमाह । तच्च शुद्धात्मतत्त्वावेदनं स्पष्टम् । किं च प्रत्यक्षादिकं भौतिकमात्रगोचरं भौतिकत्वे सति प्रकाशकत्वात्, रूपादिप्रकाशकप्रदीपादिवदित्याशयेनाह । यद्भौतिकमिति । यत्किमपीति संबन्धः । रूपप्रदीपकः प्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काशकस्तद्दृष्टान्तत इत्यर्थः । न च सिद्धान्ते वेदान्तवाक्यानामपि शब्दमयत्वेन भौतिकत्वात्तत्र व्यभिचार इति वाच्यम् । आनुपूर्वीस्वरादिविशेषवद्वाक्यात्मनो वेदस्य रज्जुसर्पादेरिवाज्ञातब्रह्मविवर्त्तत्वेनाभौतिकत्वात् । नापि सिद्धान्ते मनसि व्यभिचारः । तद्ग्राह्यस्य घटादेरपि भौतिकत्वादात्मनः स्वप्रकाशस्य तत्साक्षिणस्तदग्राह्यत्वादिति ॥ ९ ॥

यद्व्यञ्जकं किमपि लौकिकमीक्षितं तद्
व्यङ्ग्येन तुल्यमवलोकितमत्र जात्या ॥
दीपः प्रकाशकतया विदितो हि लोके
रूपेण तैजसतया सदृशः प्रसिद्धः ॥ १० ॥

नन्वभौतिकगोचरत्वेऽपि भौतिकत्वसंभवादप्रयोजकमिदमनुमानमित्याशङ्क्य व्यङ्ग्यव्यञ्जकयोः साजात्यनियमं सदृष्टान्तमाह । यद्व्यञ्जकमिति । अत्र लौकिकं व्यञ्जकमिति वेदान्तातिरिक्तप्रमाणमिति दर्शितम्, अतो न वेदान्ते व्यभिचारः । अत्र लोके । जात्या व्यङ्ग्येन तुल्यं व्यङ्ग्यसजातीयमित्यर्थः । प्रकाशकतया रूपस्येति शेषः । तैजसतया तेजस्त्वेन, सर्वं हि रूपं तेज एवेति वेदान्तमर्यादयैवमुक्तम्, तेजःप्रकृतित्वात् साङ्ख्यमतेन वा ॥ १० ॥

बुद्धिः समस्तविषयावगमे प्रवृत्ता
सापि प्रकाशविषयेण समानजातिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिश्च भौतिकतया श्रुतिषु प्रसिद्धा
तेनास्तु सापि खलु भौतिकगोचरैव ॥ ११ ॥

ननु मनोग्राह्यं सर्वं न च तत्सर्वसजातीयमेकस्य तदसंभवादित्याशङ्क्याह । बुद्धिरिति । मन इत्यर्थः । बाह्यकरणादिसहायेन बुद्धिः समस्तविषयावगमे प्रवृत्तेत्यर्थः । प्रकाशविषयेण स्वजन्यप्रकाशविषयेण । तस्याः प्रकाश्यसाम्यमेवाह । बुद्धिश्चेति । श्रुतिषु अन्नमयं हि सोम्य मन इत्यादिषु । अस्त्विति समर्थने लोट् । श्रुतिषु भौतिकत्वेन प्रसिद्धेर्भौतिकगोचरत्वमेव तस्याः समर्थनम्, सा बुद्धिर्भौतिकगोचरैव न तु परेषामिवात्मसुखादिगोचरेत्यर्थः । एवं च सर्वस्यापि मनोग्राह्यस्य भूतात्मत्वान्मनसोऽपि तथात्वात् प्रकाश्यसाम्यमित्यर्थः ॥ ११ ॥

एवं प्रमाणमखिलं बहिरर्थनिष्ठं
वेदान्तवाक्यमपहाय यथोक्तहेतोः ॥
न प्रत्यगात्मविषयं श्रुतिरप्युवाच
स्पष्टं पराञ्चिखचसार्थमिमं यथोक्तम् ॥ १२ ॥

एवमात्मन एवाज्ञातत्वादज्ञातगोचराणामेव प्रमाणत्वान्न प्रपञ्चस्य प्रमाणगम्यत्वं संभवति, प्रत्यक्षस्य रूपादिविशेषवत्स्येव प्रवृत्तेर्निर्विशेषे चात्मनि तदयोगादनुमानादेश्च प्रत्यक्षोपजीवितया सविशेषमात्रविषयत्वात् सामान्यतो दृष्टस्य विशिष्य वस्त्वनिश्चायकत्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्चाध्यक्षादेरनात्ममात्रगोचरत्वेत्याशयेनोपसंहरति । एवमिति । यथोक्तहेतोः वेदान्तातिरिक्तानुभवकरणत्वादिहेतोः । न प्रत्यगात्मविषयमिति । तथा च भिन्नविषयत्वान्न तस्य तद्बाधकत्वमित्यर्थः । श्रुतिरप्येतद्द्दर्शयतीत्याह । श्रुतिरिति । पराञ्चिवचसा पराञ्चीति वचनेन ॥ १२ ॥

पराञ्चि खानि व्यतृणत् स्वयंभू-
स्तस्मात् पराङ् पश्यति नान्तरात्मन् ॥
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १३ ॥

तामेव श्रुतिं पठति । पराञ्चीति । पराग्विषयाणीत्यर्थः। खानीन्द्रियाणि। व्यतृणद्धिंसितवान्,नानाविधानर्थोपेतपराग्विषयत्वमेव तेषां हिंसा । स्वयंभूः प्रजापतिः। इन्द्रियादिप्रमाणानि पराग्विषयाण्येव सृष्टवानित्यर्थः।पराङ् पराञ्चम्,नान्तरात्मन्नान्तरात्मानम्, कश्चिदाराधितेश्वरः, अत एव धियमीरयतीति धीरः, अमृतत्वं मोक्षमिच्छन्नावृत्तचक्षुः, चक्षुर्ग्रहणमुपलक्षणं निगृहीतसर्वेन्द्रिय इत्यर्थः , प्रत्यगात्मानमैक्षदपश्यत् पश्यतीत्यर्थः। तथा च प्रत्यगात्मा नेन्द्रियगोचरोऽत एव नानुमेयोऽपि, अत्यन्तातीन्द्रियेऽर्थे व्याप्त्याद्यसंभवादिति भावः ॥ १३ ॥

यत् कर्मभावमनपास्य निजप्रमेये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संवित्तिसाधनतया जगति प्रसिद्धम् ॥
मानं जड़ार्थविषयं तदिहाभ्युपेयं
न प्रत्यगात्मविषयं कथितोपपत्तेः ॥ १४ ॥

किं च कर्त्रादिप्रमुखप्रपञ्चस्य दृश्यत्वं सर्वाविवादमेवं च यत् प्रत्यक्षादि मानं निजप्रमेये कर्मभावं दृश्यत्वमनपास्येह जगति संवित्तिसाधनतया प्रसिद्धं तज्जड़ार्थविषयमनात्मविषयमभ्युपेयं नयनादिवदिति नियममभिप्रेत्याह । यत् कर्मेति । फलितमाह । न प्रत्यगिति । तन्मानमित्यनुषङ्गः । कथितोपपत्तेः, यत् कर्मभावमित्यादिनैतच्छ्लोकपूर्वभागेनोक्तयुक्तेः । दृश्यस्यानात्मत्वनियमेन तन्मानस्यानात्मविषयत्वादात्मनोऽदृश्यत्वात् तदिदमभ्युपेयमित्यनेन सूचितमिति॥१४॥

यत्तु प्रमाणमवधीर्य निजप्रमेये
कर्मत्वमर्थमवबोधयितुं प्रवृत्तम् ॥
तत् प्रत्यगात्मविषयं भवितुं क्षमेत
तत्त्वमादिवचनं न ततोऽन्यदस्ति ॥ १५ ॥

अस्त्वेवं ततः किमित्याशङ्क्यात्ममात्रप्रवृत्तवेदान्तानां भिन्नविषयतया न प्रत्यक्षादिबाध इत्याशयेन तेषामात्मविषयत्वं साधयति । यत्तु प्रमाणमिति । वेदान्ता हि स्वप्रकाशे प्रत्यगात्मनि घटादाविव चक्षुरादिस्फुरणमनाधायैव तदविद्यानिवृत्तये तदाकारां वृत्तिं जनयन्तीति न्यायत उपपादितम्, तदिदमाह । अवधी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यैरित्यादिना । क्षमेत युज्येत । किं तत्तादृशं मानमित्यत आह । तत्तत्त्वमादीति ॥ १५ ॥

नाज्ञाततावगतिरस्ति जडेषु पूर्वं
मेयेषु तत्स्फुरणकारणवर्जितत्वात् ॥
मानोदयान्न हि पुरा किमपीह मानं
नापि प्रमेयबलतो जडता हि तस्य ॥ १६ ॥

नन्वज्ञातार्थबोधकं मानमज्ञातत्वं चात्मन एवेत्युक्तमयुक्तम्, इदं न जानामीत्यनात्मनयपि तदवगतिदर्शनादित्याशङ्क्य किं घटादौ चक्षुरादिप्रवृत्तेः पूर्वमेव तज् ज्ञायते किं वा मानेन तस्मिन् प्रमिते तदन्यथानुपपत्त्या तज् ज्ञायते, नाद्य इत्याह । नाज्ञाततेति । कुतो नास्तीत्यत आह । तत्स्फुरणेति । चक्षुरादिप्रवृत्तेः पूर्वं ततस्तज्ज्ञानासंभवात्, परमते तदा तत्साधकसाक्षिणोऽभावाच्चेत्यर्थः ॥ १६ ॥

नाज्ञाततावगतये स्वयमेव बाह्यं
मेयं समर्थमवबोधविलक्षणत्वात् ॥
नापि प्रमाणमवबोधकमस्ति किञ्चिन्
मानोदयात् पुर इति स्फुटमभ्युपेयम् ॥१७॥

नन्वात्मवद् घटादिकमेव स्वनिष्ठाज्ञानप्रकाशकमस्त्वित्याशङ्क्याह । नाज्ञाततेति । किं च न तावच्चक्षुरादिना तदवगतिः संभवत्यज्ञानस्य तदयोग्यत्वात्, नापि मनसा तद्व्यापारविरहेऽपि सुषुप्त्यादौ तदवगमा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्,नाप्यनुमानादिना तदनुभवस्य प्रत्यक्षतयाऽतत्फलत्वादित्याशयेनाह । नापीति । स्फुटमपरोक्षं यथा स्यात्तथावबोधकमिति संबन्धः । पुरः पृथक् । नापि घटादौ प्रमिते तदन्यथानुपपत्त्या तदवगतिः । घटादेरज्ञातत्वज्ञानं विना तज्ज्ञाने प्रमात्वासिद्ध्या तत्प्रमितत्वस्यैवासिद्धेरिति भावः ॥ १७ ॥

नाज्ञाततामनवगम्य पुरा प्रवेशान्
मानस्य किं चिदपि मानबलेन बोद्धुम् ॥
शक्नोति कश्चिदपि मानबलेन बुद्धं
किं वा स्वभाव इति निश्चयहेत्वभावात् ॥१८॥

किं च प्राग् घटादेरज्ञातताज्ञानाभावे तत्प्रमित्सापूर्वं प्रमाणप्रवृत्त्यसंभवेन मेयावगतिर्न स्यात्, न हि प्रमातुः प्रमित्सां विना तत्प्रमितये चक्षुरादिव्यापारयितृत्वं संभवति, अपि च प्राग् घटादेरज्ञातताज्ञानाभावे तत्स्फुरणस्य मानफलत्वं न सिद्धेत्तस्य घटादिस्वभावत्वशङ्कायां दुरपह्नवत्त्वादित्याशयेनाह । नाज्ञाततामिति । मानस्य प्रवेशाद्व्यापारात् पुरेति संबन्धः । मानबलेनेदं बुद्धमिति बोद्धुमित्यनुषङ्गः । कुतस्तत्राह । मानबलेनेति । स्वभाव इति । अस्य स्फुरणमिति शेषः । न च चक्षुरादिव्यापारानन्तरभावितया ज्ञानस्य तज्जन्यत्वनिश्चय इति वाच्यम् । प्राक् प्रमेयस्याज्ञातत्वज्ञानाभावे चक्षुरादिव्यापारानन्तर्यस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पि दुर्बोधत्वादिति भावः ॥ १८ ॥

प्रक्षालनेन धवलं किमिदं बभूव
किं वा पुरापि धवलं स्वयमेव वस्त्रम् ॥
इत्येवमेष न विवेक्तुमलं कदा चिद्
यो दृष्टवान्न मलिनं वसनं पुरस्तात् ॥ १९ ॥

उक्तार्थे दृष्टान्तमाह । प्रक्षालनेनेति । सुबोधम् ॥१९॥

एवं पुरानधिगतं यदि नानुभूतं
मानेन बोधितमिदं प्रतिभाति मेयम् ॥
न स्वप्रकाशमिति शक्यमिदं विवेक्तुं
केनापि नैव तदवस्थतयैव दृष्टेः ॥ २० ॥

दार्ष्टान्तिकमाह । एवं पुरेति । इदं मेयं मानेनैव बोधितं प्रतिभाति न तु स्वप्रकाशमिति केनापि विवेक्तुं नैव शक्यमिति संबन्धः । विवेक्तुं कुतो नैव शक्यमित्यत आह । तदवस्थेति । स्फुरदवस्थतयैवेत्यर्थः ॥ २० ॥

अज्ञातमर्थमवबोधयितुं न शक्त-
मेवं प्रमाणमखिलं जड़वस्तुनिष्ठम् ॥
किं त्वप्रबुद्धपुरुषं व्यवहारकाले
संश्रित्य संजनयति व्यवहारमात्रम् ॥ २१ ॥

ननु सिद्धान्ते घटाद्यज्ञातताया: साक्षिभास्यत्वसंभवाद् घटादिग्राहकमपि प्रमाणं किं न स्यादिति चेन्न, जड़स्य तदयोगात्, तत्सत्त्वेऽप्यज्ञानादेः साक्षिण्यध्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्वं वाच्यम्, साक्षिणो वस्तुतः साक्ष्यसंबन्धासंभवात्, न वा साक्षी स्वासंबद्धमप्यनुभवितुं शक्नोतीति नानात्मग्राहकं प्रमाणमस्तीत्याशयेनोपसंहरति। अज्ञातमर्थमिति। जडवस्तुनिष्ठं जडवस्तुविषयम्। तर्हि प्रत्यक्षाद्यभ्युपगमवैयर्थ्यमित्याशङ्क्य घटाद्यवच्छिन्नमज्ञातमात्मानं संश्रित्य विषयीकृत्य व्यवहारकाले तदज्ञाननिवृत्तावभिव्यक्तचिद्भास्यघटादिव्यवहारजननान्न तदानर्थक्यमित्याह। किं त्वित्यादिना। अथ वाऽप्रबुद्धपुरुषसंज्ञं व्यवहर्तारमित्यर्थः। अत्रापि प्रागुक्तमार्गेणैव व्यवहारजनकत्वं द्रष्टव्यम्। तस्मात् सर्वमेव जडविषयं चक्षुरादि न प्रमाणमिति कुतस्ततो वेदान्तबाध इति भावः॥ २१॥

आबोधतः सकलमेव हि सत्यमिथ्या-
भ्रान्तिप्रमाणविनिवर्त्यनिवर्त्तकत्वम्॥
स्वप्नेऽपि दृष्टमिदमेवमिहापि जाग्र-
त्काले भवत्वखिलमापरमात्मबोधात्॥ २२॥

नन्वेवं सर्वजडानां मिथ्यात्वे घटादीनां शुक्तिरजतादीनां सत्यमिथ्याविभागः सकलमहाजनसिद्धो न सिद्ध्येत्, एवं तद्ज्ञानानां प्रमाणाप्रमाणकत्वानिवर्त्तकत्वनिवर्त्त्यत्वविभागोऽपीत्याशङ्क्याध्यस्तत्वेऽपि सर्वस्य तथातथा पूर्ववासनादिजन्यत्वावान्तरविशेषेण तदुपपद्यत इति दृष्टान्तेनाह। आबोधत इति। जाग्रत्पर्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तमित्यर्थः । आबोधतः सत्यमिथ्यादि सकलं दृष्टमेवेति संबन्धः । दार्ष्टान्तिकमाह । इदमिति । इदमखिलमिहापीति संबन्धः । इहापीत्यस्य विवरणं जाग्रत्कालेऽपीति । ननु कथं जाग्रत्कालीनपटादेरर्थक्रियाकारिणः स्वप्नतुल्यत्वमिति शङ्कां तुशब्देनाशङ्क्य निषेधति । न त्विति । स्वप्नेऽपि दृष्टस्य तत्काले व्यवहारदर्शनान्न कोऽपि जाग्रति दृष्टघटादेर्विशेष इत्यर्थः । कालेऽपि न त्विति पाठ एवं योजितः । काले भवत्विति पाठस्तु सुगमः । ननु यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति श्रुतिः सर्वमपि दर्शनादिव्यवहारं प्रतिषेधति तत् कथमिदमखिलमिहापीत्युच्यत इति चेत् सत्यम् । आत्मसाक्षात्कारे सति तथैव, तावत्पर्यन्तं तु व्यवहारोऽनुवर्त्तत एवेत्याशयेनाह । आपरमात्मबोधादिति ॥ २२ ॥

स्वप्ने तप्तशिलाधिरोहणगता निःश्रेयसोपायता
मिथ्या ब्राह्मणतर्पणादिनिलया सत्या तथा लौकिकी ॥
स्रक् सत्या तदहिर्मृषैव विदितो निद्रानिवृत्तौ पुनः
स्वप्ने दृष्टमशेषमेव वितथं ग्राह्यं तथा जागरे ॥२३॥

स्वप्नदृष्टान्ते उक्तमेव विभागमुदाहरणविशेषमाश्रित्य विशदयति । स्वप्न इति । तप्तशिलाधिरोहणेति । बाह्यागमप्रसिद्धमुक्तम् । तत्रैव लौकिकमपि विभागमाह । तथा लौकिकीति । नन्वेवं यथादर्शनं तदपि सत्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मस्तु,न, प्रबोधे सति सर्वस्यापि बाधादित्याशयेनाह। निद्रानिवृत्ताविति। दार्ष्टान्तिकस्य संक्षेपाभिधानम्,ग्राह्यं तथा जागर इति ॥ २३ ॥

श्रेयः साधनताग्निहोत्रनिलया सत्येति संगृह्यते
मिथ्या तप्तशिलाधिरोहणगता शिष्टैः परित्यज्यते ॥
रज्जुः सत्यतया स्थितैव तदहिर्मिथ्यैव तावद्भवेद्
यावन्मूलतमोविदारणपटुर्विद्योदयो नागमत्॥ २४ ॥

तदेव प्रपञ्चयति। श्रेयः साधनतेति। सुबोधः ॥२४॥

ननु शाक्यभिक्षुसमयेन समः
प्रतिभात्ययं च भगवत्समयः ॥
यदि बाह्यवस्तु वितथं नु कथं
समयाविमौ न सदृशौ भवतः ॥ २५ ॥

ननु सर्वस्यापि वियदादिप्रपञ्चस्य स्वप्नतुल्यत्वे तद्वद्विज्ञानात्मकमेव सर्वं वक्तव्यं ततश्च विज्ञानवादिसमयप्रवेशापत्तिरित्ति शङ्कते। नन्विति। शाक्यो जिनबौद्धो विज्ञानवादी तत्सिद्धान्तेनेत्यर्थः। भगवतो व्यासभगवत्पादादेः समय इत्यर्थः। ननु विज्ञानवादिना वेदप्रामाण्याद्यनभ्युपगमात् कथं तदभ्युपगन्तृभगवत्समयस्य तत्समयतुल्यतेति चेत् सत्यम्। तथापि विज्ञानातिरिक्तविज्ञेयानभ्युपगमे कथं न तत्तौल्यं तेनापि तथैवाङ्गीकारादित्याह। यदीति। बाह्यं विज्ञानातिरिक्तं वस्तु वितथमलीकं कथं न्विति संबन्धः ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि बोध एव परमार्थवपु-
र्न तु बोध्यमित्यभिमतं भवति ॥
ननु चाश्रितं भवति बुद्धमुने-
र्मतमेव कृत्स्नमिह मस्करिभिः ॥ २६ ॥

व्यतिरेकमुखेनोक्तमतद्वयसाम्यमन्वयेनाप्याह । यदि बोध इति । अभिमतमिति । भवतामिति शेषः । मस्करिभिरेकदण्डिभिः ॥ २६ ॥

ननु मातृमानविषयावगती-
रपरस्परं प्रति विभागवतीः ॥
उपयन् भदन्तमुनिना सदृशः
कथमेष वैदिकमुनिर्भवति ॥ २७ ॥

विज्ञानवादिनो हि ज्ञेयं ज्ञाने प्रतिभासमानत्वाज् ज्ञानाभिन्नमेव ज्ञानवत्, अन्यथा ज्ञानज्ञेयसंबन्धासंभवेन ग्राह्यग्राहकतानुपपत्तेरिति ज्ञानमेव सत्यं तदतिरिक्तं ज्ञेयं त्वनादिवासनाप्रापितमलीकं ज्ञानात्मकमिति वदन्ति, एवं भवद्भिरपि ज्ञानस्वभावात्मनि तदन्यत् सर्वमध्यस्तं तदभिन्नमित्युच्यते चेत् कथं नोभयोः साम्यमिति, ज्ञानात्मनि दृश्यस्य कल्पितत्वोक्तिमात्रेण ब्रह्मवादिसमयस्य बौद्धमतसाम्यं चेत् सर्वेषां मतानां तत्साम्यप्रसङ्गः, अस्ति हि सौत्रान्तिकवैभाषिकाभ्यां बाह्यार्थाभ्युपगमेन न्यायवैशेषिकादेः साम्यम्, विज्ञानस्याशुविनाशित्वाभ्युपगमेन विज्ञान-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वादिनापि, सर्वसाम्यं तु नास्माकमपि तेनास्ति, तेन हि प्रदीपदृष्टान्तेन ग्राह्यग्राहकग्रहणानामभेदो वस्तुतोऽभ्युपेयते, ब्रह्मवादिना तु कर्तृकरणक्रियाकर्मणामन्योन्यविरुद्धस्वभावानामभेदासंभवादहं चक्षुषा रूपं पश्यामीति तद्भेदानुभवाच्चैकस्य ग्रहीतृग्राह्यक्रियाकरणत्वमनुपपन्नं प्रदीपस्यापि न प्रदीपप्रकाश्यत्वं तस्यैव प्रकाशात्मत्वात् प्रदीपसाध्यतमोनिवृत्तेस्तत्रासंभवाच्चेति मातृमानविषयादीनां परस्परं धर्मिसमानसत्ताको विभागोऽभ्युपगम्यते ज्ञानं चाद्वयमिति न कथमपि सर्वसाम्यमित्याशयेनाह । नन्विति । निश्चये । माता अन्तःकरणविशिष्टः प्रमाता, मानं चक्षुरादि, विषयो रूपादिः, अवगतिः रूपाद्याकारा चक्षुरादिजन्यान्तःकरणवृत्तिस्ता इत्यर्थः । अपरस्परमन्योन्यम् । उपयन्नङ्गीकुर्वन् । भदन्तो बौद्धस्तन्मुनिना विज्ञानवादिनेति यावत् । वैदिकमुनिर्वेदोक्तसंन्यासी श्रीशङ्कराचार्य इति यावत् ॥ २७ ॥

परमात्मसंश्रयतमोजनितं
प्रविभक्तमेव तु परस्परतः ॥
स्थिरमभ्युपेतमिह नः समये
ननु मातृमानविषयप्रभृति ॥ २८ ॥

ननु भवतापि परस्परं मातृमानादिप्रपञ्चोऽभ्युपगतश्चेत् कथमात्मनो निष्प्रपञ्चाद्वयत्वमित्याशङ्क्य त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्मनि तदज्ञानकल्पितत्वान्न चाद्वैतक्षतिर्न वा विज्ञानवादादविशेष इत्याशयेनाह । परमात्मनीति । तुशब्देन पराभिमतात्मादेरत्र सूचितं विशेषमाह । प्रविभक्तमिति । स्थिरमिति च मात्रादेर्ज्ञानस्य च स्थायित्वमपि ततो विशेषान्तरं सूचितम् । अत्रापि नन्विति निश्चये । प्रभृतिशब्देन प्रमितिग्रहणम् ॥ २८ ॥

तमसा विनिर्मितमिदं सकलं
चतुरः स पश्यति परः पुरुषः ॥
अविकारिबोधवपुरद्वयकः
करणैर्विना सकलसाक्षितया ॥ २९ ॥

ननु यदि प्रमात्रादिचतुष्टयं परस्परं विभिन्नं व्यवहाराङ्गमभ्युपेयते तर्हि प्रमात्रादिव्यवहारार्थमपि तदभ्युपेयमित्यप्रामाणिकं तदानन्त्यं प्रसज्येत, न हि तेनैव प्रमात्रादिना तद्ग्रहणं संभवति, कर्तृकर्मादिभावविरोधादित्याशङ्क्य प्रमाणव्यापारेण यद् वस्त्ववभासते तत्रैव प्रमात्रादिचतुष्टयापेक्षा प्रमात्रादिकं तु सुखदुःखादिवच्छुक्तिरजतादिवच्चाविद्याविनिर्मितत्वात् साक्षिमात्रभास्यं साक्षी चोदासीनबोधाद्वयात्मस्वरूप एवेति न करणादि किं चिदपेक्षत इत्याशयेनाह । तमसेति । इदं सकलमित्यस्य विवरणं चतुर इति । प्रमात्रादिचतुष्टयात्मकं सर्वं जगदित्यर्थः । चतुर इति पुरुषविशेषणं वा । तदेव विवृणोति । अविकारीति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यः परः पुरुषोऽविकारिबोधवपुरद्वयकः स करणैश्चक्षु-रादिभिर्विनेदं सकलं पश्यतीति संबन्धः। अत्राविकारि-बोधवपुरित्यनेनौदासीन्यबोधाभ्यां तस्य साक्षिशब्दा-र्हत्वमुक्तम्। ननु दर्शनक्रियायाः करणसाध्यत्वेन कथं तैर्विना पश्यतीत्युच्यते, कथं वा तत्कर्तुरौदासीन्यमि-ति तत्राह। सकलेति। उदासीनस्यैव लोके साक्षित्व-प्रसिद्धेर्निर्व्यापारनित्यचैतन्येनैव तस्य द्रष्टृत्वान्नोक्तदू-षणद्वयमिति भावः॥ २९॥

निजमायया परिगतः पुरुषः
परतन्त्रया तु निजया प्रभया॥
परिकल्पितं सकलमाकलयन्
स हि साक्षितामुपगतो भवति॥ ३०॥

ननु लोके प्रमातुरेव साक्षित्वं दृश्यते प्रमातृत्वं च प्रमाणव्यापारसाध्यमिति कथं करणैर्विना पश्यतीत्यु-क्तमित्याशङ्क्य, लोकेऽपि हि यत्र यः साक्षी व्यवह्रिय-ते स तदसङ्ग एव तदकर्तृतया प्रसिद्धोऽन्यथा तत्कर्तृ-त्वेन तत्साक्षित्वव्यवहारायोगात्, एवमिहापि साक्ष्यमा-तृत्वादिप्रपञ्चशून्यस्यैव साक्षित्वं तच्च स्वरूपचैतन्ये-नाविद्यावृत्त्या वेक्षणेनेति न प्रमाणव्यापारापेक्षेत्याशये-नाह। निजमाययेति। स्वविषयमाययेत्यर्थः। माया-याः स्वातन्त्र्येण तत्कार्यस्याप्यात्मातन्त्रत्वेनासंबन्धा-त्तत्साक्षित्वं न स्यादिति तद्वारयंस्तां विशिनष्टि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परतन्त्रयेति । निजया प्रभया स्वरूपप्रकाशेन प्रपञ्चाकाराविद्यावृत्तौ स्वीयचिदाभासेनेति वा, यः पुरुषः स हि स्वाध्यस्तमायया शबलतया स्वस्मिन् परिकल्पितं सकलं दृश्यं निजया प्रभयाकलयन् साक्षितामुपगतो भवतीति संबन्धः । इदं चेश्वरस्य सर्वज्ञतारूपं सर्वसाक्षित्वमुक्तम् । जीवस्य सुखादिसाक्षित्वं त्वविद्याशबलस्यैवान्तःकरणोपधानेनेति द्रष्टव्यम्, अन्यथातिप्रसङ्गात् ॥ ३० ॥

ग्राह्यग्राहकयोः स्थिरत्वगमनी तत्प्रत्यभिज्ञा प्रमा
नोपापत्स्यत चेदसेत्स्यदपि नौ सिद्धान्तयोस्तुल्यता ॥
सा निर्वक्ष्यति सिध्यतीति जगतः स्थैर्यं स्वरूपात्मकं
चैतन्यस्य च भङ्गुरत्वमिव मे सर्वस्य ते दर्शने ॥ ३१ ॥

ननु स्थिरमभ्युपेतमिह नः समय इति दृश्यस्य स्थायित्वमुक्तं तदसङ्गतम्, तन्न तावत् प्रत्यक्षेण सिद्ध्यति, स्वसमये स्वविषयग्राहिणा तेनानेकक्षणावच्छिन्नत्वरूपस्थायित्वस्यासिद्धेः, नापि लिङ्गेन, तद्व्याप्तिग्रहस्थलाभावादात्मनोऽपि विप्रतिपन्नत्वात्, न च प्रत्यभिज्ञया तत्सिद्धिरिति वाच्यम्, स्वप्रकाशात्मनि तदसंभवाज्ज्वालाप्रत्यभिज्ञायाश्च स्थायित्वाविषयत्वादन्यत्रापि तस्यास्तदविषयत्वात्, न वा प्रत्यभिज्ञायाः करणं किंचिदस्ति, चक्षुरादेर्वर्त्तमानस्वसन्निकृष्टमात्रज्ञाने कारणत्वेन तत्तांशेऽसमर्थत्वात, संस्कारस्य स्मृतिमात्रजन-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वादिदमोऽनुभवेऽसमर्थत्वात्, अभिज्ञास्मृतिजनने परस्परमनपेक्षयोस्तयोश्चक्षुःसंस्कारयोर्मेलनायोगाच्च, नापि तद्विषयः संभवति, तत्तेदन्ताविशिष्टयोर्यौगपद्यायोगेनाभेदासंभवात्, तत्स्वरूपं चैकं न संभवति, सः अयमित्याकारभेदे रूपरसादिज्ञानवदेकत्वायोगादिति प्रमाणाभावान्न प्रमात्रादेः स्थायित्वमित्याशङ्क्याह । ग्राह्यग्राहकयोरिति । प्रमातृप्रमेययोरित्यर्थः । स्थिरत्वमनेककालस्थायित्वं गमयतीति स्थिरत्वगमनी। तयोः प्रत्यभिज्ञा तत्प्रत्यभिज्ञा । नोपपात्स्यत चेत् उपपन्ना न भविष्यति चेत्। असेत्स्यत् सिध्येत्। किं तदित्यत आह । नौ आवयोः सिद्धान्तयोस्तुल्यता । यदि प्रमात्रादिस्थायित्वविषयिणी प्रत्यभिज्ञा त्वदुक्तप्रकारेण न स्यात्, सा यदि वाऽप्रमाणं स्यात् तदा सर्वस्य क्षणिकत्वादावयोः सिद्धान्तसाम्यं स्यात्, न च सा तस्याः प्रमात्वं वा न निर्वहतीति जगतः स्थायित्वमपि सिद्ध्यतीत्याह । सा निर्वक्ष्यतीति । प्रत्यभिज्ञारूपा प्रमा निर्व्यूढा भविष्यति, उपपन्ना भविष्यतीति यावत्, सा निर्वक्ष्यतीति मे मम जगतः स्थैर्यं सिध्यतीति संबन्धः । न च ज्वालादौ व्यभिचार इत्यन्यत्रापि सा तद्विषयिणी न भवतीति वाच्यम् । बाधाबाधाभ्यां विशेषात् । अन्यथा स्वजीवनानुपपत्तेः । तदुक्तम् । स उत्प्रेक्षते हि यो मोहादज्ञातमपि बाधनम् । स सर्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यवहारेषु संशयात्मा क्षयं व्रजे"दिति। न च सत्कारणासंभव एव तद्बाधः। इन्द्रियसंस्कारयोरेव मिलितयोस्तद्धेतुत्वात्। अभिज्ञायां स्मृतौ चान्योन्यानपेक्षयोरपि कार्यविशेषे तदपेक्षोपपत्तेः। दृश्यते हीन्द्रियालोकयोर्ग्राह्यसंयोगे तमोनिवृत्तौ चान्योन्यनिरपेक्षयोरपि रूपज्ञानेऽपेक्षा, ततः कारणसंभवात् प्रत्यभिज्ञास्वरूपैक्यमपि संभवतीति भावः। यत्तु तत्तेदन्ताविशिष्टाभेदासंभवात्तदात्मकस्थैर्यं तद्विषयो न संभवतीति, तत्राह। स्वरूपात्मकमिति। तत्तेदन्तोपलक्षितवस्तुस्वरूपात्मकस्थैर्यमित्यर्थः। यत्तु स्वप्रकाशचैतन्ये तदसंभवान्न च स्थायित्वं सिद्ध्यतीति, तन्न तस्य न जायते म्रियते वेत्यादिश्रुतिसिद्धत्वादित्याशयेनाह। चैतन्यस्य चेति। स्वरूपात्मकं स्थैर्यं सिद्ध्यतीत्यनुषङ्गः। स्थैर्यस्य वस्तुस्वरूपत्वे तत्संमतं दृष्टान्तमाह। भङ्गुरत्वमिति। क्षणिकत्वमित्यर्थः। न हि क्षणिकत्वं तव मते विज्ञानादतिरिक्तम्, विज्ञानमात्रत्वमतहानात्, अत एवाकारभेदात् प्रत्यभिज्ञाभेद इति निरस्तम्, ज्ञानं क्षणिकमिति ज्ञानाकारभेदेऽपि तव तदैक्यवत् तदुपपत्तेरिति। न चैवं क्षणिकत्वस्थायित्वयोर्वस्तुस्वरूपमात्रत्वे मतद्वयाविशेषापत्तिः। स्वरूपविशेषादेव तद्विशेषोपपत्तेः। स्थायित्ववादे हि कालद्वयोपलक्षितभेदाभावात्मकं वस्तुस्वरूपम्। क्षणिकत्ववादे तु तादृशभेदात्मकं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुस्वरूपम् इति महान् विशेष इति भावः ॥ ३१ ॥

ननु कल्पितं सदपि जागरितं
वद कीदृशी खलु विलक्षणता ॥
स्वपनादमुष्य भवतोऽभिमता
परिकल्पितत्वमुभयोस्तु समम् ॥ ३२ ॥

एवं सर्वस्य कल्पितत्वेऽपि विज्ञानवादिमतसाम्यं परिहृतम्, इदानीं स्वप्नेऽपि दृष्टमिदमेवमिहापीत्यत्रोक्तं स्वप्नसाम्यमनुपपन्नं जाग्रत्स्वप्नयोः परस्परवैलक्षण्यानुभवात्, वैधर्म्याच्च न स्वप्नादिवदिति सूत्रकारेणापि जाग्रद्दृष्टघटादेस्ततो वैलक्षण्योक्तेश्चेति स्वप्नविलक्षणं तत् सत्यमेवेत्याशङ्कते । नन्विति । तद्विलक्षणत्वाभावे ननु कल्पितमित्यनुवादोक्तमेव हेतुमभिप्रेत्याह । परिकल्पितत्वमिति । उभयोर्जाग्रत्स्वप्नयोः ॥ ३२ ॥

न प्रमातरि सति प्रबाध्यते
जागरः स्वप्नदृष्टवस्तुवत् ॥
मातृमानविषयोपलब्धिभिः
साकमेव तमसो निराकृतेः ॥ ३३ ॥

तयोर्मिथ्यात्वाविशेषेऽपि जाग्रत्प्रपञ्चस्याविद्यातिरिक्तदोषाजन्यतया व्यावहारिकत्वं स्वप्नस्य तु निद्रादिजन्यस्याविद्यातिरिक्तदोषजन्यत्वेन प्रातीतिकत्वमिति नानुभवादिविरोधः। तत्र यद्यपि व्यावहारिकत्वं न व्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वहारजनकत्वम्, तदवस्थायां स्वप्नेऽपि तद्दर्शनात्, अवस्थान्तरे जाग्रद्घटादेरपि तदभावात्। नाप्यविद्यातिरिक्तकारणाजन्यत्वम्, गगनादेरपि कर्मादिजन्यस्य तदभावात्। तथापि प्रमातरि सत्यबाध्यमानत्वं व्यावहारिकत्वम्, तस्मिन् सति बाध्यत्वं प्रातीतिकत्वमित्याशयेनाह। न प्रमातरीति। अन्तःकरणविशिष्ट इत्यर्थः। अत्र जड़त्वे सतीति विशेषणं द्रष्टव्यम्। अतो नात्मन्यतिव्याप्तिः। स्वप्नेति वैधर्म्यनिदर्शनम्। यथा स्वप्नो जाग्रति प्रमातरि सत्येव बाध्यते न तथा जाग्रद्घटादिः। कथं तर्हि तद्बाधस्तत्राह। मातृमानेति। माता च मानं च विषयश्चोपलब्धिश्च ताभिरित्यर्थः। ब्रह्मात्मैक्यसाक्षात्कारेण ह्यविद्यातत्कार्यमात्रादिभिः सहैव निवर्त्यते न तु स्वप्न इवान्तःकरणविशिष्टे सत्येवेत्येतदेव स्वप्नवैलक्षण्यं जाग्रद्दृष्टस्यानुभवसूत्राभ्यां सिद्ध्यति। ननु बाधो यदि निवृत्तिमात्रम्, तदा प्रमातरि सति स्वप्नवद्घटादेरपि तदस्त्येव। नापि ज्ञाना-न्निवृत्तिः स इति वाच्यम्, जाग्रद्घटादेरपीश्वरज्ञाननिवर्त्यत्वात्, स्वप्नस्यापि सुषुप्त्यवस्थायामिव जाग्रत्यप्यन्यतो नाशसंभवेन ज्ञानानाश्यत्वाच्च। नाप्यविद्यया सह ज्ञानान्निवृत्तिर्बाधः, स्वप्नेऽपि तदभावात्, ब्रह्माज्ञाने सत्येव जाग्रति स्वप्नस्य निवृत्तेः। न च ब्रह्मगोचरसमानकालीनाज्ञानद्वय एकस्य प्रमाणमस्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रयोजनं वा, न वा स्वप्नसाक्षिण्यप्यज्ञानं संभवति। नापि मिथ्यात्वनिश्चयो बाधः, घटादेरन्तःकरणमिथ्यात्वनिश्चयाभावेऽपि तन्निश्चयसंभवेन स्वप्नवत् प्रमातरि सति बाध्यमानत्वात् । तस्माद्‌ यत् किं चिदेतदिति चेत् । उच्यते । जाग्रत्काले प्रमातरि सति स्वप्नो मिथ्येति ज्ञायत इति सर्वाविवादम्, तथा च प्रमातरि सति विरोधिज्ञानाधीनमिथ्यात्वनिश्चययोग्यत्वं स्वप्नशुक्तिकारजतादेः प्रातीतिकत्वम्, यत्र दैवाज्जाग्रति भ्रमानन्तरं निद्रा भवति तत्संग्रहार्थं योग्यत्वमित्युक्तम् । एतदभावो यत्र तत्प्रमातरि सत्यबाध्यम्, जाग्रद्घटादौ चैतदस्तीति स व्यावहारिक इति भावः ॥ ३३ ॥

देशकालपुरुषैरवस्थया
जागरस्य खलु कारणं तमः ॥
साकमेव सहसा निरस्यते
वेदवाक्यजनितात्मसंविदा ॥ ३४ ॥

एवं देशे कालादौ वा सति यद्‌ बाध्यते तत् प्रातीतिकम्, यन्न बाध्यते तद्‌ व्यावहारिकमिति लक्षणान्तरमभिप्रेत्याह । देशकालेति । अत्र देशकालमात्रं विवक्षितमिति स्वप्नदृष्टदेशादिबाधेऽपि न तत्रातिव्याप्तिः, पुरुषो जीवः, अवस्था जाग्रदाद्याः, सहसा युगपत् कार्येण सहैवेत्यर्थः । एतच्चाविद्यातत्कार्ययोर्युगपदेव ज्ञा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्निरास इति मतेनोक्तम् । बाधपरिहाराय वेदवा-
क्येत्युक्तम् । तथा च मुख्याधिकारिणो वेदान्तजन्या-
त्मज्ञानात् समूलसंसारो निवर्त्तिष्यत इति नेदानीं
बाध इति भावः ॥ ३४ ॥

स्वप्नदृष्टमिह रज्जुसर्पवद्
देशकालपुरुषेषु बाध्यते ॥
जागरः पुनरयं तथाविधं
बाधकं न लभतेऽसमीक्षणात् ॥ ३५ ॥

स्वप्नदृष्टवदित्युक्तं वैधर्म्यदृष्टान्तं व्यावहारिकलक्ष-
णस्यातिव्याप्तिपरिहाराय विवृणोति । स्वप्नदृष्टमिति ।
पुरुषेषु प्रमातृषु सत्स्वपि शेषः । एवं च मिथ्यात्वावि-
शेषे जाग्रत्प्रपञ्चस्य स्वप्नवैलक्षण्यं सुस्थमित्याशये-
नाह । जागर इति । तथाविधं देशकालयोः सतोर्जाय-
मानम् । असमीक्षणादिति । प्रत्यक्षेण तदन्येन वा प्र-
पञ्चस्य तथाविधबाधाननुभवादित्यर्थः ॥ ३५ ॥

तेन सत्यमिह जागरं विदुः
स्वप्नविभ्रमविरुद्धधर्मकम् ॥
आपरात्मपरमार्थदर्शनात्
तेन बाधितवपुर्न सत् क्व चित् ॥ ३६ ॥

मिथ्यात्वाविशेषेऽपि जाग्रत्स्वप्नयोरुक्तवैलक्षण्येन
सत्यासत्यव्यवस्थितव्यवहार उपपन्न इति दृश्यस्य प्र-
पञ्चस्य सत्यत्वं ततः सिद्ध्यतीत्याशयेनोपसंहरति । ते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेति । उक्तव्यावहारिकलक्षणयोगेनेत्यर्थः । दर्शनाव-
धौ निमित्तमाह । तेनेति । न सत् क्वचिदिति । यथा स्व-
प्नस्य बाधितस्यापि पुनर्दर्शनं प्रमातुर्विद्यमानत्वात्, नै-
वं तत्त्वज्ञानबाधितजागरस्य, सहैव प्रमात्रा बाधित-
त्वादित्यर्थः ॥ ३६ ॥

तत्र सत्यमनृतं च भेदतः
प्रत्यगात्मतमसा विकल्पितम् ॥
प्रक्षिणोति परमात्मवस्तुगा
बुद्धिवृत्तिरविचालिनी सती ॥ ३७ ॥

एवं व्यवस्थितव्यवहारोपपादनेन सर्वस्यापि दृश्य-
स्य मिथ्यात्वसमर्थनफलमाह । तत्रेति । जाग्रद्दृश्यस्य
स्वप्नवैलक्षण्येऽपि मिथ्यात्वे सतीत्यर्थः । सत्यमनृतं
चेति लोकदृष्टिमाश्रित्योक्तम्, उक्तवैलक्षण्यमाश्रित्य वा।
विकल्पितं परस्परविरुद्धतया कल्पितम् । प्रक्षिणो-
ति प्रकर्षेण मूलाज्ञानेन सह नाशयति । अविद्यात-
त्कार्यदृश्यजातमुक्तविभागेनात्मनि कल्पितं मिथ्या-
त्वाद् वाक्यजन्यात्मसाक्षात्कारो नाशयतीत्यर्थः ॥३७॥

नित्यबोधपरिपीडितं जग-
द्विभ्रमं नुदति वाक्यजा मतिः ॥
वासुदेवनिहतं धनञ्जयो
हन्ति कौरवकुलं यथा पुनः ॥ ३८ ॥

नन्वविद्याया अनादिकालमारभ्यात्मनि स्थिताया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्कार्यस्य च चिरकालाहितदृढवासनाभ्यो रूढमूलस्य कथं क्षणमात्रस्थायित्राक्यजजड़साक्षात्कारेणाविद्याकार्येण निवृत्तिः संभवतीत्याशङ्क्य न चिरकालावृत्तित्वादि निवर्त्यत्वे निमित्तं प्रसमते प्रागभावस्य निवर्त्यत्वात्, न वा चिरस्थत्वादि निवर्तकत्वे, किं तु सत्यत्वमनिवर्त्यत्वे निमित्तमात्मनस्तथादर्शनात्, अज्ञातविषयत्वं च ज्ञानस्य निवर्तकत्वे अज्ञानस्य स्वविषयगोचरज्ञाननिवर्त्यत्वात् अविद्यातत्कार्यं चाद्वयबोधात्मनि वस्तुतोऽसंभवाद्ध्यस्तमिति तद्गोचरज्ञानव्यक्तचैतन्येन निवर्तयितुं शक्यमेवेत्याशयेनाह । नित्यबोधेति। नित्योऽद्वयो यो बोधस्तेन परिपीड़ितमपहृतसत्त्वमित्यर्थः । एवंभूतं जगद्विभ्रमं वाक्यजा मतिरहं ब्रह्मेति वाक्याज्जाताऽखण्डब्रह्माकारान्तःकरणवृत्तिर्जड़ापि तप्ताऽयोगोलकवत् तत्स्वभावमापन्ना नुदति नाशयति, वाक्यजन्यं हि ज्ञानं स्वनिवर्त्यस्यानिर्वचनीयत्वमपेक्षते, तच्च तस्य तदधिष्ठानचिदद्वयत्वकृतमित्याशयेनैवमुक्तमिति द्रष्टव्यम् । ईश्वरसामर्थ्येन पीड़ितस्यागन्तुकनिमित्तेन स्वकार्येणापि बाधे दृष्टान्तमाह । वासुदेवेति । कालात्मनेश्वरेण ग्रस्तं धनञ्जयोऽर्जुनः कुरुवंश्योऽपि पुनर्यथा हन्ति तथात्रापि, उक्तं च भगवता मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्निति ॥ ३८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यमेवमनृतं च दुर्लभं
ब्रह्मवादिसमयाद् बहिः पुनः ॥
सत्यतो यदि मृषा पृथग् भवेत्
सत्यमेव तदपि प्रसज्यते ॥ ३९ ॥

एवं स्वमते सत्यं चानृतं च सत्यमभवदितिश्रुतेर्लौकप्रसिद्धसत्यासत्यविभागं तस्य ज्ञानान्निवृत्तिं च दर्शयित्वा परमतेऽयं सत्यासत्यविभागो न सिद्ध्यतीत्याह। सत्यमेवेति । बहिरन्यत्र, सत्यप्रपञ्चमत इति यावत्। कुतो दुर्लभमिति चेत् किं मृषा वस्तु शुक्तिरजतादि सत्याद् वस्तुतः पृथगुतापृथगाहो पृथगपृथगात्मकमनिर्वचनीयस्य परानङ्गीकारादिति विकल्पयाद्यं दूषयति। सत्यत इति । सत्यमेवेति । अन्यथा तात्त्विकसत्यभेदाश्रयत्वायोगादित्यर्थः ॥ ३९ ॥

सत्यतो यदि मृषा न भिद्यते
सत्यमेव सुतरां तदिष्यताम् ॥
न द्वयात्मकतयानृतं मतं
पक्षयोः कथितदूषणद्वयात् ॥ ४० ॥

द्वितीयतृतीयकल्पौ दूषयति । सत्यतो यदि मृषेति। सत्याभिन्नस्य मृषात्वायोगात् तदपि सत्यमेव स्यात्, तदभिन्नस्येतरस्य वा मृषात्वापत्तेर्द्वितीयकल्पे सत्यासत्यविभागो न स्यात् । द्वयात्मकतया पृथगपृथगात्मतया। पक्षयोः प्रत्येकं भिन्नाभिन्नत्वपक्षयोः । एकैकपक्षो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तदोषस्य समुच्चयेऽप्यंशतः प्राप्तेरित्यर्थः । एतच्चोपलक्षणम् । विरोधादयं पक्ष एवानुपपन्न इति भावः ॥४०॥

वेदवाक्यविषयस्य सत्यता
बुद्धवाक्यविषयो मृषा भवेत् ॥
इत्यतः कथयितुं न शक्नुयाद्
ब्रह्मवादिसमयाद् बहिर्मुखः ॥ ४१ ॥

एवं शुक्तितद्रजतादेः सर्वप्रसिद्धसत्यासत्यविभागो-लौकिकः परपक्षे न सिद्ध्यतीत्युक्त्वा एवमन्येऽपि तत्र तद्व्यवहारो न सिध्येदित्याह । वेदवाक्येति । अग्निहोत्रादेरिति शेषः । बुद्धेति । चैत्यवन्दनादेरिति शेषः । इतीत्थम् । अतः पूर्वोक्तविकल्पदूषणाद्धेतोः ब्रह्मवादिसमयादद्वयब्रह्मणो बहिरन्यत्र मुखमभिनिवेशो यस्य सत्यप्रपञ्चाभिमानीत्यर्थः ॥ ४१ ॥

सत्यमेवमनृतं च भेदतः
कल्पितं भवतु वर्णितान्नयात् ॥
तत्र तद् घटयितुं हि शक्यते
नेतरत्र कथितोपपत्तिभिः ॥ ४२ ॥

ब्रह्मवादिसमयाद् बहिर्मुख इत्यनेन सूचितमुक्तप्रकारेण सत्यासत्यविभागं कथयितुं ब्रह्मवादी शक्नुयादित्येतद् विवृणोति । सत्यमेवमनृतमिति । भवतु भवेत् । तत्र ब्रह्मवादे तद्भेदेन सत्यासत्यकल्पनं वर्णितान्नयाद् घटयितुमिति संबन्धः । इतरत्र मतान्तर एवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेति संबन्धः ॥ ४२ ॥

व्यावहारिकमतोऽवगम्यतां
मानजातमखिलं न तात्त्विकम् ॥
बाह्यवस्तुविषयं विरोधतो-
ऽबुद्धबोधविधिशक्त्यसंभवात् ॥ ४३ ॥

एवं प्रत्यक्षादिप्रमाणविषयस्य तत्तदुचितव्यवहारसमर्थस्यापि मिथ्यात्वात् तद्बोधकप्रत्यक्षादेर्व्यावहारिकप्रमाणत्वमेव न तु वेदान्तवत् तात्त्विकमबाधितानधिगतबोधनलक्षणं प्रामाण्यं वेदान्तैरेवाद्वयब्रह्मपरैरनवकाशैरर्थतो बाधितविषयत्वादबुद्धबोधकत्वाभावाच्चेत्यवान्तरप्रमेयमुपसंहरति। व्यावहारिकमिति। व्यवहाराङ्गमित्यर्थः। यतो बाह्यवस्तुविषयमखिलं मानजातं न तात्त्विकमतो व्यावहारिकं गम्यतामिति संबन्धः। अतात्त्विकत्वे हेतुमाह। विरोधत इति। पराञ्चि खानीति श्रुतिविरोधादित्यर्थः। अबुद्धबोधेति छेदः ॥ ४३ ॥

एवं न तत्त्वविनिवेदनशक्तियोगः
संभाव्यतेऽनधिगताधिगतेरयोगात् ॥
मानान्तरस्य सकलस्य ततश्च तेन
बाधस्त्रयीशिरसि वर्णयितुं न शक्यः ॥ ४४ ॥

इदानीं साधितमर्थं हेतुत्वेन मनसि निधाय तदनुवादेन परमप्रकृतमुपसंहरति। एवमिति। सुबोधम् ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरम्भणादिवचसा खलु निर्विकल्प-
प्रत्यक्षबुद्धिमनुसृत्य विकल्पबुद्धेः ॥
आभासतां मुनिरुवाच तदास्य भावो
विज्ञायते स्फुटतरो गुड़जिह्विकायाम् ॥ ४५ ॥

ननु निर्विकल्पकसविकल्पकसाधारण्येनानात्मविषयप्रमाणमात्रस्याप्रामाण्यं वक्तुमयुक्तम्, यतः सूत्रकृता तदनन्यत्वमारम्भणशब्दादिभ्य इति सूत्रेण विकारविषयविकल्पबुद्धेरेवाभासत्वं प्रदर्श्य मृदादिकारणनिर्विकल्पकबुद्धेः प्रामाण्यमङ्गीकृतम्, अन्यथा घटादेर्मृदादिमात्रत्वोक्तिविरोधान्मृत्तिकेत्येव सत्यमित्यादिश्रुतिविरोधाच्चेत्याशङ्क्य तदाशयमाह। आरम्भणादीति। निर्विकल्पस्य कारणमात्रस्य प्रत्यक्षबुद्धिमनुसृत्य प्रामाण्यमङ्गीकृत्येत्यर्थः। विकल्पस्य घटादिविकारस्य बुद्धेराभासतां मिथ्यार्थविषयत्वमित्यर्थः। मुनिर्बादरायणः। भाव आशयः। जगन्मूलकारणनिरूपणाय प्रवृत्तोऽयं मुनिर्यदा घटादिबुद्धेरप्रामाण्यं सूचयन् मृदादिबुद्धौ प्रामाण्यमुवाच तदा गुड़जिह्विकायामस्य स्फुटतरो भावो विज्ञायते। यथा माता बालहितैषिणी तमतितिक्तरसादौषधं पाययन्ती पिबैतदौषधं तव जिह्वायां गुड़ं स्थापयिष्यामीति तं प्रलोभयत्येवं सूत्रादिभिरपि त्यजतु तावदयं घटादिविकल्पबुद्धिप्रामाण्यमङ्गीकृतम्, घटादिबुद्धेः कारणस्यानिर्वचनीयान्यथाभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वमात्रालम्बनतयाऽन्यथा सिद्धत्वप्रदर्शनमन्तरेण विकारबुद्धेराभासत्वस्योपपादयितुमशक्यत्वादिति भावः ॥९५॥

सत्संप्रयोग इति जैमिनिरप्युवाच
यल्लक्षणं तदुभयोः सममेव विद्यात् ॥
आपाततस्तदथ युक्तिनिपीड़ितं सत्
सन्मात्रसंविदि निषीदति निर्विशङ्कम् ॥ ९६।

ननु सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षं विद्यमानोपलम्भनादिति सूत्रेण जैमिनिः सविकल्पनिर्विकल्पयोरात्मानात्मविषययोश्च प्रत्यक्षयोः साधारणमेव लक्षणमवोचत्, तत्र च सदित्यर्थस्य सत्त्वाभिधानात् सर्वमेव प्रत्यक्षं तत्त्वावेदकमिति तन्मतमिति बादरायणस्यापि तदनुसारेणैवाशयो वर्ण्यतामित्याशङ्क्याह । सत्संप्रयोग इति । लक्षणं प्रत्यक्षस्येति शेषः । उभयोः सविकल्पकनिर्विकल्पकयोश्चात्मानात्मविषययोर्वा आपाततोऽविचारितमेव समं विद्यादिति संबन्धः । अविचारदशायामेव घटादेः पृथक्त्वानुभवात् । कुत एवं तत्राह । अथेति । अर्थान्तरे । युक्तिनिपीड़ितं युक्त्यालोचितं सत् तल्लक्षणं सन्मात्रस्य सत्सामान्यात्ममात्रस्य संविदि निषीदतिपर्यवस्यति, सर्वप्रपञ्चाधिष्ठानसत्तयैव घटादेः सद्बुद्ध्युपपत्तेस्तस्य न ततः पृथक्त्वं कल्पनीयमिति सदेवेत्यादिश्रुतिबलादात्मैव सन्जैमिनीयप्रत्यक्षलक्षणसूत्रेऽपि विवक्षित इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रपञ्चसत्त्वमापातदृष्ट्यैव प्रतीयत इति न तद्बलाच्छ्रुति-न्यायमूलं बादरायणसूत्रमन्यथयितव्यमिति भावः ॥४६॥



तत्रापि दुर्घटमवैति यदा तु तत्त्व-
बोधं विवक्षति विसृज्य विकल्पजालम् ॥
किं कारणं वदति येन स तत्त्वगामि-
विज्ञानमर्थमवबोधयदप्रबुद्धम् ॥ ४७ ॥

किं च जैमिनीयसूत्रान्तरपर्यालोचनयाऽप्येवमेवेत्याह । तत्रापीति । अपिरवधारणे, जैमिनिः खल्वापातदृष्ट्या प्रत्यक्षमात्रस्य सत्संप्रयोगजन्यत्वमभिधाय यदा तत्र प्रत्यक्षमात्र इदं लक्षणं दुर्घटमवैति तदा विकल्पजालमनात्मप्रत्यक्षं विसृज्य तत्त्वबोधमेव विवक्षतीति संबन्धः । नन्वेतत् किंबलाज् ज्ञातमिति पृच्छति । किं कारणमिति । कस्मात् कारणादित्यर्थः । उत्तरं वदतीति, स जैमिनिर्येन हेतुनाऽप्रबुद्धमर्थं बोधयद् विज्ञानं तत्त्वगामीति वदतीति संबन्धः । एवं चाज्ञातार्थविषयबोधस्यैव प्रमाणत्वं तत्संमतमिति प्रत्यक्षसूत्र आपातदृष्ट्यैवानात्मप्रत्यक्षलक्षणाभिधानमात्मनोऽन्यस्याज्ञातत्वासंभवस्योक्तत्वादिति भावः ॥ ४७ ॥

औत्पत्तिके हि भगवानयमप्रबुद्ध-
मर्थं प्रमाणविषयं कथयांबभूव ॥
अत्राह तत्र ननु धर्मगतं प्रमाणं
तत्त्वार्थगामि कथितं न परात्मगामि ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु जैमिनिनाऽप्रबुद्धार्थज्ञानं प्रमाणमिति क्वोक्त-मित्याकाङ्क्षायामाह । औत्पत्तिक इति । अयं जैमि-निर्भगवानौत्पत्तिकसूत्रेऽर्थेऽनुपलब्धे तत्प्रमाणमिति भागेनाप्रबुद्धमर्थं प्रमाणविषयं कथयांबभूव हीति सं-बन्धः । नन्वनेन सूत्रेण धर्मप्रमाणस्य चोदनाया ए-वाज्ञातार्थबोधकतया तत्त्वावेदनप्रामाण्यमुक्तं धर्मस्यै-व जिज्ञास्यत्वेन प्रक्रान्तत्वात्, न तु परमात्मप्रमाण-स्य तस्य तत्रानुपक्रमादिति शङ्कते । अत्राहेति । तत्र औत्पत्तिकसूत्रे । नन्विति प्रसिद्धौ ॥ ४८ ॥

सत्यं यथाह पितृमान् व्यवहारदृष्टि-
माश्रित्य तत् कथितवान् प्रकृतोपयोगात् ॥
दूरप्रसारितनिसृष्टनिगूढभाव-
स्तद्बादरायणमतानयनात् प्रतीमः ॥ ४९ ॥

सत्यं तत्सूत्रं धर्मचोदनाविषयं न तु तावन्मात्रगो-चरं तदपि व्यावहारिकदृष्ट्यैव मुख्याऽज्ञाततायाः स्वप्र-काशात्मनोऽन्यत्रासंभवादेतदपि तत्र जैमिनिसंमतमेवा-र्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्येति तस्य बाद-रायणसंमतत्वप्रदर्शनात् तस्य चोक्तन्यायेनात्मप्रमाण-स्यैवानुपलब्धार्थतया तत्त्वावेदकत्वसंमतेरित्याशयेन परिहरति । सत्यमिति । पितृमान् पित्रादिशिक्षितबु-द्धिः प्रकृतोपयोगात् प्रस्तुतधर्मविचारोपयोगाद् व्यव-हारदृष्टिमाश्रित्य जैमिनिस्तत् कथितवानिति वयं प्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीमः। कुतस्तत्राह । तद्बादरायणेति । तत्र सूत्रे बादरायणमतस्यानयनादाकर्षणादिति संबन्धः । ननु बादरायणस्यापि चोदनायास्तत्त्वावेदनप्रामाण्यं संमतमेवेति सूचनार्थं तत्र तदुपन्यासः किं न स्यादित्याशङ्क्याह । दूरप्रसारित इति । दूरे उत्तरमीमांसायां प्रसारितः प्रकटीकृतो योऽर्थस्तस्मिन्निसृष्टो नितरां क्षिप्तो नैसर्गिको निगूढो भावोऽभिप्रायो यस्य जैमिनेः स तथा, आरम्भणाधिकरणादौ निरूपितात्मतत्त्वस्य श्रुतिन्यायसंमततयान्यथाभावासंभवेन न बादरायणस्य चोदनातत्त्वावेदकत्वं संमतम्, अतो जैमिनेरपि तदुदाहरणेन तथैव भावो यद्यपि तथापि कर्मसु प्रवृत्त्यङ्गतया सामान्येनैव तदभिधानमिति भावः ॥ ४९ ॥

द्रष्टव्य इत्यपि विधिर्न विधिप्रमेय-
मात्मानमेव विनियच्छति तत् कुतश्चे ॥
अज्ञातता च परमात्मन एव यस्माद्
यस्माच्च कर्तृवशवर्ति न दर्शनं तत् ॥ ५० ॥

नन्वात्मा वा अरे द्रष्टव्य इति वेदान्तेषु विधिश्रवणाज्जैमिनेरिव तदर्थनिरूपकव्यासस्यापि चोदनातात्त्विकप्रामाण्यमेव संमतमस्त्वित्याशङ्क्याह । द्रष्टव्य इति । एतद् वाक्यमपि न विधिरित्यर्थः । किंपरं तर्हीदं वाक्यमित्याशङ्क्याह । विधिप्रमेयमिति । विधीयते ज्ञाप्यतेऽज्ञातोऽर्थोऽनेनेति विधिः प्रमाणं त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्मानमेव प्रमेयं तद् वाक्यं विनियच्छति विशेषेण नियमयतीत्यर्थः । तदेव शङ्कापूर्वकमुपपादयति । तत् कुतश्चेदित्यादिना । यदज्ञातं तदेव प्रमित्सापूर्वकं प्रमाणेन ज्ञायते, सर्वैर्विशेषतो मुमुक्षुणाऽज्ञातं चात्मतत्त्वमेवेति तदेव प्रमाणानां विषय इत्येतद् वाक्यं दर्शयतीत्यर्थः । ननु तव्यप्रत्ययाद् विध्यर्थतैव तस्यास्त्वित्याशङ्क्य तस्याः प्रथमाध्याय एव निरस्तत्वात् तद्वाक्यस्य न तदर्थत्वमित्याह । यस्माच्चेति । कर्तृवशवर्ति कर्त्रधीनं कर्तृव्यापारसाध्यमिति यावत् । चकार उक्तशङ्कानिवृत्तये ॥ ५० ॥

अर्हे कृत्यतृचश्च पाणिनिवचः स्पष्टं विधत्ते यत-
स्तस्माद् दर्शनयोग्यतां वदति नस्तव्यो न तत्त्वान्तरम् ।
तस्मादात्मपदार्थमात्रनियतं मेयत्वमेकान्ततो
द्रष्टव्यादिवचो वदत्यनुभवादज्ञात आत्मा यतः ॥ ५१ ॥

ननु कथं तस्य वाक्यस्यात्मप्रमेयतानियामकत्वम्, कृत्याश्चेति तव्यस्य विध्यर्थतासूत्रविरोधादित्यत आह । अर्हे इति । चकारात् परत इतिशब्दो द्रष्टव्यः । विधत्ते । अर्हेकृत्यतृचश्चेति सूत्रमर्हार्थे कृत्यादिप्रत्ययमिति शेषः । यत एवं तस्मात् कृत्यात्मकतव्यप्रत्ययो नोऽस्मान् प्रत्यात्मनोऽज्ञातत्वपुरुषार्थत्वाभ्यां दर्शने योग्यतां वदति न तत्त्वान्तरं विधिरूपमर्थान्तरमित्यर्थः । तस्माद् बादरायणस्य चोदनाताल्वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कप्रामाण्यं संमतम्, किं त्वात्ममात्रस्य प्रमाणविषयत्व मितीत्याशयेनाह । तस्मादात्मेति । द्रष्टव्यादिवच आत्मा द्रष्टुं योग्य इत्यनया वचोभङ्ग्या मेयत्वमात्मपदार्थनियतमिति निश्चित्य वदतीति संबन्धः । नन्वज्ञातता घटादेरप्यनुभूयत इत्याशङ्क्य तदवच्छिन्नात्माज्ञाततैव तत्रानुभूयत इत्याशयेनाह । अनुभवादिति । यतो मामहं न जानामीत्यनुभवादात्मैवाज्ञातोऽत उक्तरीत्याऽन्यस्याज्ञातत्वे प्रमाणाभाव इत्यर्थः ॥ ५१ ॥

रूप्यादिविभ्रममपेक्ष्य हि शुक्तिकादौ
सत्संप्रयोगजनितैव तु बुद्धिवृत्तिः ॥
तामप्यपेक्ष्य सति संहृतसर्वभेदे
सत्संप्रयोगजनिता मतिरभ्युपेया ॥ ५२ ॥

किं च सत्संप्रयोगसूत्रपर्यालोचनयापि नानात्मप्रत्यक्षस्य तात्त्विकप्रामाण्यं लभ्यते, तत्र हि विद्यमानोपलम्भनादित्यर्थस्य विद्यमानतामात्रं हेतुः प्रतीयते, न तु परमार्थसत्त्वम्, यद्यपि शुक्तिरजतादेरपि विद्यमानतास्त्येव, तथाप्यर्थक्रियाविशेषयोग्यताविशिष्टं विद्यमानत्वं तत्र नास्तीति तदपेक्षया शुक्तिका सतीति तत्प्रत्यक्षं सत्संप्रयोगजन्यमित्युक्तमित्याशयेनाह । रूप्यादीति । शुक्तिकादौ हि बुद्धिवृत्ती रूप्यादिभ्रमपेक्ष्यैव सत्संप्रयोगजनितेति संबन्धः । तुशब्दोऽप्यमुमेव विशेषं शुक्तिकादिबुद्धिवृत्तेर्दर्शयति । ननु किमिति शु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तिकादेरापेक्षिकमेव सत्यत्वमुच्यते परमार्थतैव किं न स्यात् तत्राह । तामपीति । शुक्तिकादेरपि श्रुत्यादिभिर्निषिध्यमानत्वेन सर्वप्रपञ्चनिषेधावधावात्मनि सति या मतिः सा तां शुक्तिकामप्यपेक्ष्य सता निरतिशयसता तेन संप्रयोगजनिताभ्युपेयेति संबन्धः । अत्रात्ममतेः सत्संप्रयोगजन्यत्वं परिरीत्योक्तम्, एवं च जैमिनीयप्रत्यक्षलक्षणबलादपि नानात्मप्रमाणस्य तात्त्विकत्वं सिद्ध्यतीति भावः ॥ ५२ ॥

वेदान्तवाक्यजनितां परमात्मबुद्धि-
वृत्तिं व्यपेक्ष्य पुनरत्र न का चिदस्ति ॥
सत्संप्रयोगजनिता भुवनत्रयेऽपि
बुद्धिस्तमोविरचितं हि जगत् समस्तम् ॥ ५३ ॥

ननु सद्रूपशुक्तिकादेरपि सापेक्षं चेत् सत्त्वं तर्ह्यात्मापि सत्त्वात् तद्वत् सापेक्षसत्त्व एव स्यादित्याशङ्क्याविद्यात्कार्यान्यतरत्वं तत्रोपाधिरित्याशयेनाह । वेदान्तेति । तन्नास्तित्वे हेतुमाह । तमोविरचितमिति । तथा च सर्वस्यात्मज्ञाननिरस्यत्वादात्मैव सन्न ततोऽन्यत् सदस्तीत्यर्थः ॥ ५३ ॥

धर्मेऽपि तत्त्वमतिरेव तु चोदनायाः
सत्त्वादिवस्तुनि यथाक्षनिबन्धना धीः ॥
अज्ञाततापि सदृशी व्यवहारकाले
तत्त्वावबोधसमये न तु तत्त्वबुद्धिः ॥ ५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं धर्मेऽपि चोदनाप्रामाण्यं व्यावहारिकमेव न तु तात्त्विकमित्याशयेनाह । धर्मेऽपीति । सतो भावस्य भावः सत्त्वं तदादिर्यस्याभावस्य तद्रूपं यद् वस्तु तस्मिन् सत्त्वमिति, भावो न विवक्षितः, भावाभाववस्तुन्यक्षादिजन्या धीर्यथा यादृशी स्वप्रमेयवस्तुतत्त्वशून्या तुशब्दस्तथार्थे तथा चोदनायाः सकाशाद्धर्मेऽपि तत्त्वमतिरेव धर्मे स्वरूपमतिरेव भवति न तु धर्मस्य तावता तत्त्वं सिद्ध्यतीत्यर्थः । ननु धर्मस्य ब्रह्मवदज्ञातत्वात् कथं तत्प्रमाणस्य घटादिप्रमाणसाम्यमित्यत आह । अज्ञाततापीति । ब्रह्मणोऽन्यस्यास्वप्रकाशतया तत्तुल्याज्ञातातायोगाद् घटादितुल्यैव तस्य सापीतिभावः । धर्मप्रमाणस्यापि घटादिप्रमाणतुल्यत्वे हेतुमाह । तत्त्वावबोधेति । तत्त्वबुद्धिः परमार्थत्वबुद्धिः धर्मस्येतिशेषः, तत्त्वविचारसमये धर्मस्यापि घटादिवन्न तत्त्वबुद्धिरिति तत्प्रमाणयोर्न कोऽपि विशेष इति भावः ॥५४॥

आरम्भणादिवचनं सकलं प्रवृत्तं
प्रत्यक्षबुद्धिविषयादपहर्तुमुच्चैः ॥
तत्त्वं यथोदिततनयेन विवर्तवाद-
माश्रित्य सत्यपरिणामनिवारणेन ॥ ५५ ॥

ननु सच्च त्यच्चाभवदिति तावत् सत्परिणामः प्रपञ्चः श्रूयतेऽन्यथाभवदित्ययोगात्परिणामश्च परिणामिसमानसत्ताक इति प्रपञ्चो ब्रह्मवत्सन्नेवेति कथं त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्प्रमाणं तत्त्वावेदकं न भवेदित्याशङ्क्यान्यथाभावमात्रं तत्र भवनशब्दार्थः, अन्यथाभावश्च विवर्तत्वेऽप्यस्त्य-न्यथा सत्यं चानृतं च सत्यमभवदिति तद्वाक्यशेषे सत्यस्यानृतभवनोक्त्यनुपपत्तेः, किं च वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिरपि प्रागुक्तन्यायेन वि-वर्तवादमाश्रित्य सत्यपरिणामनिवारणेन प्रत्यक्षादि-बुद्धिविषयात्तत्त्वं परमार्थत्वमुच्चैरपहर्तुं प्रवृत्ता तद्विरो-धादपि न परिणामवादः श्रुतिसंमत इत्याशयेनाह। आरम्भणादिवचनमिति। वाचारम्भणं विकारो नाम-धेयमिति श्रुतिर्हि विकारस्य घटादेः शब्दालम्बनमात्र-त्वमाह, मृत्तिकेत्येव सत्यमित्युत्तरवाक्यं चैवकारेण विकारं व्यावर्त्य कारणमात्रस्य मृदादेः सत्यत्वोक्त्या प्रत्यक्षादिविषयात्तत्त्वमपहरति, ततो घटादेः श्रुत्या विवर्तत्वमाश्रितं सत्यपरिणामित्वं च निवारितमिति तद्बलादक्षादेरपि विवर्तमात्रविषयत्वसिद्धेर्नाक्षादेस्ता-त्त्विकप्रामाण्यमित्याशयः ॥ ५५ ॥

वाक्यप्रवृत्तिमनुसृत्य च सूत्रकारः
सिद्धान्ततामनयदत्र विवर्तवादम् ॥
तत्त्वप्रकाशनविधावपहृत्य शक्ति-
मारम्भणादिवचनादपरप्रमायाः ॥ ५६ ॥

ननु तदनन्यत्वमिति सूत्रेण सूत्रकारः कार्यस्य का-रणाभेदमाह कारणं च सत्यमिति तदभिन्नं कार्यमपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथैवेति तात्त्विकान्यथाभावं दर्शयता तेन परिणाम ए-वाश्रितस्ततः सत्यपरिणामनिवारणेनेत्येतदसंगतमिति चेत्तत्राह । वाक्यप्रवृत्तिमिति । सूत्रकारो हि येनाश्रुतं श्रुतं भवतीत्यादिनैकविज्ञाने सर्वविज्ञानप्रतिज्ञया स-र्वात्मत्वविषयवाक्योपक्रममनुसृत्यारम्भणादिवचनाद-नात्मप्रमायास्तत्प्रमाणस्य तत्त्वप्रकाशनोत्पादनशक्तिम-पहृत्य विवर्तवादं सिद्धान्ततामनयदिति संबन्धः । सू-त्रकारो हि तदनन्यत्वे कार्यस्यारम्भणशब्दादिभ्य इति हेतुं वाचारम्भणादिश्रुत्यर्थमेवाह, तस्याश्च विकार-मृषात्वमर्थ इत्युक्तं ततश्च तदनन्यत्वं न तदभिन्नत्वं किं तु ततः पृथक् सत्त्वाभाव एव स च परिणामवा-देऽनुपपन्नस्तत्रेषदभेदेऽपि कार्यकारणयोः पृथक्त्वस्यापि सत्त्वाद्विवर्तस्य तु न ततः पृथक्तत्त्वमिति प्रतीयमा-नभेदस्य मृषात्वमेव सूत्रकारस्यापि संमतमिति विव-र्तवाद एव सिद्धान्त इति भावः ॥ ५६ ॥

आरम्भसंहतिविकारविवर्तवादा-
नाश्रित्य वादिजनता खलु वावदीति ॥
आरम्भसंहतिमते परिहृत्य वादौ
द्वावत्र संग्रहपदं नयते मुनीन्द्रः ॥ ५७ ॥

ननु भोक्त्रापत्तेरिति पूर्वसूत्रे स्याल्लोकवदिति स-मुद्र इव वीचीतरङ्गबुद्बुदादिविकाररूपेण ब्रह्मान्यो-न्यविलक्षणचेतनाचेतनविचित्रप्रपञ्चात्मनानेकरसमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शितमिति तेन सममेवं सति विरोधः स्यादिति चे-
त्सत्यं विरोधः स्यादुभयस्यापि तत्संमतत्वेन चैतदपि
तत्संमतं भवति विरुद्धयोस्तद्योगात् , अत एकमभ्यु-
पगमवादेनेति वक्तव्यम्, तत्राप्यद्वैतविरोधिपरपक्षव्या-
वृत्तये स्वसिद्धान्तानुकूलतया च पूर्वं विकारवादोऽभ्यु-
पगत इति न तेनास्य सिद्धान्तस्य विरोध इत्याशयेन
वादिनां कार्यविषयाभ्युपगमप्रकारचातुर्विध्यमाह ।
आरम्भेत्यादिना । कारणात्तन्त्वादेः सकाशादत्यन्त-
भिन्नस्योत्पत्तेः प्रागसतः कार्यस्य समवाय्यसमवायि-
निमित्तेनोत्पत्तिरित्यारम्भवादः, अणूनां समुदाय एव
घटादिलक्षणं कार्यं न तु तदुत्पन्नं वस्त्वन्तरमिति संह-
तिवादः , मृदादेस्तात्त्विकोऽन्यथाभावो घटादिरिति
विकारवादः,अतात्त्विकोऽन्यथाभावो रज्जोरिव सर्पादि-
रिति विवर्तवादः, तानेतानाश्रितत्र वादिजनता तत्स-
मूहो वावदीति अतिशयेन वदति मुखरीभवतीति
यावत् खल्विति संबन्धः । एतन्मतभेदप्रदर्शनस्य प्र-
स्तुतमुपयोगमाह । आरम्भसंहतिमते इति । एतन्म-
तयद्वमुपेक्ष्याद्वयब्रह्मणो जगत्कारणवादिसमन्वयस्या-
त्यन्तिकभेदाश्रयारम्भसंहतिपक्षोत्थितविरोधशङ्कां प-
रिहर्तुं समुद्रतरङ्गादेरिवाभेदेपीषद्भेदेन कार्यकारणभा-
व उपपद्यते लोके तथादर्शनादिति नात्यन्तभेदस्तद्ब-
लात्सिध्यतीति पराश्रितपरिणामवादं सिद्धान्ततया
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवर्तवादं च द्वयं सूत्रकृत्संग्रहपदं नयते संगृह्णातीत्यर्थः ॥ ५७ ॥

तत्रापि पूर्वमुपगम्य विकारवादं
भोक्त्रादिसूत्रमवतार्य विरोधनुत्त्यै ॥
प्रावर्तत व्यवहृतेः परिरक्षणाय
कर्मादिगोचरविधावुपयोगहेतोः ॥ ५८ ॥

ननु परमतनिवृत्तये विकारवादोऽपि संगृहीतश्चेत्तर्हि सोऽप्यावश्यक एवेति कथं तस्याभ्युपगमवादत्वमिति चेन्न, एवं विवर्तेनापि तत्परिहारसंभवात्, किमिति तर्हि तत्संग्रह इति चेन्मन्दजनप्रतीतिविरोधं परिहर्तुमित्युक्तमेव विवृणोति । तत्रापीति । तत्रापि विकारविवर्तयोर्मध्येऽपि विवर्तवादात्पूर्वमद्वये जगद्योनौ वेदान्तसमन्वयस्य भोक्तृभोग्यादिभेदग्राहिप्रमाणविरोधशङ्कापनुत्त्यै विकारवादं परकीयमभ्युपगम्य तद्विषयं भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति सूत्रमवतार्य मुनीन्द्रः सूत्रकारः प्रावर्तत विरोधपरिहारे प्रवृत्तवानिति संबन्धः । ननु किं विवर्त्तवादेन सा शङ्का परिहर्तुमशक्येत्याशङ्क्य पक्वमतिं प्रति तेन सा सुपरिहरापि भेदाभिनिविष्टचित्तं प्रति विकारवादेनैव तत्परिहारः सुकर इत्याशयेनाह । व्यवहृतेरिति । लोक उदकाहरणादितत्तदर्थिनो नियमेन घटादौ प्रवृत्त्यादिव्यवहारस्य दृष्टस्य संरक्षणात्कर्मकाण्डावगताग्निहोत्राद्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुष्ठानस्य ब्रह्मवधादिनिवृत्तेश्च प्रापकविधिनिषेधोपयोगाच्च हेतोर्विकारवादमुपगम्येत्यनेन संबन्धः। तत्र हि भेदाभेदसत्त्वाल्लोकप्रसिद्धभेदो न निषिध्यते कारणाद्वयत्वं चोपपादितं भवतीति भगवता सोऽभ्युपगत इति भावः॥ ५८॥

साक्षादिहाभिमतमेव विवर्तवाद-
माहत्य सूचयति पूर्वमपेक्षमाणः॥
आरम्भणादिवचनेन विवर्तवादं
शक्नोति वक्तुमुदिते परिणामवादे॥ ५९॥

ननु प्रथममुक्तत्वादपेक्षितत्वाच्च परिणामवाद एव सिद्धान्तोऽस्त्वन्यथा स्वाभिमतविवर्त्तस्यैव प्रथमाभिधानं किं न स्यादितयत आह। साक्षादिति। इहास्मिन्शास्त्रे विवर्तवादः साक्षादभिमतः स्वप्रतिज्ञातशुद्धाद्वैतसमन्वयोपपादकत्वात्, विकारस्तु नैवमिति विवर्तमेवसूत्रकार आहत्य मुखत एव सूचयति, तत्रापि परिणामवादमुखेन कार्यकारणयोरत्यन्तभेदं निराकृत्य तत्संमतमपि भेदं निराकुर्वन्विकारवादमप्युपेक्षते, अन्यथा स्वस्यैवोभयत्र व्यापारे गौरवाद्विवर्त्तवादस्य विकारपूर्वकत्वाच्च प्राक्तनयुक्त्यैवायं वक्तव्य इति स प्रागभ्युपगतोऽतो न तस्य प्रागुक्तिमात्रेण सिद्धान्तत्वमित्याशयेनाह। पूर्वमपेक्षमाण इति। एतदेव विवृणोति। आरम्भणेति। प्रथमं परिणामवाद उदिते उक्ते सति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरम्भणादिवचनेन विवर्तवादं वक्तुं शक्नोति नान्यथा कार्यकारणस्वरूपस्याप्रतीतौ तस्य मिथ्यात्वप्रतिपत्त्ययोगादित्यर्थः ॥ ५९ ॥

आरुह्य भूमिमधरामितराधिरोढुं
शक्येति शास्त्रमपि कारणकार्यभावम् ॥
उक्त्वा पुरा परिणतिप्रतिपादनेन
संप्रत्यपोहति विकारमृषात्वसिद्ध्यै ॥ ६० ॥

लौकिकदृष्टान्तेनाप्यमुमर्थमाह । अरुह्येति । यथा प्रासादमारुरुक्षुणा तदुपायसोपानस्याधरामधःस्थितां भूमिं पदन्यासस्थानमधस्तनसोपानपर्वेति यावत् तामारुह्येतरोपरितना भूमिरधिरोढुं शक्येति प्रसिद्धमिति शेषः, एवं शास्त्रमपीत्यादिना संबन्धः । परिणतिप्रतिपादनेन भोक्त्रादिसूत्रेणेति शेषः । संप्रत्यारम्भणाधिकरण इत्यर्थः । विवर्तत्वव्युत्पादनं हि कारणात्कार्यस्य भेदादिसत्यत्वनिषेध एव स्यात्स च ब्रह्मणि प्रपञ्चभेदप्रसङ्गे सत्येव भवतीति भेदप्रसञ्जकपरिणामवादस्य तन्निषेधकविवर्तवादस्य च क्रमो युज्यते श्रुतावपि सृष्टिवाक्येनारोपितप्रपञ्चस्य ब्रह्मणि नेतिनेतिवाक्येन निषेधादिति भावः ॥ ६० ॥

विवर्तवादस्य हि पूर्वभूमि-
र्वेदान्तवादे परिणामवादः ॥
व्यवस्थितेऽस्मिन् परिणामवादे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयं समायाति विवर्तवादः ॥ ६१ ॥

परिणामविवर्तवादयोर्दृष्टान्तसाम्यं दर्शयन्नुक्तमर्थं विशदयति। विवर्तवादस्य हीति। वादे शास्त्रे परिणामवादे व्यवस्थिते प्रसक्ते सति विवर्तवादः स्वयं समायातीति भेदाभेदाश्रयणेनात्यन्तभेदाद्विमुखचित्तस्य वक्ष्यमाणन्यायेनानायासेनैव तदपि निराकर्तुं शक्यमित्यर्थः ॥ ६१ ॥

उपायमातिष्ठति पूर्वमुच्चै-
रुपेयमाप्तुं जनता यथैव ॥
श्रुतिर्मुनीन्द्रश्च विवर्त्तसिद्धै
विकारवादं वदतस्तथैव ॥ ६२ ॥

ननु कथं नु भगवः स आदेशो भवतीति श्रुतिरेकविज्ञानात्सर्वविज्ञानमाक्षिपन्तीः शुद्धाद्वैतमाक्षिप्य मृदादिदृष्टान्तोपादानेन परिणामं विवक्षति, एकस्मिन् वाक्ये च पूर्वानुरोधेनैवोत्तरं नेतव्यमतस्तन्मूलं सूत्रमपि तदाशयं किं न स्यादित्याशङ्क्य कथं न्विति वाक्यस्य पूर्वपक्षतया शुद्धाद्वयस्य वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिना विकारमृषात्ववर्णनेनोपपद्यमानतया च न विकारवादस्य प्रथमं श्रवणेऽपि संमतत्वं किं तूक्तविधया विवर्तत्वव्युत्पादनहेतुतया पूर्वपक्षतया च श्रुतिसूत्रकाराभ्यां प्रथमं स आदृत इति दृष्टान्तान्तरेणाह। उपायमिति। आतिष्ठति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुतिष्ठति करोतीति यावत्। उपेयं फलम्। जनता जनसमूहः ॥ ६२ ॥

आरम्भवादः कणभक्षपक्षः
संघातवादस्तु भदन्तपक्षः ॥
सांख्यादिपक्षः परिणामवादो
वेदान्तपक्षस्तु विवर्त्तवादः ॥ ६३ ॥

कस्य तर्हि विकारवादः संमतो य इहाभ्युपगत इत्युच्यत इत्याशङ्क्य प्रागुक्तारम्भादिमतानामभ्युपगन्तॄनाह। आरम्भवाद इति। कणभक्षो वैशेषिकस्तादिष्ट इत्यर्थः, भदन्तो बौद्धः, सांख्यः कपिलः, आदिपदात् पतञ्जलिः ॥ ६३ ॥

विकारवादं कपिलादिपक्ष-
मुपेत्यवादेन तु सूत्रकारः ॥
श्रुतिश्च संजल्पति पूर्वभूमौ
स्थित्वा विवर्त्तप्रतिपादनाय ॥ ६४ ॥

विकारवादस्य परकीयमतत्वकीर्तनफलमाह। विकारवादमिति। उपेत्यवादेन अभ्युपगमसिद्धान्तेनेत्यर्थः, अन्यत्स्पष्टम् ॥ ६४ ॥

अभेदिनः सावयवस्य सत्य-
विचित्ररूपान्तरदर्शकत्वम् ॥
वदन्ति धीराः परिणाममस्या
वसुन्धराया इव सस्यसृष्टिम् ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु कारणस्य रूपान्तरापत्तिः परिणामो यथा मृदो घटाद्यात्मता सा च विवर्तेऽप्यस्ति रज्ज्वादेः सर्पाद्यात्मतादर्शनात्तत्कथं तयोर्भेद इत्याशङ्क्य विवर्तविलक्षणं परिणामस्वरूपमाह । अभेदिन इति । एकस्येत्यर्थः । एतच्चारम्भवादवैलक्षण्यार्थमुक्तमेकस्यारम्भकत्वानङ्गीकारादारभ्यारम्भकयोर्भेदाच्च, सावयवस्येति ब्रह्मविवर्तवैलक्षण्याय, सत्त्वादयो हि गुणाः प्रधानावयवतया परस्परसंसृष्टा एकं सत्प्रधानमित्यभेदिनः सावयवस्येत्युक्तम्, एवं यथा कारणं तथा महदादेरपि परिणामिनः स्वरूपं द्रष्टव्यम् । निरवयवस्य परिणामो न संभवति लोके तथा दर्शनादिति नैतदसंभवि, सत्येति कार्यं स्वरूपतोऽपि शुक्तिरजतव्यावृत्तय उक्तम्, विचित्रेति तत्स्वरूपकीर्तनम्, विवर्तपरिणामयोरुभयत्र समाद्व रूपान्तरेति संघातव्यावृत्त्यर्थं संघातस्य संहन्तृभ्यो रूपान्तरत्वाभावात्, अथ वाऽभेदिन इत्यनेन संघातस्यापि व्यावृत्तिः संहन्तॄणामनेकत्वात्, दर्शकत्वमिति तत्त्व प्रमाणाभिप्रायम्, कारणस्य तात्त्विककार्यात्मत्वं परिणामः, सावयवस्य सतः कार्यात्मत्वं वेति तल्लक्षणं द्रष्टव्यम्, धीरा इति विरुद्धतत्त्वयोस्तत्त्वतो भेदाद्यसंभवापह्नवधार्ष्ट्यं सूचयति, तदुदाहरति । वसुन्धराया इति ॥ ६५ ॥

अभेदिनो निर्विक्रतेरनेक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृषास्वरूपान्तरदर्शकत्वम् ॥
विवर्तशब्दार्थ इह प्रसिद्ध-
स्तरङ्गभेदादिव चन्द्रभेदः ॥ ६६ ॥

विवर्तस्य विकाराद्व्यावृत्तं स्वरूपमाह । अभेदिनो निर्विकृतेरिति । निर्विकृतेरित्यनेन पूर्वरूपपरित्यागलक्षणो विकारो निषिध्यते, अनेकेति च ब्रह्मविवर्ताभिप्रायमन्यत्र तदनियमात् । इह सिद्धान्ते कारणस्य पूर्वरूपापरित्यागेनाभिन्नं रूपान्तरम् अतात्त्विकरूपान्तरभेदो वा विवर्तवाद इति विवक्षितम् । परिणामे आरम्भे च प्रसङ्गवारणाय पूर्वरूपेत्यादि । उदाहरति । तरङ्गेति ॥ ६६ ॥

अहं प्रजायेय वहु स्वयं स्या-
मित्यादिनादौ परिणाममुक्त्वा ॥
विकारमिथ्यात्वमथ ब्रुवाणा
विवर्तवादं श्रुतिराननिनाय ॥ ६७ ॥

एवं प्रसङ्गागतं विचारं समाप्य श्रुतिर्मुनीन्द्रश्च विवर्तसिद्ध्यै विकारवादं वदतस्तथैवेत्यनेन या श्रुतिरभ्युपगम्य परिणामवादं वदतीत्युक्तम् , तत्रापातदृष्ट्या सृष्टिविषया श्रुतिः सेत्यभिप्रेत्याह । अहं प्रजायेयेति । वहु स्यां प्रजायेयेत्यादिश्रुतेरयमर्थतोऽनुवादः, अहं स्वयं प्रपञ्चात्मना प्रजायेयातो वहुस्यामिति योजना, अहमिति च सतो मूलकारणस्योक्तिः । विकारमिथ्यात्वमथ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रुवाणेति। अथेत्यर्थान्तरे, यदग्ने रोहितं रूपं तेजस-
स्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेर-
ग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणी-
त्येव सत्यमित्यग्न्यादेर्मिथ्यात्वं ब्रुवाणा श्रुतिर्विवर्त-
वादमानिनायानीतवतीत्यत्र परिणामद्योतकाभावादि-
यं परिणामश्रुतिरिति परस्य भ्रान्तिरेव। न च सत एवे-
क्षणपूर्वकं कार्यात्मना जनिश्रवणादयं परिणाम इति
वाच्यम्, विवर्तत्वेऽपि तदुपपत्तेः, सत्यं चानृतं च सत्य-
मभवदथरथान्रथयोगान् पथः सृजत इति विवर्तेऽपि त-
च्छ्रवणात्। तत उत्तरत्र विकारमिथ्यात्वप्रतिपादनात्सं-
मुग्धाकारेण तस्यैवेयं सृष्टिश्रुतिरन्यथा तदेकवाक्य-
तायोगादिति ग्रन्थकारः परभ्रान्तिमाश्रित्य परिणाममु-
क्त्वेत्यवोचदत एव सिद्धान्तं निषेधन्ती कथं नु भगव इ-
त्याद्या श्रुतिः पूर्वपक्षतया परिणामपरेत्यवोचाम, त-
स्मात् सैवात्र द्रष्टव्या॥ ६७॥

मायाश्रुतिस्मृतिवचः सकलं तथा च
वस्तुत्वमर्दनपरं घटते विवर्ते॥
सर्वस्य कारणविकारविभागभाजः
प्रागाद्भुतस्य परमार्थतया प्रतीतेः॥ ६८॥

एवं छान्दोग्यसृष्टिश्रुतिपूर्वोत्तरवाक्यपर्यालोचनया
विवर्तवाद एव प्रामाणिक इत्युक्तमिदानीमेतत्फलमेवं
सति तत्पर्यायमायामयत्वादिप्रपञ्चस्य ब्रुवतः श्रुत्यादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वचनस्य प्रामाण्यमुपपन्नं भवतीत्याह । मायाश्रुतीति । इन्द्रो मायाभिः पुरुरूप ईयते मायां तु प्रकृतिं विद्यात् ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितमित्यादि मायाश्रुतिस्मृतिवच इत्यर्थः । तथा च विवर्तवादे आश्रिते सति सन् घट इत्यादिप्रतीतिबलात्प्रागविचारदशायां परमार्थतयाद्भुतस्य कारणविकारविभागभाजः कार्यकारणात्मना विभक्तस्य सर्वप्रपञ्चस्य वस्तुतत्त्वमर्दनपरं सकलं मायाश्रुतिस्मृतिवचो घटत इति पक्षयोरित्याशयेन सर्वस्येत्याद्युक्तम् ॥ ६८ ॥

संघातवादमुपगम्य तु तत्र पक्षे
संहन्त्रभाव इति सूत्रकृदाह दोषम् ॥
स्थायी भदन्तसमये न हि कश्चिदत्र
संघातसंजननशक्तिसमन्वितोऽस्ति ॥ ६९ ॥

किं च तयोः संघातारम्भवादयोर्युक्त्यसहतया सूत्रकारेण निरस्तत्वादपि तत्त्वजिज्ञासुना तौ दूरतो वर्जनीयावित्यभिप्रेत्य सकलशिष्टैः परित्यक्तत्वात्संघातवादं प्रथमं दूषयति । संघातवादमिति । उपगम्यानूद्य । संहन्तुः संहन्यमानानां मेलकस्याभावः । एतदुक्तं भवति । सौत्रान्तिकवैभाषिकाभ्यां हि बुद्धशिष्याभ्यां बाह्याभ्यन्तरपदार्थाः क्षणिकाः सन्तीत्यभ्युपगतम्, तत्र भूतं पृथिव्यादिचतुष्टयम्, भौतिकं रूपादि चक्षुरादि च, भूतभौति-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

के च खरस्नेहोष्णेरणस्वभावानां सकृदेव कार्यजनक-तया क्षणिकानां चतुर्विधपरमाणूनां संघातरूपे न तु वैशेषिकाणामिव ततोऽन्ये तदारब्धे, तत्र खरः पृथिवीप-रमाणुः, स्नेहोष्णौ प्रसिद्धौ, ईरणो वायुपरिमाणुः, तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञितानां च पञ्चस्कन्धा-नामपर आध्यात्मिकः संघातः सकललोकयात्रावहः, रू-प्यन्त एभी रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रि-याणि रूपस्कन्धः, अहमित्याकारं रूपादिविषयं वा ज्ञा-नं विज्ञानस्कन्धः, चित्तस्य या प्रियाप्रियानुभयात्मक-विषयवेदनेन सुखदुःखतद्रहितविशेषावस्था जायतेऽ-सौ वेदनास्कन्धः, सविकल्पकप्रत्ययः संज्ञास्कन्धः, रा-गादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः, तदिदमनुपपन्नं समुदायिनामचेतन-त्वेन स्वतः समुदायायोगात्, लोके चेतनव्यापारं वि-नाऽचेतनेषु तददर्शनात् । ननु तन्मतेऽपि चित्तं चेतन-मस्ति तज् ज्ञात्वा संयोजयिष्यतीति चेन्न। शरीरादिसं-घातोत्पत्तेः पूर्वं तस्य ज्ञातृत्वायोगात् । नन्वालयविज्ञा-नमहंकारास्पदं तदेव सकलव्यवहारे कारणमिति चेन्न। तस्यापि विषयविज्ञानादृते तदयोगाद्विषयविज्ञानं च न संघातं विनेत्युक्तम्। किं चालयविज्ञानं स्थायि चेद्धा-मान्तरेणास्मदात्मैव स्यात्, क्षणिकं चेत्तेनापि कथं संघा-तो जननीयः, ज्ञानपूर्वेच्छाधीनप्रयत्नवच्चेतनाधिष्ठित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कायव्यापारेण हि कुलालादय एकेनापरं संयोजयन्ति वियोजयन्ति च, ज्ञानादीनां चैकाश्रयाणामेव कार्यकारणभावो लोके सिद्ध इति कथं क्षणिकात्मनि तदुत्पत्तिः स्यात्, एवं क्रियाविभागाद्याश्रयानेकक्षणस्थायिन एवैकस्यापरेण संयोगः संभवतीति न क्षणिकानामणूनामन्योन्यसंबन्धोऽपि सिध्येत्। यत्तु सकृदेव कार्यजनकत्वादणूनां क्षणिकत्वमिति। तन्न असिद्धेरेकस्यापि सहकारिसमवधानक्रमेणानेककार्यजनकत्वस्य लोकेऽनुभवादतोऽत्यन्तमयुक्त एवायं पक्ष इति समुदाय उभयहेतुकेऽपि तदप्राप्तिरितिसूत्रेण तत्र दोषं सूत्रकार आहेति संहन्तभावमेवाह। स्थायीति। उक्तरीत्या ज्ञानाद्यनेकक्षणावस्थायी संघातजननशक्तिसमन्वितो भवतीति बौद्धमते स न सिद्धेरदित्यर्थः ॥ ६९ ॥

आरम्भवादमुपगम्य तदीययुक्ते-
स्तत्प्रक्रियामनुसरन् व्यभिचारमाह ॥
वैशेषिकं प्रति महद्वदिदं हि योज्यं
यद्वाऽपि दीर्घवदिदं जडमित्यनेन ॥ ७० ॥

वैशेषिकास्तु स्वमनीषाविलसितानणून् जगत्कारणान्याहुः, तन्तवो हि पटसमानजातीयानेकसंवलिता एव पटमारभन्ते, एवंविधेभ्य एव सर्वत्र कार्यद्रव्यदर्शनात्, कारणगतगुणाश्च सजातीयान् कार्ये गुणानारभन्ते, तन्तुरूपादौ तथा दर्शनात्, कार्यगतमहत्त्वं च कार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णगतबहुत्वमहत्परिमाणादृढसंयोगारब्धम्, न्यूनाधिक-
संख्यतन्त्वारब्धयोः पटयोः समसंख्यादिमत्स्थूलसूक्ष्म-
तन्त्वारब्धयोः शिथिलाशिथिलसंयोगवत्तूलपिण्डार-
ब्धपिण्डयोश्च महत्त्वविशेषस्योक्तहेतुकत्वात्, एवं कार्य-
परिमाणान्न्यूनपरिमाणापकर्षपर्यवसानभूमयः परमा-
णवः सिध्यन्ति द्व्यणुककारणानि, द्व्यणुकपरिमाणे च
परमाणुद्वित्वमसमवायि कारणं त्र्यणुकपरिमाणे तु द्व्य-
णुकबहुत्वमिति तत्प्रक्रिया, एवं च कथमद्वितीयात्पर-
ममहतश्चेतनाद्ब्रह्मणः परिच्छिन्नजडवियदादिकार्यद्र-
व्यस्योत्पत्तिरितीममापेक्षं सूत्रसूचितयुक्त्या दूषयति।
आरम्भवादमिति । तदीययुक्तेर्वैशेषिकस्य कारणगुणा-
रम्भकत्वविषययुक्तेस्तत्प्रक्रियामनुसरन्नेव तत्प्रक्रिय-
यैव वैशेषिकं प्रति सूत्रकारो व्यभिचारमाहेत्यर्थः । त-
त्प्रक्रियायां व्यभिचारं दर्शयन्नेव स्वमतेऽविरोधपरं
सूत्रमर्थतः पठति । महद्वदिति । किं कारणगुणानाम-
विशेषेण कार्ये समानजातीयगुणारम्भकत्वं किं वा तद्वि-
शेषगुणानाम्, नान्त्यः, चित्ररूपादिमद्द्रव्यव्यारम्भका-
वयवरूपादौ तदभावात्, विशेषगुणत्वानिरूपणस्य च
द्वैर्दर्शितत्वाच्च, नाप्याद्यः, द्व्यणुकैस्त्र्यणुकस्य महत आ-
रम्भ इति वैशेषिकैरभ्युपगमात्, न च तत्र समवायिगतं
परिमाणं सजातीयं तदारभते तद्वदिदं चेतनं ब्रह्मापि
जडं जगज्जनयतु न तु तच्चैतन्यान्तरमिति योज्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पपादनीयम्, किं च तानि द्व्यणुकानि ह्रस्वानीति वैशेषिकसंमतं त्र्यणुकं च दीर्घमिति, एवं च यथा कारणगतं ह्रस्वपरिमाणं त्र्यणुके स्वसमानपरिमाणं न जनयति तद्वदपीदं ब्रह्म जडं जनयिष्यतीत्यपि योज्यमित्यनेनैतदर्थेन महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामिति सूत्रेण व्यभिचारमाहेति संबन्धः। एतच्च चकारार्थेन सौत्रवाशब्देन सूचितम्, परमाणुपारिमण्डल्यस्य द्व्यणुके सजातीयानारम्भकत्ववदित्येतामुपलक्षयतीति द्रष्टव्यम् ॥ ७० ॥

ह्रस्वारब्धं त्र्यणुकमणुभिस्तद्वदारब्धमेतद्
ध्रस्वं नो तन्न च तदणुवत्संमतं तद्वदेतत् ॥
सर्वं कार्यं गगनधरणीमध्यगं चेतनोत्थं
निश्चित्कं नो जडिमघटितं युक्तमित्याचचक्षे॥७१॥

महद्वदित्यादि विवृणोति। ह्रस्वारब्धमिति। त्र्यणुकं हि दीर्घं ह्रस्वैर्द्व्यणुकैरारब्धं तद्वदेतदेव महदणुभिर्द्व्यणुकैराब्धं तथापि तत् त्र्यणुकं नो ह्रस्वं ह्रस्वं न भवति न च तदणुवदणुसदृशमणुपरिमाणं न तु परमाणुद्व्यणुकयोः परिमाणं द्व्यणुकत्र्यणुकगतपरिमाणारम्भकसामग्र्यां तत्संमतमेवमेतदसंमतमपि। एतदेव विवृणोति। सर्वमित्यादिना। ननु परमाणुद्व्यणुकयोर्द्व्यणुकत्र्यणुकगतपरिमाणारम्भकसामग्र्यन्तरसत्त्वात्तद्बलात्पारिमाण्डल्यादिर्द्व्यणुकादौ सजातीयं नारभत इति चेन्न,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैपरीत्यस्यापि संभवात्, अणुत्वादिसामग्रीप्राबल्य-कथनं तु तथात्वादभ्युपगमायत्तमिति भावः। नोत्सा-कम्, निश्चित्कम् अत एव जड़िमघटितं जाड्यविशिष्ट-मित्यर्थः ॥ ७१ ॥

ह्रस्वाणुत्वे कारणद्वित्वहेतो-
र्जाते नैते पारिमाण्डल्यहेतोः ॥
दीर्घत्वं यद्ग यच्च दीर्घे महत्त्वं
द्रव्ये ते द्वे कारणत्रित्वहेतोः ॥ ७२ ॥

सूत्रस्थवाशब्दसमुच्चितं व्यभिचारं दर्शयन् द्व्यणुकत्र्य-णुकपरिमाणयोस्तदभिमतं कारणमाह। ह्रस्वाणुत्वे इ-ति। द्व्यणुकगतह्रस्वत्वाणुत्वे इत्यर्थः। कारणद्वित्व-हेतोः परमाणुसमवेतद्वित्वाद्धेतोर्जाते भवतः, नैते पारि-माण्डल्याद्धेतोरिति, पारिमाण्डल्यस्य परमाणुपरिमा-णस्यानारम्भकत्वाङ्गीकारात्, अन्यथा द्व्यणुकस्यापि परिमण्डलत्वापत्तेरिति हि तेषां मतम्, एवं दीर्घे द्र-व्ये त्र्यणुके यद्ग दीर्घत्वं यच्च महत्त्वं ते द्वे द्व्यणुकग-तबहुत्वादेव हेतोर्जाते इत्यपि तेषां मतम्, तया च कुतस्तदुक्तो नियम इति भावः ॥ ७२ ॥

द्व्यणुकस्य जन्म परमाणुयुगात्
परिमण्डलादिति कणादमतम् ॥
द्व्यणुकत्रयात् त्र्यणुकजन्म पुन-
र्नियमं न कश्यपसुतो वदति ॥ ७३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं चैकत्राभ्युपेतमन्यत्राभ्युपगन्तव्यमिति न तेषामप्यस्ति नियमः, तथा सति हि परमाणुद्वयादिव द्व्यणुकं द्व्यणुकद्वयादपि किं चित् कार्यं स्यात्, न च तदप्यण्वेव स्यादित्यारम्भेऽप्यर्थाद् द्व्यणुकद्वयमारम्भकं नेति वाच्यम्, द्वित्वसंख्या हि परमाणुगता स्वाश्रयपरिमाणादधिकपरिमाणमारभत इति क्लृप्तम्, एवं च द्व्यणुकद्वित्वं च तादृशमेव परिमाणमारभेत तच्च महत्त्वमेव स्यात्, न हि द्व्यणुकपरिमाणादधिकपरिमाणं महत्त्वादन्यत् संभवति, एवमपि यदि कारणबहुत्वमेव कार्यमहत्त्वारम्भकमिति तदीयो नियमः स्यात् तदैतन्न स्यात्, न च सोऽस्ति, द्व्यणुकत्र्यणुकपरिमाणातिरिक्तकार्यपरिमाणे तैरपि कारणसंख्याविशेषनियमानभ्युपगमात्, तथा च तद्वदेवेदमपि किं न स्यादित्याशयेनाह । द्व्यणुकस्य जन्मेति । परिमण्डलादिति परमाणुविशेषणम् । तद्द्वित्वारब्धं परिमाणं तदधिकमिति तन्मते प्रसिद्धिं दर्शयितुमितीति द्रष्टव्यम् । त्र्यणुकजन्मेत्यत्रापि कणादमतमित्यनुषञ्जनीयम् । पुनः पश्चात्, ततोऽन्यत्र कार्यपरिमाणेषु, कश्यपसुतो वैशेषिकः । एवं च तन्तुरूपादिसाम्येन ब्रह्मचैतन्यस्य तत्कार्यसजातीयारम्भकत्वमापादयितुं कथं स शक्नुयादिति भावः । ॥ ७३ ॥

द्व्यणुकत्र्यणुकव्यपाश्रयं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिमाणं प्रति कारणाश्रयः ॥
न तु कारणमिष्यते गुण-
स्तदवष्टभ्य वयं जिगीषवः ॥ ७४ ॥

तस्माद्वैशेषिकेण कारणगुणारम्भकत्वविषयनियमेन न ब्रह्मकारणत्वादः प्रक्षेप्तुं शक्य इत्याशयेनाह। द्व्यणुकेति। कारणाश्रयो गुण इति संबन्धः। गुणः परिमाणम्। तथा सति तत्र किं स्यात् तदाह। तदवष्टभ्येति। तदाश्रित्य तं वयं जिगीषवो जेतुमिच्छामः तद्ब्रह्मचेतनकारणत्वं तदाक्षेपं निराकृत्य वयं समर्थयितुं समर्था इत्यर्थः ॥ ७४ ॥

यदि कारणसंश्रयाद्गुणाद्
द्व्यणुकादेः परिमाणमिच्छति ॥
द्व्यणुकादिसमाश्रये तदा
परिमाणेऽतिशयो विरुध्यते ॥ ७५ ॥

यदि पुनर्वैशेषिको ब्रह्मकारणताप्रद्वेषादुक्तदोषपरिहाराय तत्रापि कारणपरिमाणादेव कार्ये परिमाणारम्भं ब्रूयात् तत्राह। यदि कारणेति। गुणात् परिमाणगुणात्, परिमाणस्य सजातीयपरिमाणारम्भकत्वनियमेन द्व्यणुकत्र्यणुकयोरपि पारिमाण्डल्यमेव स्यान्न तु तत्परिमाणे ततोऽतिशयः स्यात् ततश्च त्र्यणुकादेरप्यतीन्द्रियतापत्तिः, नित्यपरिमाणस्यानारम्भकत्वनियमोऽपि तदीयो विरुध्येत। वस्तुतस्त्वयं द्व्यणुकादिकल्पनै-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व निष्प्रमाणा, न तावद् द्व्यणुकादि प्रत्यक्षेण सिध्य-
ति, अमहत्त्वात्, ननु त्र्यणुकं कार्यद्रव्यावस्थं जन्य-
महत्त्वाधिकरणत्वात् पटवदिति द्व्यणुकसिद्धौ तत्का-
रणतया परमाणुरपि सिध्यतीति चेन्न, अप्रयोजकत्वा-
त्, महत्त्वांशानर्थक्याच्च . तस्य द्व्यणुकव्यावृत्त्यर्थत्वे
चान्योन्याश्रयात्। ननु त्र्यणुकस्य कार्यद्रव्यत्वेन तन्न्यू-
नपरिमाणकारणसिद्धौ तस्यातीन्द्रियस्यामहत्त्वादणुद्र-
व्यं तावत् सिद्धम्, तद् यदि सावयवं तर्हि सिद्धमेव
द्व्यणुकम्, अथ निरवयवं तर्हि परमाणवः सिद्धाः, त-
थापि तन्तुद्वयवत् तद्द्वयमपि किं चिद् द्रव्यं जनयेदि-
ति तदेव द्व्यणुकं सिध्यतीति द्व्यणुकपरमाण्वोः सिद्धि-
रिति चेद्, भवत्त्वेवं तत्संभावना तत्सत्ता तु प्रमाणं
विना न सिध्यतीति। त्र्यणुके कार्यत्वं चासिद्धमिति
केचित्। अस्मन्मते तु यद्यपि नासिद्धं तथाप्यप्रयो-
जकम्, आत्मन आकाशः संभूत इत्युपक्रम्याद्भ्यः पृ-
थिवीति श्रुताया एवापरिच्छिन्नाया एकस्याः पृथिव्या-
स्तदारम्भोपपत्तेः। न चैवं सर्वत्र तदुपलम्भापत्तिः।
घटशरावपिण्डतदवयवकपालादिषु तद्विकारेषु त-
स्या उपलभ्यमानत्वात्, न हि घटशरावाद्यात्मना
मृन्नोपलभ्यते। न च यत्र कार्यं नास्ति तत्रापि सा वि-
द्यते चेत् कथं नानुभूयेत, न चेत् कथं सैका स्यादि-
ति वाच्यम्। तत्र सत्त्वेऽपि तस्याः पराभिमतजाति-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वदनुपलम्भसंभवात्, कार्यगतरूपादिष्वेव व्यवहारा-नुरोधेनादृष्टनिमित्तोद्भूतत्वसंभवेन तदात्मनैव तस्याः प्रत्यक्षत्वात्, परेषामपि त्र्यणुकोपादानगतोद्भूतरू-पादौ प्रमाणाभावात, अन्यथा तस्यैव लाघवेन प्रत्य-क्षत्वनिमित्ततया द्व्यणुकादेरपि प्रत्यक्षत्वापत्तेः। त्र्य-णुकादौ त्वदृष्टवशादुद्भूतरूपादि भविष्यति, दृश्यते हि श्यामावयवारब्धेऽपि घटादौ पाकाल्लौहित्यम्। त्र्य-णुककारणैकत्वानङ्गीकारे चानन्तद्व्यणुकान्यनन्ताश्च परमाणवस्तत्र च पृथिवीत्वमेकजातिरित्यनेककल्प-नागौरवप्रसङ्गात्। अस्मन्मते तु प्रकृतिरेकैव सर्ववि-कारानुगता मृच्छरावं इत्यादिबुद्ध्यालम्बनमिति सैव सामान्यमित्युच्यते न ततः पृथक् पृथिवीत्वमस्ति। स-र्वमुक्तौ प्राकृते वा प्रलये न हि तत्सत्त्वे किंचिन्मान-मस्ति येन तदिदानीमसत्याः पृथिव्यास्तदतिरिच्येत, प्रत्युत धर्मिणं विना धर्मासंभवेन तदानीं तदभावश्च, परमाण्वादेरपि विभक्तस्य तदा सत्त्वासंभवात्, सदे-व सोम्येत्यादिश्रुतिविरोधाच्च । एतेनाप्त्वादिकमपि व्याख्यातम्। ननु त्र्यणुककारणस्यान्यत्र दर्शनानुरोधे-न तदल्पपरिमाणत्वमनेकत्वं चेति कथमेतदिति चेन्न। यत्कारणं तन्महदिति तन्त्वादाववगतनियमस्याद्भ्यः पृथिवीति श्रुतैकत्वसामर्थ्यावगतमहत्त्वानुरोधिनो ब-लवत्तया तद्विरोधिनः कार्यक्षुद्रारब्धत्वनियमस्य बा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धितत्वात् । अत एवानेकारब्धत्वमपि न ग्राह्यम्, उक्तरीत्या त्र्यणुकेऽसंभवात् । किं च लोके समुद्रावयविन एकस्मादतिक्षुद्रो बुद्बुदादिर्दृश्यते, त्वन्मते च दीर्घेभ्यस्तन्तुभ्यो ह्रस्वः पटो भवति, दीर्घादेकस्मादपि सूत्रादल्पं त्रिवृत्सूत्रं लोकशास्त्रसिद्धम् । अस्मन्मते तु विवर्त एवेति न कोपि नियमः । अपि च प्राक् सदसद्वा स्वसामग्रीतो जायमानं यथानेककारणे समवैति तथैकस्मिन्नपि तत्समवाये किं बाधकम्, अनेकत्र तत्समवायदर्शनस्य सावयवसमवायदर्शनतुल्यत्वात् , अनेकावयवत्वसावयवत्त्वयोरविशेषात् सहकारिसन्निधिक्रमेणैकस्मादप्युपादानात् क्रमकार्योपपत्तेः , तन्नाशश्चादृष्टनाशायत्त इति न किंचिदवद्यम् । किं च निरवयवपरमाणुसंयोगासंभवादपि न तेषां कारणता भवेत्, न हि विश्लिष्टा एव ते जगज्जनयेयुः, संयोगश्चाव्याप्यवृत्तिरेव लोके समधिगतः, न हि कुड्यादेर्वस्त्वन्तरेण संयोगस्तस्य परभागस्थमपि व्याप्नोति । न च निरवयवसंयोगः स्वाश्रयं व्याप्नुयादिति वाच्यम् । तथा सति कर्णशष्कुलीसंयोगो गगनमात्रवृत्तिरिति तन्मात्रं श्रोत्रं सर्वदेशस्थानपि शब्दानुपलम्भयेत् । परमाणुसंयोगस्यापरपरमाणुव्यापने च परमाणुद्वयमेकपरमाणुमात्रं स्यादिति न तत्कार्ये परिमाणोपचयो भवेत् । अव्याप्यवर्तनं च संयोगस्य निरवयवे न संभवति विरोधादित्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यत्रोपपादितम् । एवं कार्यस्य प्रागुत्पत्तेरसत्त्वे नरशृ-ङ्गादविशेषादुत्पत्तिर्न स्यात् । प्रागभावप्रतियोगित्वादि तद्विशेषणं तदाऽसतोऽनुपपन्नम् । धर्मकाले विद्यमान-स्यैव धर्मिणोऽतदधिकरणत्वेन यदा कदा चित् स तद-धिकरणमिति तु बालभाषितम् । एवमसतः कारणवि-शेषसंबन्धान्तरासंभवादपि न तदर्थं कारणविशेषे प्रे-क्षावत्प्रवृत्तिरुपपन्नेत्यारम्भवादोऽनुपपन्न एवेति भावः ॥ ७५ ॥

परिणामवादमुपगम्य तथा
रचनाद्यसंभवमुवाच मुनिः ॥
परमेश्वरं न हि विना घटते
जडरूपवस्तुपरिणाम इति ॥ ७६ ॥

अस्तु तर्हि परिणामवादस्तत्र च मृद् घट इति प्र-त्यक्षं प्रमाणम्, मृद्घटयोरत्यन्तभेदे गवाश्वयोरिव सा-मानाधिकरण्यप्रतीत्यनुपपत्तेः, एवमत्यन्ताभेदेऽपि न हि भवति घटो घट इति धीः, तस्मात् कार्यकारण-योर्भेदाभेदस्तात्त्विक इति परिणामवादः प्रमाणिक इ-ति तत्राह । परिणामवादमिति । यथा संघातादिवाद-स्यासंभवमुवाच तथा रचनानुपपत्तेश्च नानुमानमि-त्यादिभिः सूत्रैः परिणामवादेऽपि रचनाद्यसंभवं मुनि-रुवाचेत्यर्थः । रचना कार्यगतावयवविन्यासः, आदि-पदेन कार्योत्पादनादिलक्षणप्रवृत्त्यादिरुच्यते । कुतस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्मते रचनाद्यसंभवस्तत्राह । परमेश्वरमिति । लोके हि कुलालादिश्चेतनोऽचेतनमृदादि परिणमयति, साङ्ख्य-मते च जगत्परिणामकर्ता परमेश्वरो नास्तीति कथं लौकिकन्यायसिद्धं परमेश्वरं विना जड़रूपवस्तुनः प्रधानस्य जगत् परिणामो घटेत, न हि जीवास्तत्परि-णमयितारस्तेषां निर्विशेषाणां तन्मत उदासीनत्वात्, न हि किं चिदपि वस्तु स्वयमेव परिणममानमुभय-संप्रतिपन्नमस्ति, अतः स वादोऽनुपपन्न एव । घटादेः कार्यस्य वस्तुतो मृदादिकारणाभेदे मृदादिरिव कुला-लादिव्यापारात् प्राक् सोऽपि किमिति नोपलभ्यते, कु लालादिव्यापारो वा किमर्थः । ननु मृदादिगतपिण्डा-द्यवस्थयाऽवरणात् तदा विद्यमानोऽपि घटादिर्नानुभू-यते, आवरणभङ्गार्थश्च कुलालादिव्यापार इति चे-न्न । सर्वस्यापि तत्कार्यस्य सर्वदा तत्कारणात्मना सत्त्वेन सर्वं सर्वस्यावरकमिति तदा किमपि नानुभूये-त, वक्तव्यो वा घटादेः स्थित्यवस्थातः प्रागवस्थायां विशेषः, पिण्डाद्यावरणभङ्गोऽपि प्राक् सन्नेव जन्यत इति कृतं कुलालादिव्यापारेण, असंश्चेदसतोऽप्युत्प-त्तौ घटादिरपि तथैव भवितुमर्हतीति किं प्राक् सत्त्व-कल्पनया । यत्तु मृद् घट इति प्रतीत्या तयोर्भेदाभेद इति । तन्न, तयोः परस्पराभावरूपयोरेकदैकत्रानुपप-त्तेः, न वा प्रतीयमानाभेदस्याभावं कश्चिदनुभवति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु भेदो नाभावः किं तु व्यावृत्तघटादिस्वरूपमेव, अभेदस्तु घटपटादौ सर्वत्रानुगता पृथिवीति पृथिव्यात्मना घटपटाद्यभिन्नं घटाद्यात्मना च भिन्नमिति भेदाभेदव्यवहार इति चेत्, भवत्वेवं सर्वत्र पृथिव्येका घटादेस्तस्याश्च भेद एव चेद्ध भेदवादिमतमेव समर्थितं स्यात्, तथा च प्रागुत्पत्तेर्घटादेः सत्त्वासत्त्वाद्याश्रितदोषस्तदवस्थ एव, अभेदे च तस्याः प्रागुत्पत्तेरुपलम्भप्रसङ्गादिदोषो न निवर्तेत, सर्वस्य पृथिव्यात्मनैव घटाद्यात्मनाऽप्यभेदः स्यात्, पटाद्यभिन्नपृथिव्यभिन्नत्वाद्ध घटादेस्तयोर्भेदाभेद इति चेत्, तस्यैवेदानीं दुर्निरूपत्वात्, तस्मान्नास्त्येव भिन्नाभिन्नं वस्तु, एवं च कारणाभिन्नकार्यस्य कारणातिरिक्तसत्ताशून्यत्वमेव कारणतादात्म्यम्, तदेव च मृद्ध घट इत्यादिसामानाधिकरण्यप्रतीत्यालम्बनमिति विवर्तवाद एव प्रमाणसिद्धो न वादान्तरमिति भावः ॥ ७६ ॥

क्व चिदभ्युपेत्य कथनं कुरुते
परपक्षदूषणकथावसरे ॥
निजपक्षदोषपरिहारपरः
क्व चिदभ्युपेत्य वदतीह मुनिः ॥ ७७ ॥

नन्वारम्भादिपक्षत्रयनिराकर्तुः सूत्रकारस्य किं सर्वत्राविशिष्ट एवाशयः किं वा क्व चिद्ध विशेषोऽस्तीति जिज्ञासायामाह । क्व चिदभ्युपेत्येति । परपक्षदूषण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथावसरे परपक्षदूषणप्रधाने तर्कपादे क्व चिद्‌ वैशेषिकाधिकरणे तदुक्ताणुकारणप्रक्रियामभ्युपेत्य तेनैव न्यायेन चेतनब्रह्मकार्यं जगदिति स्वपक्षे वैशेषिकोक्तकारणगुणारम्भदोषपरिहारपरः सन् महद्दीर्घवदित्यादिना कथनं कुरुते, क्व चिद्‌ रचनानुपपत्त्याद्यधिकरणे तन्मतं केवलमुपेत्योपन्यस्येह शास्त्रे मुनिर्दूषणमात्रं वदतीति विशेष इत्यर्थः। वैशेषिकाणां हि कारणगुणारम्भाश्रयं दोषं तदभ्युपगमेनैव व्यभिचारेण परिहर्तुं प्रथममेवमधिकरणं विरच्योभयथापि न कर्मातस्तदभाव इत्यधिकरणान्तरेण तदीयं मतं दूषयामास न तथेतरयोः केवलतन्मतदूषणस्यैव तत्र कृतत्वादिति भावः ॥ ७७ ॥

परपक्षनिषेधमाचरन्
क्व चिदङ्गीकरणं करोति सः ॥
परदर्शितदोषनुत्तये
क्व चिदित्येष विशेष ईरितः ॥ ७८ ॥

उक्तमेव विवेचयति। परपक्षेति। परिणामादिपक्षनिषेधमित्यर्थः। आचरन्निति हेतौ शतृप्रत्ययस्तेन परपक्षनिषेधहेतोस्तदर्थमङ्गीकारः क्व चित् परोक्तदोषपरिहारार्थमित्यर्थः। अङ्गीकरणं करोति परपक्षस्यानुवादमात्रं करोति, न तु तद्दृष्टान्तमाश्रित्य स्वपक्षे क्वं चिद्‌ दोषं परिजिहीर्षतीत्यर्थः। उत्तरार्द्धे क्व चिदिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशेषिकाधिकरण इत्यर्थः ॥ ७८ ॥

भोक्त्रादिसूत्रे परिणामवाद-
मास्थित्य तद्वादिभिरुक्तदोषम् ॥
समादधानो मुनिराह तस्मात्
सिद्धान्तसिद्धिः पुनरुत्तरत्र ॥ ७९ ॥

यस्मादेवं सूत्रकारः संघातादिवादमिव परिणामवादमपि निराचकार तस्माद् भोक्त्रापत्तेरविभागश्चेदित्यादिसूत्रे यद् वादिभिरद्वैतसमन्वये भोक्तृभोग्यादिसांकर्यं प्रसञ्जितं तत् परिजिहीर्षुर्भेदाभेदघटितं परिणामवादमभ्युपगम्य स्याल्लोकवदिति तत्परिहारं मुनिराह न तु स्वसिद्धान्ततया, तथा सति तत्प्रतिषेधायोगात्, स्वसिद्धान्तसिद्धिस्तूत्तरत्र तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र द्रष्टव्येत्याह । भोक्त्रादीति ॥ ७९ ॥

प्रत्यासन्ना परिणतिरियं विप्रकृष्टस्तु पूर्वः
संघातादिः सकल उदितो वेदसिद्धान्तसिद्धेः ॥
एतावत्त्वादियमभिमता सूत्रकारस्य भाति
भ्रान्तिभ्रष्टस्फुटनिजमनः कौशलानां नराणाम् ॥ ८० ॥

ननु निरसिष्यमाणस्यापि विकारवादस्यैव तत्प्रत्यासत्त्याऽङ्गीकारश्चेदारम्भवादोऽपि स्वभाववादादिमतनिराकरणेन कार्यकारणत्वादिसमर्थनाय किमिति नाङ्गीकृत इत्याशङ्क्य तन्न, न हि कार्यकारणादिद्वैतं प्रतिपिपादयिषितस्तस्य मायामात्रत्वात् किं त्वद्वैतं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्म तत्र च भेदाभेदाश्रयः परिणामवादोऽभेदांशेना-द्वैतसमर्थनं उपकरोति भेदांशेन च प्रत्यक्षादिकं चानु-सरतीति प्रथमं प्रत्यक्षादिप्रामाण्याश्रयणेऽपि नाद्वै-तसमन्वये कश्चन बाधोऽस्तीति दर्शयितुं विकारवाद एवासंमतोऽप्याश्रित इत्याशयेनाह। प्रत्यासन्नेति। वे-दसिद्धान्तसिद्धेर्वेदान्तसिद्धान्तसिद्धर्थमियं परिणतिः परिणामवादः प्रत्यासन्ना विवर्तं प्रत्युपायत्वात्, पूर्वं उदितः पूर्वपक्षत्वेनोक्तः, पूर्वमुदित इति वापाठः, सं-घातादिस्तु विप्रकृष्टो व्यवहारमात्रोपयुक्तत्वाद्व वेदा-र्थनिर्णयानुपयोगी। अयमेव तुशब्दसूचितो विशेषः। इयमिति विशेषणेन परिणामस्य प्रत्यक्षसिद्धत्वाद्व व्य-वहारोपयुक्तत्वमप्यस्तीति दर्शयति । ननु सूत्रव्या-ख्यातृभिः कैश्चित् परिणामवादः सूत्रकारसंमत इति स्वग्रन्थे लिखितं तत् कथं तत्र तदसंमतिरिति चेत्, लिखन्तु नाम तेषां सूत्रकृत उक्ताशयानभिज्ञतया भ्रा-न्त्यैव तदित्याशयेनाह। एतावत्त्वादिति। सिद्धान्त-प्रत्यासन्नत्वादित्यर्थः। सूत्रकारस्येयमभिमतेति भाती-ति संबन्धः। सविशेषाद्वैतमेव सूत्रकृत्संमतमिति भ्रा-न्त्या भणं स्फुटं निःसंदिग्धं निजमनःकौशलं विचा-रदक्षत्वं येषां तेषामित्यर्थः ॥ ८० ॥

आरोपदृष्टिरपवादकदृष्टिरेवं
व्यामिश्रदृष्टिरिति दृष्टिविभागमेनम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संगृह्य सूत्रकृदयं पुरुषं मुमुक्षुं
सम्यक् प्रबोधयितुमुत्सहते क्रमेण ॥ ८१ ॥

न केवलं श्रौताद्वयप्रत्यासत्त्या परिणामवादाभ्युपगमः किं तु तेन विना शिष्यं प्रति शुद्धाद्वयोपपादनासंभवादपि सोऽभ्युपेत इत्याशयेनाह । आरोपदृष्टिरिति । क्रमेणैनमुक्तदृष्टिविभागं संगृह्यायं सूत्रकृत् सम्यगबाधितं पुरुषं परमात्मानं मुमुक्षुं परं प्रति बोधयितुमुत्सहत इति संबन्धः । सम्यगक्लेशेनेति वा ॥ ८१ ॥

आरोपदृष्टिरुदिता परिणामदृष्टि-
द्वैतोपशान्तिरपवादकदृष्टिरन्त्या ॥
मध्ये विवर्तविषया द्वयमिश्रदृष्टि-
र्व्यामिश्रदृष्टिरधरोत्तरभूमिभावात् ॥ ८२ ॥

उक्तं दृष्टित्रयं परस्परं विभज्य दर्शयति । आरोपदृष्टिरिति । पूर्वश्लोकोदिता यारोपदृष्टिः सा परिणामदृष्टिर्ब्रह्मणि प्रपञ्चाध्यारोपितदृष्टिस्तया हि ब्रह्मणः प्रपञ्चात्मत्वं विषयीक्रियते । एवं तत्रोदिता या अपवादकदृष्टिः सान्त्या चरमा कार्यरूपा द्वैतोपशान्तिः सविलासाविद्योपशमकाद्वैतब्रह्मसाक्षात्कारः । एवं तत्रैवोदिता या व्यामिश्रदृष्टिः सा मध्ये परिणामद्वैतोपशमदृष्ट्योर्मध्ये विवर्तविषया द्वयमिश्रदृष्टिः, अतत्त्वतोऽन्यथाभावरूपविवर्तसत्त्वविषयाया दृष्टेर्ब्रह्मणि प्रपञ्चतदभावद्वयविषयत्वात् सा द्वयविमिश्रदृष्टिर्भवतीत्यर्थः । अन्त्यमध्यादिपदेन सू-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित एतद्दृष्टीनां क्रमे हेतुमभिप्रेत्याह। अधरोत्तरेति।
निकृष्टमध्यमोत्तमभूमित्वादित्यर्थः ॥ ८२ ॥

तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा
तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मता ॥
जीवैकत्वमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा
भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोर्ध्वलब्धिर्भवेत् ॥८३॥

तद्दृष्टीनामधरोत्तरभावमेव विवृणोति। तत्त्वावेदके-
ति। प्रत्यक्षादेस्तत्त्वावेदकमानत्वदृष्टिरधमा भवति।
अविवेकादिमत्पुरुषसाधारणत्वात् पुरुषार्थानुपयोगि-
त्वादनर्थहेतुत्वादनात्मसत्यत्वविषयत्वाच्च साधमेत्य-
र्थः।तत्त्वक्षतिः प्रपञ्चसत्यत्वक्षतिकरी या विवर्तदृष्टिः सा
मध्यमा ब्रह्मविचाराद्यधीनविवर्तदृष्टेर्विवेकादिमत्पुरु-
षाश्रयत्वात् परम्परया मोक्षोपयोगित्वादात्मतत्त्ववि-
षयत्वाच्च सा पूर्वदृष्ट्यपेक्षयोत्तमा तावत्याद्वैतोपशान्त्य-
संभवाद् द्वैतोपशान्त्यपेक्षया जघन्येति मध्यमेत्यर्थः।
या पुनरन्त्या दृष्टिः सा तत्त्वप्रच्युतिविभ्रमक्षतिकरी,
प्रपञ्चतत्त्वविरोधिनी प्रपञ्चभ्रमत्वगोचरा या विवर्तदृ-
ष्टिस्तस्याः क्षतिकरी, अतः सोत्तमपुरुषाश्रयत्वात् सक-
लद्वैतभ्रमनिवर्तकतया साक्षान्मोक्षसाधनत्वान्निरतिश-
यानन्दात्ममात्रविषयत्वाच्च सर्वोत्तमा मतेत्यर्थः। अ-
थ वा तत्त्वस्यानारोपितरूपस्य केवलचिदानन्दस्य प्र-
च्युतिस्तिरस्कारो लेशतोऽपि ब्रह्मान्यवस्तुदर्शनरूपा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या विवर्तदृष्टिः सा चातत्त्वतोऽन्यथाभावत्वेन भ्रमरू-
पा तस्याः क्षतिं बाधं करोतीति सा तथा, तत्र ता-
सां मध्येऽन्त्या परां काष्ठां प्राप्ता एवंभूतापवाददृष्टि-
र्मता संमता वाक्यार्थावगतिं प्रत्यत्यन्तं संनिकृष्ट-
त्वादित्यर्थः । विवर्तदृष्टेरपि जीवैकत्वनानात्वविषय-
तया द्वैविध्यमाह । जीवैकत्वेति । बहवो जीवास्ते च-
क्रमेण मुमुक्षवोऽनाद्यनन्तश्च संसारमोक्षमार्ग इति वि-
वर्ते प्रथमा दृष्टिः । द्वितीया चाहमेक एव सर्वकार्यक-
रणेष्वन्तः साक्षी मदविद्याकल्पितं च मुक्तामुक्तविद्वद-
ज्ञानेकजीवेशादिभिन्नं जगदवभासते मद्बोधाच्च नि-
वर्तिष्यत इति । गतितोऽवगतितः । उक्तदृष्टीनां का-
लतोऽप्यधरोत्तरभावं दर्शयति । तत्र चेति । दृष्टीनां
मध्य इत्यर्थः । चोऽवधारणे । पूर्वपूर्वदृष्टिविलयादेवो-
र्ध्वोर्ध्वदृष्टिलब्धिर्भवेन्नान्यथेति तासां पूर्वापरीभावः ।
यद्यप्युत्तरोत्तरदृष्ट्यैव पूर्वपूर्वविलयो भवेत्, तथापि
परिणामादेर्युक्तितोऽसंभवबुद्धिदशायामेव विवर्तत्वादि-
दृष्टिर्भवतीति पूर्वपूर्वविलयादित्युक्तमिति ॥ ८३ ॥

परिणामबुद्धिमुपमृद्य पुमान्
विनिवर्तयत्यथ विवर्तमतिम् ॥
उपमृद्य तामपि पदार्थधिया
परिपूर्णदृष्टिमुपसर्पति सः ॥ ८४ ॥

पूर्वपूर्वविलयादित्युक्तमेवोपपादयति । परिणामेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कूटस्थस्य तत्त्वतोऽन्यथाभावस्यासंभवात् तां बुद्धिमुपमृद्य विलाप्य पुमान् श्रवणाधिकार्यथानन्तरं विवर्तमतिं विनिवर्त्तयति विशेषेण निश्चित्य वर्तयत्युत्पादयति । तां विवर्तमतिम्, पदार्थधिया शुद्धतत्त्वंपदार्थनिश्चयेन, परिपूर्णदृष्टिं निष्प्रपञ्चप्रत्यग्ब्रह्माभेददृष्टिम् ॥ ८४ ॥

अथशब्दसूचितमुमुक्षुरिमं
खलु दृष्टिभेदमुदितक्रमतः ॥
उपढौकते विगलिताखिलधी-
रवतिष्ठते निजमहिम्नि ततः ॥ ८५ ॥

ननु मुमुक्षोः श्रवणाधिकारिणो मोक्षसाधनसाक्षात्कार एव साधनीयः । किं परिणामादिदृष्ट्या, सत्यम् स एव ताभ्यां विना न संभवतीत्याशयेनाह । अथशब्देति । अथातो ब्रह्मजिज्ञासेति सूत्रस्याथशब्देन सूचितो यो विवेकवैराग्यादिमान्मुमुक्षुः श्रवणाधिकारी खल्विमं दृष्टिभेदं क्रमत उपढौकते प्राप्नोति यदा ततस्तदा विगलिताखिलधीः सन् निजमहिम्न्यवतिष्ठते स्वस्वरूपे स्थितो भवतीत्यर्थः । सूत्रकारस्याप्ययं क्रमिकदृष्टिभेदः संमत इति द्योतनायाथशब्देत्युक्तम् ॥८५॥

परिणाम इत्यथ विवर्त इति
बहवोऽहमेव च मुमुक्षुरिति ॥
परिपुष्कलं च परमं पदमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यवगत्य तिष्ठति महिम्नि निजे ॥ ८६ ॥

ननु मुमुक्षोः परिणामादिधियं विना शुद्धब्रह्मसाक्षात्कारः कथं न भवेत् न हि विरुद्धयोर्हेतुहेतुमद्भावोऽस्तीत्याशङ्क्याह । परिणाम इति । अथशब्दोक्तोऽधिकारी प्रथमं सृष्टिवाक्यादिसमन्वयालोचनेन ब्रह्मैव प्रपञ्चोपादानं मृदिव घटस्येत्यवगच्छति, उपादानतैवात्र परिणामगिरा विवक्षिता, अथ तदनन्तरमारम्भणाद्यधिकरणन्यायेन निषेधवाक्यतात्पर्यालोचनेन सृष्टिवाक्यार्थो विवर्त इत्यवगच्छति पूर्वबुद्धिं विना ब्रह्मणि प्रपञ्चस्य विवर्तत्वनिश्चयासंभवात्, यत्र यदवगतं तत्रैव तन्निषेधे तस्य मिथ्यात्वनिश्चयेन तस्य विवर्तत्वं निश्चीयेतेति ब्रह्मणि प्रपञ्चासञ्जकपरिणामधीरपेक्षितैव, न वा प्रपञ्चस्य विवर्तत्वधियमन्तरेण शुद्धात्मसाक्षात्कारो भवेत्, एवमविचारावस्थायां जीवबहुत्वज्ञानमपि दृष्टादृष्टद्वारेण मुमुक्षाद्वारा तत्रोपयुज्यत इत्याशयेनाह । बहव इति । मुमुक्षव इति विपरिणतानुषङ्गः, जीवा इत्यर्थः । इति चेति संबन्धः । इत्यनेन प्रकारेण परिपुष्कलं पूर्णं परमं शुद्धं पदं स्वस्वरूपमिति चावगत्य निजे महिम्नि तिष्ठति, अतः परिणामादिधियोऽप्यस्ति साक्षात्कार उपयोग इत्यर्थः ॥८६॥

परिणामधियो विवर्तधी-

रपवादात्मतया व्यवस्थिता ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलद्वयमर्दिनीं धियं
प्रति सारोपगिराऽभिधीयते ॥ ८७ ॥

मध्ये विवर्तविषया द्वयमिश्रदृष्टिरित्युक्तं विवर्तधियो मध्यस्थत्वमुपपादयति । परिणामधिय इति । ब्रह्मणः प्रपञ्चात्मत्वधियो विवर्तधीस्तत्र तदत्यन्ताभावमपि विषयीकुर्वाणापत्राद्तयावस्थिता भवतीति सा तदुत्तरा, एवं सकलद्वयमर्दिनीं शुद्धाद्वयात्मधियं प्रति सा विवर्तधीरारोपगिराभिधीयत इत्यारोपस्य निषेधप्राग्भावित्वात्सा तत्पूर्वापीति मध्यमेत्यर्थः । यद्यपि परिणामबुद्धिमुपमृद्येत्यनेनार्थादयमर्थः सिद्धस्तथापि स एवानेन विवृत इति द्रष्टव्यम् । अथ वा पूर्वश्लोके विवर्तधियो निष्प्रपञ्चात्मसाक्षात्कार उपयोगानुक्तेरितरानुवादेन स एवानेन दर्शित इति द्रष्टव्यम् ॥ ८७ ॥

उभयव्यतिमिश्ररूपतां
भजते तेन विवर्तधीरियम् ॥
प्रथमोत्तमयोर्द्वयोः पुन-
र्व्यतिमिश्रीभवनं न विद्यते ॥ ८८ ॥

अत एव विवर्तदृष्टेर्व्यामिश्रत्वं प्रागुक्तमुपपन्नमित्याह । उभयेति । परिणामोपशान्तिदृष्टिद्वयव्यतिमिश्ररूपतामित्यर्थः । प्रपञ्चसंसर्गविषयत्वेन तदभावतत्त्वविषयत्वेन च तस्या उभयव्यामिश्ररूपत्वमित्यर्थः । येनैवं तेनेत्यादौ योजनीयम् । प्रथमोत्तमयोराद्यन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योर्द्दष्ट्योरित्यर्थः । न विद्यत इति । एकैकमात्रस्वरूपविषयत्वादित्यर्थः ॥ ८८ ॥

कृपणधीः परिणाममुदीक्षते
क्षपितकल्मषधीस्तु विवर्तताम् ॥
स्थिरमतिः पुरुषः पुनरीक्षते
व्यपगतद्वितयं परमं पदम् ॥ ८९ ॥

एवं परिणामादिदृष्टीनामेकाधिकारिणि क्रमवर्त्तिनीनां मोक्षोपयोग उक्तः, संप्रति विरुद्धदृष्टीनामेकपुरुषाश्रयत्वासंभवादधममध्यमोत्तमाधिकारिभेदाश्रयत्वं ये वदन्ति तन्मतमनुवदति । कृपणधीरिति । प्रपञ्चादविरक्तबुद्धिः प्रपञ्चः सर्वोऽपि ब्रह्मणस्तात्त्विकः परिणामोऽहं च वस्तुतः कर्ता भोक्ता तमेवाराध्य तत्प्रसादाच्छ्रेयः प्राप्स्यामीत्युदीक्षत इत्यर्थः । क्षपितो निरस्तः कल्मषः पापं यस्या धियस्तद्युक्तस्तु संसाराद्विरक्तो ब्रह्मशास्त्रं शृण्वन्संसारस्यं विवर्ततामुदीक्षते श्रवणमननध्यानादिभिः परिपक्वैः स्थिरमतिर्निश्चलीकृतबुद्धिः पुरुषः पुनर्व्यपगतद्वितयं शुद्धं परमं पदम् ईक्षत इत्यर्थः । स्थितमतिरितिपाठे स्थितप्रज्ञो जीवन्मुक्त इत्यर्थः ॥ ८९ ॥

पुरुषभेदवशाद्द्विविधा भवेत
क्षपितकल्मषधीरपि मध्यमा ॥
जगदनेकमुमुक्षुकमीक्षते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुष एकतरो न तथेतरः ॥ १० ॥

जीवैकत्वानेकत्वधीरपि पुरुषभेदेनैव भवेदित्यपि तन्मतमित्याह । पुरुषभेदवशादिति । मध्यमोत्तमाधिकारवत्पुरुषभेदवशादित्यर्थः । क्षपितकल्मषस्य धीरित्यर्थः । तद्द्वैविध्यमाह । जगदिति । एकतरः पुरुषो जगदनेकमुमुक्षुकमीक्षते, इतरोऽपरो न तथा बहुमुमुक्षकं नेक्षत इत्यर्थः ॥ १० ॥

इति तु केचिदुशन्ति महाधिय-
स्तदपि सम्भवतीति न दुष्यति ॥
इह तु सूत्रकृतार्थगिरोदितः
पुरुष एकविधस्त्रिविधो न तु ॥ ११ ॥

एवं परपक्षमुपसंहरन् दूषयति । इतीति । महाधिय इत्युपहासः । अपिरवधारणे । नैव तत्सम्भवति यतो दुष्यतीति सम्बन्धः । अथ वा तदपि न सम्भवतीति हेतोर्दुष्यतीत्यन्वयः । भिन्नाश्रयाणां हि तासां दृष्टीनामुपकार्योपकारकभावायोगात्तदाश्रयणं व्यर्थं स्यादित्यर्थः । वस्तुतस्तु सूत्रकारासंमतमेव तन्मतमित्याह । इहेति । तुरवधारणे । एकविध एवैक एवेति सम्बन्धः । अथ वा उक्तमतमङ्गीकरोति । इतित्विति । संभाव्यन्त एवैतादृशाधिकारिणो मतिशुद्धितारतम्यदेशापन्ना इत्यर्थः । अथशब्दसूचित एकविध एवाधिकारी तस्य क्रमभाविन्य एता दृष्टय इत्यसमत्म-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमित्याह । इहेति ॥ ११ ॥

तिसृषु भूमिषु तस्य च तिष्ठतः
क्रमवशात् स्वयमुत्तमभूमिका ॥
समुपसर्पति तत्र च तिष्ठतः
समुपशाम्यति कारणकार्यधी. ॥ १२ ॥

कुत एतदित्यत आह । तिसृष्विति । परिणामादिदृष्टित्रयमुद्दिश्य क्रमेण प्रवृत्तस्य पूर्वदृष्टिद्वयपरिपाके पश्चात्स्वयमनायासेनोत्तमदृष्ट्यवस्था समुपसर्पति तं प्राप्नोति तत्र साक्षात्कारभूमौ तिष्ठतश्च कारणादिसमस्तभेदधीः शाम्यतीत्यर्थः। सूत्रकारो ह्येकमेवाधिकारिणमाश्रित्य शास्त्रमारभमाणस्तस्यैव दृष्टित्रयं विवक्षति सृष्ट्यादिवाक्यसमन्वयविचारेणारम्भणादित्यायेन प्रकृतैतावत्त्वं हि प्रतिषेधतीत्यादिना निषेधवाक्यतात्पर्यनिरूपणेनानन्दादयः प्रधानस्येति ब्रह्मवाक्यपरिमितिनिश्चयेन संपद्याविर्भावः स्वेन शब्दादिति मोक्षस्वरूपनिरूपणेन च दृष्टित्रयस्याप्येकस्मिन् संपादितत्वादन्यथा सृष्ट्यादिवाक्येन ब्रह्मण्यप्रसक्ते प्रपञ्चे कस्य विवर्तत्वं न्यायत उपपादयेन्निषेधवाक्येन किं वा प्रतिषेधयेद्विवर्तत्वधियं विना च कथं शुद्धात्मप्रतिपादकपदैर्यत्तां निरूपयेत्कथं वान्ते चिन्मात्रस्वरूपावस्थानं निरूपयितुं शक्नुयादिति भावः ॥ १२ ॥

श्रुतिवचांसि मुनिस्मरणानि च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वयविशारदगीरपि सर्वशः ॥
त्रयमपेक्ष्य दशात्रितयं विना
न हि घटामुपयान्ति कदा चन ॥ १३ ॥

एवं दृष्टित्रयस्यैकपुरुषाश्रयत्वसमर्थनमुपसंहरति । श्रुतिवचांसीति । सृष्टितत्प्रतिषेधादिविषयश्रुतिवचांसीत्यर्थः । मुनिस्मरणानि संप्रत्युपन्यस्तानि सूत्राणि, चकारः प्रागुक्तन्यायसमुच्चयार्थः । द्वयस्य श्रुतिसूत्रयोरर्थनिर्णये विशारदा ये भाष्यकारादय एतेषां गीरपि सर्वश इति प्राचुर्याभिप्रायमेकस्मिन्दृष्टित्रयमपेक्ष्य घटां घटनामुपयान्ति, एतदेव व्यतिरेकमुखेन द्रढयति । दशात्रितयमिति । तत्तद्दृष्ट्यवस्थादशात्रितयं विनोक्तश्रुत्यादयः कदापि न ह्युपपन्ना इत्यर्थः ॥ १३ ॥

अतोऽनपोह्यैव तु तत्त्वसंवि-
दुत्पादनेऽध्यक्षमितेः पुरस्तात् ॥
सामर्थ्यमक्षादिविरोधमस्य
निवारयामास समन्वयस्य ॥ १४ ॥

तस्माद्वेदान्तानामद्वये समन्वयेऽपि प्रत्यक्षादीनामविवेकिमहाजनसिद्धं तात्त्विकप्रामाण्यं सिध्यतीति न समन्वयस्य तेन वाध इत्याशयेन सूत्रकारो भोक्त्रादिसूत्रे स्याल्लोकवदिति लोकसिद्धदेहात्मभावतुल्यतां लोकग्रहणेन परिणामस्य दर्शयंस्तदङ्गीचकार न तु सिद्धान्ततयेति । तदुपपादनमुपसंहरति अत इति । यत एवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिणामवादस्याप्यत्रोपकारिताऽतो हेतोरित्यर्थः। स्व-
सिद्धान्तात्पुरस्तादध्यक्षादिमिते स्तत्त्वसंविदुत्पादने त-
त्त्वावेदनेसामर्थ्यमनपोह्यैवास्याद्वयब्रह्मसमन्वयस्याध्य-
क्षादिविरोधं निवारयामासेति संबन्धः ॥ ९४ ॥

इहाधुनारम्भणशब्दशक्तिं
संश्रित्य तत्त्वावगतिक्षमत्वम् ॥
अक्षादिमानस्य निराकरोति
समन्वयस्यापनयन् विरोधम् ॥ ९५ ॥

किं चोत्तराधिकरणे कार्यस्य कारणाद्वस्तुतो भेदा-
भावे वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिं हेतु-
तया वदन् विकारमृषात्वस्य प्रामाणिकत्वं दर्शयतीति
विवर्तवादमेव सूत्रकारः सिद्धान्ततया मेने नाक्षादिमा-
नस्य तत्त्वावेदकत्वमित्यभ्युपगमं परित्यजति स इत्या-
शयेनाह। इहेति। तदनन्यत्वमारम्भणशब्दादिभ्य इ-
त्युत्तरस्मिन्नधिकरण इत्यर्थः। अधुना शिष्यस्य प्रा-
गुक्तविशेषादिभिः परिणामस्या साधुत्वप्रतिसंधाने
आरम्भणशब्दशक्तिं वाचारम्भणं विकार इत्यादिवा-
क्यस्थारम्भणादिशब्दशक्तिम्, तेन हि वाक्येन विकारो
नामधेयमिति विकारस्य घटपटादेः शब्दमात्रत्वं दर्श-
यता घटपटादिविकारस्य सत्ता निवारिता, अत एव
मृत्तिकेत्येव सत्यमिति वाक्यशेषेणैवकारेण विकारा-
सत्यत्वमनूद्य कारणमात्रस्य सत्यत्वाशयेन मृत्स्तयेतु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रमत एतद्बलादध्यक्षादिमानस्य तत्त्वावगतिक्षमत्वम-द्वयसमन्वयस्य विरोधमपनयन्निराकरोतीति विवर्त एव प्रामाणिक इति भावः ॥ १५ ॥

अखण्डवाक्यार्थमनुव्रजन्ती
समन्वयोत्थापितबुद्धिवृत्तिः ॥
अक्षादिभिस्तत्त्वनिवेदने हि
सद्यः परिम्लायति निर्विशङ्कम् ॥ १६ ॥

ननु परिणामवादाश्रयणेऽपि समन्वयविरोधपरिहारः सेत्स्यतीत्युक्ते किं तदर्थं विवर्ताश्रयणेनेति चेत्सत्यं सप्रपञ्चाद्वयसमन्वयस्य पराभ्युपेतस्य तेनाक्षादिविरोधः परिह्रियेत न पुनरखण्डाद्वयसमन्वयस्य स्वसंमतस्येति समन्वयविशेषं श्रुत्यादिसंमतं दर्शयन्नाह । अखण्डेति । अनुव्रजन्ती विषयीकुर्वाणा परिम्लायति बाध्यते अतस्तद्बाधपरिहारार्थमक्षादिमानविषयस्यातात्त्विकमुत्तराधिकरणे दर्शयतीत्यर्थः ॥१६॥

अखण्डमेवाद्वयमात्मतत्त्वं
त्रयीशिरोवाक्यमनुप्रविष्टाः ॥
वदन्ति शब्दा इति शब्दशक्ति-
निरूपणे पूर्वमुदीरितं हि ॥ १७ ॥

ननूभयप्रामाण्यानुरोधेन सविशेषमेवाद्वयं किं नाङ्गीक्रियत इति चेन्न, मृषात्वेन श्रुत्युक्तविकारादिविशेषस्य श्रुतिसमन्वयगोचरत्वायोगात् , किं चैकमे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाद्द्वितीयम् अयागादग्नेरग्नित्वं नेह नानास्ति इत्या-
दि वचनैः प्रकृतैतावत्त्वं हि प्रतिषेधतीत्यादिसूत्रैस्त-
द्व्याख्यातृभाष्यकारादिवाक्यैश्चाखण्डतात्पर्यस्यैवश्रुतेरा
श्रयणीयत्वादित्याशयेन प्रथमाध्यायोक्तं स्मारयन्ना-
ह । अखण्डमिति । त्रयीशिरोवाक्यमनुप्रविष्टास्तत्त्व-
मादिवाक्यैकतां गताः सत्यज्ञानानन्दादिशब्दाः शब्द-
शक्तिनिरूपणे अखण्डमेव वदन्तीति पूर्वं प्रथमाध्या-
ये निरूपितमित्यर्थः ॥ १७ ॥

अतो विरोधस्य निराससिद्धेर
निरस्यतेऽक्षादिषु तत्त्वभागः ॥
संरक्ष्यतेऽसंव्यवहारशक्ति-
भागः पुनः सर्वमतोऽनवद्यम् ॥ १८ ॥

ततः किमित्याशङ्क्याह । अत इति । विरोधस्या-
खण्डार्थसमन्वयविरोधस्य अक्षादिप्रमाणेषु यस्तत्त्व-
भागः तत्त्वनिवेदनसामर्थ्यभागः, तर्हि तेषामप्रामाण्य-
मेव स्यादित्याशङ्क्याह । संरक्ष्यत इति । एवमपि तेषां
साव्यवहारिकप्रामाण्यमविरुद्धमित्यर्थः । तस्माद्वेदा-
न्तानामखण्डब्रह्मसमन्वये न प्रत्यक्षादिसिद्धभेदव्यव-
हारापलाप इत्यभिप्रेत्योपसंहरति । सर्वमिति ॥ १८ ॥

चितिवस्तुनः स्वमहिमस्फुरणे
स्वयमेव कारणमिति प्रगतम् ॥
प्रतिबध्य तच्चितिगताग्रहणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विपरीतबुद्धिमुपढौकयति ॥ ९९ ॥

किं च प्रत्यक्षादि न तत्त्वावेदकं दोषजन्यज्ञानकरणत्वात् शुक्तिरजतादिज्ञानकरणवत्, न चासिद्धिरविद्यादोषजन्यत्वात्प्रपञ्चज्ञानस्य. न चाविद्याया विश्वजनन्याः कथं दोषत्वमिति वाच्यम् , स्वप्रकाशब्रह्मस्फुरणप्रतिबन्धकतया शुक्तिस्फुरणप्रतिबन्धकदोषवद्दोषत्वोपपत्तेरित्याशयेनाह । चितिवस्तुन इति । चिद्वस्तुन इत्यर्थः, स्वमहिम्नोऽद्वयानन्दब्रह्मस्वभावस्य स्फुरणे स्वयमेवोपचारात् कारणमिति प्रगतं स्वप्रकाशत्वावेदकश्रुत्यादिसिद्धम् । अत्र स्वयं दासास्तपस्विन इतिवत्स्वयमेव कारणमित्यन्यव्यावृत्तिमात्रपरमिति वा द्रष्टव्यम् । ततश्च तस्य स्वत एव प्रकाशप्रसक्तावपि तदभानात्तत्प्रतिबन्धकमज्ञानमेव वक्तव्यमित्याह । प्रतिबद्धेऽति । चितिगताग्रहणं तु चितिवस्तुप्रतिबद्धय यथावत्स्फुरणमाच्छाद्य विपरीतबुद्धिं द्वैतप्रपञ्चबुद्धिमुपढौकयति प्रापयति, अतोऽधिष्ठानतत्त्वप्रकाश प्रतिबद्धय तद्विपरीतभ्रमजनकत्वादविद्यादोष एवातस्तज्जन्यज्ञानकरणत्वमक्षादेर्नासिद्धमिति भावः ॥ ९९ ॥

व्यवहारनिर्वहणशक्तिमसौ
न चिदग्रहोऽस्य विनिवारयति ॥
परमार्थवेदनविधिक्षमता-
मवखण्डयन्नपि मनःप्रभृतेः ॥ १०० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं तर्हि तस्य व्यावहारिकप्रामाण्यमपि न स्या-
दित्याशङ्क्याविद्यया व्यवहारयोग्यप्रपञ्चजननात्तद्विष-
याक्षादेर्न तद्विहन्यत इत्याशयेनाह। व्यवहारेति। अ-
स्य मनःप्रभृतेरिति संबन्धः। तस्य तर्हि तद्वत्तत्त्ववे-
दनमपि मा निवारयतु तत्राह। परमार्थेति। विधिरु-
त्पादनं तत्क्षमता मित्यर्थः। दोषजन्यस्य तदयोगादिति
भावः ॥ १०० ॥

चितिवस्तुबुद्धिजनकस्य पुन-
र्वचसो न खण्डयति शक्तिमसौ ॥
स्वनिबन्धनस्फुरणमेव चितेः
प्रतिबध्य तिष्ठति न वाचनिकम् ॥ १०१ ॥

नन्वविद्या चेद्ब्रह्मप्रकाशप्रतिबन्धिका तर्हि तस्यां स-
त्यां तत्त्वमादिवचनाद्ब्रह्मसाक्षात्कारो न भवेदिति चे-
न्न दूरस्थत्वादिदोषे चक्षुरादिना तर्वादितत्त्वज्ञानप्रति-
बन्धके सत्यप्याप्तवाक्यात्तत्त्वज्ञानोदयदर्शनेनात्मस्वरू-
पप्रयुक्तात्मतत्त्वज्ञानस्य तया प्रतिबन्धेऽपि तद्विषयशा-
ब्दज्ञाने तस्या अप्रतिबन्धकत्वादित्याशयेनाह। चिति
वस्त्विति। न खण्डयति प्रतिबध्नाति, शक्तिम् आत्म-
साक्षात्कारजनसामर्थ्यम्, असौ चिद्ग्रहः। किं त-
र्हि स प्रतिबध्नाति तत्राह। स्वनिबन्धनेति। चैतन्य-
स्य स्वतःप्राप्तप्रकाशमेव निगमयति। न वाचनिकम्
वेदान्तवाक्यजन्यसाक्षात्कारमित्यर्थः ॥ १०१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षादेरेव दोषस्ततोऽयं
वेदान्तानां नैव दोषानुबन्धः ॥
सत्यं वस्तु च्छादयन्नद्वितीयं
द्वैतं यस्मादानयत्येष दोषः ॥ १०२ ॥

नन्वेवमप्यविद्याया दोषत्वे तत्त्वमादिवाक्यजन्यब्रह्मसाक्षात्कारो भ्रमः स्याद्दोषजन्यत्वात् संमतवदित्याशङ्क्य तद्दोषत्वाधिष्ठानजन्यत्वस्य हेतुत्वे शुक्त्यादिगतरजतादिसादृश्यप्रत्यक्षप्रमायां व्यभिचारः, न च दोषत्वप्रयुक्ततज्जन्यताश्रयत्वं हेतुरसिद्धेरित्याशयेनाह । प्रत्यक्षादेरिति । अयं चिदग्रहः, तर्हि प्रपञ्चज्ञानस्य कथं दोषजन्यत्वमित्याशङ्क्य तदधिष्ठानात्मतत्त्वाच्छादकतया काचादेरिव दोषतया प्रपञ्चज्ञानस्य दोषजन्यत्वम् । प्रपञ्चज्ञानस्य दोषत्वप्रयुक्ततज्जन्यताश्रयत्वाद्रजतज्ञानवद् भ्रान्तित्वमित्याशयेनाह । सत्यमिति । अथ वा ननु करणदोषानुबन्धश्चक्षुरादिष्विव न वेदान्तेष्वपि कुत इत्यत आह । प्रत्यक्षादेरिति । प्रतिज्ञातेऽर्थे हेतुमाह । सत्यमिति । यस्मात्सत्यमद्वितीयमाच्छादयन्नसत्यं द्वैतमानयत्येष दोषश्चक्षुरादिष्वेव दृश्यते ततोऽयं दोषानुबन्धो वेदान्तानां नैवेति संबन्धः, कार्यान्नेयधर्माणां यथाकार्यमुन्नयनादिति, प्रत्यक्संविदवच्छिन्नमज्ञानं प्रमाणाकारेण विवर्तते, तत्राज्ञानप्राधान्येन चक्षुरादिविवर्तः संवित्प्राधान्येन वेदविवर्त इति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः ॥ १०२ ॥

किं च प्रतीचि सकलोपनिषत् प्रवृत्ता
मानान्तरं सकलमेव तु तत्पराचि ॥
प्रत्यक्पराग्विषयगोचरयोश्च बुद्धयोः
स्पर्द्धा न संभवति मेयविभागसिद्धेः ॥ १०३ ॥

एवं प्रत्यक्षादेर्दोषजन्यज्ञानकरणत्वेन नाद्वैतब्रह्मप्रतिपादकवेदान्तबाधकत्वं संभवतीत्युक्तम्, इदानीं तस्यानात्ममात्रविषयत्वाद्वेदान्तानां चात्ममात्रे प्रवृत्तेर्भिन्नविषयतयापि न प्रत्यक्षादिबाध्यतेत्याशयेनाह । किं चेति । तत्पराचि अनात्मनि । ततः किं तत्राह । प्रत्यगिति । स्पर्द्धा विरोधः । तत्र हेतुर्मेयेति ॥ १०३ ॥

अभिन्न एवैष पटः समीक्ष्यते
न भेदगन्धोऽपि पटे समीक्ष्यते ॥
पटेऽपि भेदो यदि कल्प्यते तदा
पटो विदीर्येत कुतस्तदा पटः ॥ १०४ ॥

किं च प्रत्यक्षादिप्रमाणं किं निरपेक्षसन्मात्रपटादिविषयं तदुक्तसमन्वयविरोधीत्युच्यते किं वा घटादयं भिन्न इति तत्र ततो भेदविषयमपि, आद्य आह । अभिन्न एवेति । अयं पट इत्याद्यनुभवेन स्वतो भेदाभावोपलक्षितस्वरूप एव सोऽनुभूयते न त्वल्पीयानभेदोऽपि पटे दृश्यते, अयं पट इत्यनुभवे तदुल्लेखाभावादित्यर्थः । द्वितीयमुत्थापयति । पटेऽपीति । पटस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपेऽपि घटादिप्रतियोगिको भेदो गृह्यते चेत् स किं पटादिस्वरूपमेव तदन्यो वा, आद्य आह। पटो विदीर्येतेति। तदा हि घटादिसापेक्षतया प्रतीयमानस्य तस्य तन्निरपेक्षपटादिस्वरूपत्वं नोपपद्येत सापेक्षनिरपेक्षयोरभेदायोगात्, ततः पटाद्यपेक्षयैव तस्य भेदात्मत्वं कल्प्येत तदा विदारणात्मा भेदः पट एवेति पटः स्वस्मादेव विदीर्येत, अन्यथा तस्य भेदात्मत्वायोगात्, एवं चकुतस्तदा पटः सिध्येत्, विदारणस्याभावात्मतया भावस्वरूपविरोधित्वादिति भावः ॥ १०४ ॥

घटात् पटो भिन्न इतीष्यते यदि
स्फुटं प्रसज्येत विकल्पिता भिदा ॥
न सत्यमापेक्षिकमीक्षितं क्व चित्
तथा च यत्नेन निरूपयिष्यते ॥ १०५ ॥

घटात् पटो भिन्न इति प्रतीयमाना भेदस्ततोऽन्य इति पक्षान्तरमुत्थाप्य प्रतिक्षिपति। घटात्पट इति। यदि भिदा घटादिसापेक्षा पट इष्यते सा तर्हि स्फुटं विकल्पिता आरोपिता प्रसज्येत। कुत इति चेत्तत्राह। न सत्यमिति। आपेक्षिकं सापेक्षं वस्तु क्व चिदपि सत्यं नेक्षितम् अपि तु मिथ्यैव रज्जुसर्पादेः सापेक्षस्य नियमेन कल्पितत्वदर्शनाद्यत्सत्यं न तत्सापेक्षं यथात्मेति व्यतिरेकपरं वास्तु यथा चैतत्तथा यत्नेनैव तृतीये निरूपयिष्यते ततः स्वरूपातिरिक्तोऽपि सापेक्षो भेदोऽली-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क एव स्यादिति भावः ॥ १०५ ॥

न भेदबुद्धिर्घटते प्रमाणतो
विना च धर्मिप्रतियोगिसंविदा ॥
न भेदबुद्धिं विरहय्य कल्पते
तथैव धर्मिप्रतियोगिधीरपि ॥ १०६ ॥

किं च परस्पराश्रयप्रसङ्गाद् भेदबुद्धिरपि प्रामाणिकी न सिद्धयतीत्याह । न भेदबुद्धिरिति । धर्मी भेदस्याश्रयः प्रतियोगी तदवधिः धर्मिप्रतियोगिसंविदा विना प्रमाणतो भेदबुद्धिर्न घटते न चैव घटत इत्यर्थः । ततः किं तत्राह । न भेदबुद्धिमिति । तथैव भेदबुद्धिं विरहय्य धर्मिप्रतियोगिधीरपि न कल्पते न युज्यते परस्परापेक्षत्वान्न भेदबुद्धेः प्रमाणतैकस्या अपि बुद्धेरन्यतो असिद्धेः, न तावदिदमस्माद्भिन्नमित्यवधित्वविशिष्टाद्भेदज्ञानमवधित्वज्ञानं विना संभवति तज्ज्ञानं च भेदज्ञानं विना न भवति भेदावधित्वस्य भेदनिरूप्यत्वादन्यथा धर्मिणोऽपि स्वस्माद्भेदग्रहप्रसङ्गाच्च, अस्ति च तन्निष्ठभेदेऽपि तत्प्रतियोगिकत्वमेकस्यैव भेदस्य विभागादिवद्धर्मिप्रतियोग्याश्रयत्वसंभवे तदुभयवृत्तिभेदे प्रमाणाभावात् । न चैवं घटे घटभेदज्ञानं भ्रमो न स्यादिति वाच्यम् । तद्धर्मित्वविशिष्टे तत्प्रतियोगित्वाभावेन तत्र तद्गोचरभेदज्ञानस्य विभागादिज्ञानवद् भ्रान्तित्वसंभवात् । धर्मिप्रतियोगित्वज्ञानात्पूर्वं भेदज्ञानानङ्गीकारे त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योरभेदभ्रम एव स्यात्, दोषस्यापि भेदधीविघटनद्वारे-
णैवाभेदभ्रमहेतुत्वात्तस्य साक्षाद्भ्रमहेतुत्वे प्रमाणाभा-
वात्, तस्माद्धर्मिप्रतियोग्यादिज्ञानस्य भेदज्ञानस्य च प-
रस्परापेक्षत्वान्न प्रामाणिकी भेदधीरिति भावः ॥ १०६ ॥

परस्पराभावधिया न भेदधी-
र्विनोपपन्ना न तया विनेतरा ॥
इतीदमन्योन्यसमाश्रयं यतो
मतिद्वयं तेन तदस्तु कल्पितम् ॥ १०७ ॥

नन्वस्तु वैलक्षण्यं भेदस्तच्च तयोर्विरुद्धो धर्मः, न च
तदाश्रयभेदज्ञानं विना तद्धर्मयोर्विरोधज्ञानं न स्यादि-
ति पुनरप्यन्योन्याश्रयतेति वाच्यम्, धर्मिणोः परस्प-
राभावज्ञानादेव धर्मयोर्विरोधज्ञानोपपत्तेः, न चैवं प-
रस्पराभाव एव भेदोऽस्त्विति वाच्यम्, इदमस्माद्भिन्न-
मिति भेदज्ञानादिदमिदं न भवतीति ज्ञानस्य विलक्ष-
णत्वेन तद्विषयपरस्पराभावस्यापि ततो विलक्षणत्वा-
दिति नोक्ताऽन्योन्याश्रय इति चेत्तत्राह । परस्पराभा-
वधियेति । तया भेदधिया, इतरा परस्पराभावधीः, इ-
दमिदमपि मतिद्वयम् ।। फलितमाह । तेनेति । न ता-
वत्परस्पराभावो भेदाद्विलक्षणो भवति । उक्तप्रतीतिवि-
षययोर्वैलक्षण्यस्य परैरप्यनभ्युपेतत्वात्, अस्तु वा स या-
दृशस्तादृशस्तथापि त्वदुक्तभेदधियं विना सदुर्ग्रह एव
न हि वैलक्षण्यज्ञानादृते इदमिदं न भवतीति ज्ञानं भ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वति, अन्यथा शुक्तिरजतादेरपि तद्ग्रहप्रसङ्गेन क्षा-
प्यभेदभ्रमो न स्याद् दोषस्यापि वैलक्षण्यधीविघटनेने-
व तद्धेतुत्वात्, तस्मादेतयोरपि परस्परसापेक्षत्वाच
प्रमाणत्वमिति भेदज्ञानमात्रं भ्रान्तिरिति भावः ॥१०७॥

असन्निवृत्तिर्न च सन्निवृत्ति-
र्न चोपपन्ना सदसन्निवृत्तिः ॥
जडप्रमाणस्य फलं ततोऽपि
न तेन वेदान्तजबुद्धिबाधः ॥ १०८ ॥

किं चानात्मप्रमाणस्य फलानिरूपणादपि न तत्प्रा-
माण्यं युज्यते न हि फलरूपमतिशयं विना कस्य चि-
त्प्रमाणता संभवति तत्र न तावत्संशयादिनिवृत्तिः प्र-
माणफलमसतः सतो वा सदसदात्मनो वा संशयादे-
र्निवृत्त्यसंभवादित्याशयेनाह। असन्निवृत्तिरिति। अस-
तो निवृत्तिरित्यर्थः। एवमुत्तरत्रापि, असतः खपुष्पा-
देः कस्यापि निवृत्त्यदर्शनादसंभवाच्च। नापि सद्वस्तु ज्ञा-
नान्निवर्तते आत्मनि तददर्शनात्, निवृत्त्यनन्तरम-
पि सत्स्वरूपस्यासत्स्वरूपत्वायोगे निवर्तकानर्थक्यप्रस-
ङ्गाच्च। नापि सदसदात्मकं किञ्चित्संभवति तदभ्युपग-
मेऽपि पक्षद्वयोक्तदूषणानपायात्। न वा परपक्षे तदु-
भयविलक्षणं किं चिदस्ति यत्प्रमाणं निवर्तयेत्। तस्मा-
दक्षादिप्रमाणात्प्रागवस्थातो विषये निवृत्तिरूपातिश-
यासंभवेन प्रामाण्यायोगान्न तेन वेदान्तबाध इति फ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लितमाह । ततोऽपीति ॥ १०८ ॥

असत्प्रसूतिर्न च सत्प्रसूति-
र्न चोपपन्ना सदसत्प्रसूतिः ॥
जड़प्रमाणस्य फलं ततोऽपि
न तेन वेदान्तजबुद्धिबाधः ॥ १०९ ॥

अक्षादिप्रमाणात् स्वविषये संशयादिनिवृत्तिः फलं भवति किं वा प्राकट्यादिरूपातिशयोत्पत्तिरिति विकल्प्याद्यं निरस्य द्वितीयं पूर्ववद्विकल्प्य निरस्यति । असत्प्रसूतिरित्यादिना । असतः शशशृङ्गादेः सत आत्मनः प्रसूत्यदर्शनात् असंभवाच्च, नापि तदुभयात्मकं किंचित्संभवति यस्य प्रसूतिर्जड़प्रमाणस्य फलं भवेत्ततोऽप्यक्षादेः प्रामाण्यासंभवेन न वेदान्तबाधकतेति भावः ॥ १०९ ॥

जड़ार्थसंविन्न च कुर्वतः फलं
तदा हि कुर्वत्त्वमपीदृशं भवेत ॥
अकुर्वतस्तत्फलमित्युदीरयन्
विहस्यते दुर्मतिरर्भकैरपि ॥ ११० ॥

किंच तत्प्राकट्यादि जड़रूपं स्वप्रकाशं वाऽद्येऽपि तदनुकूलव्यापारवतश्चक्षुरादेस्तत्फलमुतोदासीनस्य, नाद्यः, जड़ेन प्रमाणफलेन साक्षाद्विषयावभासायोगेन तद्वैयर्थ्याज्जड़त्वाविशेषेण विषयस्यापि फलावभासकत्वप्रसङ्गात् एवं तत्कुर्वतो व्यापारवतश्चक्षुरादेर्न फलं व्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पारस्यापि कुर्वत्कार्यत्वप्रसङ्गेनानवस्थापातात्, नापि द्वितीयः, निर्व्यापारात्कारणात्फलोत्पत्तेः क्वाप्यदर्शने-नात्र तामुदीरयन्मन्दमतिर्यतोऽर्भकैरपि विहस्यते, एतच्च कुर्वत्त्वादिविकल्पदूषणं प्राकट्यादि स्वप्रकाशमिति पक्षेऽपि समानमित्याशयेनाह । जडार्थसंविदिति । जडेति संविद्विशेषणम् ॥ ११० ॥

सती न संवित् क्रियते हि सत्त्वा-
न्न चासती तद्वदसत्त्वहेतोः ॥
न चोपपन्नं सदसत्त्वमस्या-
स्ततो न कार्यत्वमुपैति संवित् ॥ १११ ॥

ननु प्रमाणफलस्य स्वप्रकाशत्वं भवतोऽपि संमतमिति कथं तस्य प्रमाणादुत्पत्तिर्निराक्रियत इति चेन्न, अनिर्वचनीयधीवृत्तेरेव चक्षुरादेरुत्पत्तेः प्रमाणफलं तु स्वप्रकाशचैतन्यं तन्नित्यसिद्धमपि धीवृत्त्यवच्छिन्नतया व्यवह्रियते न तु वस्तुतस्तदुत्पत्तिरस्तीत्याशयेन पूर्ववद् दूषयति । सतीति । संवित्स्वप्रकाशरूपा, अस्याः संविदः, फलितमाह । तत इति ॥ १११ ॥

न शक्यमुत्पादयितुमिति प्रशस्यते
तदा हि शक्तेरपि जन्यतापतेत् ॥
अशक्यमुत्पादयितुमितीष्यते यदि
द्रुतं नभश्चूर्णय मुद्गरादिना ॥ ११२ ॥

किं च यत्किंचित्प्रमाणफलमस्तु तत्किमुत्पादयितु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्यं सत्प्रमाणेनोत्पाद्यतेऽशक्यं वा, नोभयथापि संभवतीत्याह। न शक्यमिति। शक्तिविशिष्टमित्यर्थः। शक्तेरपीति। तस्या अप्युत्पत्तिप्रसङ्गेन शक्तिविशिष्टायाः शक्तेरुत्पाद्यता प्रसज्येत तथा चानवस्था। द्वितीयं प्रत्याह। अशक्यमिति। यत्केनापि कर्तुं न शक्यते तत्कथमुत्पादनीयं न हि नभसो मुद्गरादिनाऽतिकुशलोऽपि चूर्णनं कुर्यादित्यर्थः ॥ ११२ ॥

जड़प्रमाणस्य फलानिरूपणा-
ज्जड़स्य तत्त्वं न निरूपणक्षमम् ॥
अतो न मानान्तरमर्थतोऽपि न-
स्त्रयीशिरोवस्तु निराकरिष्यति ॥ ११३ ॥

तस्माज्जड़प्रमाणफलानिरूपणान्न तत्प्रामाण्यं संभवति ततो जड़स्य तदधीनमेकत्वमनेकत्वं वा तत्त्वं न ततः सिध्येत्ततश्चाक्षादिना घटादिस्वरूपासिद्धावद्वितीयात्मसमन्वितवेदान्तानामर्थाद्बाध इत्यनुपपन्नमित्याशयेनोपसंहरति। जड़प्रमाणस्येति ॥ ११३ ॥

आत्मन्येव समस्तमस्तु यदि वा मानान्तरं तेन च
स्पष्टं वेदशिरोविरुद्धमिति च स्वीकुर्महे कामतः ॥
एवं सत्यपि पूर्वभावि सकलं मानान्तरं बाधते
पश्चात्कस्य चिदेव वेदशिरसो जाता परब्रह्मधीः ॥ ११४ ॥

एवमात्मनोऽन्यस्य भावरूपाज्ञानविषयत्वासंभवेन तत्र प्रवृत्ताध्यक्षादीनां प्रामाण्यं न संभवत्यनधिगतार्थ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वाभावात्, घटादिप्रपञ्चस्य स्वरूपेण कल्पितत्वात्फलानिरूपणाच्चेत्युक्तम्, ननु ज्ञानाभावरूपाज्ञाततायाः प्रामाणप्रवृत्तिनिमित्तस्य सर्वत्र सुलभत्वाद्वत्त्वक्षादेरपि तात्त्विकं प्रामाण्यम्, न हि शुक्तिरजतादेरिव घटादेरपि मिथ्यात्वं केन चिदनुभूयते भावरूपाज्ञानमपि घटपटाद्यवच्छिन्नमात्मानमावृणोतीति ततोऽप्यक्षादेर्घटादौ प्रामाण्यमविरुद्धमेवं चावच्छेद्यावच्छेदकयोरात्मप्रपञ्चयोर्विभिन्नयोः प्रामाणिकत्वान्नोक्तसमन्वयसिद्धिरिति चेत्तत्राह। आत्मन्येवेति। प्रपञ्चात्मन्येवेत्यर्थः। यदि वेत्यादौ योजनीयम्। मानान्तरमध्यक्षादिमानं वेदशिरो निष्प्रपञ्चात्मग्राहकं वेदान्तवाक्यं कामतस्त्वदिच्छातोऽनेन ज्ञानाभावरूपाज्ञानस्य कल्पितेऽपि व्यवहारसंभवेन न तदर्थस्य तात्त्विकत्वे निमित्तमिति तदङ्गीकारस्त्वदिच्छयेति सूचितम्। एवं तर्हि कथं त्वदभिमतब्रह्मसिद्धिस्तत्राह। एवं सत्यपीति। अध्यक्षादेर्वेदान्तस्य च विरोधे सत्यपीत्यर्थः। पूर्वभावि संगतिग्रहादिसापेक्षवेदान्तात्पूर्वभावि मानान्तरं पश्चादध्यक्षादिप्रवृत्त्यनन्तरं कस्य चिद्विशिष्टाधिकारिणो जातपरब्रह्मधीरेवेति संबन्धः। यद्यपि प्रत्यक्षादीनामपि प्रामाण्यमभ्युपगतं तथाप्यनपेक्षतया वेदान्तात्प्रागेव तैरर्थस्य बोधितत्वात् पश्चाज्जाता परब्रह्मधीरेव तेषां बाधिका, एकत्र विरुद्धयोर्युगपत् प्रामाण्यायोगादित्यर्थः ॥११॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वोत्पन्नमृगाम्बुविभ्रमधियो बाधं विना नोत्तरं
विज्ञानं समुदेतुमूषरभुवो याथात्म्यमावेदयत् ॥
शक्नोतीति यथा मृगाम्बुधिषणामुन्मृद्नदुत्पद्यते
तद्वद्वेदशिरोवचोजनितधीर्भेदभ्रमं ब्रह्मणि ॥ ११५ ॥

नन्वेवं सत्यसंजातविरोधितया पूर्वस्यैव प्रबल-त्वाद् विपरीतमेव किं न स्यादित्याशङ्क्य लोके पश्चाद्भाविन एव विरुद्धविषयज्ञानस्य बाधकत्वदर्शनान्नैव-मित्याह । पूर्वोत्पन्नेति । मृगाम्बुविभ्रमधियो मरुम-रीचिकासु कल्पितोदकधिय इत्यर्थः । तत्र हि पूर्वो-त्पन्नतोयबुद्धिबाधमन्तरेणेयमूषरभूरिति तद्याथात्म्य-मावेदयद् विज्ञानं समुदेतुं न शक्नोति, न हि पूर्वविप-रीतज्ञानेऽबाधिते तद्विपरीतज्ञानं संभवतीति यथा मृ-गाम्बुधिषणामुन्मृद्नन्निराकुर्वत्तदुत्पद्यते तद्वद् वेदान्त-वाक्यजनितापि ब्रह्मधीर्भेदभ्रमं निराकुर्वत्येवोत्पद्यते न्यायस्य तौल्यादित्यर्थः ॥ ११५ ॥

पौर्वापर्ये पूर्वदौर्बल्यमाह
षष्ठेऽध्यायेऽत्रास्थितो जैमिनिर्यत् ॥
वक्ष्यामस्तत्सर्वमानीय तुभ्यं
बुद्धिं स्वीयां सम्यगत्रावधत्स्व ॥ ११६ ॥

जैमिनेरपि वेदार्थविचारदक्षस्येदं संमतमित्याह । पौ-र्वापर्य इति । यत्पूर्वदौर्बल्यमिति संबन्धः ॥ ११६ ॥
उद्गातृप्रतिहर्तृकर्तृकतया जातौ वियोगौ क्रमाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्मिन् कर्मविधिप्रयोगसमये तत्रैष नः संशयः ॥
किं सर्वद्रविणव्ययो भवतु वा संस्थापनं दक्षिणा-
हीनस्येति तदा परं बलवदित्यूचे मुनिर्जैमिनिः ॥१:८॥

तत्सर्वं वक्ष्यामि इत्युक्तमेव साङ्गन्यायप्रदर्शनेन वदति। उद्गात्रिति। उद्गातृप्रतिहर्तारौ ज्योतिष्टोमे सामगौ ऋत्विजौ प्रसिद्धौ तत्कर्तृकृतयेत्यर्थः, ज्योतिष्टोमे ह्यध्वर्य्वादीनामृत्विजामन्योऽन्यं संबध्य बहिः पवमानस्तोत्रार्थं बहिर्निर्गच्छतां यद्युद्गातृकर्तृकः प्रतिहर्तृकर्तृको वा वियोगो भवेत्तत्र तद्वियोगनिमित्तं विरुद्धप्रायश्चित्तमदक्षिणस्य प्रस्तुतप्रयोगस्य समाप्तिः सर्वस्वदक्षिणस्य च श्रूयमाणमेकैकवियोग उपपन्नमेव, युगपदुभयवियोगेऽपि निमित्तयोस्तौल्यात्तन्निमित्तं प्रायश्चित्तमपि यजमानेच्छया विकल्पेनानुष्ठेयम्, यत्र पुनरवं क्रमात्तयोर्वियोगः सोऽनेन विषयो दर्शितः। विचाराङ्गसंशयमाह। तत्रैष इति। तमेवाभिनीय दर्शयति। किं सर्व इति। अत्र श्लोकोक्तयथासंख्यक्रमो न विवक्षितः यदुनरुद्गाता विच्छिन्द्यादद्क्षिणो यज्ञः सन्तिष्ठते, यदि प्रतिहर्ता सर्वस्वं दद्यादिति श्रुतिपाठविरोधादिति द्रष्टव्यम्। प्रतिहर्तृविच्छेदनिमित्तं सर्वस्वदक्षिणं प्रस्तुतप्रयोगसमापनं वोचितं किं वोद्गातृविच्छेदनिमित्तमदक्षिणं प्रयोगस्य संस्थापनं समापनमित्येष नः संशय इति संबन्धः। असंजातविरोधितया पूर्वनिमित्तं बल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वदिति पूर्वपक्षं सिद्धवत्कृत्य सिद्धान्तमाह । तदेति । परम् उत्तरं निमित्तम् ऊचे पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति सूत्रेणोक्तवानित्यर्थः । अन्यथा प्रथमसंजातविरोधेनोत्तरस्योदयासंभवात्तत्तद्बाधमानमेवोदेति पूर्वजन्मसमयेतूत्तरस्याजातत्वान्न तत्तद्बाधमानमुदितमिति विशेष इति भावः । तदुक्तम् । पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादान्न त्वबाधेन संभव इति ॥ ११७ ॥

यद्वत् प्राकृतवैकृतावतितरामन्योन्यसंस्पर्धिनौ
धर्मौ बाध्यनिवर्तकावभिमतौ बुद्धौ क्रमेणान्वयात् ॥
पाठव्यत्ययसंभवेऽपि च तयोर्बुद्धिक्रमो विद्यते
पूर्वा प्राकृतधर्मधीरितरधीरन्त्या तथैवोस्थितेः ॥११८॥

तत्र पौर्वापर्ये पूर्वदौर्बल्यमिति भागं व्याख्याय प्रकृतिवदितिसूत्रभागसूचितं वैदिकं दृष्टान्तं विवृणोति । यद्वदिति । प्राकृतवैकृतौ प्राकृतं सर्वासामिष्टीनां प्रकृतिभूतयोः स्वप्रकरण एव सर्वाङ्गसंपूर्णयोर्दर्शपूर्णमासयोरुपदिष्टं कुशमयं बर्हिः, वैकृतं विकृतौ विकलाङ्गतया विहिते श्येने उपदिष्टं शरमयं बर्हिः, तौ धर्मौ वेद्यास्तरणार्थत्वे निरपेक्षतयाऽन्योन्यमतितरां संस्पर्धिनौ भूत्वा बाध्यनिवर्त्तकावभिमतौ । अत्राप्युत्तरेण पूर्वो बाध्यतयाऽभिमत इत्यर्थः । कुतो बुद्धौ क्रमेणान्वयाद्व बोधकप्रमाणक्रमेणादौ कुशमयबर्हिषः पश्चा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छरमयबर्हिषां वैकृतभावनयाऽन्वयात्। ननु विकृता-वुपदिष्टस्य शरमयबर्हिषः सन्निधानात् प्रथमान्वयसं-भवे कथं प्राकृतस्यासंनिहितस्य प्रथममन्वय इत्यत आह। पाठेति। पाठव्यत्ययः सन्निधावसन्निधौ च पाठस्तत्संभवेऽपीत्यर्थः, यतस्तयोः कुशमयशरमययोर-तिदेशोपदेशवाक्यप्राप्तिक्रयोर्बुद्धिक्रम उक्तरीत्यान्वय-बुद्धिक्रमः। तमेव क्रमं सहेतुमाह। पूर्वेति। प्रकृति-वद्विकृतिः कार्येति प्रकृतिवच्छब्दस्य वैकृतविधिशेषत्वा-दित्यर्थः। तथैवोत्थितेः प्राकृतस्य पूर्वमाकाङ्क्षितत्वा-द्वैकृतस्यातथात्वादित्यर्थः। यद्यपि वैकृतभावनासंनिधौ शरा उपदिष्टा न कुशास्तथापि प्रकृतावुपदिष्टकुशानां प्रथमं तत्र वेद्यास्तरणमुपकारः क्लृप्तः वैकृतभावना च क्लृप्तत्वात् प्रथमं तमेवोपकारमपेक्षत इति तद्द्वारा कु-शानां पूर्वतयान्वयः प्रसज्यते न तु सन्निहितानामपि शराणां तेषां तदुपकारस्य प्रागक्लृप्तत्वादित्याकाङ्क्षानु-रोधेनातिदेशेन कुशानामेव प्रथममन्वय इति प्रथम-भावित्वान्निरवकाशचरमभाविशरान्वयप्रतीत्या कुशा बाध्यन्ते तद्वत्तद्वच्चरमभाविनिमित्तेनोद्गात्रादिविच्छेदे-न प्रथमभाविप्रतिहर्त्रादिविच्छेदो बाध्यत इत्यर्थः ॥३३॥

सापेक्षाबुद्धिलौ यदा तु भवतः पूर्वापरप्रत्ययौ
पूर्वस्तत्र निवर्तको भवति तत्रान्त्यो निवर्त्यो यथा।
वेदापक्रमजा मतिर्बलवती नर्गादिसंहारजा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदोपक्रममुख्यभाग् भवति तत्रार्गादिवाणी गुणात् ॥११

ननूच्चैर्ऋचा क्रियत उपांशु यजुषेत्यादौ विध्यु-द्देशगतमपि पादवद्धमन्त्रादिवाचकमृगादिपदं त्रयो वेदा अजायन्तेत्यर्थवादोपक्रमगतमन्त्रब्राह्मणसमुदा-यवाची वेदशब्दः स्वार्थात् प्रच्याव्य ऋगादिवेदपरतया स्थापयतीति वेदो वा प्रायदर्शनादित्यत्र निर्णीतम्, तत्कथं चरमेणात्र पूर्वबाध इत्याशङ्क्य ततो विशेष-माह। सापेक्षाविति। विरुद्धयोर्बुद्ध्योः परस्परनैरपेक्ष्ये परेण पूर्वबाधः, यदा तु पूर्वापरप्रत्ययौ सापेक्षावुदितौ भवतस्तत्र तदा तयोः प्रत्यययोर्मध्ये पूर्वप्रत्ययो नि-वर्तकोऽन्त्यस्तु निवर्त्य इति निर्णयः, परमपि यत्पूर्वसा-पेक्षं न तत्पूर्वस्य बाधकमुपजीव्यत्वेन पूर्वस्य बलव-त्त्वात् तद्बाधे स्वस्याप्यभावादिति पूर्वेणैव तत्र परस्य बाध इत्यर्थः। यथेत्यादिना तत्रोक्तं दृष्टान्तमाह। सं-हार उपसंहारः, पश्चात्पठितऋगादिशब्दजन्येत्यर्थः। प्रथमप्राबल्ये फलितमाह। वेदोपक्रमेति। उपक्रमगतं वेदपदं मुख्यमुपसंहारस्थमृगादिपदं तु गुणाल्लाक्षणि-कमित्यर्थः। एकस्मिन् वाक्ये ह्युपक्रमं पर्यालोच्य तद-नुरोधेनोत्तरं नेतव्यम्, अन्यथा संजातविरोधितया त-दुपस्थितमुख्यार्थेनास्यान्विताभिधानासंभवात्। तथा च प्रथमस्य चरमापेक्षितत्वे सति तद्विरोधित्वं तद्बा-धकत्वे निमित्तं न च प्रत्यक्षादीनां तत्त्वावेदकत्वं वे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दान्तैरपेक्ष्यते तद्गतव्यावहारिकप्रामाण्येनैव वेदान्ता-नां चरितार्थत्वादित्यर्थः ॥ ११९ ॥

ब्रह्मपुच्छमितिवाक्यगामिनो-
र्ब्रह्मपुच्छमिति शब्दयोर्द्वयोः ॥
ब्रह्मशब्दबलवत्तरत्वतः
पुच्छशब्दपरिपीडनं मतम् ॥ १२० ॥

इदानीं बादरायणन्यायसिद्धमपि प्रथमबाधकत्वे प्रसक्तानुप्रसक्त्योदाहरणमाह । ब्रह्मपुच्छमिति । तैत्ति-रीयके ब्रह्मपुच्छं प्रतिष्ठेति वाक्यगतयोरित्यर्थः, शब्द-योर्मध्ये, तत्र हि वाक्येऽसन्नेवेत्यादिवाक्यशेषगतब्रह्म-शब्दाभ्यासानुरोधेन ब्रह्मशब्दस्य स्वप्रधानाद्वितीयब्र-ह्माणि निर्णीततात्पर्यानुरोधेन पुच्छपदमिदं पुच्छमित्या-दिप्रायपाठप्राप्तादवयवार्थात् प्रच्याव्य सर्वाधिष्ठानत्व-लक्षणया नीयते न चात्र तद्वत् प्रत्यक्षादीनां तत्त्वावे-दकत्वकल्पकं किं चिदस्तीति भावः ॥ १२० ॥

अथ यद्युपक्रमणमल्पतरं
भवति प्रभूतमुपसंहरणम् ॥
बलत्तदा चरममेव भवे-
दुभयोर्विरोधसमये नितराम् ॥ १२१ ॥

ननु प्रथमश्रुतस्यैव चरमबाधकत्वमिति न बादरा-यणनयेन नियतम्, अस्य लोकस्य का गतिरिति ... श्नोत्तरे आकाश इति होवाच सर्वाणि ह वा इमानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतान्याकाशादेव समुत्पद्यन्त इत्यत्र सर्वाणि ह वा इत्यादिवाक्यशेषावगतानेकप्रमाणानुरोधेनाकाशपदं भूताकाशात् प्रच्याव्य ब्रह्मपरतया बादरायणेन आकाशस्तल्लिङ्गादिति सूत्रेण निर्णीतं तद्वत्प्रत्यक्षाद्यनेकानुरोधेन वेदान्तमात्रबाधः किं न स्यादित्याशङ्क्याह । अथेति । प्रभूतं बहु तत्र ह्यस्य लोकस्येति प्राथमिकप्रतिपिपादयिषितजगत्कारणविषयप्रश्नोपोद्बलितानेकलिङ्गबलादाकाशश्रुतिः प्रथमावगताप्यन्यथा नीता । न चात्र प्रत्यक्षादीनां प्राबल्यनिमित्तं किं चिदुपोद्बलकमस्ति येन तद्वद् भूयसामनुग्रहन्यायेन वेदान्तैकप्रमाणबाधो भवेदित्यर्थः ॥ १२१ ॥

अथ यदुपक्रमणमल्पमपि
प्रतिपाद्यवस्तुविषयं भवति ॥
अविवक्षितार्थविषयं चरम
भवति प्रभूतमपि बाध्यमदः ॥ १२२ ॥

नन्वथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यादिवाक्य एकेनैव यच्छब्देन ज्योतिरादिश्रुतिलिङ्गानामनेकेषां बाधो दृष्टः, न च तत्र तस्योपोद्बलकं किं चिदस्ति तद्वदुपोद्बलनाभावेऽपि प्रत्यक्षादि बाधकं किं न स्यादित्याह । अथ यदीति । तत्र हि यच्छब्दस्य प्रथमावगतार्थगोचरतास्वभावानुरोधेन स्ववाक्ये प्रथमावगत्यभावेऽपि पूर्वत्र गायत्रीवाक्ये पादोऽस्य विश्वाभूतानी-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति प्रतिपादितब्रह्मपरतयापि निर्णीतस्य प्रतिपाद्यव-स्तुविषयताबलेन तद्विरोधिज्योतिरादिश्रुतिलिङ्गान्यन्यथा नीतानि, न चात्र प्रत्यक्षादेः प्रतिपाद्यविषयत्वं निर्णीतमिति न वेदान्तबाधकत्वमिति भावः ॥ १२२ ॥

आसन्नवस्तुविषयेण यथाक्षजेन
बाधो भवत्यनुमितेर्व्यवधानयोगात् ॥
प्रत्यक्षमात्रविषयेण तथागमेन
युक्तोऽक्षजादिविषयावगमस्य बाधः ॥ १२३॥

एवमखण्डब्रह्मविषयवेदान्ताः प्रत्यक्षादिबाधका-स्तदनपेक्षत्वे सति तद्विरोधिविषयोत्तरप्रमाणत्वाद् यदेवं तदेवं यथोत्तरभाव्युद्गात्रादिविच्छेदनिमित्तप्रायश्चित्तोपदेशः, न चासिद्धिर्वेदान्तानां प्रत्यक्षादिगतव्यावहारिकप्रामाण्यांशापेक्षत्वेऽपि तदीयतत्त्वावेदकत्वानपेक्षत्वात्, नापि तत्प्रामाण्यासिद्धिः प्रथमाध्यायोक्तन्यायेन तत्तात्पर्यविषयाखण्डब्रह्मणो बाधाभावेन तत्सिद्धेः, प्रत्यक्षादीनां व्यावहारिकत्वेनापि प्रामाण्यव्यवहारोपपत्तेरित्युक्तम्, प्रसङ्गाच्च क्वचित् पूर्वस्याप्युत्तरबाधकत्वं जैमिनिसंमतं प्रदर्श्य तदनुप्रसक्त्या पुच्छब्रह्मादिन्यायोऽपि दर्शितः, इदानीं तु वेदान्ताः प्रत्यक्षादिबाधका आसन्नविषयत्वाद्यदेवं तदेवं यथाऽनुमितिविरुद्धविषयप्रत्यक्षमित्याशयेनाह। आसन्नेति। अव्यवहितवस्तुविषयेणेत्यर्थः । प्रत्यक्षं हि प्रमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्सितविशेषवृत्तिद्वारा प्रमातृचैतन्याव्यवहितं साक्षादेव गृह्णाति, तदिन्द्रियसंनिकर्षादिसामग्रीजन्यत्वात्, अनुमानं तु सामान्यव्याप्तिपुरस्कारेणोत्पन्नं सामान्यकारणसाध्यं पक्षे विषयीकुर्वद्धेतोः पक्षधर्मतानुपपत्त्या साध्यविशेषं विषयीकरोतीति व्यवहितविषयं सद्व विरोधेन यथा बाध्यत एवं प्रत्यङ्मात्रविषयत्वादत्यासन्नविषयं वेदान्तवाक्यमध्यक्षादिकं तु प्रपञ्चस्वरूपं विषयीकुर्वदर्थादात्मगतं भेदं विषयीकरोतीति तस्य तेन बाधो युक्त इति भावः ॥ १२३ ॥

किं चाम्नायवचःप्रमेयबलतः सर्वं प्रमाणान्तरं
स्वार्थं साधयतीति तत्सकलमेवायत्तमस्मिन्भवेत् ॥
यद्व यत्रायतते विरोधसमये तेनास्य तद्बाधने
सामर्थ्यं न च विद्यते श्रुतिवचोबाधे यथा हि स्मृतेः १२४

किं च प्रागुक्तं वेदान्तवाक्यं प्रत्यक्षादिबाधकं तद्विरोधितदुपजीव्यार्थकत्वात्संमतवदित्याशयेनाह । किं चाम्नायेति । आत्मैवास्य ज्योतिरित्यादि वेदान्तवचसो यत्प्रमेयं स्वप्रकाशात्मा तद्बलादित्यर्थः । आयत्तमधीनम्, अस्मिन्नाम्नायप्रमेये कूटस्थानुभवे तत् सकलमेवेतरत् प्रमाणजातम् उक्तानुभवोपजीवकं मानान्तरं भवेदित्यर्थः । प्रत्यक्षादिर्हि स्वसामर्थ्यात्प्रमेयाकारां धीवृत्तिमुत्पादयति, न चैतावता तदर्थः सिध्यति जडवृत्ते रूपादिवदर्थासाधकत्वादिति सदवच्छिन्नं स्वप्रकाशचैतन्यं प-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेयसाधनायापेक्षते स्वप्रकाशचैतन्यं चाखण्डं ब्रह्म तच्च तत्परवेदान्तादेव सिध्यतीति तदुपजीव्यं प्रत्यक्षादिकं च तदायत्तप्रामाण्यम्, ततः किं तत्राह। यदत्रेति। आयतते आयत्तं भवति यद् यदुपजीवीत्यर्थः। तेन उपजीव्येन विरोधसमये तद्बाधे सति अस्य उपजीवकस्य प्रत्यक्षादेः सामर्थ्यं तद्बाधने नैव विद्यते। तत्र दृष्टान्तमाह। श्रुतीति। औदुम्बरीं स्पृष्ट्वोद्गायेदित्यादिश्रुतिवचोबाधे यथौदुम्बरी सर्वा वेष्टयितव्येति स्मृतेः सामर्थ्यं नैव विद्यत इति, स्मृतेः श्रुत्युपजीवित्वात्तद्विरोधेऽप्रामाण्यादेवमिहापीत्यर्थः॥ १२४॥

ब्रह्माज्ञानसमुद्भवं ग्रहगणं सातिग्रहं ब्रह्मणः
स्वाकारग्रहणेन वेदशिरसो जाता मतिर्बाधते॥
विद्या वस्तुबलेन जन्म लभते माया तु निर्वस्तुका
सा तामुद्भवमात्रतः क्षपयति ध्वान्तं यथा भास्करः॥१२५॥

एवं प्रत्यक्षादेर्वेदान्तबाधितविषयत्वेन सविषयस्य तस्याविद्यकत्वं साधितमिदानीं तत्फलमाह। ब्रह्माज्ञानेति। ग्रहगणं हस्तो वै ग्रह इत्यादिश्रुतिसिद्धेन्द्रियसमूहं सातिग्रहं स कर्मणातिग्रहेण गृहीत इत्यादिश्रुतिसिद्धतत्तदिन्द्रियगोचरख्यातिग्रहसहितं सकलसंसारमिति यावत्, वेदशिरसोऽहं ब्रह्मास्मीति महावाक्याज्जाता मतिरज्ञानसमुद्भवं बाधते। ननु जड़ाया मतेः कथं बाधकत्वमित्यत आह। ब्रह्मण इति। ब्रह्मणः प्रपञ्चाधिष्ठा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नस्य यः स्वाकारः सत्यज्ञानप्रत्यगद्वयानन्दस्वरूपं तद्-ग्रहणेन तद्बलेनेत्यर्थः। ननु प्रपञ्चस्यापि प्रमाणविषयस्य कथमपरप्रमाणेन बाधस्तयोः प्रमाणत्वाविशेषादित्याशङ्क्य तद्विशेषमाह। विद्येति। वस्तुनोऽबाधितविषयस्य बलेन ब्रह्मविषया हि विद्या वस्तुनिर्णीततात्पर्येण वाक्येन जन्म लभत इति सा वस्तुबलजा बलवती प्रत्यक्षादिलब्धविषयप्रपञ्चकारणमाया तु निर्वस्तुका वस्तुत्वरहिताऽतः सा विद्या तां मायाम् उद्भवमात्रतः स्वोत्पत्तिमात्रेण क्षपयति निवर्तयति, लोकेऽप्यविद्यातत्कार्ययोरितरानपेक्षतत्त्वसाक्षात्कारनिवर्त्यत्वदर्शनात्। दृष्टान्तान्तरमप्याह। ध्वान्तमित्यादिना ॥ १२५ ॥

रागद्वेषप्रशाखं विषयगुणसमुद्भासि धीवृत्तिशाखं
धर्माधर्मप्रवृत्तिप्रचुरसुखसमुद्वेगभोगप्रवालम् ॥
छिन्द्याः संसारवृक्षं निशितमतिमहाशस्त्रनिक्षेपदक्षः
प्रत्यक्तत्त्वस्थलीगं निबिडतमतमोमूललब्धप्ररोहम् १२६

नन्वेवं सति हिरण्यगर्भाद्यनेकविधसुखभोगास्पदस्य देवर्ष्याद्यनेकाश्रितस्य संसारस्य विरोधित्वे ब्रह्मसाक्षात्कारे प्रेक्षावतामुपेक्षैव युक्ता स्यादित्याशङ्क्यानेकविधरागद्वेषनिदानो हि संसारोऽथो खल्वाहुः काममय एवायं पुरुष इति श्रुतेरत एव मिथ्याज्ञानमूलोऽपि रागादेस्तन्नियमात्। एवं ब्रह्महत्याद्यनेकपातकादिजन्यवि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधयातनोपेत आशुविनाशिसुखश्च तस्मिन्नेतस्मिन्न-
विवेकिभिराहृतेऽपि दृढतरमुमुक्षादियुक्तस्य तन्नाशाय
ज्ञानान्वेषणमेवोचितमित्याशयेनाह । रागद्वेषेति । अ-
नुकूलेषु रागः प्रतिकूलेषु द्वेषः, रागद्वेषौ प्रकृष्टे शाखे स्थू-
लविटपौ यस्य संसारवृक्षस्य तं विषयाणां शब्दादीनां गु-
णा इष्टानिष्टसाधनरूपास्तद्द्वन्द्वासिन्यस्तदध्यासात्मिका
धीवृत्तयः क्षुद्रा शाखा यस्य तम् । उक्तशाखोपशाखाफ-
लमाह । धर्माधर्मेति । धर्माधर्मरूपा याः प्रवृत्तयः एतच्चा-
धर्मानिवृत्तेरप्युपलक्षणं तज्जन्यौ प्रचुरौ सुखसमुद्वेगौ स-
मुद्वेगो दुःखम् एतदपि निवृत्तिसाध्यदुःखाभावोपलक्ष-
णं ते प्रवालानि पल्लवा यस्य तं प्रवालग्रहणेन सांसा-
रिकभोगस्यात्यन्तिकमदृढत्वं दर्शयति । अथ वा धर्मा-
धर्माभ्यां प्रवृत्तिर्वृद्धिर्यस्य प्रचुरा असंख्याताः सुखस-
मुद्वेगभोगा सुखदुःखानुभवाः प्रवालाः पत्राणि यस्य
धर्माधर्मप्रवृत्तिश्चासौ प्रचुरसुखदुःखभोगप्रवालश्चेति
तथा तमिति विग्रहः, छिन्द्या इति सूचितं छेत्तारं
विशिनष्टि निशिता निश्चला मतिर्ब्रह्मात्मसाक्षात्कारः
सैव महत्पाशुपतास्त्रादिकल्पं शस्त्रं छेदनसाधनं त-
स्य निक्षेपे समुत्पादे दक्षस्त्वं छिन्द्या इति संवन्धः । तस्य
ब्रह्मात्मसाक्षात्कारनिवर्त्यत्वाय तं विशिनष्टि । प्रत्य-
कृतत्त्वेति । प्रत्यक्तत्त्वं स्थली स्थलमधिष्ठानं तत्राध्य-
स्तमित्यर्थः । ज्ञाननिवर्त्यत्वमात्रे हेतुमाह । निविडेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनादिकालानेकवासनानुबन्धत्वान्निविडतमम्, अतिमहाजडं यत्तम आवरणविक्षेपशक्तिमदज्ञानं तदेव मूलमाधारस्ततो लब्धः प्ररोहोऽङ्कुरीभावो येन तम्। अनेन ज्ञानाभावेऽनुच्छेद्यत्वं तस्य दर्शितम्। अत्र वृक्षरूपकालङ्कारेण संसारवर्णने वृक्ष इव मूलोच्छेदे स्वमूलाविद्योच्छेदे संसार उच्छिद्यत इति दर्शितम् ॥ १२६ ॥

प्रत्यग्वस्तुन एव तत्र विषये माया तमः कारणं
ध्वान्तं बीजमबोध इत्यपि गिराऽविद्यैव संकीर्त्यते ॥
तस्या एव विलास एष भवता गुर्वादिभेदान्वितः
संक्लृप्तो न तु विद्यते पृथगसौ संध्ये यथा धामनि ॥१२७॥

ननु मायां तु प्रकृतिं विद्यादित्यादिश्रुत्या मायैव संसारकारणं सिद्धं न त्वज्ञानमिति कथं तस्य ज्ञाननिवर्त्यत्वमित्याशङ्क्य मायाऽज्ञानयोरभेदस्य तृतीये वक्ष्यमाणत्वान्न तयोर्भेदः, एवं च यथा अज्ञानमेव तमः कारणमित्यादिशब्दैरभिधीयत एवं मायाशब्देनापीति न तस्य ज्ञाननिवर्त्यत्वानुपपत्तिरित्याशयेनाह। प्रत्यग्वस्तुन इति। आत्मतत्त्वस्य सम्बन्धिनी प्रत्यक्चैतन्याश्रितेति यावत्। तत्र प्रत्यग्वस्तुनि विषये याऽविद्या सैव मायादिगिरा संकीर्त्यत इति संबन्धः। अज्ञानात्मकमायाकार्यत्वे भेदप्रपञ्चस्यात्मनोऽपि नानात्वायोगात्सदद्वितीयत्वमपि सिध्येदित्याशयेन सदृष्टान्तमाह। तस्या इति। अविद्याया एवैष विलासो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विपरिणामो गुर्वादिभेदान्वितो भवता अविद्यावता त्वया संक्लृप्तोऽध्यस्तोऽत आत्मनः सकाशादसौ पृथग् नैव विद्यत इत्यर्थः । सन्ध्ये स्वप्ने सन्ध्यं स्वप्नस्थानमिति श्रुतेः । यथा स्वप्नस्थाने स्वपता दृष्टश्चेतनाचेतनात्मकप्रपञ्चस्ततो न पृथगस्तीति, उत्थानानन्तरमदर्शनात्, न हि सतः समयान्तरेऽदर्शनं भवत्येवं गुर्वादिप्रपञ्च आत्मनो न भिद्यत इत्यर्थः। विमतः संसारोऽविद्याविलसितोऽविद्यावस्थायामेव विभाव्यमानत्वात् स्वप्नवदित्यर्थः ॥ १२७ ॥

> मुक्तामुक्तौ विद्वदज्ञौ त्वदन्या-
> वाकाशादि क्ष्मावसानं च विश्वम् ॥
> स्वाविद्योत्थस्वान्तनिष्पन्दनं तद्
> विज्ञातव्यं मा ग्रहीरन्यथैतत् ॥ १२८ ॥

ननु स्वप्नस्य निद्रादिदोषजन्यस्य युक्तोऽविद्याध्यासत्वेन तद्द्रष्टुः पृथगसद्भावस्तेन कथं जाग्रत्प्रपञ्चस्य साम्यमत एव वैधर्म्याच्च न स्वप्नादिवदिति स्वप्नवैधर्म्यं सूत्रकार आहेत्याशङ्क्य प्रमातरि सति बाधाबाधाभ्यां स्वप्नजागरितयोर्वैधर्म्येऽप्यध्यस्तत्वेन त्रिकालासत्त्वे न कोऽपि विशेष इत्याशयेनाह । मुक्तेति । शुकादिर्मुक्तश्चैत्रादिरमुक्त एवं गुर्वादिर्विद्वान् देवदत्तादिरज्ञः क्ष्मा पृथिवी अवसानेऽन्ते यस्य विश्वस्य तदेतत् सर्वं स्वाविद्योत्थं यत् स्वान्तमन्तःकरणं तद्गत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वासनानिमित्तत्वात्तन्निष्पन्दनं तच्चेष्टामात्रमविद्याका-र्यान्तःकरणपरिणाम इति वा ज्ञातव्यमन्यथा स्वप्नवै-लक्षण्येन सत्यतया मा ग्रहीर्मा जानीहीत्यर्थः । अथ वा एवं हेयं संसारं प्रपञ्चमाविद्यकं निरूप्य यस्मिन्विवर्तदृष्टेरे-कानेकजीवविषयत्वेन द्वैविध्यमुक्तं तत्र शुको मुक्तो ना-स्मदादिरिति वैदिकलौकिकव्यवहारानुरोधेन जीवना-नात्वमेवेत्याशङ्क्य दृष्टिमात्रं तथा स्वप्नवत्, न तु वास्त-वो व्यावहारिको वा जीवभेदोऽस्ति । तथाहि, अविद्यायां प्रतिबिम्बितं हि चैतन्यं जीवोऽविद्या च लाघवानु-गृहीतया अजामेकामित्यादिश्रुत्या तदनुभवेन तद्भेदे प्रमाणाभावाच्चैका सिध्यतीत्येक एव जीवः स चावि-द्याकार्यानेकान्तःकरणावच्छेदेनानेकरूपप्रमातृकर्तृभोक्तृ-भावं प्रतिपद्यत इति लौकिकवैदिकव्यवहारो निखि-लोऽपि यथायथमेकस्मिन्नपि जीव उपपन्न एवेति ना-नन्तजीवकल्पना युक्ता, अनन्यथासिद्धप्रमाणाभावा-द्गौरवाच्च । अन्तःकरणनानात्वं चैकजीववादेऽपि प्र-सिद्धव्यवस्थितव्यवहारानुरोधेन कल्प्यमानं न लोहग-न्धितामावहतीत्याशयेनाह । मुक्तामुक्ताविति ॥ १२८ ॥

कालोऽतीतोऽनादिरेष्यन्ननन्तो
मुक्तामुक्तौ तत्र पूर्वं तथोर्ध्वम् ॥
तस्मादेतद्दुर्घटं शङ्कसे चेन्
मा शङ्किष्ठाः स्वप्नदृष्टान्तदृष्टेः ॥ १२९ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवमपि मुक्तामुक्तादिव्यवस्था कथं न ह्येका ज्ञाने तस्य निवृत्तावन्यत्र बन्धः संभवति न ह्यतीतप्राक्काले कोपि न मुक्त इति वक्तुं शक्यम्, एवम् आगामिकालेऽपि मुक्तामुक्तभेदः स्थास्यतीति न जीवैकत्वमिति शङ्कामनूद्य दृष्टान्तेन निराचष्टे। कालोऽतीत इति। अतीतः कालोऽनादिः, एष्यन् भविष्यंश्च कालोऽनन्त इति योजना। तत्र तयोः कालयोर्मुक्तामुक्तौ सर्वतः प्रसिद्धाविति शेषः। यस्मादयमर्थः प्रमाणिकः तस्मात्त्वदुक्तं दुर्घटं शङ्कसे चेदित्यनुवादः। उत्तरं मा शङ्किष्ठा इति। लोकप्रसिद्धेर्भ्रान्तिमात्रत्वात्तत्प्रसिद्धानुवादित्वाच्च श्रुत्यादेर्न विरोध इत्याह। स्वप्नेति। तथा चाविद्यामात्रविवर्तस्वप्नवन्मिथ्याभूतस्यापि व्यवहारास्पदत्वोपपत्तेर्न दुर्घटमिति भावः ॥ १२९ ॥

सुप्तो जन्तुः स्वल्पमात्रेऽपि काले
कोटीः पश्येद्वृत्तसंवत्सराणाम् ॥
पश्येत्कोटीरेवमागामिनां च
जाग्रत्काले योजयेत्सर्वमेतत् ॥ १३० ॥

दृष्टान्तं विवृण्वन्दार्ष्टान्तिकेऽपि तद्दर्शयति। सुप्त इति। सुबोधम् ॥ १३० ॥

कालोऽनादिस्तत्र मुक्तः शुकादिः
कालोऽनन्तो मोक्ष्यते तत्र चान्यः ॥
इत्येवं ते बन्धमोक्षव्यवस्था-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसिद्धिः स्यादापरात्मप्रबोधात् ॥ १३१ ॥

दार्ष्टान्तिकमपि विवृणोति । कालोऽनादिरिति । आपरात्मप्रबोधाद् ब्रह्मात्मैक्यसाक्षात्कारपर्यन्तमात्मैकत्वाज्ञानात् स्वप्न इव मुक्तामुक्तादिभेदव्यवहारोऽविदुषां सिध्यति विवेकिनां तूक्तन्यायेन जीवैकत्वमेव संमतमिति भावः ॥ १६१ ॥

अज्ञानं सकलभ्रमोद्भवनकृत् पिण्डेषु सामान्यवज्जीवानां प्रतिबिम्बकल्पवपुषां बिम्बोपमे ब्रह्मणि ॥
विद्वांसं पुरुषं जहाति भजते विद्याविहीनं नरं
नष्टानष्टमिवात्मपिण्डमधुना जातिस्तथैके जगुः १३२

एवं स्वसंमतजीवैकत्वमुक्त्वा तत्र मतान्तराणि दर्शयन् प्रथमं ब्रह्मप्रतिबिम्बानन्तजीवाश्रयं बिम्बरूपब्रह्मविषयं सकलप्रपञ्चभ्रमोद्भवकारणमज्ञानमेकं यथाऽनेकपिण्डेषु गवादिव्यक्तिष्वाश्रितं गोत्वादिसामान्यं तच्च ब्रह्मसाक्षात्कारवन्तं पुरुषं जहाति "जहात्येनां भुक्तभोगामि„ति श्रुतेः, विद्याविहीनमज्ञं नरं भजते "जुषमाणोऽनुशेत„ इति श्रुतेः । यथा गोत्वादिजातिरिदानीं नष्टामात्मनो व्यक्तिं विहायानष्टां विद्यमानामाश्रयते तद्वदिति बन्धमोक्षव्यवस्थां ये जगुस्तन्मतमाह । अज्ञानमिति । उक्तार्थम् ॥ १३२ ॥

अज्ञानानि बहून्यसंख्यवपुषो जीवान् मुमुक्षूनपि ज्ञानाज्ञानसमाश्रयाननुयुगं तेषां च निःश्रेयसम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मायामीश्वरसंज्ञयामनुगमात् संसारसंवर्त्तिनीं
केचिद् दैवविघातनिघ्नमनसः स्वीचक्रुरल्पश्रुताः ॥१३३॥

इदं चानुपपन्नं न ह्येकस्मिन्नज्ञान एकस्य ब्रह्मणोऽनेके प्रतिबिम्बाः संभवन्ति लोके तथाऽदर्शनात्, न चाज्ञाने विद्यमाने तत्प्रतिबिम्बानां प्रतिबिम्बत्वापगमः सम्भवतीति न मुक्तिरुपपद्यते, न च ज्ञानमविद्यासमानविषयं तन्न निवर्तयतीति युक्तं येनेदानीमज्ञानां संसारो भवेदन्यथाऽज्ञानस्य कदापि निवृत्तिर्न स्यात्, न हि दृष्टान्तमात्रेण किंचित् सिध्यतीत्यरुच्याऽज्ञानानन्त्यमादाय बन्धमोक्षव्यवस्थाविषयं मतान्तरमाह । अज्ञानानीति । अस्मिन् पक्षे ज्ञानेनाज्ञानस्य निवृत्तिप्रसिद्धिर्न बाध्यते, अज्ञानसमानाश्रयविषयकज्ञानेन लोकेऽप्यज्ञाननिवृत्तेर्दृष्टत्वादित्यर्थः, आध्यात्मिकप्रमातृत्वकर्तृत्वसुखदुःखादिजनकाज्ञानि बहून्यपरे स्वीचक्रुरिति संबन्धः । एवमसंख्यवपुषो जीवानपि स्वीचक्रुरिति योजना, जीवानां विशेषणं मुमुक्षूनित्याद्याश्रयानित्यन्तम्, अनुयुगं प्रतियुगं केषांचिज्जीवानां निःश्रेयसं च स्वीचक्रुरित्यनुषङ्गः । ननु वियदादेरप्यज्ञानकार्यत्वे कर्तृत्वादिवत् सर्वजीवसाधारण्यं न स्यादित्याशङ्क्याह । मायामिति । वियदादिप्रपञ्चहेतुरज्ञानादन्या माया सा चेश्वराख्या सकलबाह्यकार्यसाधारणकारणमित्यपि स्वीचक्रुरित्यन्वयः । त-

था च श्रुतिः । मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरमिति । इदं च मतमत्यन्तमनुपपन्नमज्ञाननानात्वादेरसंभवादित्यनुवादसमय एव तस्य फल्गुत्वं सूचयन्नाह । केचिदित्यादिना । दैवं दुरदृष्टं तत्कृतविघातेन प्रतिबन्धेन निघ्नं वशीकृतं विपर्यस्त मनो येषां ते तथा । अल्पश्रुतत्वादपि तेषां तन्मतं दुष्टमित्याह । अल्पश्रुना इति ॥ १३३ ॥

आकाशे विहगोऽस्ति नास्ति च यथा तद्वत् परब्रह्मणि
स्वच्छे चिद्वपुषि स्वभावविमलेऽसङ्गे शिवे शाश्वते ॥
निर्भेदेऽनुदयव्ययेऽनवयवेऽविद्या भवेन्नो भवे-
दित्येवं निरवद्यमाहुरपरे पक्षव्यवस्थार्थिनः ॥ १३४॥

एवं नानाजीवाश्रयमतद्वयेन स्वानभिमतमुक्तामुक्तव्यवस्था दर्शिता, इदानीं तत्रारुच्या मतान्तरमाह । आकाश इति । आकाशे पक्षी संचरतीति यदैकेन प्रमीयते तदैव स्थलान्तरे परेणाकाशे विहङ्गो नेति प्रमीयते न चाकाशस्यांशभेदोऽस्तीति युगपदेकस्य विहगस्यैकत्र भावाभावावङ्गीकर्तव्यौ । एवं परे ब्रह्मणि स्वच्छचैतन्यादिस्वभाव एकस्या अविद्याया भावाभावविरुद्धावित्येकमेव ब्रह्माविद्याश्रयः संसरति तदैव तदेव ब्रह्माविद्याशून्यं मुक्तमिति मुक्तामुक्तव्यवस्थां स्वपक्षतया केचनोचिर इत्यर्थः । ब्रह्मविशेषणानामेषोऽर्थः । स्वच्छे निर्मले । अन्यकृतनैर्मल्यं वारयति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वभावविमल इति । तत्र हेतुश्चिद्वपुषीति । स्वभाव-विमलत्वेऽप्यागन्तुकमलयोगं वारयति । असङ्ग इति। तत् साधयति । शिव इति । निर्गुण इत्यर्थः । शिव-मद्वैतं चतुर्थं मन्यन्त इति श्रुतेः । विनाशं वारयति। शाश्वत इति । शाश्वतत्वं साधयति । अनुदयव्यय इ-ति । सर्वस्योदयव्ययसाक्षित्वादधिष्ठानत्वाच्च स्वत उ-दयव्ययशून्य इत्यर्थः । तथाप्यविद्याभावाभावयोरेकत्र विरोधात्तदाश्रयत्वाय कथं चिद्ध भेदोऽभ्युपेय इति चे-न्नेत्याह । निर्भेद इति । स्वभावतो निर्भेदत्वं साध-यति । अनवयव इति । भेदाभावेऽप्याकाश इव भावा-भावाश्रयत्वं न विरुध्यत इति भावः । निरवद्यम् अ-विद्याया दुर्घटत्वस्यालङ्कारत्वादेकत्र भावाभावविरोध-दोषहीनमित्यर्थः ॥ १३४ ॥

शुद्धे वस्तुनि यद्यपि प्रविशति ध्वान्तं मनः कारणं
स्वीकृत्यैव तथाप्युपाधिमपरं ब्रह्मस्वरूपे विशेत् ॥
तच्चान्तःकरणं सुसूक्ष्मवपुषा तिष्ठद्ध बहिः सर्वदा
चैतन्ये तमसो नियामकमिति स्वीचक्रुरन्ये पुनः ॥१३५॥

अत्रापि वक्ष्यमाणरीत्याऽरुचेः सत्त्वात् पक्षान्तरमा-ह । शुद्धे वस्तुनीति । यद्यप्युक्तश्रुत्यादिना शुद्धे ब्रह्म-ण्येव कारणं जगत्कारणं ध्वान्तमविद्या तिष्ठति, तथा-पि निरंशे तस्मिन्नज्ञानस्य युगपद्ध भावाभावयोरसं-भवादवच्छेदकभेदेन तद्ध वक्तव्यमित्यपरमाश्रयाति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिक्तं मंन उपाधिद्वारमवच्छेदकमिति यावत् स्वीकृत्यै व सृष्ट्वेत्यर्थः, तद्ब्रह्मस्वरूपे विशेत्, न तु निर्द्वारमित्यर्थः । तच्चान्तःकरणं यद्यपि सुषुप्त्यादौ लीयते, तथापि सूक्ष्मवपुषा तदापि तिष्ठत्येव । तदपि न तदाश्रयस्य ब्रह्मणो विशेषणं तदाऽज्ञानस्य तत्रापि वृत्तिप्रसङ्गात्, न च कार्यस्य स्वकारणाश्रयत्वं संभवत्यतो वहिस्तदुपाधिरेव सद्वृत्तिहरिशब्दार्थे पशुत्वमिव सर्वदा चैतन्ये तमसो वृत्तिनियामकमित्यन्ये पुनः स्वीचक्रुरित्यर्थः । एवं चान्तःकरणावच्छिन्ने चैतन्ये तदानीमेव तदभाव उपपद्यत इत्युक्तरीत्या मुक्तामुक्तव्यवस्थोपपद्यत इति भावः ॥ १३५ ॥

अज्ञानि ब्रह्म बुद्धीरनुसरति ततः स्थावरं जङ्गमं च
स्वाज्ञानादेव भूत्वा क्व चिदवगतितो मुक्तमन्यत्र बद्धम् ॥
तच्चाज्ञानं विनष्टं स्थितमथ च तदेवांशभेदोपपत्ते-
रेवं सर्वव्यवस्था परमपुरुषगा जाघटीतीति केचित् ॥१३६॥

एवमपि ज्ञानाज्ञानसाध्यमुक्तामुक्तव्यवस्था नोपपादितेत्यपरितोषेण पक्षान्तरमाह । अज्ञानीति । यद्यप्यज्ञानमेकमिति श्रुतिसिद्धं तथापि व्यवस्थितानेककार्यवशात्तत्कार्याण्यन्तःकरणानि बहूनि स्वीकर्त्तव्यानि ततश्च तदज्ञानि ब्रह्म यस्माद्बुद्धीरन्तःकरणान्यनुसरति तत्र प्रतिबिम्बितं भवति ततः स्वाज्ञानादेव स्थावरं जङ्गमं च तद्भूत्वा क्व चिन् मनुष्यादिशरीरोपा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धौ विवेकवैराग्यादिसाधनेन ब्रह्मावगतितस्तदुपादा-
नाज्ञानांशतत्कार्यशरीरद्वयतद्धर्मनिवृत्त्या मुक्तं भवति,
अन्यत्र विद्याभावादविद्यया बद्धमिति तद्व्यवस्थोपप-
द्यते । ननु निरंशेऽज्ञाने तदंशप्रयुक्तव्यवस्थानुपपत्ते-
त्याशङ्क्याह । तच्चेति । अथ च तदेव स्थितमिति सं
बन्धः । अयमाशयः । यस्यां बुद्धौ विद्योत्पत्तिस्तदुपादा-
नांश एवाज्ञानस्यैकोंऽशस्तद्वारा बुद्धिनाशान्नश्यति, उ-
पाध्यन्तरोपादानांशद्वारेण तु तिष्ठतीत्येवमंशभेदो वि-
वक्षित इति । अनिर्वचनीयाज्ञाने निरंशत्वनिर्णयद्रूप-
णासंभवेन सांशत्वकार्यसंभवादेकाज्ञानमतेऽपि परमगु-
रुषाश्रिता मुक्तामुक्तव्यवस्थातिशयेन घटत इति के
चिदाहुरित्यर्थः ॥ १३६ ॥

बाह्याध्यात्मिकवस्तुजातजननी माया हरेर्बन्धनी
शक्तिर्दाशकजालवत् प्रसरणं प्राप्नोत्यविद्यावतः ॥
जीवान् संकुचतीच्छया भगवतः सत्याऽस्तु मिथ्याथवा
संकोचश्च विलक्षणश्च भवतः स्वाभाविकावित्यपि॥१३७

यदज्ञानस्याप्यवयवास्तेषु च प्रत्यवयवं प्रतिवि-
म्बभूता जीवास्तेषां ब्रह्मण्यज्ञानावरणानि चानन्तानि
स्वीक्रियन्ते तर्हि नानाऽज्ञाननानाजीववाद एवा-
श्रित इति नैकाऽज्ञानैकजीवमाश्रित्य बन्धादिव्यव-
स्थोपपादितेति तदपि परित्यज्य केषां चिन् मतमाह।
बाह्येति । अस्मिन् मते ह्यज्ञानमनात्मन्यात्मभ्रान्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तद्वासना च तदुभममपि संसरणे निमित्तमेव नोपादानं गुणस्य तदयोगात्तदुपादानं तु बाह्यस्य वियदादेराध्यात्मिकस्याहंकारतद्धर्मप्रमुखस्य च वस्तुजातस्य जननी मायाशब्दवाच्या बन्धनी जीवसंसारहेतुर्हरेरीश्वरस्य शक्तिरेवेत्यर्थः, मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरमिति श्रुतेः । सा च दाशकस्य मत्स्यघातकस्य जालवत् मत्स्यबन्धनार्थवागुरावदविद्यावतः प्रति प्रसरणं प्राप्नोतीश्वराश्रिता मायैव सर्वान् बध्नातीत्यर्थः। भक्त्या चावर्जितभगवत्प्रसादवशात् मुक्तान् जीवान् प्रति संकुचति तान् न बध्नाति यथा दाशकेच्छया जालम् । ननु सा यदि सत्या तर्हि ज्ञानान्न निवर्तेत यद्यसत्या सैवानाद्यज्ञानमिति न ततो भेद इत्याशङ्क्य न सत्यत्वेऽपि प्रपञ्चस्येश्वरज्ञानादिवत्तद्विषयज्ञानादपि निवृत्त्युपपत्तेरसत्यत्वेपीश्वरशक्तेस्तस्या अज्ञानत्वानुपपत्तेः कस्मिन् सति किं स्यादित्याशयेनाह । सत्येति । ननु जीवे तत्संकोचविकासयोर्विकारत्वाद्रज्जुसर्पवत् मिथ्यात्वे कथं तदधीनसंसारस्य सत्यत्वमित्याशङ्क्य तयोस्तत्स्वाभाविकत्वेन रज्जुसर्पवद्दोषाजन्यतया सत्यत्वमिति नोक्तदोष इत्याशयेनाह । संकोचश्चेति । विलक्षणः प्रसारः, एकश्चकारोऽवधारणे स्वाभाविकावेवेति संबन्धः, द्वितीयस्तु तत्कार्यसमुच्चयार्थः, इत्यपि केचिदित्यनुषङ्गः, तौ च संकोचविकासौ स्वाभाविकौ केव-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लमीश्वरेच्छानिबन्धनो न विद्यानिबन्धनः संकोचो ना-
प्यविद्यानिबन्धनो विकास इत्यर्थः ॥ १३७ ॥

संस्कारभ्रमसन्ततिं प्रतिनरं भिन्नां परब्रह्मणि
स्वीचक्रुर्विषये प्रवाहवपुषाऽनादिं तमः के चन ॥
तामुच्छिद्य समुच्चयेन घटते मोक्षाय कश्चिन्नरः
कश्चित्तद्विरहेण संसरति ना जीवाश्रया सेति च ॥१३८॥

दृश्यस्य मिथ्यात्वनियमादीश्वरस्याप्युक्तवक्ष्यमाणन्या-
येनाज्ञानाश्रयत्वसंभवान्नेदं मतं युक्तमिति समुच्चयवा-
दिनां मतमाह । संस्कारेति । आत्मनो बाह्याध्यात्मिक-
संसारो नाज्ञानजन्यः किं तु परब्रह्मणि विषये देहाद्य-
तिरिक्तव्यापकात्मविषयेऽहं मनुष्य इति पूर्वपूर्वभ्रमत-
त्संस्काराद्निमित्तादात्मन एवानादेश्चोपादानात् सत्या-
द् भवति, भ्रमादयश्च प्रतिनरं भिन्ना एवाज्ञानमपि
भ्रमादिरेव, तच्च प्रवाहवपुषाऽनादिभावं भ्रमादिसंतति
कर्मसमुच्चितेन ज्ञानेनोच्छिद्य कश्चिन्नरो मोक्षाय लिङ्ग-
शरीरविलयायात्यन्तिकदुःखनिवृत्तये वा घटते, अ-
न्यः कश्चित् समुच्चयाभावात् संसरति, तमोरूपा सा सं-
स्कारादिसंततिश्च जीवाश्रयेति ब्रह्म नाज्ञानि न वा
न जानामीत्यनुभवस्य का चन क्षतिरिति के चन
स्वीचक्रुरित्यर्थः ॥ १३८ ॥

अज्ञस्तावत् प्रत्यगात्माहमज्ञ
इत्येवं नः सिध्यति स्वप्रकाशात् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञातं तु ब्रह्म सिध्येत् कुतो वः
सम्यग् ज्ञानाद्‌ भ्रान्तितः स्वप्रकाशात् ॥१३९॥

इदमप्यनुपपन्नमसङ्गस्याविकारिणः प्रत्यगात्मनो भ्रमतत्संस्कारादेरसंभवात् समुच्चयं च चतुर्थे निराकरिष्यति, किं च इतोऽप्येते सप्तापि पक्षा न सङ्गच्छन्ते तेषां जीवानां परस्परं ब्रह्मणश्च भेदविषयत्वात्, तृतीयचतुर्थौ तु विशिष्य निराकरिष्यति, भेदश्च किं काल्पनिकः पारमार्थिको वा, नाद्यः स्वप्नवदेकस्यापि जीवस्य कल्पितभेदेन सर्वव्यवहारोपपत्तेस्तदानन्त्यस्याप्रामाणिकत्वाद्‌, द्वितीये चाज्ञातं ब्रह्म वाच्यमात्मवदननुभवात्तस्याज्ञातत्वं च युष्माकं कुतः सिध्येदिति विमृशति । अज्ञास्तावदिति । वक्ष्यमाणापेक्षया तावच्छब्दः । अहमज्ञ इत्यनुभूयमानमात्माज्ञानं नोऽस्माकं मते स्वप्रकाशात् साक्षिणः सिध्येदित्युपपादितं वो युष्माकं मते जीवातिरिक्तमज्ञातं ब्रह्म कुतः सिध्येत् । किंशब्दोऽभिप्रेतविकल्पानार्हं । सम्यग्ज्ञानादिति । घटादिवदित्यर्थः । भ्रान्तितः स्वप्नवत् स्वप्रकाशादात्मवन्न कुतोऽपीत्यर्थः । एतमेव विशेषं तुशब्देन दर्शयति ॥ १३९ ॥

सम्यग्ज्ञानाद्‌ ब्रह्मणः सिद्धिपक्षे
जाड्यं तस्य स्याद्‌ घटादेर्यथैव ॥
सम्यग्ज्ञानाद्‌ ब्रह्मणोऽज्ञानसिद्धौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यापि स्यात् सत्यता तद्वदेव ॥ १४० ॥

तत्राद्यं प्रत्याह । सम्यग्ज्ञानादिति । ब्रह्मणो ज्ञातस्येति शेषः । ज्ञानविषयस्य जड़त्वनियमाद् ब्रह्मणोऽपि तथात्वं स्यादेवेत्यर्थः । द्वितीयार्धेनाज्ञानाश्रयं दोषान्तरमाह । सम्यगिति । ब्रह्मणोऽज्ञानसिद्धावज्ञातत्वसिद्धौ तस्याज्ञानस्यापि प्रमाणसिद्धत्वात् सत्यता स्यात् । तद्वदेव ब्रह्मवदेव, न च दृश्यस्याज्ञानस्य सत्यतोपपन्नेति भावः ॥ १४० ॥

भ्रान्तिज्ञानाद् ब्रह्मणः सिद्धिपक्षे
तस्यापि स्यात् कल्पितत्वं तमोवत् ॥
अज्ञातं चेद् ब्रह्म नः स्वप्रकाशं
मा भाषिष्ठा नानुभूतिस्तथा नः ॥ १४१ ॥

भ्रान्तिज्ञानादिति द्वितीयं कल्पं प्रत्याह । भ्रान्तीति । भ्रान्तिविषयस्याज्ञानादेरिव ब्रह्मणोऽपि बाध्यतया कल्पितता स्यादित्यर्थः । स्वप्रकाशादिति तृतीयं पक्षं प्रत्याह । अज्ञातमिति । मा भाषिष्ठाः । मा कथय तत्र जीवातिरिक्तस्य सर्वज्ञादिस्वभावस्य ब्रह्मणो विना वेदान्तवाक्यमस्माकं तथाननुभवादिति हेतुमभिप्रेत्याह । नानुभूतिरिति ॥ १४१ ॥

अज्ञातत्वे यानवोचाम दोषान्
मायावित्वे ब्रह्मणस्तानवेहि ॥
मिथ्याज्ञानात् स्वप्रकाशात् प्रमाणाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसिद्धिः स्यात्तस्य तत् कथ्यतां नः ॥ १४२ ॥

ब्रह्मणः परमतेऽज्ञातत्वाश्रयमुक्तं दोषं मायावित्वपक्षेऽपि सामान्यतोऽतिदिशति । अज्ञातत्व इति । विशिष्य तं दर्शयितुं तानेव विकल्पानाह । मिथ्याज्ञानादिति । तस्य ब्रह्मणस्तन्मायावित्वमित्यर्थः ॥ १४२ ॥

मिथ्याज्ञानाद्द ब्रह्मणः सिद्धिपक्षे
मायेव स्यात् कल्पितं तच्च तद्वत् ॥
मानादिष्टं ब्रह्म मायावि चेद्द वा
मायायाः स्यात् सत्यता जाड्यमस्य ॥ १४३ ॥

तदेव दूषणमाह । मिथ्याज्ञानादिति । मायायाश्च दृश्यत्वेन मिथ्यात्वं सिद्धमिति सा दृष्टान्तीकृता । अन्त्ये दोषमाह । मानादिष्टमिति । मायाविशिष्टस्य मानाविषयत्वे विशेषणस्य सत्यत्वम् । अत एव मायायाः स्यात् सत्यतेत्युक्तम् । अस्य ब्रह्मणश्च विशेष्यस्य मानविषयत्वेन पूर्ववज्जाड्यमपि स्यादित्यर्थः ॥१४३॥

तन् मायावि ब्रह्म चेत् स्वप्रकाशं
मायापि स्याद्द ब्रह्मवत् स्वप्रकाशा ॥
मायां पश्येद्द ब्रह्म चेत् स्वप्रकाशं
तत्रापि स्यात् स्वानुभूत्या विरोधः ॥ १४४ ॥

इदानीं द्वितीयं विकल्पं दूषयति । तन् मायावीति । मायाविशिष्टस्य स्वप्रकाशत्वे मायापि स्वप्रकाशा स्यात्तथा च स्वप्रकाशत्वे चिद्रूपत्वात् सत्यत्वाच्च मायात्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याकोप इत्यर्थः। ब्रह्म स्वप्रकाशं माया तु तद्वेद्येति स्वी-
कारान्नोक्तदोष इति। चेत्तत्राह। मायामिति। पूर्ववत्
स्वानुभूत्या विरोध इति भावः ॥ १४४ ॥

आत्मा मूढः स्वप्रकाशो यथाऽयं
नैवं मायि ब्रह्म नः स्वप्रकाशम् ॥
अज्ञादन्यद्ब्रह्म चेत् स्वप्रकाशं
द्वे विस्पष्टे स्वप्रकाशे स्फुरेताम् ॥ १४५ ॥

ननु यथाऽज्ञश्चात्मा स्वप्रकाशत्वरूपेणाज्ञानं पश्यति
तथा मायावि ब्रह्मापि मायां पश्यत्वित्याशङ्क्य तस्य प्र-
तीचः स्वानन्यत्वात्तद्युज्यते न तु तदतिरिक्तमायावि-
नस्तत्त्वमन्यस्य तथा सिध्यतीत्याशङ्कापूर्वकमनुभववि-
रोधं स्पष्टयति। आत्मेति। नः अस्मान् प्रति। द्वे जीवब्र-
ह्मणी। न च जीवातिरिक्तस्य ब्रह्मणस्तथा स्फुरणमस्ती-
तियत्किंचिदेतदिति भावः ॥ १४५ ॥

ज्ञायन्ते चेद्ब्रह्मणा जीवभेदा
जाड्यं तेषां कुड्यवन्निर्विवादम् ॥
न ज्ञायन्ते ब्रह्मणा चेत्तदानीं
सर्वज्ञत्वव्याहतिर्दुर्निवारा ॥ १४६ ॥

एवं जीवातिरिक्तस्याज्ञातत्वं प्रमाणाभावेन दूषयि-
त्वा तद्भेदमपि विकल्प्य दूषयति। ज्ञायन्ते चेदिति। ब्रह्म-
णा स्वस्माज्जीवानामन्योऽन्यं च भेदा ज्ञायन्ते चेत्तत्प्र-
तियोगित्वादिना तेषामपि दृश्यत्वापातादनात्मत्वम

ङ्गः, दृश्यस्य तन्नियमादेतदुक्तम् । निर्विवादमिति ।
अथैतद्दोषपरिहाराय ते न ज्ञायन्ते चेत्तदानीं ब्रह्मणः
सर्वज्ञत्वहानिर्वज्रलेपैवेत्यर्थः ॥ १४६ ॥

जीवा एते स्वप्रकाशस्वभावा
निर्भासन्ते ब्रह्मणश्चेद् विभक्ताः ॥
तेषां भेदः स्वप्रकाशो न वा स्याद्
दोषं ब्रूमो दुर्निवारं द्विधापि ॥ १४७ ॥

इदानीं जीवानामपि भेदासिद्धिं दूषयितुं तेषां स्वप्रकाशत्वं प्रथममनुजानाति । जीवा इति । तेषां भवतु स्वप्रकाशत्वं तद्भेदस्तु कथं प्रकाशत इति वक्तव्यम् । सोऽपि किं स्वप्रकाश उत नेति विकल्प्य पक्षद्वयेऽपि दूषणं संभावयति । तेषामिति ॥ १४७ ॥

तेषां भेदः स्वप्रकाशो यदीष्टः
सत्यत्वं स्यात्तस्य तेषां तथैव
वेद्योऽभीष्टस्तद्विभागो यदि स्यात्
तानज्ञात्वा तद्विभागो न वेद्यः ॥ १४८ ॥

तत्राद्यं दूषयति । तेषां भेदः स्वप्रकाशो यदीति । तस्य भेदस्य । प्रतियोग्यादिसत्यतां विना कथं तस्य सा स्यादित्याशङ्क्य जीवानामपि स्वप्रकाशत्वे सत्यत्वनियमात्तस्य सा दुर्वारेत्याह । तेषामिति । तेषामपीत्यर्थः । द्वितीयं दूषयति । वेद्य इति । तेषां जीवानां विभाग इत्यर्थः । तान् प्रतियोगिभूतान् जीवान्, धर्म्यादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानं विना भेदस्य ज्ञातुमशक्यत्वाज्जीवा अपि ज्ञातव्या इत्यर्थः ॥ १४८ ॥

जीवाः सर्वे त्वां प्रति प्रस्फुरन्तः
सम्यग् ज्ञानात् प्रस्फुरन्ति स्वतो वा ॥
यद्वा मिथ्याज्ञानसामर्थ्यतोऽमी
पक्षः कस्ते रोचते ब्रूहि तन् मे ॥ १४९ ॥

ततः किं तत्राह । जीवा इति । व्यक्तम् ॥ १४९ ॥

सम्यग् ज्ञानाज्जीवभेदप्रसिद्धा-
वद्वैतत्वं ब्रह्मणो न प्रसिद्धयेत् ॥
जीवाः सर्वे मां प्रति स्वप्रकाशा
इत्युक्तिस्ते स्वानुभूत्या विरुद्धा ॥ १५० ॥

आद्यं पक्षं दूषयति । सम्यग् ज्ञानादिति । प्रामाणिकस्य ब्रह्मवत् सत्यत्वनियमेन तदद्वैतप्रमाणसिद्धं न सिद्धयेदित्यर्थः । द्वितीयं पक्षं दूषयति । जीवा इति । तथा सत्यन्येषामपि तदेव स्वतः सर्वजीवानुभवप्रसङ्गः, भिन्नत्वात्तेषां स न भवति चेत्तवापि स न भवेदिति भावः ॥ १५० ॥

मिथ्याज्ञानाज्जीवभेदप्रसिद्धौ
सम्यग्ज्ञानाद् बाध एवाभ्युपेयः ॥
मिथ्याज्ञानाद्रज्जुसर्पः प्रसिद्धः
सम्यग्ज्ञानात्तस्य बाधोऽपि सिद्धः ॥ १५१ ॥

तृतीयपक्षे त्वेक एव जीवः स्यान्न तद्भेद इत्याशयेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तं दूषयति । मिथ्याज्ञानादिति । अभ्युपेय एवेति संबन्धः । सम्यग्ज्ञानबाध्यत्वे च तेषां मिथ्यत्वाद्बन्धमोक्षभाक्त्वं न स्यात्तथा च तद्व्यवस्थास्थापनाय पक्षोद्भावनं तव निरर्थकमिति भावः । कुत इत्याशङ्क्य मिथ्यात्वबाध्यत्वयोः समनियतत्वादित्याशयेनाह । मिथ्याज्ञानाद्रज्जुसर्प इति । तथा च कथमपि न जीवभेदसिद्धिरिति भावः ॥ १५१ ॥

एकोपाधावेकवस्तुप्रसिद्धौ
भावाभावौ नेक्षितौ क्वापि लोके ॥
पक्ष्यादीनामस्तिता नास्तिता च
व्योम्न्येकस्मिन्नप्यवच्छिन्न एव ॥ १५२ ॥

एवमज्ञानं सकलभ्रमोद्भवनकृदित्याद्युपन्यस्तेषु भेदपक्षेषु साधारणं दूषणमभिधायैकोपाधाविति श्लोकोक्ततृतीयपक्ष एकस्यैकत्रैकदा भावाभावौ न संभवत इति तत्पक्षस्यात्यन्तासंभवमेवाह । एकोपाधाविति । एकस्मिन्नधिकरण इत्यर्थः । प्रसिद्धावित्येतदनन्तरं सत्यां तत्र तदभावो न सिद्धेरदिति द्रष्टव्यम्, कुत इत्याशङ्क्य भावाभावयोर्विरुद्धत्वाल्लोके क्वापि तथा भानादर्शनाच्चेत्याशयेनाह । भावाभावाविति । क्वाप्येकोपाधावित्यनुषङ्गः । अथ वैकवस्तुनः प्रतियोगिभूतस्य संबन्धितया प्रसिद्धौ भावाभावौ लोके क्वापि नेक्षिताविति योजना । न चोक्तं गगने पक्षितदभावयोर्युगपद-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तित्वमिति शङ्क्यम् । तद्दृष्टान्तासम्मतेः । न चानुभवविरोधः न हि यत्र पक्षी दृश्यते तत्रैव तदभावोऽपि किं त्वन्यत्रैव । न च गगनस्यैकत्वान्निरंशत्वाच्च नास्ति तदाश्रयभेद इति वाच्यम् । सवितृप्रभावयवावच्छेदकल्पितगगनप्रदेशभेदात्तदुपपत्तेरित्याशयेनाह । पक्ष्यादीनामिति । अवच्छिन्न एव. केन चिदुपाधिनेति शेषः ॥ १५२ ॥

सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे चेत्
तत्रान्वेष्यः कोऽप्यवच्छिन्नभावः ॥
सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे चेत्
बाढं तस्मिन्सोऽप्यवच्छिन्न एव ॥ १५३ ॥

न च तदवच्छेदकसंबन्धोऽपि तत्रैव तदानीं नास्तीति वक्तव्यम्, अन्यथा केवलगगनस्यैवावच्छिन्नस्यापि तस्यैकत्वान्न पक्ष्यादीनां युगपत्तत्र भावाभावौ स्याताम्, तथा च न स एव दृष्टान्तोऽस्त्वित्याशङ्कावकाशो यतस्तदधिकरणेऽपि केन चिदवच्छिन्नत्वमिष्यत एवेत्याह । सोऽवच्छेद इति । तत्राप्युपाध्यन्तरावच्छिन्न एव नभसि तौ स्तो न केवल इति । परिहरति । तत्रान्वेष्य इति । अवच्छिन्नभावोऽवच्छेदकान्तरेणावच्छिन्नत्वमित्यर्थः । तत्र प्रभावयवानां बहुत्वात्तत्तदवयवावच्छिन्नेऽवच्छेदान्तरभावान्नोक्तदोष इत्याशयः । एवं तत्तदवच्छेदाधिकरणगगनमन्यावच्छिन्नमेवेत्याशयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ङ्कापूर्वकमाह । सोऽवच्छेद इति ॥ १५३ ॥

नन्वेवं स्याद् दुर्निवारानवस्था
बाढं का नो हानिरिष्टैव सापि ॥
कर्मोद्भूतं नः शरीरं शरीरात्
कर्मोद्भूतिस्तत्र किं नेष्यते सा ॥ १५४ ॥

नन्वेवमनवस्था दुर्निवारा स्यादित्याशङ्क्य तत्र मायावादिनां सा नानिष्टा प्रकारान्तरेणानुपपन्नस्यापि प्रतीतिमात्रेणानिर्वचनीयशुक्तिरजतादिवत्तदङ्गीकारादित्याशयेनाह । नन्वेवमिति । साऽनवस्था । किं च वर्तमानं देवदत्तशरीरं तदीयकर्मोद्भवं तद्विना प्राणिनां विचित्रशरीरानुपपत्तेः, तच्च प्राक्तनदेवदत्तशरीरादुत्पन्नं शरीरं विना कर्मासंभवात्तदपि शरीरं तत्पूर्वस्मात्कर्मणस्तदपि तत्पूर्वस्माच्छरीरादिति यथा कर्मशरीरानन्तप्रवाहोऽनादिरभ्युपगम्यते , एवमत्रापीत्याशयेनाह। कर्मोद्भूतमिति। अत्रच्छेदकपररूपराभ्युपगमोऽपि न दोषायेत्येतावन्मात्रेऽयं दृष्टान्तोऽतः संसारस्यादादित्वाद् दृष्टान्ते प्रवाह उपपद्यते नात्रावच्छेदप्रवाहोऽनादिरितिदूषणं यत्किंचिदनिर्वचनीयवादे तदभावादिति । वस्तुतस्तु परमतेऽपि संयोगाधिकरणतावच्छेदकस्य सर्वस्याप्यव्याप्यवृत्तित्वादयं दोषः समान इति नास्मान्प्रत्युद्भावनीय इति द्रष्टव्यम् ॥ १५४ ॥

किं चाज्ञानं ब्रह्मणोऽस्यास्ति नास्ती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्येतत्कस्मात्त्वं विजानासि हेतोः ॥
मूढोऽस्मीति प्रत्ययादस्ति बुद्धि-
र्मुक्ते दाहान्मोहनास्तित्वबुद्धिः ॥ १५५ ॥

एवमसंभवेन तृतीयं पक्षं दूषयित्वा प्रमाणाभावादपि तं दूषयति । किं चेति । अस्य प्रागुक्तनिरंशचैतन्यात्मनः । कस्माद्विजानासीति । पूर्वोक्तयुक्त्या न कुतोऽपि ज्ञातुं शक्यत इत्यर्थः । पूर्वपक्षी शङ्कते । मूढोऽस्मीति । अस्मदादीनामज्ञानस्येति शेषः । अस्तिबुद्धिः । अस्तितावुद्धिरित्यर्थः । मुक्ते नित्यमुक्ते ब्रह्मणि दाहादभावान्मुक्तेऽज्ञाननास्तिता ॥ १५५ ॥

मुक्तेऽज्ञानं दग्धमित्येतदेवं
कस्माद्धेतोर्वेत्सि तत् कथ्यतां नः ॥
मिथ्याज्ञानात् स्वप्रकाशात्प्रमाणा-
न्मुक्तेऽज्ञानं दग्धमित्यस्य सिद्धिः ॥ १५६ ॥

ज्ञानोपायं प्रश्नपूर्वकं पूर्वद्विकल्पयति । मुक्तेऽज्ञानमिति । दग्धमितीति । नास्तीत्यर्थः ॥ १५६ ॥

सम्यग्ज्ञानान्मुक्तिसिद्धिर्यदीष्टा
नूनं मुक्तः कुड्यवत्ते जडः स्यात् ॥
मिथ्याज्ञानान्मुक्तसिद्धिर्यदीष्टा
स्रग्सर्पादिप्रख्य एवैष मुक्तः ॥ १५७ ॥
मुक्तो मह्यं स्वप्रकाशश्चकास्ती-
त्येषा वाणी स्वानुभूत्या विरुद्धा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नह्यश्रुत्वा शास्त्रमेतन् मनुष्यः
कश्चिज्जानात्येष मुक्तः शुकादिः ॥ १५८ ॥

कल्पत्रयमपि पूर्ववद् दूषयति । सम्यग्ज्ञानादित्यादिना द्वयेन । स्वानुभूतिविरोधमेव व्यतिरेकमुखेन प्रपञ्चयति । न हीति । शास्त्रं शुकादिमुक्तिप्रतिपादकं शास्त्रम्, मुक्त इत्यनन्तरमितिशब्दो द्रष्टव्यः, शुकवामदेवादिर्मुक्त इत्येतन्न हि जानातीत्यर्थः ॥ १५८ ॥

ताटस्थ्येनोपाधिमादाय मोह-
श्चैतन्येऽस्मिन् स्वप्रकाशे प्रविष्टः ॥
तेनेह स्याद्बन्धमोक्षव्यवस्थे-
त्युक्तं यत्प्राग्दूषणं तस्य विद्धि ॥ १५९ ॥

नन्वन्तःकरणोपाध्यवच्छिन्ने अज्ञानमिति चतुर्थपक्षमनूद्य तत्र प्रागुक्तं दूषणमतिदिशति । ताटस्थ्येनेति । तेनेति । उपाधिनेत्यर्थः । इह अस्मिन्मते, व्यवस्थेत्यन्तं पूर्वपक्षानुवादः । उक्तमित्यादि तस्यापि पक्षस्य पूर्वोक्तविकल्पदूषणयोरासञ्जनम् ॥ १५९ ॥

ताटस्थ्येनोपाधिरङ्गं यदि स्यान्
मोहाविष्टे ब्रह्मणि स्वप्रकाशे ॥
अग्निक्षेपस्योल्मुकं तद्वदेतं
मोहस्य स्यान्न प्रदेशस्थितत्वम् ॥ १६० ॥

किं चान्तःकरणवच्छिन्नमात्रवृत्तित्वेऽज्ञानस्यात्यन्तं परिच्छिन्नस्य न वियदादिभूतभौतिकप्रपञ्चोपादानत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभवतीत्यस्योपलक्षणतयाऽन्यत्रापि तत्सत्त्व उपाधेस्त-
दधिकरणतानवच्छेदकत्वाद्धानर्थक्यं नन्वन्तः करणम-
ज्ञानस्य तत्र प्रवेशे द्वारतयाऽऽश्रीयते, न त्वधिकरण-
तावच्छेदकतया यथाग्नेर्गृहप्रवेश उल्मुकं द्वारमित्या-
शङ्क्य तर्हि तद्द्वारा प्रविष्टमज्ञानम् अग्निरिव गृह-
मात्रं पूर्णं ब्रह्म व्याप्नुयादिति न तदभावस्तत्र स्या-
दित्याशयेनाशङ्कानुवादपूर्वकं व्यतिरेकमुखेनाह। ता-
टस्थ्येनेति। आविष्टे आवेशे। यद्वदित्यन्तं शङ्कानुवादः
एवमित्यादि दूषणम्। एवमग्निवदित्यर्थः। न प्रदेशस्थि-
तत्वम्। तथा च ब्रह्मणि न त्वदुक्तस्तदभाव इत्यर्थः ॥१६०॥

अग्निः क्षिप्तो ह्युल्मुकेन प्रदेश-
मात्रव्याप्तिं वर्जयित्वा समस्तम्॥
वेश्म व्याप्नोत्येवमेवेह कृत्स्नं
ब्रह्म व्याप्नोत्याधिनास्तं तमोऽपि॥ १६१॥

उक्तमेव सदृष्टान्तं दार्ष्टान्तिकं विशदयति। अग्निः
क्षिप्त इति। इहाऽस्मिन्पक्षे, आधिनोपाधिना द्वारेणा-
ऽस्तं क्षिप्तं प्रविष्टमिति यावत्॥ १६१॥

तस्माद् ब्रह्माविद्यया जीवभावं
प्राप्यासित्वा तावके तु स्वरूपे॥
त्वच्चित्तेन स्पन्दितं जीवजात-
माकाशादि क्ष्मावसानं च पश्येत्॥ १६२॥

तस्मादुक्तपक्षाणां दुष्टत्वान्मुक्तामुक्तेत्यादिनोदि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बन्धमोक्षव्यवस्था स्वप्नवदित्याशयेनोपसंहरति । तस्माद्ब्रह्मेति । तावके स्वरूपे आसित्वेति त्वत्स्वरूपेण स्थित्वेत्यर्थः । शेषं स्पष्टम् ॥ १६२ ॥

स्वीयाविद्याकल्पिताचार्यवेद-
न्यायादिभ्यो जायते तस्य विद्या ॥
विद्याजन्मध्वस्तमोहस्य तस्य
स्वीये रूपेऽवस्थितिः स्वप्रकाशे ॥ १६३ ॥

नन्वस्म्यहमेव मदविद्यया जीवः कथं तर्हि मम जीवभावान्निवृत्तिः सा हि ब्रह्मविद्यया विना न भवति तमेव विदित्वेत्यादिश्रुतेः, सा च गुर्वाद्युपायं विना न संभवत्याचार्यवान्पुरुषो वेदेति श्रुतेः, तत्कथं मदन्यजीवाभावे ब्रह्मविद्या मन्मुक्तिर्वेति प्रागुक्तविस्मरणशीलं प्रति तदेव स्मारयति । स्वीयाविद्येति । प्रत्यगाश्रयविषयाऽविद्येत्यर्थः । न्यायो ब्रह्ममीमांसा, तस्य संसारिब्रह्मणः । उक्तं पुरस्तादेकाज्ञानप्रतिबिम्बजीवैकत्वेऽपि तत्कार्यानन्तान्तःकरणावच्छिन्नस्य तस्यानन्तप्रमात्रादिभाव इति तत्र यदन्तःकरणावच्छिन्ने श्रवणमननादिसंपत्त्या निश्चयरूपापि ब्रह्मविद्याऽपरोक्षा भवति स गुरुः अत एवानन्तान्तःकरणावच्छिन्नानां युगपत्स्वस्वगुरोर्विद्याप्तये पृथग् यत्न उपपद्यते, न चैतावता जीवभेद आयाति, अविद्याप्रतिबिम्बस्यैकस्यैव जीवस्य तत्तदुपाधिना युगपत्क्रमेण वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदुद्देशेन प्रवृत्तेः संभवाद्गुरुरपि स्वोपाधौ ब्रह्मापरो-
क्षाभावात्तदर्थं श्रेयांसमधिकारिणं प्राप्योपदिशतीति
त्वमेव त्वदविद्याकल्पिताचार्याद्विद्यां प्राप्स्यसीति न
किं चिदवद्यम् । एवं वेदान्तादिरपि त्वदविद्याकल्पि-
तोऽस्तीति ततोऽविद्योत्पत्तिरुपपद्यत इति भावः। एक-
जीववादे विद्यासमर्थनफलमाह। विद्याजन्मेति। जा-
तविद्ययेत्यर्थः । स्वीये रूपे स्वस्वरूपे। यद्यन्तः करणमे-
कमेव तत्र च ज्ञानाज्ञानव्यवस्था स्वप्न इवेति मतं तदु-
क्तविधया तद्विलक्षणज्ञानाज्ञानव्यस्थोपपत्तेरसाधु स्व-
स्मिन्नज्ञानानुभवविरोधेन स्वस्यैकस्य जीवत्वं जानतः
परस्मिन्नात्मसाक्षात्कारादिकल्पनासंभवात्कल्पितस्या-
पि विदुषः स्थाणुपुरुषवदुपदेशासंभवाच्चेति भावः॥५६॥

अज्ञानि ब्रह्म जीवो भवति भवति च स्पष्टमज्ञानमस्य
प्रागस्पष्टं सदन्तःकरणनिपतितज्योतिराभासयोगात्।
चैतन्यैकप्रतिष्ठं स्फुरति न हि तमस्तादृशं यादृशं तदु
बुद्धिस्थाभासनिष्ठं स्फुरति तदुचितं जीवमौढ्याभिधानम्॥

ननु स्वीयाविद्या स्वीये रूपेऽवस्थितिः स्वप्रकाश
इति च स्वप्रकाशे सर्वज्ञे नित्यमुक्ते ब्रह्मण्यज्ञानविष-
यत्वमाश्रयत्वं चोक्तमनुपपन्नं स्वप्रकाशादिस्वभावे त-
स्मिंस्तदयोगात्, किं चाहमज्ञ इति जीवस्यैवाज्ञत्वानु-
भवात्तदाश्रयत्वं युक्तम्, भाष्यकारादिभिस्तत्रतत्राधि-
करणादौ जीवाज्ञानाभिधानाच्च तदयुक्तमित्याशङ्क्याह

अज्ञानीति। स्वप्रकाशादिस्वभावं ब्रह्म स्वविषयाज्ञानाश्रयस्तत्र प्रतिबिम्बितं जीवो भवति न तु जीवो भूत्वा, अज्ञान्यहङ्कारस्याज्ञानकार्यतया तदवच्छिन्ने जीवे तदाश्रयविषयत्वासंभवस्याश्रयत्वविषयत्वभागिनीत्यत्र प्रथमाध्याय उक्तत्वात्, अहमिति तस्य स्पष्टप्रतीतेश्च नाज्ञानविषयत्वम्, अज्ञानावच्छिन्ने तु तदुपरिष्टान्निराकरिष्यति, ततः परिशेषाद्ब्रह्मैव तदाश्रयो विषयश्च। किं च न तावत्प्रकाशत्वेन ब्रह्मणस्तदुभयासम्भवः। जीवस्याप्यविकृतब्रह्मस्वभावतया तदभपायात्। न च प्रकाशमानस्य स्वविषयाप्रकाशाश्रयत्वं विरुद्धं परमते प्रमेयत्वादिना प्रकाशमानेऽपि घटत्वादिना तदज्ञानवत्प्रकृतेऽप्यविरोधात्फलबलकल्पनस्य तदविरोधित्वस्य चैतन्ये सम्भवात्। अत एव जीवस्तदाश्रय एव ब्रह्मैव तु तदन्यत्तद्विषय इति निरस्तम्। स्वप्रकाशस्य तदाश्रयत्वायोगे तस्य तदयोगात्। नापि सर्वज्ञतया तस्याज्ञत्वानुपपत्तिः। न ह्यावृतस्वरूपतारूपमज्ञत्वं सर्वज्ञस्याङ्गीक्रियतेऽस्माभिः, जीवं प्रति तु ब्रह्मावरकमज्ञानं तत्र न विरुध्यते, उपपादयिष्यति चैतत्, नापि नित्यमुक्ते तदनुपपत्तिः, कल्पितस्य तस्य रज्जुसर्पादेरिव वस्तुनः स्वाश्रयासंस्पर्शित्वेन तस्य नित्यमुक्तत्वाविरोधात्, तस्माद् ब्रह्मैवाज्ञानाश्रयो विषयश्चेति। कथं तर्ह्यहमज्ञ इति प्रतीतेर्गतिरिति चेत्तत्राह। भवतीति।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चोऽवधारणे, अस्य जीवस्यैव प्रागन्तःकरणाध्यासा-
त् पूर्वं सुषुप्त्यादावस्पष्टं प्रकाशमानं सज्जाग्रदादाव-
न्तःकरणे निपतितं प्रतिबिम्बितं यज्ज्योतिश्चैतन्यं
तस्य तद्रूपाभासयोगात् स्पष्टं भवति जागृदादावहमज्ञ
इति तदनुभवात् सुषुप्ते च तस्मिन् सत्यपि तथाऽनुभ-
वाभावेनान्वयव्यतिरेकाभ्यां चिन्मात्राश्रयाज्ञानव्यञ्ज-
कत्वेन तदनाश्रयत्वेऽप्यहङ्कारस्य ज्ञाने तथानुभवोपप-
त्तेरिति तद्बलात्तस्य तदाश्रयत्वसिद्धिरिति भावः। तद्धी-
ज्ञाते प्रकारान्तरेणानुभवासम्भवेन कथं तस्य ब्रह्माश्र-
यत्वसिद्धिरित्याशङ्क्यासिद्धो हेतुः सुषुप्तेऽपि भानादि-
त्याशयेनाह । चैतन्यैकेति । चैतन्यैकस्मिन्स्थितमि-
त्यर्थः । तदज्ञानं बुद्धिप्रतिबिम्बितचैतन्यनिष्ठं सद्
यथा स्फुरति तादृशं चैतन्यैकप्रतिष्ठं न हि स्फुरति
किन्तु प्रकारान्तरेणेति न तत्र प्रमाणाभावः । स्पष्ट-
ज्ञानानुरोधेनैव भाष्यकारादेर्जीवाज्ञानाभिधानमपि
युक्तमित्याशयेनाह । तदुचितमिति ॥ १६४ ॥

अज्ञानं जड़शक्तिमात्रवपुषा जीवाद्बहिः सिध्यति
जीवारूढमहं न जान इति तु ज्ञानापनोद्यात्मना ।
संसिद्धिं प्रतिपद्यते तदुचितं जीवाज्ञताभाषितं
द्वैरूप्ये सति रूपमेकमनिशं भात्येवमन्यन्न हि ॥१६५॥

यादृशं तादृशमित्युक्तमेव विशदयञ्जीवमौढ्याभि-
धानाशयं विवृणोति । अज्ञानमिति । जड़रूपा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तिर्ब्रह्मपरतन्त्रा माया तन्मात्रस्वरूपेणेत्यर्थः । अ-हिरहङ्कारानवच्छिन्नचैतन्यात्मनि ब्रह्मणि, जीवारूढं जीवाश्रितम् । जीवाश्रितस्य तस्याहं न जान इत्यनुभव-विषयत्वे युक्तितया तद्विषयमाह । ज्ञानापनोद्यात्मने-ति । न जान इत्यज्ञानं ज्ञाननिवर्त्यत्वयोग्यस्वरूपेण भाति तस्मिन् ज्ञानविरोधित्वस्य तत्रैव पर्यवसानात् । तच्च ज्ञानमनुभवितृनिष्ठमेव वक्तव्यं परज्ञाननिवर्त्ये तस्मिन् परस्य तथाननुभवादत एव ब्रह्मणि तस्य न तथानुभवः सम्भवति किं तु जडशक्तिमात्ररूपेणेति तत्र तथैव सा सिध्यति जीवे तु जीवगतज्ञाननिवर्त्यत्वेन ज्ञानापनोद्यात्मना संसिद्धिं प्रतिपद्यते ज्ञातं भवति ततश्च भाष्यकारादेर्जीवाज्ञताभापितमुचितमिति भावः । नन्वेवं जडशक्तित्वेनापि जीवे तत् किमिति न भायात्त-त्राह । द्वैरूप्य इति । आज्ञनस्योक्तप्रकारेण द्विरूपत्वे सत्येकं ज्ञानापनोद्यस्वरूपं तदपि नित्यसिद्धसाक्षि-णैव भातीत्याशयेनाह । अनिशमिति । भाति जीव इ-ति शेषः । अन्यज्जडशक्तित्वरूपम् ॥ १६५ ॥

जडशक्तिमात्रवपुषा गगन-
श्वसनादिकार्यजननी भवति ॥
पुरुषोत्तमस्य वशवर्तितया
प्रकृतिः परस्य जगदेकगुरोः ॥ १६६ ॥

अन्यत्र हीत्यत्र हेतुतया ब्रह्मण्येव तथा तदनुभवो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युक्त इत्याशयेनाह । जडशक्तिमात्रेति । अज्ञानं हि जडशक्तिमायास्वरूपेण गगनादिप्रपञ्चस्य जननी भवति । न चैवं पराभिमतप्रधानसाम्यं तस्येत्याह । पुरुषोत्तमस्येति । देवात्मशक्तिं स्वगुणैर्निगूढामिति परमात्मशक्तितया प्रस्तुताया मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति श्रुत्या मायात्वेनेश्वराश्रितत्वेन च दर्शितत्वेन न सा सांख्यीयप्रकृतितुल्येश्वराश्रिता च प्रकृतिः सा भवतीति जगत्कारणे ब्रह्मण्येव सा तथा भातुं युक्तेति भावः ॥ १६६ ॥

इयमेव सर्वजननी प्रकृति-
र्वशिनी शरीरिणमिमं पुरुषम् ॥
अधिरुह्य जीवमहमज्ञ इति
स्फुरणैकगोचरवपुः स्फुरति ॥ १६७ ॥

तर्हि जीवगतज्ञानापनेद्यमज्ञानमुक्तवैलक्षण्यात्ततोऽन्यदेवास्त्वित्याशङ्क्य नानालक्षणत्वस्यैकस्मिन्नपि संभवात्तद्विरोधस्य चासम्प्रतिपत्तेरित्यभिप्रेत्य वक्ष्यमाणं तदभेदानुमानं हृदि कृत्वाऽऽह । इयमिति । प्रस्तुतेत्यर्थः । वशिनी स्ववशं कुर्वाणा, अधिरुह्याऽऽश्रित्य, जीवस्य जगत्प्रकृतितयाऽज्ञानं तत्र जडशक्तिरूपेण न भातुमर्हतीत्याशयेनाह । अहमज्ञ इति । स्फुरणैकगोचरं वपुर्यथा स्यात्तथा स्फुरतीत्यर्थः ॥ १६७ ॥

चितिशक्तिवाधितवपुः परमं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुषं प्रति स्फुरति सा प्रकृतिः ॥
चितिशक्तिबाधकवपुः पुरुषं
पुरवर्तिनं प्रति पुनः स्फुरति ॥ १६८ ॥

जीवगतज्ञाननिवर्त्यत्वादज्ञानस्याहमज्ञ इति जीवे तद्भाति न त्वीश्वर इत्युक्तं तत्रोपपत्त्यन्तरमाह । चितिशक्तीति । अज्ञानं हि यं प्रति वस्तुस्वरूपमावृणोति तेनैव नाहं जानामीत्यनुभूयते परमेश्वरं प्रति च तद्वस्तु नावृणोति यतः परमं नित्यसर्वज्ञं परमात्मानं प्रति तस्य स्वाभाविकचिच्छक्त्या स्वरूपचैतन्येन बाधितवपुः स्फुरति तेन तुच्छतया दृश्यते अतस्तं प्रति तत्स्वरूपं नावृणोतीत्यर्थः । जीवं प्रति तु नैवमित्याह । चितिशक्तिबाधकेति । पुरवर्तिनं स्थूलसूक्ष्मशरीरावच्छिन्नम् । माययाऽपहृतज्ञाना इति स्मृतेनं जानामीत्यनुभवाच्चैतत्तं प्रति स्वरूपावरकतया स्फुरतीत्यर्थः ॥१६८॥

दृश्यत्वजाड्यपरतन्त्रचिदाश्रयत्वै-
र्मायेश्वरस्य तमआत्मतयानुमेया ॥
स्वप्नप्रपञ्चरजतभ्रमलिङ्गदेह-
दिक्चन्द्रविभ्रममरीचिजलोपमानैः ॥ १६९ ॥

इयमेव सर्वजननीति श्लोकेन सूचितं मायाऽविद्याभेदानुमानमाह । दृश्यत्वेति । चैतन्यभास्यत्वेत्यर्थः । जाड्येति । अस्वप्रकाशेत्यर्थः । पारतन्त्र्यं स्वातिरिक्तचेतनाधीनव्यापारवत्त्वम्, ईश्वरस्येति स्वरूपकीर्तनम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लौकिकमायाविगतस्य मायात्वेन प्रसिद्धमन्त्रादेर्व्यव-च्छेदार्थं वा, माया न तमसो भिद्यते दृश्यत्वादित्यत्र स्वप्नप्रपञ्चादिवत्स्वप्नप्रपञ्चादेर्न वस्तुतोऽज्ञानाद्भेद इति न साध्यवैकल्यम्। मायायाश्चाकार्यतया वस्तुतस्तद्भे-दाभावे तदात्मत्वमेव सिध्यतीत्याशयः। लिङ्गदेहस्य भ्रान्तित्वप्रसिद्ध्यभावाद्दृष्टान्तत्वानुपपत्तेस्तस्य तत्प-ङ्क्तिपाठोऽनास्थया मायाऽविद्याभेदवादिनाध्यात्मि-कलिङ्गस्याविद्यामयत्वस्वीकाराद्वा व्याप्तिग्रहाङ्गभूय-साहचर्यदर्शनप्रदर्शनायानेकदृष्टान्तोपादानम्। एवं च वियदादिकमज्ञानकार्यमिति सिध्यतीति भावः॥ १६९॥

एकाज्ञानविकल्पितं सकलमेवाकाशपूर्वं जगद्
बाध्यत्वादिह यद्यदीदृशमदस्तादृग् मतं स्वप्नवत्।
बाध्यं चेदमभीप्सितं भवति वस्तस्मादिदं तादृशं
शुद्धं धूमवदेव साधनमिदं तत्पाञ्चरूप्यान्वयात्॥१७०॥

इदानीं मायाकार्यत्वेन प्रसिद्धवियदादिपक्षकमपि हेत्वन्तरेण तदभेदानुमानमाह। एकाज्ञानेति। ईदृशं बाध्यम्, अदस्तत्तादृक्। एकाज्ञानविकल्पितमिदमा-काशादि वो युष्माकमप्यौपनिषदानाम्। निगमय-ति। तस्मादिति। न चात्रास्यासिद्धत्वादिदोषशङ्का का-र्येत्याशयेनाह। शुद्धमिति। निर्दुष्टत्वे धूमवदिति नि-दर्शनम्। शुद्धत्वे हेतुमाह। तत्पाञ्चरूप्येति। तस्य प्र-पञ्चस्य स्वप्नादेश्च नेह नानेत्यादिश्रुत्याविना बाधित

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वाद्विपक्ष आत्मनि बाधितत्वाभावाच्चास्यानुमानस्यास्ति पाञ्चरूप्यम्, साधनस्य पक्षधर्मत्वादिपाञ्चरूप्यं तेनास्य साधनस्यान्वयात् । अतोऽसिद्धयादिहेत्वाभासराहित्यादिदमनुमानं शुद्धमित्यर्थः । वियदादिकमेकाज्ञानकार्यं बाध्यत्वात् संमतवत् ततश्च तत्कारणत्वेन प्रसिद्धा मायाऽज्ञानमेव सिध्यतीत्याशयः । एकपदं च स्वरूपकीर्त्तनम्, नानाज्ञानेनाऽर्थान्तरतानिवृत्तये च ॥ १७० ॥

अनुमानमागमविरुद्धमिदं
प्रतिवादिनो यदि मतं तदसत् ॥
न तमोऽतिरिच्य जगतो जनक-
प्रतिपादिकं वचनमस्ति यतः ॥ १७१ ॥

ननु तदैक्षत बहु स्यामित्यादिश्रुतिर्ब्रह्मणः कारणत्वं प्रतिपादयति न चैकस्य त्रिलक्षणानेकापादानत्वं संभवतीत्यज्ञानस्य वियदादिकारणत्वाद्यनुमानं श्रुतिविरुद्धमित्याशङ्कामनूद्य निराकरोति । अनुमानमिति । प्रतिवादिनो ब्रह्मपरिणामप्रपञ्चवादिनो माया सत्येतिवादिनश्चेत्यर्थः । अथ वा मायाऽज्ञानशब्दयोरपर्यायत्वात्तदर्थयोर्भेद इति मायां तु प्रकृतिमित्यादिश्रुतिविरुद्धमिदमनुमानमित्याशङ्काभिप्रायः । तत्कुतो न सदित्यत आह । न तम इति । असङ्गस्य ब्रह्मणः कूटस्थस्य साक्षाज्जगत्परिणामायोगादिन्द्रो मायाभिरित्यादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतेश्च विवर्त्तमानाविद्याधिष्ठानमेव तदित्यविद्यायास्तावदुपादानत्वं न श्रुतिविरुद्धम्। एवंभूयश्चान्ते विश्वमायानिवृत्तिरिति मायाया अपि ज्ञाननिवर्त्यत्वश्रवणेनाज्ञानाभेद एव। पर्यायशब्दभेदास्तु एकस्मिन्नपि प्रवृत्तिनिमित्तभेदादुपपद्यन्त इति नागमविरुद्धानुमानमिति भावः ॥ १७१ ॥

विषयकरणदोषाच्च भ्रमः संविदि स्यादपि तु भवति मोहात् केवलादेवमेव ॥
भगवति परमात्मन्यद्वितीये समस्तद्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ १७२ ॥

ननु प्रपञ्चस्याज्ञानकार्यत्वे शुक्तिरजतादितुल्यतया तत्समसामग्रीजन्यत्वं वाच्यम्, न च तत्सम्भवतीत्याशङ्क्येहापि तदस्तीत्याशयेन प्रागुक्तं भ्रमकारणं सदृष्टान्तं स्मारयति। विषयेति। प्रागेवोक्तार्थः ॥ १७२ ॥

अज्ञानिनो भवति दुःखमनेन क्लृप्तं सर्वेश्वरस्य न खलु प्रतिभासतोऽपि ॥
सर्वज्ञतादिगुणजातममुष्य नास्य संसारिणः स्फुरति मोहसमन्वितस्य ॥ १७३ ॥

ननु ब्रह्मण एवाज्ञानाश्रयत्वे कथं दुःखादिसंसारस्य सर्वज्ञत्वादेश्चाविद्याकार्यस्य लोकवेदयोर्व्यवस्थाप्रसिद्धिरविद्याकार्याणां तदाश्रयत्वस्य वैकल्पिकत्वाश्चित्त्वादित्याशङ्क्याह। अज्ञानिन इति। नित्यमुक्तनिरति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शयानन्दस्वस्वरूपस्फुरणशून्यस्य जीवस्येत्यर्थः । अनेनाज्ञानेन प्रतिभासतोऽपि तद्‌ दुःखं न खल्विति सम्बन्धः । अपिशब्देन प्रमाणान्तरमनूद्य निरस्तं सूचितम् । सर्वज्ञनादीत्यादिशब्देन सर्वकारणत्वादि विवक्षितम् । अमुष्येश्वरस्य सर्वज्ञतादीति सम्बन्धः । जीवस्य सर्वज्ञत्वाद्यभावे हेतुतया तं विशिनष्टि । मोहसमन्वितस्येति । एकाज्ञानकार्यमेकस्मिन्नेव युक्तमिति सत्यम् । संसारिनित्यमुक्तयोरप्येकचैतन्यमात्रत्वेन प्रकृतेऽपि तत्सत्त्वात् परं तु दुःखित्वादिकं भ्रमसिद्धमधिष्ठानविशेषस्फुरणशून्ये प्रतिबिम्बात्मना जीवभावमापन्ने तस्मिन्युज्यते सर्वज्ञत्वादि तु श्रुत्यादिबलादनावृतस्वरूपे बिम्बब्रह्मण्येव युक्तमित्युपपत्तितोऽनुभवादितश्च तद्व्यवस्थास्मिन् मतेऽपि न विरुध्यत इति भावः ॥ १७३ ॥

जीवन्मुक्तिगतो यदाह भगवान् सत्संप्रदायप्रभु-
र्जीवाज्ञानवचस्तदीदृगुचितं पूर्वापराऽऽलोचनात् ॥
अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचना-
च्चेतव्यं परिहृत्य मण्डनवचस्तद्वन्यथा प्रस्थितम् ॥ ३७४ ॥

एवं भाष्यकारादीनां जीवाज्ञतावचनस्य स्वमतेनाशयं वर्णितमुपसंहरति । जीवन्मुक्तिगत इति । नित्यमुक्त इत्यर्थः । अन्यत्रापि भाष्ये । कथं तर्हि मण्डनमिश्रादयो जीवस्याज्ञानाश्रयत्वमभिदधुरित्याशङ्क्य तद्दु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतान्तरं भाष्यकारीयमतं तन्नेत्याह । परिहृत्येति । म-
ण्डनवचो नोक्ताशयेन वर्णनीयमित्यर्थः । तत्र हेतुस्त-
द्धीति । अन्यथा उक्तवैलक्षण्येन ॥ १७४ ॥

जीवस्य कार्यकरणाधिपतेरविद्या-
दोषान्वितस्य तमसावृतमन्ददृष्टेः ॥
ज्ञानं निरावरणमैश्वरमित्यपीदं
भाष्याक्षरं कथितनीतिवशे न योज्यम् ॥ १७५ ॥

अन्यत्रापीत्युक्तं भाष्यकारोक्तमेव दर्शयति । जीवस्ये-
ति । कार्यं स्थूलशरीरं करणं लिङ्गशरीरं तदधिपतेस्तद-
वच्छिन्नस्येत्यर्थः । अत्र हेतुतया जीवं विशिनष्टि । दो-
षेति । पूर्वपूर्वभ्रमकार्यसंसारवासनाख्यदोषान्वितस्य ।
तत्रापि हेतुस्तमसेति । अज्ञानावृताद्वैतस्वरूपचैतन्यस्ये-
त्यर्थः । ज्ञानं नित्यमुक्तस्वरूपस्फुरणं निरावरणमावरण-
शून्यम् , ऐश्वरमिति कल्पितभेदाभिप्रायम् , ज्ञानातिरि-
क्तेश्वराभावात् , भाष्याक्षरमक्षरब्राह्मणे भाष्यकारेणो-
क्तमविद्याविशिष्टः कार्यकरणोपाधिरात्मा जीव उच्यते
नित्यनिरतिशयज्ञानशक्त्युपाधिरात्मान्तर्यामीश्वर उच्य-
ते तथाऽन्यत्र गीताभाष्येऽपि त्वं न जानीषे धर्माधर्म-
प्रतिबद्धज्ञानशक्तित्वात् , अहं तु नित्यशुद्धबुद्धमुक्तस्व-
भावत्वादनावरणज्ञानशक्तित्वाद्वेदेत्यादि । नीतिवशे
नाहमज्ञ इत्यनुभवादिवशेनेत्यर्थः ॥ १७५ ॥

स्पष्टं तमःस्फुरणमत्र न तत्र तद्वत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेश्वरे तदिति तत्र निषिध्यते तत् ॥
बिम्बे तमोनिपतिते प्रतिबिम्बके वा
देहद्वयावरणवर्जितचित्स्वरूपे ॥ १७६ ॥

नीतिमेव विशदयति । स्पष्टमिति । तमःस्फुरणमित्येकं पदम्, अत्र जीवे, तत्र सर्वेश्वरे, तत्तमःस्फुरणं तद्वज्जीवत्रह्मेति तत्तत्र निषिध्यत इति सम्बन्धः । एकात्मवादे जीवेश्वरविभागासम्भवादत्र तत्रेति कथमित्याशङ्क्य तत्प्रकारमाह । बिम्ब इति । उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सत्यौपाधिकपरिच्छेदराहित्यम् बिम्बत्वम्, तद्विशिष्ट इत्यर्थः । प्रतिबिम्बपरिच्छिन्नादिव्यावृत्तये विशेषणानि, अर्थात् प्रतिबिम्बत्वविशिष्टचैतन्यं जीव इत्युक्तं भवति । ईश्वरे मतान्तरमाह । तमोनिपतित इति । अज्ञानान्वयिनि प्रतिबिम्बके स्वार्थे कः । उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदवत्त्वे सत्युपाधिपरिच्छिन्नत्वं प्रतिबिम्बत्वम्, अत्र अत्र चाज्ञानमात्रप्रतिबिम्बत्वमीश्वरत्वं विवक्षितम्, अहङ्कारतादात्म्यापन्नाज्ञानप्रतिबिम्बत्वं च जीवत्वमिति द्रष्टव्यम् । ईश्वरे तमो न स्पष्टमित्यत्र हेतुनया पक्षद्वयेऽपि साधारणमीश्वरस्वरूपमाह । देहद्वयेति । स्थूलसूक्ष्मदेहद्वयलक्षणं यदावरणमवच्छेदकं तद्विवर्जितं तदभिमानरहितं यच्चित्स्वरूपं तस्मिन्नित्यर्थः । ईश्वरस्यानहङ्कारतयाऽहमज्ञ इत्यादि स्पष्टं तदनुभवो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेत्याचार्याणां तत्र तन्निषेध इति भावः ॥ १७६ ॥

किंचिज्ज्ञताऽस्य तमसावृतनित्यदृष्टेः
सर्वज्ञता पुनरमुष्य परस्य पुंसः ॥
अज्ञानतज्जकरणादिविवर्जितत्वा-
दित्येतदेवमुपपन्नतरं हि भाष्यम् ॥ १७७ ॥

अत एव भाष्यकारादेर्जीवेश्वरयोः किंचिज्ज्ञतासर्वज्ञतावचनमप्यज्ञानावृतस्वस्वरूपत्वतदभावपरं न तु किंचिज्ज्ञत्वसर्वज्ञत्वमूलतया जीवेश्वरयोस्तयोरज्ञानतदभावपरमित्याशयेनाह। किंचिज्ज्ञतेति। अस्य जीवस्य। तमसेत्यहङ्कारादेरुपलक्षणमिति कृत्वैतदेवंरूपार्थप्रतिपादकं भाष्यमिति सम्बन्धः ॥ १७७ ॥

अज्ञोऽहमित्यवगतिर्न परस्य पुंसः
सर्वज्ञतावगतिरात्मनि नास्य पुंसः ॥
अत्रापि कारणमहङ्कृतिवर्जितत्वं
तद्वत्ता च परमेऽल्पतरे च पुंसि ॥ १७८ ॥

अज्ञानतज्जकरणराहित्यमीश्वरस्य, किंचिज्ज्ञता च जीवस्योक्ता तयोस्तद्विपरीततामनुभवेन द्रढयति। अज्ञोऽहमिति। आत्मनि स्वस्मिन्। अत्रोक्तानुभवाभावे, तद्वत्ता तत्तादात्म्यमिति यावत्। अल्पतरे परिच्छिन्ने जीव इति यावत् ॥

बिम्बस्य नापि तमसि प्रतिबिम्बकस्य
संघट्टनं क्व चिदहङ्करणेन शक्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्तुं प्रभोः सकललोकहितावतार-
स्वेच्छाविनिर्मितवपुर्वरमन्तरेण ॥ १७१ ॥

ननु श्रीकृष्णरघुनाथादेः श्रुतीतिहासपुराणप्रामाण्येनेश्वरत्वं वक्तव्यं तस्य चाहङ्कारयोगात् कथमीशस्याहङ्कारवर्जितत्वमित्याशङ्क्यासिद्धो हेतुरित्याशयेनाह। बिम्बस्येति। अनेनेश्वरविषयं प्रागुक्तं पक्षद्वयं दर्शितम्। क्वचित्कस्मिन्नपि पक्षे, अहङ्कारो ह्यहमिहैवेत्यनुभवात् परिच्छिन्न एव वाच्य इति न सर्वात्मकेश्वरे तत्सम्भवः। न चेश्वरस्याहङ्कारो व्यापकोऽस्त्विति वाच्यम्। तत्र प्रमाणाभावाच्छरीरयोगस्य शुद्धसत्त्वमाययाऽहङ्कारस्येव तेन विनोपपत्तेर्न तस्याहङ्कारगमकत्वम्। न च स्वस्वरूपावरणरहितस्य परिच्छिन्नाहङ्काराभिमानः सम्भवति, न वा दुःखादिधर्मिणोऽहङ्कारस्येश्वरे सम्भवोऽस्ति, प्रसिद्धाहङ्कारविलक्षणस्याहङ्कारत्वासम्भवाच्च। अहमात्मा गुडाकेशेत्यादौ चाहंशब्दस्य शुद्धात्मनि लक्षणा, एवं सति मुख्यया वृत्त्या नेश्वरस्याहङ्कारसम्बन्धः सम्भवतीति भावः। बिम्बस्य तमसि प्रतिबिम्बस्य वा प्रभोः क्वचिदप्यहङ्कारेण सङ्ग्रहनं वक्तुं न शक्यमिमि सम्बन्धः। ननु कथमेवं सति तस्य शरीरयोगोऽपि तस्याहङ्कारधर्मकर्मायत्त्वादित्याशङ्क्याह। सकलेति। कंसादेरसुरस्य रावणादेर्वा राक्षसस्य वधेन सकललोकहितार्थं योऽवतारस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यैव विवरणं स्वेच्छेति । वपुर्वरं श्रेष्ठं वपुः । ईश्वरस्य हि शरीरं न भोगार्थं येन तत्कर्मार्जितं स्यादिति तदभावे न भवेत् किं तु ब्रह्मादीनां प्रार्थनयाऽमुक्कुले प्रादुर्भविष्यामीति या तस्येच्छा तद्विनिर्मितमेव तस्य वपुःश्रेष्ठं न त्वस्मदादिशरीरवत् कर्मायत्तमिति नोक्तदोषः । अत्र स्वेच्छेत्यनेन शरीरपरिग्रहे स्वातन्त्र्यं सूचयति । अत एव प्रभोरित्युक्तम्, स्वीयानां स्वभक्तानामिच्छया वेत्यर्थः । अव्यक्तब्रह्मानुशीलनं ह्यतिदुष्करमिति स्वभक्तवाञ्छापूरणायाशरीरस्यापि भगवतस्तद्भजनं माययोपपन्नमिति भावः ॥ १७९ ॥

नाहङ्कृतिं च परिहृत्य तमस्विताधीः
सम्भाव्यतेऽपहतपाप्मनि नित्यमुक्ते ॥
तामन्तरेण घटते न च मूढभाव-
सम्भावनाऽपि परमेशितरि प्रसन्ने ॥ १८० ॥

एवं प्रमाणाभावादनुपपत्तेश्चेश्वरस्य नाहङ्कृतियोग इत्युक्तमिदानीं तदभावेऽननुभूयमानमपि तस्य स्वरूपावरकमज्ञानं किंचऽऽत्सिध्येन्न वा तदन्यत्वादुगज्ञानकार्यं तस्मिन्नस्तीत्याशयेनाह । नाहमिति । चकारेण कार्यान्तराभावं सूचयति । तत्र हेतुरपहतेत्यादि । तमस्वितावुद्धभावे फलितमाह । तामिति । अहमङ्कृतिः तामिस्वताधियमित्यर्थः । मूढभाव आवृतस्वरूपत्वम्, तत्संभावनापीत्यर्थः । मानाभावे मेयासिद्धेरि

त्याशयः । नाहङ्कृतिमित्यनेन द्योतितमर्थं विशदय-
ति । प्रसन्न इति । अनवच्छिन्नतया प्रकाशमान इ-
त्यर्थः ॥ १८० ॥

स्वेच्छाविनिर्मितवपुर्भजतोऽपि तस्य
नाज्ञानिताविगतिरस्ति वशित्वहेतोः ॥
वश्यत्वहेतुकमिदं स्फुरणं नराणां
नाहं विजान इति नास्ति तदीश्वरस्य ॥१८१॥

नन्वीश्वरस्यापि शरीराभ्युपगमेऽज्ञत्वमवश्यं वाच्यं
शरीरित्वस्याज्ञत्वव्याप्तत्वादन्यथा मुक्तेऽपि तत्प्रसङ्गा-
दिति चेत् । सत्यम् । अस्त्येवेश्वरेऽपि जगन्निदानमज्ञा-
नं तथापि न तस्याज्ञत्वमित्युक्तम् मुक्ते तु तदपि ना
स्तीति विशेषः । तत्र च निमित्तं सर्वज्ञतया तद्वशि-
त्वम् जीवस्तु विपरीततया तद्वश्य इत्येकमेवात्मतत्त्वं
तदभिभावकं तदभिभूतं चेत्याशयेनाह । स्वेच्छेति ।
वशित्वहेतोः, अज्ञानं प्रतीति शेषः । मायानियन्तृत्वा-
दिति भावः । वश्यत्वं तदावृतस्वरूपतया तत्परतन्त्र-
त्वम् । इदंशब्दार्थनाह । नाहंविजान इतीति । नन्व-
ज्ञानाश्रयत्वे तस्य तद्वश्यत्वमेव स्यादित्याशङ्क्य मा-
यिनो महेश्वरत्वश्रुतेर्नेशस्य तदस्तीत्याह । नास्तीति ।
तद्वश्यत्वम् ॥ १८१ ॥

सङ्कल्पपूर्वकमभूद्रघुनन्दनस्य
नाहं विजान इति कं चन कालमेतत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं
तच्चोत्ससर्ज स कृते सति देवकार्ये ॥ १८२ ॥

नन्वेवं सति रघुनाथादेः कथमज्ञत्वादि पुराणप्रसिद्धमुपपद्येतेत्याशङ्क्य तस्मिन्नेव पुराणे तस्य निरवग्रहैश्वर्यश्रवणात्तस्य सर्वज्ञत्वेऽपि स्वीकृतमनुष्यनटनां प्रदर्शयितुं विपश्चिणां गतिं च स्वेच्छयैवाहं कं चित्कालं न विजान इति सङ्कल्पपूर्वकमज्ञत्वाभिनयः सीतापहारादिनिमित्तशोकादिप्रकटनं चेत्याशयेनाह । सङ्कल्पेति । नन्वेवं सति तस्य ब्रह्मोपदेशाद्यनर्थकम्, न हि सर्वज्ञ उपदेशोऽर्थवानित्याशङ्क्य , सोऽपि तस्य स्वेच्छास्वीकृतमनुष्यव्यापार इत्याशयेनाह । ब्रह्मेति । देवकार्ये देवादिहितार्थप्रतिज्ञातरावणादिवधे कार्ये । तच्चोत्ससर्जेत्यज्ञानविसर्जने स्वातन्त्र्यं दर्शयन् प्राकृतस्येवाज्ञतानटनमेवेति दर्शितम् । १८२ ॥

अज्ञानवर्जिततया परमेश्वरोऽसौ
सर्वज्ञ एव यदहङ्कृतिबन्धहीनः ॥
ज्ञानं निरावरणमिष्टममुष्य यस्मा-
ज्जीवस्य सावरणमेव यतोऽनभिज्ञः ॥ १८३ ॥

अज्ञानादिकमीश्वरस्य नटनमित्यत्र हेतुतया रघुनाथादेः पारमेश्वरं स्वभावं दर्शयन् तदभावाज्जीवस्य तद्वैपरीत्यमाह । अज्ञानेति । स्पष्टम् ॥ १८३ ॥

सर्वप्रमाणफलभूतसमस्तसंवि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्जातं बिभर्ति परमः पुरुषो न जीवः ॥
ज्ञानं निरावरणमैश्वरमस्तु तस्मा-
ज्जैवं च सावरणमस्य विशेषहेतोः ॥ १८४ ॥

ईश्वरः सर्वज्ञ इत्यस्य सम्भावनां दर्शयन् तदभावाज्जीवोऽनभिज्ञ इत्याह । सर्वप्रमाणेति । सर्वेषां देवमनुष्यतिर्यगादिप्रमातॄणां चक्षुरादिसर्वप्रमाणाभिव्यक्ततया तत्फलभूतायाः समस्तप्रमेयजातस्य संविदः । तज्जातं तत्समूहम्, परमेश्वरो ह्यनन्तचिद्रूपत्वात् सर्वेषां सर्वप्रमाणाभिव्यक्तसर्वप्रमेयाद्यवच्छिन्नचित्स्वरूप इति तदीयं स्वरूपं निरावरणं भवेज्जीवस्तु परिच्छिन्नत्वान्नैवं तस्मात्तस्य स्वरूपज्ञानमावृतमेवातोऽज्ञानस्य चिन्मात्राश्रयस्य जीवेश्वरयोः सत्त्वेऽप्यस्माद्धेतोरीश्वरः सर्वज्ञो न जीव इति सम्भवतीत्यर्थः ॥ १८४ ॥

अज्ञानतज्जमखिलं जगदात्मभासा
नित्यं प्रकाशयति सन्निहितः सदात्मा ॥
जीवस्तु नैवमिति सावरणं तदीयं
ज्ञानं निरावरणमैश्वरमुच्यते हि ॥ १८५ ॥

किं च तस्य भासा सर्वमिदं विभातीतीश्वरस्य स्वत एव सर्वावभासकत्वं श्रूयते न चावृतमसत्कल्पं ज्ञानमर्थं प्रसाधयितुमर्हतीत्यतोऽनावृतस्वस्वरूप ईश्वरः सर्वज्ञ इत्यवश्यमभ्युपेयम्, जीवस्तु नैवमित्याशयेनाह । अज्ञानेति । नन्वनावृतोऽपि प्रकाशः प्रकाश्यासन्नि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हितो व्यवहितदीप इव तज्जं न प्रकाशयेदिति कुत-स्तस्य तावता सर्वज्ञतासिद्धिस्तत्राह । सन्निहित इति। सर्वप्रपञ्चाधिष्ठानतया तत्र सन्निहित इत्यर्थः । उक्त-रूपेण तस्य सन्निधाने हेतुतया तं विशिनष्टि । सदा-त्मेति । उक्तविभागप्रयोजनमाह । सावरणमिति। अनुभवसिद्धं तदावरणं न केन चित् प्रत्याख्येयमि-त्यर्थः ॥ १८५ ॥

ज्ञानात्मकस्यामलसत्त्वराशे-
रपेतदोषस्य सदा स्फुटस्य ॥
किं वा जगत्यत्र समस्तपुंसा-
मज्ञातमस्यास्ति हृदि स्थितस्य ॥ १८६ ॥

ईश्वरोऽनावृतस्वस्वरूपेण सर्वत्र सन्निहितत्वान्नित्य-सर्वज्ञ इत्यत्र विष्णुपुराणस्थं पद्यं पठति । ज्ञानात्म-कस्येति । अमलः सत्त्वराशिर्यस्य रजआद्यसंपृक्ताख-ण्डसत्त्वात्मकाज्ञाने प्रतिबिम्बितस्यात एवापेतो दोष आवरणादिर्यस्यात एव सदा स्फुटस्य नित्यापरोक्षस्य यत्साक्षादपरोक्षादिति श्रुतेः, अस्य श्रीकृष्णस्यार्थाद-नेन जीवस्तद्विपरीतरूप इति द्रष्टव्यम् ॥ १८६ ॥

मायामसौ वितनुते विभुरेवमेनां
सर्वेश्वरः सततमेव वशीकरोति ॥
इत्यादिवाक्यमुपपन्नतरं पुराणे
त्वज्ञानमस्य हि वशे विदधीत भावात् ॥१८७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वरस्य मायावशित्वं जीवस्य च तद्वश्यत्वमित्यत्रापि पौराणं पद्यमाह । मायामिति । वितनुते ब्रह्मादिष्विति शेषः, एनां मायाम् । नन्वेवं मायावशित्वमेवेश्वरस्य नाज्ञानवशित्वमिति कथं तावता तस्य तदनभिभव इत्याशङ्क्याह । स्वाज्ञानमिति । अज्ञानमाययोरभेदादज्ञानस्यापि तच्छक्तितया तदधीनत्वात्तद्वशित्वमेव तस्यानेन दर्शितमिति नोक्तदोष इति भावः ॥ १८७ ॥

जीवाज्ञतावचनमेवमिदं समस्तं
सर्वत्र योज्यमितरत्र च तन्निषेधः ॥
तस्मात् समञ्जसमिदं मतमस्मदीय-
माचार्यवाक्यमुपपन्नतरं हि तत्र ॥ १८८ ॥

ननु भाष्यकारादिभिस्तत्रतत्र जीवेऽज्ञत्वस्येश्वरे तन्निषेधस्यासकृदुच्यमानत्वादीश्वरे कथमज्ञानमित्याशङ्क्योक्तन्यायेन सर्वत्र तद्वचनानामुक्त एवार्थो द्रष्टव्य इत्यतिदिशति । जीवेति । इतरत्रेश्वरे तन्निषेधस्तस्याज्ञानस्य निषेधोऽप्येवं योज्य इति विपरिणतानुषङ्गः । यस्मादज्ञानस्य चिन्मात्राश्रयत्वे भाष्यकारस्य तत्रतत्र जीवाज्ञतावचनमविरुद्धं तस्मादिति फलितमुपसंहरति । हि यस्मात्तत्राज्ञानस्य चिन्मात्राश्रयत्वे ॥ १८८ ॥

चैतन्यमेव च तमास्व तदप्रबुद्धं
सर्वज्ञमेतदिह विश्वमिमं विभागम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवेश्वरौ च जगदित्यपि निर्मिमीत
इत्येव वेदशिरसः प्रथितः प्रचारः ॥ १८१ ॥

अस्मदीयमित्युक्त तत्स्वमतमेव दर्शयति। चैतन्यमिति। अखण्डचैतन्यमित्यर्थः। तमस्वि, अज्ञानाश्रयः। तत्, चैतन्यम्। एतत्तमस्वि चैतन्यम्। इहास्मिन् तमस्विनि चैतन्ये। विश्वं समस्तम्। तमेवाह। जीवेश्वराविति। न केवलमिदमस्मदिच्छया कल्पितं मतं किं तु समस्तवेदान्तसंमतमित्याशयेनाह। इत्येवमिति ॥ १८१ ॥

जीवेशानजगद्विभागजननी शक्तिर्जडा वैष्णवी
मायेशानगता सती भवति सा जीवावधिर्मोहगीः ॥
जीवानीश्वर एष मोहयति ते जीवा विमुह्यन्त्यतः
शश्वद्विश्वदृगीश्वरो भवति ते जीवा विमूढा मुहुः ॥१८२॥

ननु मायिनं तु महेश्वरम्, मम माया दुरत्ययेत्यादिश्रुतिस्मृतिभ्यामीश्वरस्य मायावित्वं प्रतीयते तत्कथं तमस्वित्वम्, मायाऽज्ञानयोरेकत्वं वा, उपपन्नं चैतत्, ईश्वरो हि जीवान् संसारेण योजयन् मोहयति व्यामोहकत्वं च मायाविन एव लोके दृष्टं न तत्त्वज्ञस्य, अज्ञस्तु व्यामुह्यत्येव, अत एवेश्वरस्य सर्वज्ञत्वं न विरुद्ध्यते जीवस्य चाज्ञत्वमित्याशङ्क्य जीवेशादिसमस्तभेदनिदानं वैष्णवी जडशक्तिर्ह्येकापीश्वराश्रया सती मायाशब्दवाच्या भवति सैव जीवावधिर्जी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाश्रया भूत्वा मोहोऽज्ञानमिति गीर्यस्याः साऽज्ञानशब्दवाच्या भवति तथैव वृद्धानां व्यवहारात्, प्रसाधयिष्यति च तदभेदं तृतीये, अत एवेश्वरस्य व्यामोहकत्वादिर्जीवस्य व्यामोहादिश्चोपपद्यत इत्याशयेनाह। जीवेशानेति ॥ १९० ॥

अज्ञानिनो भवति मोहविजृम्भितं तु
दुःखं जगज्जनकता परमेश्वरस्य ॥
मायामयी भवति तेन विलक्षणत्व-
मेकान्ततः श्रुतिशिरःसु तयोः प्रसिद्धम् ॥१९१॥

एवं वियदादेर्लोके मायिकत्वं जीवगतदुःखित्वादेः संसारस्याविद्यकत्वमिति वेदान्तनिष्णातानां प्रसिद्धिरप्युक्तविधया तदेकत्वेऽप्युपपन्नेत्याह। अज्ञानिन इति। जीवस्येति शेषः। नन्वखण्डब्रह्मण एव तमस्वित्वे यस्याज्ञानं तस्यैव संसार इति कुत उक्तविभागः सिध्येदिति चेत्। सत्यम्। तमस्व्येव ब्रह्म प्रागुक्तप्रतिबिम्बात्मना दुःखाश्रयो जीवो बिम्बात्मना तु जगज्जनकः परमेश्वर इति श्रुतिषु तद्वैलक्षण्यव्यवहार इत्याशयेनाह। तेनेति। तयोर्जीवेश्वरयोः श्रुतिशिरस्सु प्रसिद्धमेकान्ततो विलक्षणत्वं तेन चिन्मात्राश्रयाऽज्ञानेनोपपन्नमिति शेषः। एवमज्ञानस्य चिन्मात्राश्रयत्वमुपपन्नमिति भावः ॥ १९१ ॥

चैतन्यस्याज्ञानशक्तेरनादे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवत्वं तु व्यञ्जकं कल्पयन्तः ॥
जीवारूढं त्यक्तमज्ञानमाहु-
र्जीवो मूढः कथ्यतेऽतो बहुज्ञैः ॥ १९२॥

चिन्मात्राश्रयाज्ञानस्यापि न जानामीत्यनुभवानु-
रोधेन जीवं प्रत्येव नित्यमुक्तब्रह्मस्वरूपावरकत्वात्त-
स्यैव तन्नेश्वरस्येति भाष्यकारादेर्जीवाज्ञता वचनमी-
श्वरे च तन्निषेधवचनं तत्परमित्युक्तम्, इदानीं जी-
वत्वस्याज्ञानव्यञ्जकत्वादपि चिन्मात्रनिष्ठमपि तज्जी-
वगततया प्रतीयते, अनुभवानुरोधेन जीवत्वं हि त-
द्व्यञ्जकम्, यथा परेषामप्याश्रयद्रव्यमहत्त्वमजाते-
रप्युद्भूतरूपस्येत्याशयेनाह । चैतन्यस्येति । फलि-
तमाह । जीव इति । तस्मान्नित्यमुक्तात्मनो माया-
दिशब्दवाच्यानिर्वचनीयात्मशक्तिवशाज्जीवेश्वरादिवि-
भागोऽहङ्कारादिसंबन्धेन जीवे ईश्वरवैलक्षण्यं संसा-
र इत्युपपन्नमतः स्वस्वरूपब्रह्मसमन्वयस्य न केनापि
भेदग्राहकेण बाध इति भावः ॥ १९२ ॥

अत्रैव वस्तुनि दृढं व्यवतिष्ठमानः
प्रौढिप्रदर्शनपरः पुनरन्यदन्यत् ॥
भाषापदं किमपि निक्षिपति स्फुटं त-
दस्माभिरेवमुपपादितमञ्जसैव ॥ १९३ ॥

नन्वात्मनोऽविद्यानिमित्तो न संसारो येन सं-
रिणोऽप्यसंसारिब्रह्मैक्यं भवेत्, किं तु ब्रह्मपरिणाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या स वास्तव एव, न च तत्परिणामत्वासिद्धिः, वेदान्तहृदयवेदिना श्रीबादरायणेन भोक्त्रादिसूत्रे तथा दर्शितत्वात्, इत्याशङ्क्यानिर्वचनीयप्रपञ्चस्य व्यावहारिकतया स्वप्नादिवैषम्यमात्रेण तदभिधानं न तु वस्तुतत्त्वाशयेन, अन्यथोपरितनारम्भणाद्यधिकरणविरोधादित्याशयेनाह । अत्रैवेति । आत्मा सदाऽद्वयो मुक्तः । प्रपञ्चस्त्वनिर्वचनीय इत्यत्रैव वस्तुन्यर्थे, एतमेवार्थं प्रतिपद्यमान इत्यर्थः । प्रौढिप्रदर्शनपरोऽभ्युपगमवादी । अन्यदन्यदिति वीप्सया ब्रह्मणः परिणामित्वं जीवेश्वरयोर्भिन्नत्वमित्यादिसूत्रकारीयवचनं परामृशति । भाषापदमुक्तार्थविषयं तत्तत्सूत्रम् । ननु किमित्यस्याभ्युपगमवादत्वं तत्संमतत्वमेव कस्मान्न भवेदित्यत आह । स्फुटं तदिति । एवमित्यत्रैव वस्तुनीत्यनेनोक्तार्थपरम् । न च तदुपपादनं क्लेशेनेत्याह । अञ्जसैवेति । प्रत्युत परमत एव क्लेशः । आरम्भणाद्यधिकरणविरोधस्य तत्र दुष्परिहरत्वात्, लोकवदित्युक्तेरन्यथाप्युपपत्तेरिति भावः ॥ १९३ ॥

विस्पष्टमात्ममतमेव हि सर्वधर्म-
सूत्रेण सूत्रकृदिदं दृढमाचचक्षे ॥
सर्वज्ञतादिपरिपालनतत्परः सन्
तत्रैव भाष्यकृदपीदमुवाच यत्नात् ॥ १९४ ॥

किं च सर्वधर्मोपपत्तेरिति सूत्रेण जगत्कारणत्वत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्मूलसर्वज्ञत्वादिकारणधर्माणां ब्रह्मण्युपपत्तिं दर्शयन् सूत्रकारस्तस्य विवर्त्ताधिष्ठानत्वमेवाभिप्रैति, अन्यथा निरवयवे कूटस्थे निर्विकारे तस्मिन् कारणत्वादेरसंभवादित्याशयेनाह । विस्पष्टमिति । इदं प्रागस्माभिरुपपादितं विस्पष्टं प्रसिद्धमात्मनः स्वस्य मतमेव दृढं यथा स्यात्तथा आचचक्षे हीति संबन्धः । दार्ढ्यं चानन्यभावः । तदाशयमाह । सर्वज्ञतेति । यद्यपि सर्वज्ञत्वं सर्वशक्तित्वं च लोके कारणगततया न प्रसिद्धम् । तथापि कुलालादेरिव तदभिज्ञत्वादिमात्रं तस्मिन् सिध्यज्जगत्कारणस्य तस्य सर्वज्ञत्वादौ पर्यवस्यतीति तत्परिपालनायैवमुक्तवान् । तच्च मायां विनानुपपन्नमिति विवर्त्तवाद एव तत्संमत इति भावः । अत एव तत्सूत्रव्याख्याने भाष्यकारोऽपि सर्वज्ञं महाशक्ति महामायं ब्रह्मेत्यत्रोचदित्याह । तत्रैवेति ॥ १९४ ॥

अज्ञानित्वं ब्रह्मणो जीवता चे-
न्नाज्ञानित्वं तत्र जीवस्य युक्तम् ॥
अज्ञानित्वे चान्यदप्यभ्युपेत-
मज्ञानित्वं यद्यहो कष्टपिष्टिः ॥ १९५ ॥

एवं चिन्मात्राश्रयविषयमज्ञानं समस्तसंसारनिदानमिति स्वमतमुक्तम्, इदानीं तद् द्रढयन् जीवस्याज्ञानमिति मतं दूषयति । अज्ञानित्वमिति । ब्रह्मणो जीवभावो हि न स्वाभाविको युज्यते, तस्य ब्रह्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताप्रतिपादकश्रुतिविरोधात् । नाप्युपाध्यन्तरप्रयुक्तः सः, अद्वैतमते वास्तवोपाध्यन्तरासंभवात् । अतोऽज्ञानित्वमज्ञानावच्छिन्नत्वमेव ब्रह्मणो जीवभावो वाच्यः। ततः किं तत्राह । नाज्ञानित्वमिति । तत्र मते जीवस्याज्ञानित्वं न युक्तम्, कुतो न युक्तमिति चेत्, किं जीवभावप्रयोजकमज्ञानं तद्वृत्त्यज्ञानादन्यदुत तदेव । आद्यं प्रत्याह । अज्ञानित्व इति । ब्रह्मणोऽज्ञानावच्छिन्नत्वे तस्यापि जीववृत्तित्वे तदाश्रयावच्छेदकत्वेनाप्यज्ञानान्तरं वाच्यमेवं तस्यतस्यापीत्यनवस्था स्यादित्याशयेनाह । अहो इति । तस्यैव विवरणं कष्टपिष्टिरिति । शुद्धस्य ब्रह्मणोऽज्ञानाश्रयत्वमनुपपन्नमिति हि तस्य त्वया जीववृत्तित्वमिष्यते, अत्रापि सानुपपत्तिः कथं न स्यात् । अवच्छिन्नस्यापि जीवस्य शुद्धब्रह्मभावानपायादन्यथा मुक्तिशास्त्रायोगादतोऽनन्ताप्रामाणिकाप्रयोजनाज्ञानमालाऽभ्युपगमोऽतिक्लिष्ट इति भावः ॥ १९५ ॥

अज्ञानित्वं ब्रह्मणश्चानभीष्ट-
मस्मिन् पक्षे दुर्निवारं प्रसक्तम् ॥
अज्ञानित्वं ब्रह्मणश्चेदभीष्ट-
मस्मत्पक्षस्त्यज्यते कस्य हेतोः ॥ १९६ ॥

अतस्तदज्ञानं शुद्धब्रह्माश्रयमिति त्वदनिष्टमप्यभ्युपेयमिति तेनैवालं किं तदवच्छिन्नवृत्तिनाज्ञानान्तरेण,



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं त्वन्मतासिद्धिप्रसङ्गश्चेत्याह । आज्ञानित्वमिति।
अस्मिन्नज्ञानावच्छिन्नेऽज्ञानमित्यत्र । अनभीष्टम्, जी-
वाज्ञानवादिन इति शेषः । कस्य हेतोरित्यनेन शुद्धब्र-
ह्माश्रयादज्ञानादन्येन किं प्रयोजनं साधनीयमिति सू-
चितम् ॥ १९६ ॥

शुद्धत्वार्थं ब्रह्मणस्त्यज्यते चे-
दस्मत्पक्षेऽप्यस्ति शुद्धत्वमस्य ॥
अस्मत्पक्षे शुद्धता वास्तवी चेद्
युष्मत्पक्षे कल्पिता शुद्धता किम् ॥ १९७ ॥

कस्य हेतोरित्यस्य प्रश्नार्थत्वं मत्वा शङ्कते । शु-
द्धत्वार्थमिति । ब्रह्मण्यध्यासेऽपि तस्य तदधिष्ठानब्र-
ह्मणः शुद्धिर्नापैति लोके रजताद्यध्यासाधिष्ठानस्य त-
त्कालेऽपि तत्स्वभावाप्रच्युतिदर्शनादित्याशयेन सि-
द्धान्त्याह । अस्मत्पक्ष इति । ननु ब्रह्माज्ञानवादे त-
त्कल्पिताऽशुद्धेः सत्त्वात्तत्र वास्तव्येव तदभावरूपा
शुद्धिर्वाच्येति न सर्वप्रकारशुद्धिस्तस्य सिध्यतीति श-
ङ्कते । अस्मत्पक्ष इति । सिद्धान्तपक्ष इत्यर्थः । सर्वप्र-
पञ्चाधिष्ठानस्य कल्पिताऽशुद्धेर्निराकर्त्तुमशक्यत्वात् त्व-
त्पक्षेऽपि तादृश्येव तस्य शुद्धिर्वक्तव्येति काक्वाह । यु-
ष्मत्पक्ष इति ॥ १९७ ॥

कष्टःकष्टः कल्पितो ब्रह्मवादः
श्रेयोमार्गाद् भ्रश्यतो भ्रान्तबुद्धेः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यक्तव्यस्ते सज्जनैरस्मदीयः
श्रेयोमार्गः श्रेयसे चाभ्युपेयः ॥ १९८ ॥

जीववत्त्यैवाज्ञानं स्वाश्रयजीवावच्छेदकमितिकल्पनिराकरणाशयेन प्रकृतनिराकरणमुपसंहरति । कष्ट इति । वीप्सयात्यन्तानुपपन्नत्वं सूचयति, स्वोत्प्रेक्षितत्वं कल्पितत्वं ब्रह्मवादस्य । ब्रह्माश्रिताज्ञानानङ्गीकारे संसारस्य नाविद्यकत्वं सिध्यतीति न मोक्षः स्यादित्याशयेनाह । श्रेयोमार्गादिति । अत एव जीवाज्ञानबुद्धिर्भ्रान्तिरेवेत्याह । भ्रान्तेति । फलितमाह । त्यक्तव्य इति । ननु तत्रापि बहूनां वेदान्तव्याख्यातॄणामङ्गीकारो दृश्यत इत्याशङ्क्याभिनिवेशमूलस्तेषां सः, न विवेकमूल इत्याशयेनाह । सज्जनैरिति । अनभिनिविष्टैर्विवेकिभिरित्यर्थः । ब्रह्मव्यावृत्तरूपेण जीवस्य त्वयाऽज्ञानाश्रयत्वमभ्युपेयत इति तद्व्यावृत्तेरज्ञानात् प्रागसत्त्वं वाच्यम् । अन्यथा तस्याज्ञानाश्रयताप्रयोजकताऽयोगात् । सा चाविद्याधीनसत्ताकेति कथं परस्पराधीनसत्त्वयोस्तयोर्नेतरेतराश्रयत्वदोषः, उत्पत्ताविवेतरेतराश्रयत्वस्य दोषत्वमप्युत्पद्यमानसत्ताद्वारेणैवेति न ततोऽस्य विशेषः । एवं च शुद्धाश्रयत्वं जीवाश्रयत्वं चेत्यनुपपन्नद्वयं परपक्षे स्याज्जीवस्यापि शुद्धब्रह्मस्वभावत्वादिति द्वितीयपरिहाराय तदेव वस्तुतो विचारासहमपि विवेकिभिरभ्युपेयमिति भावः ॥ १९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकोपाधावस्तिता नास्तिता च
मूढत्वस्य स्वीकृता चेत् परस्मिन् ॥
व्योम्न्येकस्मिन्नस्तिता नास्तिता च
पक्ष्यादीनां यद्वदिष्टा तथैव ॥ १९९ ॥

ननु यदि ब्रह्मण्यज्ञानमुपपादितं तर्हि तदेवानवच्छिन्नं संसरतु किमवच्छिन्नजीवकल्पनया। न च बद्धत्वादेर्नित्यमुक्तत्वादेश्च प्रयोजकतया जीवब्रह्मविभागो वाच्य इति वाच्यम् । अविद्याश्रयस्यापि तदभाववत्त्वेन तद्विभागश्रुत्युपपत्तेः । न चैकत्रैकस्य युगपद्भावाभावानुपपत्तिरिति वाच्यम् । एकस्मिन्नपि व्योम्नि पक्ष्यादीनां युगपद्भावाभावदर्शनादित्याशङ्कते। एकोपाधाविति । तथैव मूढत्वस्य परस्मिन्नेकोपाधाविति संबन्धः ॥ १९९ ॥

नैतत् सारं सत्त्वमिष्टं यदि स्या-
दस्तित्वादेरिष्टहानिः प्रसक्ता ॥
एकोपाधावस्तिता नास्तिता च
स्यादित्येवं स्वीकृतेऽस्मिन् हि पक्षे ॥ २०० ॥

यद्यविद्यादीनां मिथ्यात्वप्रयोजको वास्तवोऽभावस्त्वास्तीत्युच्येत तर्हि काममस्तु, तदवच्छिन्नस्य, नित्यमुक्तत्वादिव्यवहारालम्बनत्वे बद्धमुक्तयोः परस्परविरहोपाधिद्वयावच्छिन्नतयाऽन्योन्यं व्यावृत्तिर्वाच्या तन्न च बिम्बप्रतिबिम्बपक्ष एव श्रेयान् । अनवच्छिन्न-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेव संसरत्विति तदा त्वदुक्तिविरोधश्च, अथाविद्यादिस-मानसत्ताकस्तदभावस्तत्रास्तीत्युच्येत तत्र तयोर्विरोधे-नान्यतराभावप्रसङ्गादित्याशयेनाह । नैतत् सारमिति। इष्टहानिरिति । अनवच्छिन्नमेव संसरत्वित्यादेर्हानि-रित्यर्थः । दूषणान्तरं वक्तुं तत्पक्षमनुवदति । एकोपा-धाविति ॥ २०० ॥

धूमे सत्ता स्यादसत्ता च तस्मिन्
धूमस्यैवं कारणं कल्प्यते किम् ॥
कादाचित्कं कारणं नान्तरेण
स्यादित्येवं तस्य क्लृप्तिः कुतो वः ॥ २०१ ॥

दूषणमाह । धूम इति । सत्ता पर्वतादिवृत्तित्वम् । तस्मिन् धूमादौ । अस्मिन् पक्षे धूमादेरपि युगपत्प-र्वतादौ भावाभावौ स्यातामित्यर्थः । गगने पक्षिण इ-व साप्यस्त्वित्याशङ्क्य दृष्टान्तासंमतिं मत्वा प्रकृते दू-षणमाह । धूमस्येति । एवमिति । एवं सतीत्यर्थः । कारणकल्पनामेव सप्रकारां दर्शयंस्तदाक्षेपमुपपादय-ति । कादाचित्कमिति । कार्यमित्यर्थः । तस्य कार-णस्य । कुतो न कुतोऽपीत्यर्थः । धूमकालेऽपि तत्र त-दभावसत्त्वे धूमाभावनिश्चयदशायामिव तत्कालेऽपि धूमादिसत्ताप्रयोजकवह्न्यादिसत्ता न कल्प्येत कल्प-कामावस्य निश्चितत्वादिति न धूमादिना वह्न्याद्यनुमा-नं परस्य सिध्येदिति भावः ॥ २०१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कादाचित्कात् कल्पनां कारणस्य
प्रत्याचक्षीताविरोधं ब्रुवाणः ॥
एकोपाधावस्तिनास्तित्वयोर्हि
तस्मादेषा कष्टक्लृप्तिर्न कार्या ॥ २०२ ॥

नन्वभावे सत्यपि धूमादिनिश्चयात्तत्कारणं कथं न कल्प्येतेत्याशङ्क्य गगने पक्ष्यादेरिव धूमादेरपि तदाश्रये भावस्य त्वन्मते तदा निश्चितत्वेन तत्प्रतिबन्धाव तदा तत्कल्पना युक्तेत्याशयेनाह । कादाचित्कादिति । कार्यादित्यर्थः । अस्तिनास्तित्वयोरेकोपाधावविरोधं ब्रुवाणः कादाचित्कादिति सम्बन्धः । तस्मादेष पक्षोऽप्रामाणिक इत्युपसंहरति तस्मादिति ॥ २०२ ॥

ननु चैव रूपचितिवस्तुगतं
स्फुरणं तदस्फुरणमेव च वः ॥
अविरुद्धमभ्युपगतं द्वितयं
तदिवास्तिनास्तियुगलं भवतु ॥ २०३ ॥

ननु भवन्मते चैतन्यं स्फुरदपि तन्मात्राद्वयायानन्दस्वरूपेण न स्फुरतीत्यभ्युपगतं तथाऽविवादेयुगपदेकत्र भावाभावावविरुद्धाविति दृष्टान्तमात्रमवलम्ब्य शङ्कते । ननु चेति । स्फुरणास्फुरणयो रूपभेदे ऐकस्मिन्नपि यौगपद्यमविरुद्धमिति शङ्कामपनुदति । एकरूपेति । तदस्फुरणं चेति द्वितयं वो युष्माभिरविरुद्धमभ्युपगतमेवेति योजना । दार्ष्टान्तिकमाह । तदि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेति । तद्वदित्यर्थः, अविद्यादेरिति शेषः ॥ २०३ ॥

न तदात्मनः स्फुरणमेव निजं
परतोऽप्रकाशनमबोधवशात् ॥
न च किं चिदन्यदनयोरुभयो-
रविरोधसिद्धिकृदुदाहरणम् ॥ २०४ ॥

नैतत्सारम्, चैतन्ये हि स्फुरणं स्वाभाविकमस्फुरणमविद्याकृतमारोपितं न तु निजम्, स्वाभाविकारोपितयोश्च न विरोधः तथा सत्यारोपमात्रस्यैव विलोपप्रसङ्गात्, समानसत्ताकभावाभावयोस्तु नैव लोके नियमेन तयोर्विरोधस्य दर्शनादित्याशयेन सिद्धान्ती दूषयति । न तदिति । परत इत्यस्य विवरणमबोधेति। अतस्तद्दृष्टान्तो विषम इति भावः । नन्वेवमपि यथा संयोगादेरेकस्मिन्नेव सत्त्वासत्त्वं तद्वदिदमप्यस्त्वित्याशङ्क्य प्रतीत्यनुरोधेन तयोरपि भिन्नप्रदेशवृत्तित्वमेव, न च गगनेऽनवच्छिन्नात्मनि वा स्वतः प्रदेशभेदोऽस्तीति न तद्दृष्टान्तबलादपि त्वन्मतसिद्धिरित्याशयेनाह । न चेति ॥ २०४ ॥

स्फुरणास्फुरणे च नात्मनः
सदसद्भावतया मनीषिते ॥
स्फुरणं चितिरात्मवस्तुन-
स्तदविद्याऽस्फुरणं च कथ्यते ॥ २०५ ॥

ननु न स्फुरतीति नञा स्फुरणाभाव एव प्रतीयते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स चाविद्यानिमित्तश्चेदस्तु नाम न चैतावतैकस्य युगपद्भावाभावौ परिहर्त्तुं शक्येते इति दृष्टान्तसमर्थनं पूर्ववादिन आशङ्क्याह। स्फुरणेति। सदसद्भावतया भावाभावतया मनीषिते इष्टे अङ्गीकृते इति यावत्। कीदृशे तर्हि ते इत्याकाङ्क्षायामाह। स्फुरणमिति। तस्याऽऽत्मनोऽविद्याऽऽत्मविषयाऽविद्येत्यर्थः। तथा च विद्याविरोधित्वाद्भावरूपमप्यस्फुरणं नेक्षेतेत्यादावीक्षणविरोधिसंकल्पादिर्नञाऽभिधीयत इति न तद्भावरूपं न वा स्वरूपस्याभावः सम्भवतीति दृष्टान्तासिद्धिरेवेति भावः॥ २०५॥

अज्ञानित्वं जीवभावो न तस्मा-
ज्जीवत्वादेः कारणं युक्तमेतत्॥
प्राणोपाधेर्वाचको जीवशब्द-
श्चैतन्यस्य स्यात् प्रसिद्धो हि तत्र॥ २०६॥

अतो नाज्ञानित्वमेव जीवत्वं येनाज्ञानाश्रयानवच्छिन्नमेव ब्रह्म जीवः स्यात्, किं त्वविद्यायां प्रागुक्तचित्प्रतिबिम्ब एव, तत्र च जीवत्वेनान्यदप्यज्ञानमुपाधितया प्रयोजकमित्याशयेनोपसंहरति। अज्ञानित्वमिति। आदिपदेनेश्वरत्वादि गृह्यते। ननु सुषुप्त्यादावपि चैतन्ये प्रतिबिम्बत्वस्य सत्त्वात् कथं न तदा जीवव्यवहार इत्याशङ्क्य लिङ्गशरीरोपाधिर्हि जीवव्यवहारालम्बनं तस्य च सुषुप्त्यादावभावान्न तदा स्वव्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परस्य वा जीवव्यवहार इत्याशयेनाह । प्राणोपाधेरिति । तत्र सकलमहाजनप्रसिद्धिं जीव प्राणधारण इति शाब्दप्रसिद्धिं चाभिप्रेत्याह । प्रसिद्ध इति । तत्र प्राणोपाधिचैतन्ये जीवशब्द इत्यनुषङ्गः ॥ २०६ ॥

अज्ञानजन्यकरणप्रतिबिम्बवाचि
जीवाभिधानमिह वृद्धजनप्रसिद्धम् ॥
तत्रैव निर्वचनमस्ति च तस्य तस्मा-
ज्जीवो भवेत् करणपूगवशीकृता चित् ॥ २०७

प्रसिद्ध इत्येतदेव विवृणोति । अज्ञानेति । करणमन्तःकरणादि । तत्राज्ञानादिप्रतिबिम्बे, निर्वचनं धातुकारादेर्जीवशब्दार्थकथनम् ॥ २०७ ॥

ब्रह्मैवाज्ञानि तस्मादिह भवितुमलं नापरं वस्तु किं चित्
तस्याज्ञानात्मकत्वान्न च तमसि तमस्तन्निवृत्तेरयोगात् ॥
नाज्ञानोत्थस्य विद्याजनिरिह घटते तां विना तन्न नश्ये-
न्न ह्यज्ञानं विनश्येदवगतिजनकज्ञानजन्मान्तरेण २०८

तस्मादज्ञानातिरिक्तजडस्य सर्वस्याज्ञानकार्यतया तदात्मत्वाज्जीवस्याप्युक्तविधया तथात्वात् परिशेषाद्ब्रह्मैवाज्ञानाश्रय इत्याह । ब्रह्मेति । तस्मादित्यादौ योजनीयम् । इह वेदान्तसिद्धान्ते, प्रपञ्चस्याज्ञानकार्यत्वेन तदात्मत्वान्न तदाश्रयत्वमात्माश्रयादिप्रसङ्गादित्यर्थः । किं च तस्य जडाश्रयत्वे तत्तदावरणमेव वाच्यम् । लोके तमसः स्वाश्रयमात्रावरकत्वदर्शनात्, न च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्युज्यते स्वत एवाप्रकाशे तस्मिन्नविद्यावरणवैयर्थ्या-
दित्याशयेनाह । न च तमसि तम इति । किं च तदा
तन्निवृत्तिरपि न भवेत् स्वसमानाश्रयविद्यानिवर्त्या
सा वाच्या, अन्यथाऽतिप्रसङ्गात्, नच जड़स्य प्रकाशरू-
पा विद्या संभवतीत्याशयेनाह । तन्निवृत्तेरिति । अ-
योगे हेतुमाह । नेति । तर्हि क्रिययैवोपासनया तन्नि-
वृत्तिरस्त्वित्याशङ्क्याह । तां विनेति । तदज्ञानम् । शु-
क्तिकादेर्ह्यज्ञानं शुक्तिज्ञानादेव नश्यतीत्यन्वयव्यतिरे-
काभ्यां सिद्धम् । एवं चात्माज्ञानस्यापि तद्वत् स्ववि-
षयज्ञानेन नाश्यत्वमेवोचितमिति तेन विना तन्न न-
श्येदित्याह । न ह्यज्ञानमिति । अवगतिर्विषयाभिव्य-
क्तिस्तज्जनकं यदन्तःकरणवृत्तिरूपं ज्ञानं तस्य जन्म
विनेत्यर्थः ॥ २०८ ॥

अज्ञानात्मकवस्तु नाश्रयतयाऽज्ञानस्य संभाव्यते
नाज्ञानात्मकताबहिष्कृतमिदं जीवत्वमङ्गीकृतम् ॥
नाज्ञानाश्रयमध्यपाति घटते जीवत्वमेतेन व-
श्चैतन्याश्रयमेतदस्तु घटते तत्रैव हीदं तमः ॥ २०९ ॥

ननु तर्हि जीवत्वं वस्तुभूतमेवास्तु बाधकाभावात्,
तथा सति तद्विशिष्टस्य जीवस्याज्ञानाश्रयत्वादि संभ-
वतीत्याशङ्क्योक्तानुवादेनोक्तहेतोरसिद्धिमभिप्रेत्याह ।
अज्ञानात्मकेति। नाङ्गीकृतमिति संबन्धः । तत्त्वमस्यादि-
श्रुतिबाधाज्जीवत्वं वस्त्विति नाङ्गीकर्तुं युक्तमित्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलितमाह । नाज्ञानेति । आश्रयमध्यपातीति । जीवत्वविशिष्टस्याश्रयत्वे तदप्याश्रयकोटौ प्रविशतीत्येवमुक्तम् । अतः परिशेषाच्चैतन्यमेव तदाश्रय इत्युपसंहरति । एतेनेति । उक्तोपपादनेनेत्यर्थः । वः वोऽपि । उक्तोपपादनमेव स्मारयति । घटत इति ॥ २०९ ॥

ननु चाद्वयाश्रयतमः स्फुरणं
न कथं चिदत्र न हि तत्स्फुरति ॥
स्फुरदाश्रयस्य तमसः स्फुरणं
घटते न चाद्वयमिह स्फुरति ॥ २१० ॥

नन्वखण्डचैतन्यस्याद्वयब्रह्मात्मनो नाज्ञानस्याश्रयत्वं न वा विषयत्वं संभवति तथा सत्यज्ञानस्यैव ज्ञानायोगात्, न चाद्वयाश्रयविषयतया तमः स्फुरति जीवाश्रयत्वेन तत्स्फुरणादिति शङ्कते । नन्विति । आश्रयेति विषयस्याप्युपलक्षणम्, न कथं चित् संभवति तथा सति न घटत इत्यनुषङ्गः । अज्ञानस्याद्वयाश्रयत्वेन स्फुरणं न युज्यत इत्यर्थः । न केवलं तद्योगोऽपि तु स्वरूपतोऽपि तन्नास्तीत्याह । अत्रेति । अद्वयात्मनीत्यर्थः । अद्वयाश्रयविषयतमःस्फुरणं च न घटत इत्यत्र युक्तिमाह । स्फुरदिति । आश्रये विषये च स्फुरति खलु तस्येच्छादिवत् स्फुरणं वाच्यं न चाऽद्वयवस्त्वविक्षादशायां स्फुरतीति न तत्तदाश्रयमित्यर्थः ॥ २१० ॥

नाज्ञानमद्वयसमाश्रयमेवमिष्टं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाद्वैतवस्तुविषयं निशितेक्षणानाम् ॥
नानन्दनित्यविषयाश्रयमिष्टमेतत्
प्रत्यक्त्वमात्रविषयाश्रयतानुभूतेः ॥ २११ ॥

यद्यपि वस्तुतोऽद्वयमेव चैतन्यमज्ञानाश्रयो विषयश्चाज्ञानकार्यभेदविरोधिस्वरूपस्यैव तदाश्रयविषयत्वस्य वक्तव्यत्वात्, तथापि तेन रूपेण न तत्तदाश्रयो न वा विषयः, तथा तदप्रतीतेर्द्वैताभावात्मतया तस्य तदुभयात्मत्वायोगाच्च, किं तु वस्तुतोऽद्वयं प्रत्यक्चैतन्यात्मना तदाश्रयो विषयश्चेति न किंचिद्विरुध्यते, प्रथमानस्यैवाप्रथमानानन्दाद्यात्मना प्रकाशविषयत्वेन साश्रयविषयतत्स्फुरणोपपत्तेरित्याशयेनाह । नाज्ञानमिति । तर्हि किं भावरूपानन्दाद्याश्रयविषयं तदित्याशङ्क्य तदपि नोक्तदूषणानपायादित्याशयेन चैतन्यमात्रस्य तदाश्रयविषयत्वानुभूतेरित्याह । नानन्देति । एतदज्ञानम् । अनुभूतेः, मामहं न जानामीत्यनुभूतेरित्यर्थः ॥ २११ ॥

प्रत्यक्त्वमात्रविषयाश्रयमोहहेतोः
प्रत्यक् तिरोहितमिति प्रतिपादयामः ॥
प्रत्यञ्चमेव खलु वेद्मि न वेद्मि चेति ॥
प्रत्यक्षमस्ति ननु वेदनमस्य पुंसः ॥ २१२ ॥

प्रत्यक्त्वमात्रेत्याद्युक्तमनूद्योपपादयति । प्रत्यक्त्वमात्रेति । मोहहेतोः, मोहाद्धेतोरित्यर्थः । नन्वयमनुवाद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवानुपपन्नः सविषये हि ज्ञानादावाश्रयविषयभेदो दृष्टस्तत्कथं तदाश्रयप्रतीच एव तद्विषयत्वमित्याशङ्क्याह। प्रत्यक् तिरोहितमिति। ज्ञातुः स्वात्मनि वृत्तिविरोधादस्तु ज्ञातृज्ञेयभेदः, नैवमत्र बाधोऽस्तीति लाघवेन तदुभयैक्यं युक्तमिति भावः। तत्रोक्तानुभवमपि प्रमाणयति। प्रत्यञ्चमिति। प्रत्यक्षवेदनमस्ति नन्विति संबन्धः ॥ २१२ ॥

संवित् परिस्फुरति न स्फुरतीति तस्यां
वैयात्यदूषितधियस्तु विसंवदन्ते ॥
अज्ञानतस्तदपि तद्वदिहाद्वयत्वं
भादप्यभादिव विमूढधियो वदन्ति ॥ २१३ ॥

नन्वेकस्यैव निरंशचैतन्यस्याज्ञानसाधकतया तदाश्रयस्य स्फुरणं तदेव तद्विषयतया विरुद्धमित्याशङ्क्य स्वप्रकाशसंविद्वादिनापि तत्स्वप्रकाशत्वादिविप्रतिपत्त्यनुरोधेन स्फुरत्यामपि तस्यामज्ञातत्वमवश्यं स्वीकर्त्तव्यं तद्वदत्रापि स्यादित्याह। संविदिति। वैयात्यं धाष्ट्र्यं धृष्टो धृष्णुग् वियातः स्यादित्यमरः। तद्व विसंवदनम् ॥ २१३ ॥

अव्युत्पत्तिं बिभ्रती भाति संवित्
तद्वद्ब्रह्माप्यद्वितीयस्वरूपम् ॥
अव्युत्पत्तिं नाशयद्भाति वेद्यं
तस्मादेतच्चोद्यमस्मासु नास्ति ॥ २१४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु स्फुरत्यपि तस्मिन्नज्ञानं चेदविरोधेन कदापि ज्ञानात्तन्न नश्येदित्याशङ्क्य स्वरूपचैतन्यस्य तदाश्रयतयाऽविरोधेऽपि वेदान्तजवृत्तिव्यक्तस्य तन्निवर्त्तकत्वं घटत इत्याशयेन सदृष्टान्तमाह । अव्युत्पत्तिमिति । स्वप्रकाशत्वादव्युत्पादनम् । भाति, अज्ञाततयेति शेषः, ब्रह्माप्यव्युत्पत्तिं बिभ्रत् स्वरूपेणाविचारितं तद्वद्भातीत्यनुषङ्गः । वेद्यं वेदान्तजवृत्त्यभिव्यक्तम्, यथा संवित् स्वप्रकाशत्वेन प्रमिता तदज्ञाततां नाशयति, एवं ब्रह्मापि वेद्यं सत्तां नाशयतीत्यर्थः । एवं स्वपक्षस्य निर्दोषसमर्थनमुपसंहरति । तस्मादिति । एवं नित्यमुक्ताद्वयचैतन्यात्मकं ब्रह्म स्वाश्रयाज्ञानप्रतिबिम्बितं जीवरूपेण संसरति स्वज्ञानाच्च मुच्यत इति सिद्धम् ॥ २१४ ॥

नन्वेवं चेद् बन्धमोक्षव्यवस्था-
शास्त्रं कुप्येन्नाप्रबोधात् प्रवृत्तेः ॥
बद्धो मुक्तो ज्ञानवानज्ञ इत्य-
प्येतत् सर्वं यावदज्ञानमिष्टम् ॥ २१५ ॥

नन्वेवं शुकवामदेवादेर्ब्रह्मविदो मुक्तिरन्येषां च तदज्ञानात् संसार इति काण्डद्वयात्मकबन्धमोक्षव्यवस्थाशास्त्रमप्रमाणं स्यादिति शङ्कते । नन्वेवमिति । स्वप्न इव यावदज्ञानं बन्धमोक्षादिव्यवस्थैकजीववादेऽप्यविरुद्धेत्याशयेन समाधत्ते । नाप्रबोधादिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवृत्तेः, तद्व्यवस्थाशास्त्रस्येति शेषः। एतदेव विवृणोति। बद्ध इति। शुकादिर्मुक्तोऽन्यो बद्धोऽत एव स ज्ञानवानितरोऽज्ञ इत्यादि सर्वमप्यस्मिन् सिद्धान्ते यावदज्ञानमिष्टमुपपन्नमित्यर्थः। यथा स्वप्नद्रष्टुरेकस्यैव सत्त्वेऽपि तदा तद्दृष्टपुरुषाणां स्थाणुपुरुषवदविद्याकल्पिततयाऽविद्यातदधीनसंसाराभावेऽपि केचित्तदा विद्वत्तया मुक्ततया च तेन व्यवह्रियन्तेऽन्ये च तद्विपरीततया न तु वास्तवस्तस्य तद्व्यवहारस्तदा संभवति। एवं जागरणेऽपि शुकादेस्तदन्यस्य च तद्व्यवहारो यावदज्ञानं युज्यते न हि स्वप्नजागरितयोरज्ञानकृतव्यवहारे किंचिद्वैषम्यमस्तीति प्रागेवोक्तमिति भावः ॥ २१५ ॥

किं चैतत् किं बन्धमोक्षव्यवस्था-
शास्त्रं यत्नात्तत्परं सत् प्रवृत्तम् ॥
किं वान्यस्मात् प्राप्तमेवानुभाष्य
तस्या रूपं ब्रह्मतत्त्वं विदध्यात् ॥ २१६ ॥

किं चाध्ययनविध्युपात्तस्य वामदेवादिमुक्तिशास्त्रस्याध्येतृपुरुषार्थपर्यवसायिनस्तस्य ब्रह्मस्वरूपतामात्रपर्यवसायित्वान्न निष्प्रयोजने श्रूयमाणकथाप्रबन्धे तात्पर्यमिति न तत इदानींतनसंसारोपलम्भविरुद्धा शुकादिमुक्तिः सिध्यति मानान्तरविरोधेऽन्यपरादर्थवादात्तदर्थासिद्धेरिति वक्तुं विमृशति। किं चेति। य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वादिति। मानान्तरबाधनेऽपि तस्य व्यापारप्रसङ्गं सूचयति। अन्यस्मादिति। अनादिवृद्धव्यवहारादित्यर्थः। तस्या मुक्तेः ॥ २१६ ॥

शास्त्रं तावत्तत्परं नेष्यते त-
दानर्थक्यात्तत्स्वरूपप्रतीतेः ॥
ब्रह्मात्मैक्यप्रत्ययेनार्थवत्त्वं
वक्तुं युक्तं तच्च नोऽभीष्टमेव ॥ २१७ ॥

आद्यं दूषयति। शास्त्रमिति। तद्वाक्यघ्येतृपुरुषस्यास्मदादेः शुकादिमुक्तिज्ञानेन साक्षात् कस्य चिद्दृष्टार्थस्यादर्शनादितरार्थवादवन्नायमपि तत्पर इत्याशयेनाह। आनर्थक्यादिति। अतो द्वितीय एव कल्पो वक्तुमुचितः, वामदेवादेर्ब्रह्मसाक्षात्कारात्तद्भावरूपमुक्तौ प्रतिपादितायामिदानींतनमुमुक्षोरपि तदुद्देशेन प्रवृत्तिर्भवतीति तस्य तत्परत्वमेव युक्तं तच्चास्माकमिष्टमेवेत्याशयेनाह। ब्रह्मात्मैक्येति। अतोऽविद्वद्दृष्ट्यैव बन्धमोक्षादिव्यवस्थाव्यवहार इति भावः ॥ २१७ ॥

नन्वन्यो मद्बन्धमोक्षादिभागी
भूतो भावी वर्त्तते वा न कश्चित् ॥
इत्युक्तार्थं स्वानुभूत्या विरोधा-
न्नाहं जातु प्रोत्सहे संग्रहीतुम् ॥ २१८ ॥

ननु मदन्यजीवाभावेन बन्धमोक्षादिव्यवस्थाभावेऽनुभवविरोधस्यादिति शङ्कते। नन्विति। मद्भ मत्तो

भूतो वा भावी वेत्यन्वयः ॥ २१८ ॥

किं द्वैतानुभवो विरोधपदभाक् किं वा परोऽस्मीत्ययं
यद्वा कश्चिदिहापरोऽस्त्यनुभवो यस्ते विरोधावहः ॥
नाद्वैतानुभवः क्षतिं वितनुते तस्येति युक्तं वचो
नापि द्वैतमुपोल्लिखन्ननुभवस्तेनास्य बाधो यतः ॥२१९॥

यदनुभवेन बन्धमोक्षादिव्यवस्थाभावोक्तिर्विरुध्यत इत्युच्यते तमनुभवं दूषयितुं विकल्पयति । किं द्वैतेति । बन्धमोक्षादिव्यवस्थाभावेऽनुभवविरोधं वदतस्तत्र कोऽनुभवः संमतः किं कर्तृत्वादिद्वयविषयोऽनुभवस्तद्विरोधी किं वाऽद्वयः परोऽस्मीत्यभेदानुभवोऽथ वा द्वैताद्वैतविषयः कश्चिद्द यः सविशेषाद्वयवादिभिरिष्यते, न चैभ्योऽपरः कश्चिदनुभवोऽस्तीत्येतन्मध्ये कोऽनुभवः प्रकृतविरोधीत्यर्थः । दूषणे विकल्पक्रमानादरेऽपि न कश्चिदर्थो दुष्यतीति मत्वा प्रथमं द्वितीयं दूषयति । नाद्वैतेति । तस्य जीवेषु बन्धमोक्षादिव्यवस्थाभावस्य, अद्वितीयः परमात्मास्मीत्यनुभवे मुक्तिमात्रस्यैव भानादिदानींतनबन्धप्रतीतेः स तद्बाधक इति वचो न युक्तमित्यर्थः । एवमेव द्वैतानुभवो न तस्य बाधक इत्याह । नापीति । प्राक्तस्य चिन्मुक्तौ अस्माभिरुच्यमानायां स्त्विदानींतनबन्धानुभवोऽस्मन्मते बाधको भवेत्, न चैवमस्ति आविद्यकसंसारस्य प्राग्निवृत्त्यनभ्युपगमादस्माभिरित्यर्थः । कल्पितविषयत्वेनास्यैव बाध्यत्वा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्च न वाधकतेत्याह । तेनेति ॥ २१९ ॥

द्वैताद्वैतनिवेशिनोऽनुभवनाद्बाधोद्भवोऽस्येति चेत्
ताद्दृङ् नानुभवोऽस्ति कस्य चिदपि स्थानत्रये जीवतः
भास्वच्छार्वरगोचरं ह्यनुभवं विभ्रज्जनो दृश्यते
नास्मिन् संसृतिमण्डले स न भवेत् कस्मादयं चेद्भवेत्

द्वैताद्वैतानुभवेन वाध इति चेन्न शास्त्राद्विरुद्धो-
द्वाभेदाननुभवादित्याशयेनाह । ताद्दृगिति । स्थानत्रये
भूम्यन्तरिक्षादौ जाग्रदादौ वा । विरोधादसंभवे दृष्टान्त-
माह । भास्वदिति । सूर्यस्यान्धकारस्य चाभेदमनुभवन्
जनोऽस्मिन् संसारमण्डले न दृश्यते यथा तथ भेदाभे-
दमपि न कोऽप्यनुभवतीत्यर्थः । ननु माभूत् सूर्यतमसो-
रभेदानुभवो भेदाभेदयोस्तु स किं न स्यात्तत्त्वमादि-
श्रुतेरित्याशङ्क्य विरोधाविशेषाच्छ्रुतेश्चाखण्डार्थत्वाद्
तत्रापि न भवेदित्याशयेनाह । स न भवेदिति । तद
भवेच्चेदिति संवन्धः ॥ २२० ॥

यत एवमत्र न विरोधलवोऽ-
प्युपढौकते कथितनीतिवशात् ॥
उपगृह्यतां मतमिदं सुदृढं
गुरुसंप्रदायवचनानुगतम् ॥ २२१ ॥

तस्माद्ब्रह्मैवैकनैव प्रतिविम्बरूपेण स्वाविद्यया संस-
रति स्वाविद्ययैव मुच्यत इति पक्षस्याबाधितत्वाद्ब्रह्म-
वित्संप्रदायागतः स एव पक्षो मुमुक्षुभिराश्रयणीयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्युपसंहरति । यत इति । एवमित्यस्य विवरणं कथि-
तेति। अविरोधसमर्थनफलवचनमुपगृह्यतामित्यादि २२१

तव गाढमूढनमसा रचितं
जगदीशजीववपुषा सकलम् ॥
प्रतिभाति तावददृढं दृढवत्
समुदेति यावदवबोधरविः ॥ २२२ ॥

एवं नित्यमुक्तब्रह्मस्वभावोऽप्यात्माऽविद्यया संसर-
तीत्युक्तम्, इदानीं तत्फलं ज्ञानमात्रात् सकलानर्थ-
निवृत्तिरधिकारिणस्तव सिध्यतीति शिष्यं प्रत्याह ।
तवेति । ब्रह्मज्ञानातिरिक्तोपायानिवर्त्यत्वाद्गाढं
दृढम् । अबाधितमिव यथा स्यात्तथा ऊढं प्राप्तं यत्त-
मस्तेनेत्यर्थः । तत्प्रतिभानस्योत्तरावधिव्याजेन तन्नि-
वर्त्तकमाह । तावदित्यादिना । अदृढमिति । तस्या-
निर्वचनीयतया ज्ञाननिवर्त्यत्वयोग्यतामाह । दृढवत्
प्रतिभातीति संबन्धः ॥ २२२ ॥

प्रभुरेष सर्वविदहं कृपणो
जगदेतदद्भुतमितानमिति ॥
प्रतिपत्तयस्तिमिरलुप्तदृशो
यदिहोद्भवन्ति न तदद्भुतकम् ॥ २२३ ॥

ननु सर्वेषामविप्रतिपन्नानुभवसिद्धस्येश्वरादिप्रपञ्च-
स्य कथं शुक्तिरजतवददृढत्वमित्याशङ्क्याऽविद्याप्रमुष्ट-
धियामेव देहात्माभेदवत्तदनुभवान्न शुक्तिरजतादेस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याध्यस्तत्वे कोऽपि विशेष इत्याशयेनाह । प्रभुरिति। सुबोधम् ॥ २२३ ॥

अभयं सनातनमनातुरधी-
रवलोकयन्निजमनन्तसुखम् ॥
न मुनिः प्रपश्यति किमप्यसुखं
सकलं जिघत्सति जगत् स्वचिता ॥ २२४ ॥

ननु किंबलादेतस्य महाजनानुभवविरुद्धमनिर्वचनीयत्वं कल्प्यत इत्याशङ्क्य श्रुतिन्यायसिद्धमपि तद्विद्वदनुभवबलादाह । अभयमिति । अनातुरधीर्धीरः, जिघत्सत्यत्तुमिच्छति नाशयतीति यावत् ॥ २२४ ॥

तव चित्तमात्मतमसा जनितं
परिकल्पयत्यखिलमेव जगत् ॥
तव कल्पनाविरचितः स गुरु-
स्तव रूपमद्वयमुदाहरति ॥ २२५ ॥

नन्वात्मातिरिक्तद्वैताभावे गुर्वादेस्तत्त्वज्ञानोपायस्याभावात् कथं विदुषामनुभवः सिध्येदित्याशङ्क्याविद्यकस्य व्यावहारिकस्य तस्य सत्त्वान्नोक्तदोष इत्याशयेनाह । तवेति । ततः किं तत्राह । तव कल्पनेति ॥ २२५ ॥

न हि चित्तदृश्यमपि सत्यमिति
प्रतिपन्नमस्ति भुवि किं चिदपि ॥
रशनाभुजङ्गसदृशं सकलं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगदिन्द्रजालमिति सिद्धमतः ॥ २२६ ॥

नन्वसत्यस्य शुक्तिरजतादेः स्वोचितकार्यजनकत्वाभावाद्‌ गुर्वादेरपि कल्पितत्वे तन्न स्यात्, यदि तत् स्यात् सत्य एव स्यादित्याशङ्क्यार्थक्रियाजनकस्य सत्यत्वासंप्रतिपत्तेर्दृश्यस्य च शुक्तिरजतादेर्मिथ्यात्वस्य दृष्टत्वाद्‌ गुर्वादेरपि तथैवेत्याह। न हीति। दृश्यस्य सत्यत्वाभावे फलितमाह। रशनेति। अतो रशनेति संबन्धः। तत्साद्दृश्यमेवाह। इन्द्रजालमिति। मायिकमित्यर्थः ॥ २२६ ॥

परिकल्पितोऽपि सकलज्ञतया
गुरुरेव पूर्णमवबोधयति ॥
परिकल्पितोऽपि मरणाय भवे-
दुरगो यथा न तु नभो मलिनम् ॥ २२७ ॥

ननु गुर्वादेः परिकल्पितत्वे स्थाणुपुरुषवन्न तत्त्वोपदेष्टृत्वं स्यादित्याशङ्क्य व्यावहारिकगुर्वादिशरीरावच्छिन्नजीवस्य घटादाविव ब्रह्मण्यपि प्रमातृतया तन्निश्चयसंभवेन तदुपदेश उपपद्यते नैवं स्थाणुपुरुषस्येत्याशयेन सदृष्टान्तमाह। परिकल्पित इति। एवकारेण स्थाणुपुरुषादिव्यावर्त्तयति ॥ २२७ ॥

यदि सत्यमित्यवगतिं कुरुते
घटते पदादपि हुताशनधीः ॥
यदि भ्रान्तं न जनयेत् प्रमितिं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु चोदनापि जनयेन्न धियम् ॥ २२८ ॥

ननु पूर्वक्षणे सत एव कारणत्वात् कथं सद्विलक्षणस्य तन् स्यादित्याशङ्क्य किं कारणस्य सत्तामात्रं तत्तत्कार्यविशेषजनने प्रयोजकमुत तन्मृत्त्वादिकमपि। तत्राद्यं दूषयति । यदीति । गुर्वादिप्रपञ्चो यदि सत्यतयैवावगतिं कुर्यान्न तु स्वस्वासाधारणरूपसामर्थ्येन तदा पटादेरपि धूमादेरिव हुताशनज्ञानादिकार्यं स्यादित्यर्थः । द्वितीये चासद्विलक्षणप्रपञ्चस्य तावन्मात्रादेव कार्यविशेषजनकत्वोपपत्तौ न श्रुतिन्यायविरुद्धं सत्त्वं कल्पनीयमिति द्रष्टव्यम् । किं च भ्रमविषयस्य प्रमादिकार्याजनकत्वं नियमेन परेणापि वक्तुं न शक्यमित्याशयेनाह । यदि चेति । नन्विति वितर्के, चोदनेति वाक्यमात्रं द्रष्टव्यम् ॥ २२८ ॥

जनयत्यसाविह मृषावपुषा
करणीयवस्तुनि मतिं सुदृढाम् ॥
ध्वनिधर्मभेदघटितो हि मृषा
स्वरसेन सन्नपि तु वर्णगणः ॥ २२९ ॥

इष्टापत्तिमाशङ्क्याह । जनयतीति । असौ चोदना, इह लोके वेदे च मृषावपुषा विकल्पितानुपूर्वीस्वरादियुक्तवपुषा, करणीयवस्तुन्यनुष्ठेयादिस्वभावे स्वप्रमेये । ननु स्वरादिवैशिष्ट्यं तस्याः स्वाभाविकमिति नेत्यत आह । ध्वनीति । एतच्च वर्णक्रमस्याप्युपलक्ष-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म् । अवर्णात्मकशब्दो वायुर्वा ध्वनिस्तस्य धर्मा उदात्तादयो न वर्णधर्मा वर्णानामेकत्वाद्वित्वादिभुक्ताद्युदात्तादेः पौर्वापर्यस्य चासंभवात् । वीणादिध्वनिधर्मतया क्लृप्तस्य तस्य वर्णधर्मत्वे प्रमाणाभावाच्च. अत उदात्तोकार इत्याद्यनुभवस्य तत्कालनियतध्वनिधर्मविषयस्य वर्णांशे भ्रान्त्याप्युपपत्तेर्वायुधर्मस्यापि शब्दस्वेवाश्रयानुभवमन्तरेणापि तत्संभवादतः स्वरूपेण सत्यपि वर्णसमूहस्वरूपा चोदनोक्तविशिष्टरूपेण मृषैवेत्यर्थः ॥ २२९ ॥

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ॥
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ २३० ॥

ननु तर्हि वर्णस्वरूपमेवार्थप्रतिपत्तौ कारणमस्तु न मृषास्वरवैशिष्ट्यं पौर्वापर्यं चेत्याशङ्क्य स्वरादिभेदेऽर्थप्रतीतिविशेषदर्शनात्तदपि कारणमेवेत्याशयेन नैरुक्तं वचनमाह । मन्त्र इति । मिथ्याप्रयुक्तः स्वाभाविकस्वरादिविलक्षणस्वरादिमत्तया प्रमादादिना प्रयुक्तः तं तात्पर्यविषयीभूतम् । प्रत्युत विपरीतार्थबोधकतया यजमानं नाशयत्येवेत्याह । स इति । उदाहरति । यथेति । वृत्रमुत्पादयता त्वष्ट्रा इन्द्रस्य शत्रुरिति तत्पुरुषस्वरमन्त्रार्थमभिप्रेत्य प्रमादेन बहुव्रीहिस्वरः प्रयुक्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीन्द्र एव तस्य शत्रुर्बभूव यथा। एवं चोचितस्व-
रोऽपि वाक्यार्थज्ञानहेतुरित्यर्थः। एवं पौर्वापर्यविशेष-
स्याऽप्यर्थविशेषधीजनकत्वं वाच्यमन्यथा राजा जा-
रेतिपदाभ्यामविशेषेणार्थधीप्रसङ्ग इत्याशयः ॥ २३० ॥

न च वर्णपूगमपहाय भवे-
दिह चोदनेत्यभिमतं विदुषाम् ॥
यदि सत्यमेव गमकं भवति
स्फुटमप्रमाणमियमप्युदिता ॥ २३१ ॥

ननु तर्हि सत्यस्फोट एव चोदनास्तु न तस्यापि
स्वरसतः स्वरादिवैशिष्ट्यासंभवेन तत्र तस्य मिथ्या-
त्वानपायात्, वर्णसमूहातिरिक्ते चानुभवादेरभावाद्
प्रामाणिके न चोदनात्वमित्याशयेनाह। न चेति। प-
रमतनिराकरणमुपसंहरति यदीति। अपिशब्देन चो-
दनामात्रप्रामाण्यवादिनं प्राभाकरं प्रति तदपि न सि-
ध्येदिति सूचयति। उदिता उक्ता चोदना, प्रमाणं स्या-
दिति शेषः ॥ २३१ ॥

श्रवणेन्द्रियं च किल कर्णगतं
परिकल्पनोपचरितं नभसः ॥
वलयं प्रकाशयति शब्दगणं
परमार्थमित्यपि कणादमतम् ॥ २३२ ॥

वैशेषिकादीनां मते वर्णव्यक्तीनामानन्त्यादुत्पत्ते-
स्वाभाविक्येवानुपूर्वी स्वरश्चोपपद्यत इति न प्रमं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नां तद्वैशिष्ट्यं मृषेत्यलीकस्य सत्यबोधकत्वे नायं दृष्टान्त इति मत्वा तन्मते श्रोत्रेन्द्रियं तत्र दृष्टान्तमाह। श्रवणेति। तत्स्वरूपमाह। कर्णगतं कर्णशष्कुलीमध्यस्थम्। ननु नभसः सर्वगतस्य कथं कर्णगतत्वं वलयत्वं चेत्याशङ्क्याह। परिकल्पनया, कर्णावच्छेदेन हेतुनोपचरितं नभसो वलयवद्वलयं वलयसदृशोंऽशः श्रवणेन्द्रियमित्यन्वयः। वैशेषिकादिमते हि श्रोत्रस्य नित्यविभुनभोरूपस्यैव शब्दप्रकाशकत्वेऽतिप्रसङ्गपरिहाराय कर्णशष्कुल्यवच्छिन्नं नभोवलयं श्रोत्रमित्युपेयम्। न च नभसो वलयत्वं मुख्यं संभवतीति तदलीकमेव वाच्यम्। तथापि शब्दं प्रकाशयतीति तन्मतेऽप्यलीकस्य सत्यबोधकत्वं दृष्टमित्यर्थः। किलेत्यनेन स्वमते श्रोत्रस्यारब्धत्वेन तदसंमतिं सूचयति॥ २३२॥

त्वमतः स्वमोहरचितं गहनं
भवसागरं तर परावगतेः॥
परिकल्पितद्वयनिबन्धनतः
परमार्थसंविदुदये सति भोः॥ २३३॥

तस्मात् कल्पितगुर्वादेरपि तत्त्वबोधकत्वसंभवाद्वाक्योत्थतत्त्वसाक्षात्कारादाविद्यकबन्धनिवृत्तिः सिध्यतीति स्वमतमुपसंहरति। त्वमिति। कल्पितं द्वयं गुर्वादिनिबन्धनं यस्याः परावगतेर्वृत्तिरूपायाः परमार्थसंविद उदयेऽभिव्यक्ताविति योजना॥ २३३॥

२४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भ्रान्तं तथोपचरितं च यथाविभाग-
मङ्गीकृतं कणभुगादिमुनीन्द्रमुख्यैः ॥
यन्नास्ति तत्फलनिबन्धनमस्मदीये
तन्त्रे तमोविरचितं न फलाय कस्मात् ॥२३४॥

ननु परमते चोदनाद्यानुपूर्व्यादेरलीकत्वमसिद्धं त-न्मतेऽनिर्वचनीयाभावात्, एवं श्रोत्रेन्द्रियमपि नाली-कं किं तु प्रसिद्धवलयसदृशं नभः, ततश्च सत्यमेव प-रमतें बोधकमिति तद्दृष्टान्तासिद्धिमाशङ्क्य कैमुतिक-न्यायेनानिर्वचनीयस्य बोधकत्वमाह । भ्रान्तमिति। चोदनायाः स्वरादिवैशिष्ट्यं भ्रान्तं श्रोत्रेन्द्रियमुपचरि-तं वलयम् । यथाविभागं यथामतम् । ततः किं तत्राह। यन्नास्तीति । भ्रान्तमुपचरितं परमते नास्त्येव न ह्य परिच्छिन्ने नभसि वस्तुतो वलयसादृश्यमस्ति, तथापि तत्सत्यबोधनहेतुश्चेदस्मन्मते अविद्याकल्पितमनिर्वच-नीयं कस्मात् फलाय न भवेदित्यर्थः ॥ २३४ ॥

असदपि फलवत्तामश्नुते युष्मदिच्छा-
मनुसरदथ कस्मान्मायया निर्मितं सत् ॥
न भवति फलवत्ताभाजनं चित्रमेतद्
वयमिह न समर्था यूयमत्यन्तशक्ताः ॥२३५॥

ननु भ्रमविषयादेरपि तन्मतेऽन्यत्र सत्त्वादसत्त्वमे-त्यसिद्धमित्याशङ्क्योत्तरार्द्धं विवृणोति। असदिति। य-द्यपि स्वरादि ध्वन्यादौ वर्त्तते तथापि न तत्स्वरूपे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाब्दबोधहेतुः किं तु शब्दनिष्ठतया ज्ञायमानम्, तस्य तद्वैशिष्ट्यं चासदेव तस्य सत्त्वे तज्ज्ञानस्य भ्रान्तित्वायोगादेवं नभसो वलयसादृश्यमप्यसदेवेति न तयोर्दृष्टान्तत्वासिद्धिस्तदिदमुक्तमसदिति। युष्मदिच्छामनुसरद् युष्मदिष्टमित्यर्थः। अथेत्यर्थान्तरोक्तिः। सत् असद्विलक्षणम्। अत्र लौकिकीं रीतिं दर्शयति। वयमित्यादिना। इह उक्तेऽर्थे केवलं भवतां धार्ष्ट्यमस्माकं च तदभावो निमित्तं न त्वन्यत् किंचिदित्यर्थः ॥२३५॥

परमेव तत्त्वमगृहीतमभू-
दखिलस्य कारणमनर्थकरम्
परमेव तत्त्वमवबुद्धमतः
परितृप्तये भवति पुष्कलतः ॥ २३६ ॥

एवं परमतेनापि कल्पितस्य सत्यबोधकत्वमुपपादितं स्वमते त्वसत्यस्यैव गगनादेर्निखिलप्रपञ्चस्य मायाभिः पुरुरूप ईयत इति श्रुत्यनुसारेण कारणत्वाभ्युपगमाद् गुर्वादेरपि तथाविधस्य तदुपपन्नमेव स्वरूपेणालीकस्याप्यधिष्ठानसदात्मत्वादित्याशयेनाह। परमेवेति। अगृहीतमज्ञातम्। सर्वस्य बन्धस्याज्ञातसद्विवर्तत्वे फलितमाह। परमेव तत्त्वमवबुद्धमिति ॥२३६॥

तव रूपमेव तव दुःखकरं
यदि तन्न पश्यसि बहिर्मुखधीः ॥
तव रूपमेव तव तृप्तिकरं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि तत् प्रपश्यसि निवर्त्य तमः ॥ २३७ ॥

ननु यदि मद्रूपमेवावबुद्धं मम तृप्तये भवति तर्हि प्रागपि तत्त्वमादिवाक्यादिश्रवणसंभवात् कथमितः पूर्वं मम तृप्तिर्नाभूदित्याशङ्क्याशुद्धान्तःकरणतया मायिकैश्वर्यादौ तव चित्ताभिनिवेशादिनाधिकाराभावेन प्राक्तत्त्वसाक्षात्कारानुदयादित्याशयेनाह । तव रूपमिति । बहिर्मुखधीरित्यनेन वैराग्यशमदमाद्यभावं सूचयति । इदानीं तु तव विवेकाद्यधिकारसंपत्तेस्तत्त्वसाक्षात्कारसम्भवात् परितृप्तता सिध्यतीत्यशयेनाह । तव रूपमिति । तम इत्यज्ञानकार्याविवेकरागादिरु-च्यते ॥ २३७ ॥

तव बोधमात्रमुपनेयमत-
स्तव मोहमात्रमपनेयमपि ॥
तव बोधमोहजनिहानिकरं
वचनं त्रयीशिरसि तत्त्वमिति ॥ २३८ ॥

नन्वेवमपि न ज्ञानमात्रान्मम कृतकृत्यता । कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादेः कर्मणो मुक्तिहेतुत्वावगमादित्याशङ्क्यान्तःकरणशुद्धिलक्षणां सिद्धिं प्रति कर्मणो हेतुत्वं तद्वाक्यार्थोऽन्यथा नान्यः पन्था विद्यतेऽयनाय ज्ञानादेव तु कैवल्यमित्यादिशास्त्रविरोधादतो ज्ञानमात्रात् कृतकृत्यता भवेदित्याशयेनाह । तव बोधेति । किं चाविद्यानिवृत्तेरेवात्र साध्यत्वात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्वैवापेक्षिता न कर्मेत्याशयेनाह । तव मोहेति । ननु सकलप्रमाणावेद्यब्रह्मणि कथं मम बोधस्तमोनिवृत्तिर्वा स्यादित्याशङ्क्याह । तव बोधमोहेति । बोधजनिद्वारा मोहहानिकरं वचनमित्येव युक्तं तत्त्वमिति वचनमिति सम्बन्धः ॥ २३८ ॥

तव बोधजन्मनिपुरा न पुन-
स्तव कश्चिदप्यतिशयो भवति ॥
तम एव पूर्वमभवन्न भव-
त्यवबोधजन्मनि ततो न परम् ॥ २३८ ॥

ननु मुक्तिसंसारयोरविशेषायोगाद्ध विशेषो वाच्यः स चेन्मुक्तावपि कश्चिदागन्तुकोऽस्ति तर्हि तव बोधमात्रमुपनेयमित्यसङ्गतमित्याशङ्क्य आविद्यकसंसारनिवृत्तिरेव तत्र विशेषः सा च तव मोहेत्यादिनोक्तैवेत्याशयेनाह । तव बोधेति । बोधोऽवबोधस्तज्जन्मनि ततः पुरा पश्चाच्च न कश्चिदतिशयोऽस्तीत्यर्थः । तर्हि निवर्त्याभावात् किं निवर्त्तकेन ज्ञानेनेत्यत आह । तम एवेति । पूर्वं ज्ञानात् पूर्वम् । अवबोधजन्मनि सति तमो न भवति परं तु न ततः परमन्यत् किं चिदस्तीत्यर्थः ॥ २३९ ॥

न तमोऽपि पूर्वमभवन्न भव-
त्यवबोधजन्मनि तमोऽभिभवः ॥
तम एव केवलमिदं सकलं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तमो विनाऽऽत्मनि किमप्यभवत् ॥ २४० ॥

नन्वेवं प्राक् तमसैवात्मा सद्वितीयः स्यादित्याशङ्क्य तस्य तस्मिन्नध्यस्तत्वान्न ततः पृथक् तमोऽस्तीत्याशयेनाह । न तमोऽपीति । अभवद् वस्तुत इतिशेषः । तथापि तन्निवृत्त्यैवात्मा सद्वितीय इत्याशङ्क्य तन्निवृत्तेरपि तावन्मात्रत्वान्नैवमित्याह । न भवतीति । तद्भिन्न इति शेषः । तर्हि वियदादिप्रपञ्चतन्निवृत्तिभ्यां तस्य सद्वितीयतेत्याशङ्क्याह । तम एवेति । तम आसीत्तमसा गूढमग्र इति श्रुतिमुक्तेऽर्थे प्रमाणमभिसंधायाह । न तमो विनेति । ननु भवतु तमस्तत्कार्ययोरात्मन्यध्यस्तत्वात्तावन्मात्रत्वं न तु तन्निवृत्तेरपि तथात्वं युज्यते मुक्तावप्यध्यासतत्कारणावस्थानायोगादनध्यस्तायास्तस्या ज्ञानसाध्यतया आत्मताऽयोगाच्चेति चेन्न । साध्यत्वेऽपि हि तस्या आत्ममात्रत्वं चतुर्थोऽध्याये वक्ष्यति । अस्तु वा पञ्चमप्रकाररूपा सा ततोऽतिरिक्ता तदुपपादनं च तत्रैव द्रष्टव्यम् ॥ २४० ॥

न तमः परिहृत्य लभ्यते
तमसो हानिगता निरूपणा ॥
इति सा तम इत्युदीरिता
न निवृत्तिस्तमसस्तमोमयी ॥ २४१ ॥

नन्वेवमपि न तस्यास्तमोमात्रत्वमित्याशङ्क्याह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तमः परिहृत्येति। हानिविषया निरूपणेत्यर्थः । अविद्यादशायामेव हि तन्निरूपणं क्रियते प्रतियोगितया च तन्निवृत्तिरविद्यामपेक्षत इत्युपचारात् सा बन्धवत्तम इत्युदीरिता। न तु तमोनिवृत्तिर्वियदादिवत्तमोमयी भवति न हि घटादिनिवृत्तिर्घटमयीत्यर्थः ॥ २४१ ॥

विधयश्च कर्मविषयाः स्वतमः-
पटलावृते त्वयि बहिर्मनसि ॥
कुत एव सम्यगवबोधहते
तमसि प्रवृत्तिरिह संभवति ॥ २४२ ॥

नन्वेमपि तव बोधमात्रमुपनेयमित्युक्तमयुक्तं विदुषोऽपि नित्याद्यनुष्ठानसत्त्वादन्यथा यावज्जीवादिश्रुतिविरोधादित्याशङ्क्याविद्वद्विषया सेत्याशयेनाह । विधय इति । ननु किमिति तमःपटलावृतगोचरत्वं तेषामित्याशङ्क्य त्वयीत्युक्तं तदधिकारिणं विशिनष्टि । बहिर्मनसीति । आत्मनो बाह्ये पापक्षयादौ मनो यस्य तस्मिन्नित्यर्थः । प्रत्यवायादिपरिहारकामं प्रत्येव नित्यादिविधिप्रवृत्तेः प्रत्यवायतत्परिहारकामादेश्चाविदुष एव संभवादविद्वदधिकारा एव नित्यादिविधयो यावज्जीवश्रुतिश्चेति विद्यया निवृत्ताज्ञानतत्कार्यब्राह्मण्याद्यभिमानादौ त्वयि न तत्प्रवृत्तिरित्याशयेनाह । कुत एवेति ॥ २४२ ॥

विदिते पदे भगवतः परमे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिपुष्कले परमदृप्तिमतः ॥
तव तृष्णया विरहितस्य कथं
विधिषु प्रवृत्तिरपवर्गवतः ॥ २४३ ॥

उक्तमेवार्थं विवृणोति । विदित इति । परि- पुष्कले सजातीयादिभेदरहिते, अनेनोक्तरूपे ब्रह्मण्यपि स्वात्मतया विदितेऽनुष्ठाननिमित्तब्राह्मण्यादेस्तदभिमा- नादेश्चाभावो दर्शितः । परमदृप्तिमत इत्यस्य विवरण- मपवर्गवत इति । अनेनाप्यकामस्याप्रवृत्तिर्दर्शिता॥२४३॥

अभिचारकर्मविषयो हि यथा
फलभागबाधमनु बाधयुजः ॥
करणादिभागनिरुपाख्यतया
विधयस्तथैव परमात्ममतेः ॥ २४४ ॥

नन्वेकस्य विधेरेकत्रैव दशाभेदेन प्रवृत्तेरप्रवृत्तेश्चा- योगादिदमयुक्तमित्याशङ्क्य तत्परिहारं सदृष्टान्तमाह अभिचारेति । वैरिहिंसाफलकश्येनादिकर्मविषयो न हिंस्यात् सर्वाभूतानीति तत्फलांशहिंसाया बाधमनु पश्चादिदं बलवदनिष्टसाधनमिति स्वस्य बाधयुक्ता भवन्तीत्यर्थः । श्येनादेर्हिंसासाधनस्य विहितत्वादाहल निषेधादर्शनाच्च फलभागबाधमित्याद्युक्तम् । अत एव ग्नीषोमीयादस्य विशेषः, तस्य फलद्वारा साक्षाद्वा कथं मप्यनिषेधात् । श्येनेनाभिचरन् यजेतेत्यादिविधयो हि तीव्ररोषाद् ब्राह्मणादिवधं बलवदिष्टं मत्वा प्रवर्तमा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ने प्रवर्त्तन्ते स एव यदि न हिंस्यात् सर्वा भूतानीति श्येनादिफलभागस्य हिंसाया बाधकं शास्त्रमर्थतः परामृशति तदा विगतरोषो भवति श्येनादिविधयश्च तदा स्वभाव्याभावात्तस्मिन्न प्रवर्त्तन्ते। न हि बलवदनिष्टसाधनत्वं हिंसादेर्जानन्तं तदुपाये विधयः प्रवर्त्तयितुं शक्नुवन्तीति तेषां यथा दशाविशेष एव तस्मिन् प्रवृत्तिः। एवं ब्रह्मसाक्षात्कारेण शरीरादिसमस्तप्रपञ्चनिवृत्तौ भावनायाः करणाद्यंशत्रयस्यापि निरुपाख्यतया अभावात् कथं विधयः प्रवर्त्तेरन्निति न किंचिदत्रायुक्तमित्यर्थः ॥२४४॥

यदि भाव्यभागविलये न भवेत्
फलभावना कथमिहोत्सहते॥
करणादिभागविलये भवितुं
विधिरन्तरेण घटते न च ताम्॥ २४५॥

अनेन द्योतितं कैमुतिकन्यायं विशदयति। यदीति। भाव्यरूपभागमात्रस्य विलय इत्यर्थः। फलभावना हिंसारूपफलोद्देशेन या भावना, करणादीत्यादिपदेन सर्वस्यैव भावनांशत्रयस्य तदन्यस्यापि तद्धेतोरभावं दर्शयति। नन्वर्थभावनाभावेऽपि लिङादिव्यापारो विधिः किमिति न भवेदित्याशङ्क्य तस्यार्थभावनाभाव्यकत्वात्तामन्तरेण सोऽपि न घटत इत्याह। विधिरिति॥ २४५॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधिकारिणं च विषयं च विना
न नियोगबुद्धिरुपपत्तिमती ॥
न विना तमस्तदुभयं घटते
विदितात्मनश्च न तमो घटते ॥ २४६ ॥

एवं भावनावाक्यार्थवादेऽवगतहिंसादिप्रतिषेधशास्त्रार्थे श्येनादिविधीनामप्रवृत्तिमुक्त्वा नियोगवाक्यार्थमतेऽपि तामाह । अधिकारिणं चेति । नियोज्यमित्यर्थः, विषयं कृतिनिरूपणद्वारा नियोगनिरूपकं धात्वर्थम् । प्राभाकरमते हि प्रत्ययार्थो नियोगः फलकामनादिमता नियोज्येन साक्षात्कृतिविषयेण धात्वर्थेनाख्यातनियोग इति निरूप्यते हिंसादिनिषेधशास्त्रार्थविदश्च न श्येनादिविधिनियोज्यत्वं तदनिष्टत्वाज्ञाननिवृत्त्या तत्कामनादेरसंभवान्न श्येनादेस्तत्कृतिसाध्यत्वमिति विषयनियोज्यौ विना श्येनादिनियोगबुद्धिस्तस्यतदा न घटते, एवं विदितात्मतत्त्वस्य तमसो निवृत्तेर्विषयनियोज्यात्मकमुभयं नियोगापेक्षितं तन्न घटत इत्यर्थः । तर्हि तस्य तमोऽप्यस्तु तत्राह । विदितेति ॥२४६॥

व्यवहारगोचरमतः सकलं
विधिवाक्यमित्यवगतिं मनसि ॥
उपनीय वेदशिरसां विधिभि-
र्न विरोध इत्यपि समाकलय ॥ २४७ ॥

नन्वविद्यावद्विषयत्वे विधीनां बाधितार्थतयाऽप्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माण्यप्रसङ्ग इत्याशङ्क्य वस्तुतस्तदर्थस्य वेदान्ततन्मूलन्यायबाधेऽपि व्यावहारिकतदभावात् प्रत्यक्षादिवद्बुधीनामपि व्यावहारिकमेव प्रामाण्यं न वेदान्तानामिव तात्त्विकमित्याशयेनाह । व्यवहारेति ॥ १४७ ॥

एवं वेदान्तवाक्यैरवगतिपदवीमद्वये नीयमाने
प्रत्यक्तत्त्वे समस्तद्वयकृति तमसि क्षीयमाणे च सद्यः ॥
स्वाराज्यं त्वय्यवाप्ते परमसुखभुजि स्वच्छचैतन्यमात्रे
लेशोमानान्तराणामपि दुरधिगमस्तत्र दूरे विरोधः ॥२४८॥

इति श्रीसर्वज्ञात्ममुनिविरचिते संक्षेपशारीरकेऽविरोधलक्षणं नाम द्वितीयोऽध्यायः ॥

एवमद्वयब्रह्मपरवेदान्तानां भेदग्राहिमानान्तरविरोधनिरासमर्थनं द्वितीयाध्यायार्थमुपसंहरति । एवमिति । अद्वये प्रत्यक्त्वे वेदान्तैः स्फुटं प्रतिपाद्यमान इति विरोधविषयसमन्वयार्थो दर्शितः, अविद्यात्मकभेदविषयत्वान्मानान्तरस्य न तेन समन्वयार्थो विरुध्यत इति प्रागुपपादितं मनसि निधाय समस्तद्वयकृतीत्युक्तम् । क्षीयमाणे चेत्यादिना ज्ञानमात्रात् परिवृप्ततामुपपादितामनुवदति, विचारदशायामपि वेदान्तानां न मानान्तरविरोधः संभावितस्तदा किमु वक्तव्यमवगते तत्त्व इत्याशयेनाह । लेश इति । लेशोऽपीत्यर्थः ॥ २४८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यश्रीमधुसूदनसरस्वतीश्रीपादकृतसंक्षेपशारीरकव्याख्यानरूपसारसंग्रहाख्यटीकायां द्वितीयोऽध्यायः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

---

श्रुत्वाऽविरोधमुपपन्नसमन्वयोत्थ-
ब्रह्मात्मतामतिरयं पुनरप्युवाच ॥
ब्रह्मात्मताफलशिरस्कमतिं प्रसूते
यत् साधनं तदखिलं प्रतिपित्समानः ॥ १ ॥

अथातो ब्रह्मजिज्ञासेत्यनेन किं ब्रह्मस्वरूपम्, किं च तत्र प्रमाणम्, का च तदनुग्राहिका युक्तिः, किं च सयुक्तिकप्रमाणजन्यायाः फलवन्मतेः साधनमितिकर्त्तव्यतारूपं सामवायिकमारादुपकारकं च, किं च सेतिकर्त्तव्यताकप्रमाणजन्यायाः फलवन्मतेः फलम्, कथं वेति प्रतिज्ञापञ्चकसंपिण्डनं कृतम्। तत्राऽद्वयब्रह्मस्वरूपं तटस्थस्वरूपलक्षणाभ्यां लक्षयित्वा तत्र समन्विता वेदान्ताः, ते च तत्रैव मानमेवेति समन्वयलक्षणे व्युत्पादितम्। अथाऽद्वये ब्रह्मणि वेदान्तसमन्वये द्वैतग्राहिमानविरोधोद्धारयुक्तयो निबद्धा अविरोधलक्षणे। ततो निर्विरोधवेदान्तसमन्वयजन्याया मोक्षफलपर्यन्ताया मतेरुत्पत्तौ साधनं वेदान्तवाक्यप्रमाणेतिकर्त्तव्यतारूपमन्तरङ्गबहिरङ्गभावेन स्थितं साधनलक्षणे निरूपितम्। ततोऽन्तरङ्गबहिरङ्गसाधनकलापसंपन्नवेदान्तप्रमाणजन्याया मतेः फलमविद्यानिवृत्त्युपलक्षितमख

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मानन्दस्वरूपं यच्च यादृशं चेति चतुर्थे फललक्षणे निर्णीतम् । एवं पञ्चावयवविचारात्मिका चतुर्लक्षणी मीमांसा । तस्याः प्रकरणमिदमपि तादृशमेवेति साधनप्रतिज्ञां निरूपयितुं तृतीयोऽध्याय आरभ्यते । ननु द्विविधं साधनम्, प्रमायाः करणमितिकर्त्तव्यता च । तत्र करणं वेदान्तवाक्यम् , तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्याऽऽत्मन औपनिषदत्वकथनात् । इतिकर्त्तव्यता चाप्रामाण्यशङ्कानिरासितर्कानुसरणम् । तदुभयमपि प्रथमद्वितीयाभ्यामेव संपादितमिति किं तृतीयेन । अज्ञाननिवर्त्तके च ज्ञाने प्रमाणतदितिकर्त्तव्यताऽतिरिक्तं साधनं नापेक्षिततमिति वक्ष्यते । शुक्त्याद्यज्ञाननिवृत्तौ तावन्मात्रदर्शनाच्च । उच्यते । सत्यं प्रमाणमितिकर्त्तव्यता चेति द्विविधं साधनम् , इतिकर्त्तव्यतायां त्वस्ति विशेषः, प्रतिबन्धकवैचित्र्यात् । तथाहि । ब्रह्मज्ञाने साक्षात्काररूपे बाधायोग्ये जातेऽप्येते पुरुषापराधाः फलं प्रतिबध्य जिज्ञासामुत्पादयन्ति । एका विषयभोगवासना, वेदान्तानां ब्रह्मण्यबोधकत्वकल्पना, बोधितेऽपि ब्रह्मणि बाधितत्वकल्पना, अबाधितेऽपि ब्रह्मणि साक्षात्काररूपायां तत्प्रमितावसाक्षात्कारत्वकल्पना, प्रमितिफले च पुरुषार्थेऽप्यज्ञाननिवृत्त्युपलक्षिते मोक्षे पुरुषार्थत्वाभावकल्पना चेति । तत्र विषयभोगवासना शमदमादिसंपत्त्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रवणाङ्गभूतया निवर्त्यते । द्वितीया प्रमाणगता संभा-
वना श्रवणाख्यविचारप्रदर्शकेन समन्वयाध्यायेन।
तृतीया प्रमेयगता सम्भावना विरोधाभावरूपमनना-
ख्यविचाराङ्गप्रदर्शकेन द्वितीयाध्यायेन । प्रामाण्य-
निश्चयविरोधित्वादुभयमिदसंभावनेत्युच्यते । निश्चि-
तेऽपि प्रामाण्ये यत्फलविरोधिकल्पनाद्वयं तद्विपरीत-
भावनेत्युच्यते । तच्च निदिध्यासनाख्यविचाराङ्गप्र-
दर्शकेन तृतीयेन चतुर्थेन चाध्यायेन निवर्त्यत इतिप्रा-
गुक्तमेव । तत्र साक्षात्कारस्यासाक्षात्कारत्वकल्पनानि-
वर्त्तकं प्रामाण्यनिश्चयानुपयोगिसाधनजातं तृतीयार्थः,
पुरुषार्थेऽप्यपुरुषार्थत्वकल्पनानिवर्त्तकं तु चतुर्थार्थ इति
विवेकः । तेन यद्यपि वेदान्ता ब्रह्म बोधयन्त्येव, ब्रह्म च
केनापि मानेन न बाधितम्, तथापि तदहं न साक्षात्
करोमि किं तु तन्मम परोक्षमेव भातीति भ्रान्तितत्सं-
स्कारपरंपरारूपा विपरीतभावना यावदनुवर्तते तावन्न
ब्रह्मविद्या फलं प्रसूत इति तन्निवर्तनाय वेदान्तैर्बोधितं
सर्वमानाबाधितं च सच्चिदानन्दाद्वयलक्षणं ब्रह्मैवाऽह-
मस्मि तच्च सर्वदा साक्षात् करोम्येवेत्येतावत्फलपर्य-
न्तसोपकरणध्याननिरूपणाय शिष्यप्रश्नमवतारयति।
श्रुत्वेति । अयं शिष्योऽविरोधं श्रुत्वेति वृत्तं द्वितीया-
ध्यायार्थं हेतुत्वेन कथयति । अविरोधन्यायैरुपपन्नाऽ-
बाधितत्वेन निश्चिता प्रथमाध्यायोक्तसमन्वयोत्या ब्र-
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्मात्मतामतिरस्येति समननश्रवणफलं सिद्धं दर्शयति, अहं ब्रह्म भवामि ब्रह्मरूपेण च सर्वदा भामीत्येवम-भानावरणनिवृत्तिरूपं ब्रह्मात्मताफलं शिर इव यस्या मतेरन्तःकरणवृत्तेर्यदभावे शिरोहीनेव निष्फला भवति मतिस्ताद्दृश्याः फलपर्यन्ताया मतेर्यत् साधनं ध्यानमौ-ननिदिध्यासनादिशब्दैः प्रतिपादितं तदखिलं कृत्स्नं सोपकरणं प्रतिपित्समानः प्रतिपत्तुमिच्छन्निति वर्त्ति-ष्यमाणं हेतुमत् कथयति। पुनरप्युवाच पृष्टवान् गुरु-म्। श्रवणमननाभ्यामहं ब्रह्म न भवामीत्येवंविधाऽ-सत्त्वावरणनिवृत्तावप्यहं ब्रह्मरूपेण न भामीत्येवंविधा-ऽभानावरणस्य स्थितेस्तन्नाशाय फलवन्मतिसाधना-काङ्क्षाऽस्तीति दर्शितम्। तद्विना वेदान्तानां प्रयोजन-वन्मतिपर्यवसायितारूपप्रामाण्यासिद्धेः ॥ १ ॥

ऐदंपर्यमखण्डवस्तुविषयं वेदान्तवाक्यस्य यत्
पूर्वं वर्णितमस्य भूदपहतिर्मा नाम मानान्तरैः ॥
किं त्वस्याः परिनिष्ठितस्वविषयध्वान्तच्छिदो जन्मने
विद्याया वचनादृते किमपरं कृत्यं भवेत् साधनम् ॥२॥

इदानीं शिष्यस्य द्वितीयाध्यायकृतशङ्कानिवृत्तिम-नुवदन् तदीयजिज्ञासितगोचरप्रश्नमाह। ऐदंपर्यमिति। वस्तुतोऽखण्डत्वं त्रिविधपरिच्छेदशून्यत्वं प्रत्यगभिन्न-त्वं च। प्रथमपद्ये प्रस्तुतत्वाद्द विद्याया अस्या इति परामर्शः, विद्यासमानविषयस्य ध्वान्तस्याऽभानाव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणस्य परिनिष्ठितत्वं नाम विविधनिविडवासनाभिः सहानादिकाले निरूढत्वम्, अथ वा परिनिष्ठितेति विषयस्य ब्रह्मणो विशेषणं बाधावधित्वकथनार्थम्, वचनाद्वेदान्तवाक्यात्, कृत्यमनुष्ठेय म्, यतः कृत्स्नकर्मत्यजोऽनन्यगतिकस्येति शेषः । ननु वचनादुत इत्युक्त्यैवानुष्ठेयसाधनस्य तदन्यत्वमवगतं किमपरमिति विशेषणेनेति चेत्, सत्यम्, नाऽयमपरशब्दोऽन्यत्वपरः किं तु प्रधानभूतवेदान्तवाक्योपकारितया साधनान्तरस्य तद्गुणत्वपर इत्यनवद्यम् ॥ २ ॥

वैराग्यस्य दृढत्वमेकमपरं तत्त्वंपदार्थज्ञता
वाक्ये निर्गुणनिष्ठिते च सकले न्यायादियत्तामतिः ।
सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञता
वाक्यार्थप्रतिपत्तिसाधनमिदं यत्नेन कृत्यं यतः ॥३॥

यानि त्वया पृष्टानि साधनानि तानि तृतीयाध्यायनिविष्टैश्चतुर्भिः पादैः क्रमेण निरूपितान्येवेत्यभिप्रेत्याहाचार्यः । वैराग्यस्येति । नन्वादावेव जिज्ञासासूत्रगताथशब्दोपात्तन्यायैर्वैराग्यस्य दृष्टादृष्टद्वारा तत्त्वबोधोपकारिताया उक्तत्वात् कृतमत्र तदभिधानेनेत्याशङ्क्योक्तं दृढत्वमिति । तत्रैहिकामुष्मिकविषयभोगेच्छालक्षणवैराग्यमात्रस्य साधनत्वमुक्तम्, अत्र जीवस्य शुभाशुभादिकर्मवशान्नानाविधशरीरपरिग्रहपरित्यागलक्षणदुरन्तदुःखमयसंसारनिरूपणेन तज्जि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सारूपस्य तद्दार्ढ्यस्य विवक्षितत्वान्न पुनरुक्तता । अत एव रंहतिपादविषयभूतवाक्यशेषे तस्माज्जुगुप्सेतेत्यन्यकर्मविपाकेषु सर्वात्मना जिहासा कार्येत्युक्तम् । एकम्, वाक्यार्थप्रतिपत्तिसाधनमिति सम्बन्धः । तत्र द्वितीयपादे संध्ये सृष्टिराह हीत्यारभ्य न स्थानतोऽपीत्यतः प्राक्तनेन ग्रन्थेन वस्तुतोऽवस्थात्रयसंसर्गहीनस्तत्साक्षी चिदेकरसस्त्वंपदार्थो निरूपितः । तत आरभ्याऽऽपरिसमाप्तेस्तत्पदार्थो वस्तुतः सर्वोपाधिरहितः सत्यज्ञानादिरूपो निरूपितः । तत्प्रतिपत्तिरपि वाक्यार्थप्रत्यग्ब्रह्मैक्यप्रतिपत्तिकारणमित्याह । अपरं तत्त्वंपदार्थज्ञतेति । गुणोपसंहारपादे नानाशाखागतोपनिषत्प्रतिपाद्यब्रह्मविद्यैक्यं निरूप्यानन्दादयः प्रधानस्येत्यादिनाऽऽनन्दसत्यज्ञानानन्तादिपदवाच्यार्थानुश्रुतस्थलेषूपसंहृत्य तल्लक्ष्यस्यैकस्यैव दुःखानृतजडपरिच्छेदादिविरुद्धस्वरूपविशेषस्य प्रतिपत्तिर्दुःखित्वानृतत्वजडत्वपरिच्छिन्नत्वादिभ्रमविरोधिनी सर्वत्रैकरूपैव जायत इति न्यायागमाभ्यां निरूपितम् । तदनुसन्धानमप्यत्र साधनमित्याह । वाक्य इत्यादिना । सकले समस्तोपनिषद्गते, चशब्देन मन्दाधिकारिणां सगुणोपासनं तदपेक्षितोपास्यगुणोपसंहारन्यायपरिशीलनं च तत्त्वसाक्षात्कारसाधनमिति विवक्षितम् । तदुक्तं कल्पतरौ । निर्विशेषं परं ब्रह्म साक्षात् कर्तुमनीश्वराः । ये



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः । वशीकृतेमन-स्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत् साक्षादपे-तोपाधिकल्पनमिति । यमेवैष वृणुते तेन लभ्य इति श्रुतिरप्युक्तार्थपरा । पुरुषार्थपादोक्ताऽन्तरङ्गबहिरङ्ग-साधनापेक्षामाह । सम्यग्ज्ञानेति । शान्तो दान्त इ-त्यादिवाक्येन शमादीनां तत्त्वसाक्षात्कारोद्देशेन वि-धानादस्मिन्नेव जन्मनि यावत्साक्षात्कारमनुष्ठेयत्वा-त् समीपभवत्वेनान्तरङ्गत्वम् , वेदानुवचनादीनां वि-विदिषोद्देशेन विधानात्तदवधिकमनुष्ठानमिति दूर-भवत्वात्तेषां बहिरङ्गत्वमिति विवेकज्ञानेनापोह्य बहि-रङ्गमन्तरङ्गानुसरणमपरं साधनमित्यर्थः । तदेतत् सा-धनजातं परमहंसेनावश्यमनुष्ठेयम् । त्वंपदार्थविवेका-य संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयते यस्मा-त्त्यागी पतितो भवेदित्यादिवचनैस्तस्य तदकरणे प्र-त्यवायश्रवणात्तेनैव चैतदनुष्ठातुं शक्यम्, तस्य कर्मा-नुष्ठानादिकृतविक्षेपाभावादिति यत्नेन यतेरिति प-दद्वयाभिप्रेतम् ॥ ३ ॥

संसारदोषमवधारयतो यथावद्
वैराग्यमुद्भवति चेतसि निष्प्रकम्पम् ॥
वैराग्यजन्मनि दृढे च सति प्रवृत्ति-
स्तत्त्वंपदार्थपरिशोधनकर्मणि स्यात् ॥ ४ ॥

ननु सर्वेषां दृष्टश्रुतविषयभोगविषयस्य रागस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नसिद्धस्येष्यमाणविषयप्राप्त्यैव निवृत्तिः स्वानुभवसिद्धा तथा चैहिकस्यामुष्मिकस्य च हिरण्यगर्भान्तस्य विषयभोगस्याप्राप्तौ कथं ततो वैराग्यम्, तदभावे च कथंतरां तद्दार्ढ्यम् , कथंतमां चेष्यमाणविषयसिद्धये लौकिकवैदिककर्मानुष्ठानव्यग्रचित्तस्य त्वंपदार्थपरिशोधनावकाश इति । तत्राह । संसारेति । यद्यपि विषयभोगपरितृप्तस्य भोगसामर्थ्यप्रतिबन्धाद्रागोत्कलिकोपशमो भवति, तथापि तृप्तेरनित्यत्वात् पुनरप्रतिबद्धसामर्थ्यस्य भुक्तसजातीयभोगगोचरोऽभ्यधिको रागः समुद्भवतीत्यपि सर्वानुभवसिद्धम् । तथा चाहुः पौराणिकाः । न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धत इति । तत्र विषादियुक्तान्नादाविव वक्ष्यमाणदोषदर्शनमेव रागनिवृत्तिहेतुः , पुनःपुनस्तदनुसन्धानं च तद्दार्ढ्यहेतुरित्येवमुत्पन्नवैराग्यदार्ढ्यस्य सकलकर्माणि त्यक्तवतस्तत्कृतविक्षेपाभावात्त्वंपदार्थशोधनमनन्तरं सुकरमित्यर्थः । अत एव प्रथमद्वितीयपादयोः क्रमोऽप्युपपन्न इति भावः ॥ ४ ॥

संसाररूपमवगच्छ विविच्यमानं
यस्मिन् श्रुते भवति तद्विषया जुगुप्सा ॥
वेदः प्रकाशयति संसरणं यथाऽस्य
जीवस्य जन्ममरणे व्रजतः क्रमेण ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु कर्मफलेषु पुत्रवित्तादिषु स्वर्गादिषु च स्वा-ससुन्दरेषु दोषमेवाक्कदृष्टान्तवन्न पश्यामः, कथं ततो विराग इत्याशङ्क्य मिथ्यात्वान्नित्यसुदुःसहदुःखप्रचुरत्वं भयशोकस्पर्द्धाऽसूयाद्यनर्थव्रातग्रथितत्वं च कर्मफलरूपसंसारे मया क्रमेण विविच्योच्यमानमवधारय, तत एव ततो वैराग्यादि सुलभमित्याह। संसाररूपमिति। त्वद्वचनस्य पौरुषेयतया मूलप्रमाणापेक्षस्य स्वतः प्रामाण्यायोगात् कथं तदर्थे विश्वासी भवेदित्याशङ्क्याह। वेद इति। यथा यथावज्जन्ममरणे क्रमेण निरन्तरं व्रजत इति संबन्धः, ऐहिककर्मफलेष्वनर्थप्रचुरत्वं प्रत्यक्षानुमानाभ्यामेव विमर्शवतामवगतम्। आमुष्मिकेष्वपि तेषु तस्मिन् यावत्संपातमुषित्वाऽथ तमेवाध्वानं पुनर्निवर्त्तन्त इत्यारभ्य तद्य इह रमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशोहयत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वेत्यादिश्रुत्येष्टादिकारिणामपि पुण्यक्षये पुनः पूर्वसंचितशुभाशुभकर्मवशान्नानाविधगर्भवासाद्यनर्थप्रतिपत्तेर्दोषभूयिष्ठत्वमवगतम्। उक्तं च भगवता। एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त इति। कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च। ततः सर्वत्र जिहासा युक्तेत्यर्थः ॥ ५ ॥

शुद्धः परो न खलु वाङ्मनसव्यतीतः
संसारदुःखमतिदुःसहमश्नुवीत ॥
स्वाविद्यया हि पर एव स जीवभाव-
मागत्य संसरति लिङ्गसमागमेन ॥ ६ ॥

नन्वात्मन्यनादिकालप्रवृत्तस्य कर्मतत्फलात्मकसंसारस्य स्वात्मवद्दुष्टस्यापि तस्याशक्यं हानं कर्त्तुमिति शङ्कां निराकुर्वन् तस्य मिथ्यात्वेनासारत्वदोषप्रकटनायात्मनो वस्तुतस्तदसंस्पर्शं तावदाह। शुद्ध इति। स्वतः कामकर्मादिदोषहीन इत्यर्थः। तत्र हेतुः पर इति। वस्तुतो निर्विशेषनिरतिशयानन्दपरमात्मैव स इति न तत्र कर्मतत्फलस्पर्श इत्यर्थः। ननु संसारितयाऽनुभूयमानस्य जीवस्य परमात्मभावोऽसंभावित इत्याशङ्क्येन्द्रो मायाभिः पुरुरूप ईयत इत्यादिवचनात् स्फटिकलौहित्यादिवदनिर्वचनीयाविद्योपाधिनिबन्धनत्वेन जीवत्वादेर्मिथ्यात्वान्न विरोध इत्याह। स्वाविद्ययेति। तर्हि सुषुप्त्यादावपि संसारप्रसङ्ग इत्याशङ्क्य वक्ष्यमाणाविद्यकलिङ्गदेहस्यापि तत्रोपाधित्वमाह। लिङ्गेति। सुषुप्त्यादौ च लिङ्गस्य लीनत्वान्न संसारप्रसङ्ग इति भावः ॥ ६ ॥

ब्रह्मैव संसरति मुच्यत एतदेव
दौवारिकं भवति संसरणं तु तस्य ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तिः पुनर्भवति चिद्वपुषैव तस्य
स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च ॥ ७॥

ननु निरुपाधिकात्मन एव मुक्तिभाक्त्वात्तस्यैव ब-न्धरूपसंसारभाक्त्वं वाच्यम्. बन्धमोक्षयोरेकाश्रयत्व-नियमात्, ततश्च बन्धस्य वास्तवत्वमपरिहार्यमिति तत्राह । ब्रह्मैवेति । अविद्यादशायां यस्तदधीनभा-न्त्यैव संसारमनुभवति स एव स्वाभाविकब्रह्मभाव-साक्षात्कारात्तस्याः समूलाया निरासान्मुच्यत इति ब्र-ह्मैव सन् ब्रह्माऽप्येति विमुक्तश्च विमुच्यत इत्यादि-श्रुतिभिः प्रतिपादनाद्दशाद्वयेऽपि जीवस्य ब्रह्मभाव एकरूप एव, न हि स्थाणोः स्थाणुत्वं चोरभ्रमतन्नि-वृत्तिदशयोर्विशेषवद्भवति, न चैतावता तत्राज्ञानकल्पितं चोरत्वं वास्तवं भवति, एवं चात्मन्यनिर्वचनीयावि-द्याकल्पितलिङ्गोपाधिनिबन्धनसंसारस्य मिथ्यात्वमुपे-यमित्यर्थः । तर्हि विद्याया अप्याविद्यकतयाऽनिर्वच-नीयत्वाद्बन्धवन्मुक्तेरपि तदधीनाया मिथ्यात्वं स्यादित्याशङ्क्य तयोर्वैषम्यमाह । दौवारिकमित्यादि-ना । तस्य मिथ्यैव जीवस्वभावमापन्नस्य ब्रह्मणो यद-निर्वचनीयलिङ्गसंबन्धद्वारकं संसरणम्, तत् स्वरूपा-ज्ञानविजृम्भितभ्रान्तिमात्रसिद्धत्वान्मिथ्यैवेति युक्तम्, तस्यैव तु स्वात्मतत्त्वबोधान्निवृत्ताज्ञानस्य नित्यशुद्धा-दिरूपब्रह्मात्मनैव स्थितिरूपा या मुक्तिस्तस्यास्तत्त्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदकमानसिद्धब्रह्ममात्रतया बाधायोग्यत्वाद्व वास्तवत्व मिति वैषम्यमित्यर्थः ॥ ७ ॥

स्वाज्ञानान्वयिनी चिदेव भवति स्वज्ञानमस्याः पुनर्नास्त्यन्तःकरणोपरागशबलांभावं विना युक्तितः ॥
कूटस्थे न तमस्विता म घटते नो विक्रिया तत्र नस्तस्मादेष विशेष ईषदुचितः स्वीकर्त्तुमेते प्रति ॥ ८ ॥

ननु मिथ्यातत्त्वज्ञानयोर्विषयवैषम्येऽपि यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स इति न्यायादज्ञानभ्रान्तितत्त्वबोधानामेकाश्रयत्वनियमादज्ञानाश्रयचिन्मात्राश्रयत्वमेव भ्रान्त्यादेः स्यात्तथा च लिङ्गोपाधिकजीवे प्रमातृत्वादिबन्धाभ्युपगमविरोध इति तत्राह। स्वाज्ञानान्वयिनीति । अनादिसिद्धाज्ञानस्य तत्कार्यलिङ्गतदुपहितचिदाश्रयत्वानुपपत्तेः शुद्धा चिदेव तदाश्रयो विषयश्चेति युक्तम् । स्वज्ञानं पुनर्भ्रमप्रमारूपमस्याश्रितोऽध्यस्ताहङ्कारसंपिण्डितप्रमातृरूपं विना नास्तीति युक्तितो निश्चयात् संभिन्नोभयधर्म उपेयते ज्ञानेच्छादेर्हि प्रमातृधर्मत्वमनुभवसिद्धमविप्रतिपन्नं च परीक्षकाणाम् । प्रमातृत्वं च प्रमाकर्तृत्वम्, तच्च स्वातन्त्र्येणेतरतत्कारकप्रयोक्तृत्वम्, तच्च चेतनस्य विकारवत एव सम्भवतीति केवलजडकूटस्थचैतन्ययोः प्रमातृत्वानुपपत्तेस्तद्धर्मज्ञानादेश्चिदचित्सम्वलितधर्मत्वं युक्तमित्यर्थः । तर्हि शुद्धचैतन्यस्य कूटस्थाऽसङ्गाद्विती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यादिरूपत्वात्तत्राज्ञानसंबन्धो युक्त्या न घटत इत्याशङ्क्याह । कूटस्थ इति । द्वाभ्यां नञ्भ्यां तद्घटनाऽवग्म्यते । अज्ञानस्यानादित्वेनाविकारत्वान्न तदाश्रयस्य कौटस्थ्यविरोधः । एवं तस्य ज्ञानबाध्यत्वेन मिथ्यात्वात्तत्संबन्धस्यापि तदधीनसत्ताकस्य तथात्वान्न वास्तवासङ्गत्वादिविरोधो नोऽस्माकं मत इति भावः। एवं तर्हि प्रमातृत्वाद्यपि शुद्ध एव घटते तस्य मिथ्यात्वेन तत्कौटस्थ्याविरोधित्वात्, कृतं शबलधर्मत्वेनेति तत्राह । नो विक्रियेति । तस्यागमापायित्वेन विकारत्वात्तद्धर्मिणा परिणामिना भवितव्यम्, न चात्मा परिणामी कौटस्थ्यहानेः । न चाज्ञानपरिणामस्य तस्यात्मन्यारोप इति वाच्यम् । केवलाज्ञानपरिणामत्वे सुषुप्त्यादावपि प्रसङ्गात् । लिङ्गरूपेण परिणताज्ञानपरिणामत्वे चास्मदिष्टसिद्धिरितिभावः । एवं तर्ह्यज्ञानभ्रान्त्यादीनां भिन्नाश्रयत्वमन्याय्यं प्राप्तमिति शङ्कामुपसंहारव्याजेन निराकरोति। तस्मादिति । एते ज्ञानाज्ञाने प्रति धर्मिगत एव विशेष उपहितानुपहितत्वाधीनभेदरूप ईषत्तदभेदाविरोधी पूर्वोदितन्यायात् स्वीकर्त्तुमुचित इत्यर्थः। कार्यकारणयोरत्यन्तभेदानङ्गीकारात्तदाश्रयचैतन्ययोरेकोपाधिकत्वस्यापि वक्तुं युक्तत्वान्न तदाश्रितानां वैयधिकरण्यम्, स्वतन्त्रोपाधिभेदभिन्नधर्मयोरेव तत्प्रसिद्धेरिति भावः ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुर्यष्टकं भवति तस्य परस्य मोहा-
त्तेनान्वितस्य तु नभोमलवद्व्यलीकम् ॥
दुःखं त्रिधा भवति संसरणाभिधानं
नान्यः परादधिकरूपभृदस्ति जीवः ॥ ९ ॥

वस्तुतोऽसंसारिणोऽपि जीवस्याज्ञानकार्यलिङ्गोपाधिकसंसरणमलीकमित्युक्तम्, तदयुक्तम् अनादिभावत्वेनात्मवदज्ञानस्य सत्यत्वात्तत्कार्यलिङ्गस्यापि तदभिन्नतया सत्यत्वेन तदधीनसंसारस्य मिथ्यात्वानुपपत्तिरिति चेन्नेत्याह। पुर्यष्टकमिति। कर्मेन्द्रियाणि खलु पञ्चेत्यादिना वक्ष्यमाणमज्ञानतत्कार्यात्मकं पुर्यष्टकं तस्य जीवस्य वस्तुतः परस्य सतो मोहादेव भवति भ्रान्तिमात्रकल्पितमित्यर्थः। अज्ञानस्वरूपस्य मानायोगत्वात्तत्त्वबोधबाध्यत्वाच्च रज्जुसर्पादिवदलीकत्वात्तत्कार्यस्यापि तदात्मकतया तथात्वात्तदधीनमाध्यात्मिकादिभेदभिन्नदुःखात्मकं संसरणं तस्य नभोनैल्यवदलीकमित्याह। तेनेति। ननु परादभिन्नस्यापि जीवस्य य आत्मनि तिष्ठन् द्वा सुपर्णेत्यादिश्रुतिभिर्भेदस्यापि प्रतिपादनात्तत्प्रयोजकं संसरणं वास्तवमित्याशङ्क्याह। नान्य इति। भेदस्याभेदसमसत्ताकस्यैकत्र विरोधेनासंभवात्। नान्योऽतोऽस्ति द्रष्टा उदरमन्तरं कुरुत इत्यादिश्रुतिभिर्निषेधाच्च तत्र न वास्तवभेदाद्युपेयत इत्यर्थः ॥ ९ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नांशः परस्य न च तस्य विकार एष
नात्यन्तमेव च विभिन्नवपुः परस्मात्॥
जीवोऽयमभ्युपगतः कुत एतदेवं
अज्ञात्मतावचनजातविरोधहेतोः ॥ १० ॥

ननु पादोऽस्य विश्वा भूतानि, ममैवांशो जीवलो-क इत्यादिश्रुतिस्मृतिभिर्जीवस्य परांशत्व प्रतीतेरग्नि-विस्फुलिङ्गादिदृष्टान्तश्रुत्या च तस्य परविकारत्वप्रति-पत्तेश्च तयोर्भेदाभेदावुपेयौ, अन्यथांऽशांशिभावाद्यनु-पपत्तेरिति, नेत्याह। नांश इति। तृतीयपक्षनिषेधो दृष्टान्तार्थः। मतान्तरनिषेधार्थो वा। सर्वत्राकाङ्क्षापू-र्वकं हेतुमाह। कुत इत्यादिना। निष्कलं निष्क्रियं शान्तम्, अजो नित्यः शाश्वतोऽयं पुराण इत्यादिश्रु-त्यांशिनो विकारस्य चानित्यत्वाद्बाधापादकयुक्त्यनुगृही-तया विरोधादंशित्वादेः सत्यत्वायोगाद्ध वचनान्तरस्य घटाकाशादिवदौपाधिकाल्पत्वाद्यनुवादेन ब्रह्मानन्त्य-परत्वादखण्डपरतत्त्वमादिवाक्यसमन्वयविरोधाच्च नैते पक्षा उपादेया इत्यर्थः ॥ १० ॥

अपि च विश्वमनुप्रविवेश तत
परममेव पदं परमात्मनः ॥
इति वदत्सु सुहृत्स्विव तत्पर-
श्रुतिवचःसु कथं स ततोऽधिकः ॥ ११ ॥

इतोऽपि जीवस्य वस्तुतोंऽशत्वादिकल्पना न घट-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्याह । अपि चेति । स एष इह प्रविष्ट आनखाग्रेभ्यः, तत् सृष्ट्वा तदेवानुप्राविशत्, अनेन जीवेनात्मनाऽनुप्रविश्येत्यादिश्रुतिवचनेषु सूर्यस्य स्वसृष्टजलभेदेष्वविकृतस्य प्रवेशवदविकृतपरमपुरुषार्थपरमात्मस्वरूपस्यैव स्वसृष्टव्यष्टिसमष्टिरूपसर्वोपाधिषु प्रविष्टस्य जीवभावमत्यन्तहितकारिमातृवत्तात्पर्येणोपदिशत्सु सत्सु कथं तस्य तद्विरुद्धविकारादिभावो भवेत्। न चात्रान्तर्यामिभावेनैव परमात्मनः प्रवेशोऽभिहितो न जीवभावेनेति सांप्रतम् । प्रविष्टस्य प्राणन्नेव प्राणो नाम भवतीत्यादिश्रुत्या प्राणनादिव्यापारवत्त्वप्रतिपादनविरोधात् । अत एव चोपमा सूर्यकादिवदित्याद्यधिकरणोक्तन्यायविरोधाच्च श्रुतितो जीवस्य परेणात्यन्ताभेद एव वास्तवो विपरीतं त्वाविद्यकमिति स्थितमित्यर्थः ॥ ११ ॥

> प्रच्यावि वस्तु यदिहास्ति निजस्वरूपा-
> दप्रच्युतैकरससंविदधीनमस्य ॥
> प्रच्यावितास्फुरणमित्यवगत्य तत्र
> तत् कल्पितं सकलमाकलयानुमानात् ॥ १२ ॥

इदानीं युक्तितोऽपि जीवस्य ब्रह्मात्मतैव वास्तवीत्याह । प्रच्यावीति । भिन्नो जीवः किं स्वतो जड़ो विकारी च, किं वा कूटस्थचिदात्मा । आद्ये निजस्वरूपात् कूटस्थचैतन्यात् प्रच्याव्युद्रिक्तं जड़ं विकारि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च यद्‌ बुद्ध्यादि वस्त्विह व्यवहारदशायामस्ति तस्मि-
न्नरूपस्य यत् प्रत्यावित्वस्फुरणं तत् कूटस्थैकरससंवि-
द्रूपसाक्ष्यधीनमिति नियमावगमाज्जीवस्यापि तथा-
त्वावगमेन दृश्यत्वमपरिहार्यं स्यात्। तथा च तस्य
बुद्ध्यादिसहितस्य साक्षिणा वास्तवसम्बन्धानिरूपणा-
द्रज्जुसर्पादिवत्तत्र साक्षिण्यविद्याकल्पितत्वमनुमाना-
दापद्येत, न चैतदिष्टम्। न हि तत्त्वबोधाधीनमुक्तिभा-
जो जीवस्य स्वरूपं कल्पितमिति कैश्चिदुपेयते। द्वितीये
ऽत्र तस्य कूटस्थचिद्रूपब्रह्मणो भेदे मानाभावादेको दे-
इत्यादिश्रुतिविरोधाच्च न सत्यभेदावकाश इति भा-
वः ॥ १२ ॥

चैतन्यवस्तुविषयाश्रय एव मोहो
नाद्वैतवस्तुविषयाश्रयकोऽप्रतीतेः ॥
बुद्ध्यादिवेष्टितचितो न तमस्वितेति
ब्रह्माश्रयत्वमुदितं तमसः पुरस्तात् ॥ १३ ॥

ननु जीवब्रह्मणोरत्यन्ताभेदे ब्रह्मणोऽपि स्वगो-
चराज्ञानाश्रयतया संसारित्वं स्यादित्याशङ्क्य किं ब्र-
ह्मशब्देन चिन्मात्रं विवक्षितमुत जगदुपादानत्वादिवि-
शिष्टं चैतन्यमिति विकल्पमभिप्रेत्याद्यमङ्गीकरोति। चै-
तन्येति। द्वितीये तस्य चिन्मात्रतया तदाश्रयत्वादि-
भवेऽपि जीवव्यावृत्ताविद्यकेश्वरत्वरूपेण नाज्ञत्वादि-
भव इत्याह। नाद्वैतेति। तर्हि ब्रह्मैव संसरतीत्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथमुक्तमित्याशङ्क्य, बुद्ध्यादुपाधिहितचैतन्यस्य तदनाश्र-यत्वादित्यभिप्रायेणैतदुक्तमित्याह। बुद्ध्यादीति॥ १३॥

ब्रह्माश्रयं न हि तमोऽनुभवेन लभ्यं
नाप्यागमान्न च किमप्यपरं प्रमाणम्॥
ब्रह्माश्रयत्वविषयं तमसस्ततश्च
प्रत्यक्प्रकाशविषयाश्रयमेतदस्तु॥ १४॥

जीवव्यावृत्तेश्वररूपेऽज्ञत्वाद्यभावं मानाभावेन प्रप-ञ्चयति। ब्रह्माश्रयमिति। अनुभवेन प्रत्यक्षेण। तम-सो ब्रह्माश्रयत्वविषयमिति प्रमाणविशेषणम्। परि-शेषात् स्वप्रकाशचिन्मात्राश्रविषयत्वमज्ञानस्योपेयमि-त्याह। ततश्चेति॥ १४॥

जीवत्वमेव तु तदाश्रयमध्यपाति
नेच्छन्ति युक्तिकुशला न हि युज्यते तत्॥
अज्ञानमेव खलु तत्र तमस्तमास्वि
चैतन्यवस्तु पुनरस्तु न तद्विरोधः॥ १५॥

ननु जीवत्वमेवाज्ञानाश्रयतावच्छेदकमुपेयं न तु चिन्मात्रत्वं जीववदीश्वरस्यापीतरथाऽज्ञत्वादिदोषप्रस-ङ्गादतो जीवाश्रितैवाविद्या ब्रह्मविषयेति, नेत्याह। जीवत्वमेवेति। तदाश्रयमध्यपाति, अज्ञानाश्रयवि-शेषणमिति यावत्, न ह्यज्ञानाश्रयत्वमात्रमज्ञत्वं र-ज्जुतत्त्वबोधदशायां कालान्तरभाविसर्पादिभ्रमहेत्वज्ञा-नशालिनोऽपि चैत्रस्य तत्राज्ञत्वाभावात्, तदा तस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रज्जुतत्त्वावारकत्वाभावात्, तदाश्रयस्यापि नाज्ञत्वमि-
ति चेनर्हि ब्रह्मणश्चिद्रूपतयाऽविद्याश्रयत्वेऽपि सर्वज्ञ-
त्वसर्वनियन्तृत्वादिरूपेण श्रुत्यादिसिद्धत्वात्तत्स्वज्ञा-
नस्य वस्त्वावारकत्वायोगात्तत्राज्ञत्वभ्रान्तत्वादिशङ्का
दूरापास्ता। जीवस्य तु स्वात्मानं प्रति वस्त्वावारक-
ऽविद्याभिमानित्वादज्ञत्वादिव्यवस्थाऽज्ञानस्य चिन्मा-
त्राश्रयत्वपक्षेऽप्युपपद्यते. एतदभिप्रेत्योक्तं युक्तियु-
ला इति। परमते जीवत्वस्याश्रयविशेषणत्वेऽनुपपत्ति
प्रतिज्ञापूर्वकमाह। न हीत्यादिना। तज्जीवत्वमज्ञा-
नाधीनसत्ताकत्वादज्ञानमेव, तथा चाज्ञानस्य तद्वि-
शिष्टाश्रयत्वे स्वाश्रितत्वमपि स्यात् तच्च विरुद्धम्,
न च जीवत्वस्याज्ञानाश्रयोपाधित्वान्नोक्तदोष इति
वाच्यम्। तस्य चिन्मात्रधर्मत्वे मतभेदायोगादवि-
दः, अतिरिक्तधर्मत्वे च तस्यातिरिक्तस्य मुक्त्यन्वयि-
त्वमपि स्यात्, न च तथोपेयते, शुद्धचैतन्यस्य तु
दाश्रयत्वे न कोऽपि विरोध इत्यर्थः ॥ ९५ ॥

कर्मेन्द्रियाणि खलु पञ्च तथाऽपराणि
बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ॥
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः ॥ ९६ ॥

एवमविद्याश्रयचिन्मात्रस्याविद्याप्रतिबिम्बरूपेण
दावृतनिरूपाधिस्वरूपत्वादज्ञत्वं जीवत्वं चेत्युक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यैव नानाविधदुःखादिमत्त्वरूपसंसरणं तु मोहकल्पितपुर्यष्टकयोगादिति पुरोक्तम्, तत्र किं तत् पुर्यष्टकमिति वीक्षायामाह । कर्मेन्द्रियाणीति । वचनादानगमनविसर्गानन्दरूपक्रियाऽसाधारणकारणानि कर्मेन्द्रियाणि पञ्च खलु प्रसिद्धानि, उक्तक्रियारूपकार्यलिङ्गानुमानैस्तेषां प्रसिद्धेः । सत्स्वपि तत्तदिन्द्रियाधारावयवेषु तेषामभावादेव मूकादिषु वचनादिक्रियाभावदर्शनात् । तानि च व्यष्टिसमष्ट्यात्मकान्येको गण एका पुरी, पुरवत् स्वामिनो भोगहेतुत्वात् । अपराणि शब्दस्पर्शरूपरसगन्धोपलब्धिष्वसाधारणकारणानि श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि तथा पञ्च प्रसिद्धानि सोऽपि गणो द्वितीया पुरीत्येवमग्रेऽपि द्रष्टव्यम् । एकमप्यन्तःकरणं मनो बुद्धिरहंकारश्चित्तमिति संकल्पाध्यवसायाभिमानस्फूर्त्तिरूपवृत्तिभेदेनानेकधोच्यमानमेको गणः । एवमाध्यात्मिक एकोऽपि वायुः श्वासप्रश्वासादिवृत्तिभेदेन प्राणापानव्यानोदानसमानशब्दैः पञ्चधोच्यमान एको गणः । एवमपञ्चीकृतभूतकार्यं लिङ्गदेहं भोगोपकरणं गणचतुष्टयात्मना निर्दिश्य स्थूलभूतैः सह तत्कार्यं भोगायतनं भोग्यांश्च विषयानेकीकृत्यैकं गणमाह । अथो इति । वियदादेरुक्तवैलक्षण्यार्थोऽयं निपातः । इदानीं संसारे मुख्यं प्रयोजकं कार्यकारणरूपं गणद्वयमाह । कामश्च कर्म चेति । उक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्तपुरीणां निदानमज्ञानमेवाष्टमपुराकाङ्क्षायां तत्त्वेन गृहाणेत्याह । तम इति । एवं च तत्त्वबोधादविद्यानिवृत्त्या सर्वसंसारोपशम इति भावः ॥ १६ ॥

विद्या च विश्वविषयाऽनुभवोत्थपूर्व-
प्रज्ञा च कर्मवचसैव तु संगृहीते ॥
बन्धप्रयोजकतया सदृशत्वहेतो-
रेकत्र च श्रुतिवचस्युपसंग्रहेण ॥ १७ ॥

ननु तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतौ विद्यापूर्वप्रज्ञयोरपि संसारहेतुत्वप्रतिपत्तेः कथं पुर्यष्टकस्यैवोक्तस्य तद्धेतुत्वम्, कथं वा विद्याहेतुके तस्मिन्नविद्याया हेतुत्वमिति तत्राह । विद्या चेति । द्वितीयाऽऽशङ्कानिराकरणाय विशिनष्टि । विश्वविषयेति । नात्र परब्रह्मविद्या विद्यापदेनोपात्ता. इति नु कामयमान इति संसारप्रकरणंसमाप्य, अथाकामयमान इत्यादिना प्रकरणान्तरेण परब्रह्मभावस्यैव परब्रह्मविद्याफलस्य वक्ष्यमाणत्वात् । किं तु वक्ष्यमाणचातुर्विध्यमाविद्यकप्रपञ्चगोचरज्ञानमिह विद्यापदोपात्तमिति तत्फलसंसारस्याविद्याहेतुत्वं नानुपपन्नमित्यर्थः । पूर्वानेकजन्मसु संचिता भोगवासना पूर्वप्रज्ञा,पूर्वपद्यनिविष्टकर्मपदेनोक्तविद्यापूर्वप्रज्ञयोरप्युपलक्षणया संगृहीतत्वात्तत्त्रयाणामेकगणत्वस्य विवक्षितत्वान्नाद्यचोद्यावकाश इत्यर्थः । कर्मवचसा त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणायां मुख्यार्थसम्बन्धं स्वगतं प्रमाणद्वारकं चाह। बन्धप्रयोजकतयेति ॥ १७ ॥

तं विद्येति हि वाक्यमेकमिह च स्पष्टं त्रयं कीर्त्तितं
तस्मात् कर्मवचस्त्रयोरपि भवेन् संग्राहकं कारणात् ॥
विद्या चात्र चतुर्विधाप्यभिमतैवारम्भिका कर्मवत्
संस्कारोऽपि तथा चतुर्विध इति ज्ञेयस्तथा संभवात् ॥१८॥

किं तदेकं श्रुतिवचो येन विद्यादित्रयं बन्धहेतुतयोक्तमिति वीक्षायामाह। तं विद्येति। तस्मात् कारणादिति संबन्धः। ननु पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति शुभाशुभकर्मण एव संसारहेतुत्वप्रतिपत्तेः कथं विद्यापूर्वप्रज्ञयोस्तद्धेतुत्वमित्याशङ्क्य तत्र कर्मैव तद्धेतुरित्यभ्रवगादेतद्वचनबलात् त्रयाणामपि संसारहेतुत्वमविशिष्टमिति वदन् तेषु चातुर्विध्यमाह। विद्या चेत्यादिना। का चन विद्या शास्त्रविहिता देवताद्युपासनरूपा, अपरा तन्निषिद्धाऽसच्छास्त्रविषया, अन्या विहितसमा विधिं विनापि यदृच्छयोपपन्ना गङ्गादिदर्शनरूपा श्रेयस्करी, का चिन्निषिद्धसमा बीभत्सितशवादिविषया सद्यो दुःखकरीति विद्यायाश्चातुर्विध्यम्। एवं कर्मणां यागवधाहारविहारादिरूपाणामपि विहितप्रतिषिद्धाऽविहिताप्रतिषिद्धभेदेन चातुर्विध्यं द्रष्टव्यम्। एवं पूर्वप्रज्ञाख्यसंस्कारोऽपि मूलानुभवानुरोधेन चतुर्विधो बन्धहेतुरित्यर्थः ॥ १८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुर्यष्टकं तदिदमप्यभवद्धि लिङ्गं
तेनोच्यते तदपि लिङ्गगिरा क्वचित्तु ॥
पुर्यष्टकं न खलु लिङ्गगिरोऽभिधेयं
मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम् ॥१९॥

ननु विद्यादीनां त्रयाणां संसारहेतुत्वेऽपि तद्युक्त लिङ्गस्यैव तद्धेतुत्वमुपेयं न पुर्यष्टकस्य, तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्येत्यादौ लिङ्ग स्यैव तद्धेतुत्वश्रुतेरित्याशङ्क्य स वा अयमात्मा ब्रह्म विज्ञानमय इत्यादिश्रुतौ भूतभौतिकादिसर्वमयत्वप्रति पत्तेस्तदेकदेशवाचिलिङ्गश्रुतिर्लक्षणया पुर्यष्टकविषया नेतव्येत्याह । पुर्यष्टकमिति । तुशब्दः शङ्काव्यावृत्त्य र्थः । पुर्यष्टकमेव तदभिधेयं किं न स्यात् कृतं लक्ष णयेत्याशङ्क्य, लिङ्गयति नियमेन स्वधर्मं ज्ञापयति तद्लि लक्षणात्मनीति व्युत्पत्त्या तस्य लिङ्गपदाभिधेयत्वाल्लि गाद्दु वक्ष्यमाणसप्तदशकगण एव तदभिधेय इत्याह पुर्यष्टकमिति ॥ २९ ॥

इह तावदक्षदशकं मनसा
सह बुद्धितत्त्वमथ वायुगणः ॥
इति लिङ्गमेतदमुना पुरुषः
खलु संगतो भवति जीव इति ॥ २० ॥

किं तत् सप्तदशात्मकं मुख्यं लिङ्गमिति वीक्षा माह । इह तावदिति । इह पुर्यष्टके, तावत् प्रथमं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तम्। कर्मबुद्धीन्द्रियदशकं चित्ताहंकारौ बुद्धावेकीकृत्य मनो बुद्धिरित्यन्तःकरणद्वयम् प्राणादयो वायवः पञ्चेत्येतत् सप्तदशात्मकं मुख्यं लिङ्गम्, अमुना प्राणप्रधानेन लिङ्गेनावच्छिन्नश्चिदात्मा जीवपदवाच्य इत्यर्थः ॥ २० ॥

न पुराष्टकेन रहितस्य तव
क्व चिदस्ति संसरणदुःखयुजा ॥
न पुराष्टकेन सहितस्य तथा
क्व चिदस्ति दुःखविगमश्च तव ॥ २१ ॥

ननु हिरण्यगर्भादीनामधिकारिपुरुषाणां सत्यपि पुर्यष्टके दुःखस्वरूपसंसाराभावात् कथं तस्य तद्धेतुत्वमित्याशङ्क्य, तेषामपि सोऽबिभेत् स वै नैव रेमे, इन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्शेत्यादिश्रुतिभिर्भयारत्यादिप्रतिपादनात्तस्य तद्धेतुत्वं निरपवादमित्यभिप्रेत्य सर्वेषामपि शरीरत्रयात्मकपुर्यष्टकाभावे संसाराभाव इत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुत्युक्तं व्यतिरेकमाह। नपुराष्टकेनेति। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुत्या सति पुर्यष्टकात्मके शरीरत्रये संसारो नास्तीति न किं त्वस्त्येवेत्यन्वयोऽप्युक्तः। ततोऽपि तस्य तद्धेतुत्वमुपेयमित्याह । न पुराष्टकेन सहितस्येति ॥ २१ ॥

तव नित्यमुक्तसुखचिद्वपुषो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न कदा चिदस्ति पुरसंगमनम् ॥
तव मायया विरचितं सकलं
पुरसंगतिप्रभृतिकं वितथम् ॥ २२ ॥

तर्हि पुर्यष्टकसंबन्धस्यात्मन्यनन्यप्रयुक्तत्वेन स्वाभाविकत्वात्तदधीनसंसारस्तत्र वास्तवः स्यादित्याशङ्क्याह । तव नित्यति । स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्, स यत्तत्र किं चित् पश्यत्यनन्वागतस्तेन भवति, असंगो ह्ययं पुरुषः, अप्राणो ह्यमनाः शुभ्रः, स एष नेति नेत्यात्मेत्यादिश्रुतिभिर्नित्यमुक्तादिरूपात्मनो वस्तुतः सर्वोपाधिरहितत्वश्रवणात्तस्य पुर्यष्टकान्वयो वास्तवो न शङ्कनीयः । न चोक्तवाक्यजातं परमात्मविषयमिति वाच्यम् । तथापि ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा इमे त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतिभिर्जीवस्यापि नित्यमुक्तादिरूपब्रह्ममात्रत्वप्रतिपत्तेस्तस्य पुर्यष्टकायोग उपेय इत्यर्थः । कथं तर्हि जीवे तदन्वयानुभवः, कथं वा पुराष्टकेन सहितस्येति प्रागुक्तमित्याशङ्क्याह । तव माययेति । उक्तरूप आत्मनि स्थूलसूक्ष्मशरीरद्वयस्य भूतभौतिकात्मनोऽनिर्वचनीयमायाविलसितत्वात्तस्य तदन्वयो मिथ्यैवावभासते, असङ्गाद्वितीयस्वप्रकाशचिदात्मनि मायाकार्यस्यापि वास्तवस्यायोगात् सोऽपि तदधीनसत्ताक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या तत्प्रयुक्तो न स्वाभाविक इत्यर्थः ॥ २२ ॥

मलिनं नभो न हि कदा चिदभूद्
विमलं कदा चिदभवन्न नभः ॥
उभयं नभस्यभवदेवमिह
त्वयि नित्यमुक्तचितिसंसरणम् ॥ २३ ॥

आत्मनो नित्यमुक्तत्वे यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः, न स तत् पदमाप्नोति संसारं चाधिगच्छति, यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः, स तु तत् पदमाप्नोति यस्माद् भूयो न जायत इति श्रुतिप्रतिपादितं बन्धमुक्तिकादाचित्कत्वं कथमित्याशङ्क्य, व्यावहारिकदृष्टिसिद्धबन्धमोक्षव्यवस्थाविषयेयं श्रुतिः, तत्त्वतस्तु न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः, न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेत्यादिश्रुतिपर्यालोचनया न बन्धो न वा मोक्षस्तस्यास्तीत्येतद् दृष्टान्तेनाह। मलिनमिति। मालिन्यं वैमल्यं वा नभसि कदाचिदपि वस्तुतो नाभूत्तथापि व्यवहारदृष्ट्या दुर्दिनादावुभयमभूत्। एवं ब्रह्मभूते त्वयि संसरणं तन्निवृत्तिश्चेत्यर्थः ॥ २३ ॥

न हि कल्पनाविरचितं वितथं
परमार्थवस्त्ववितथं स्पृशति ॥
परमार्थवस्तु च तथा तमसा
परिकल्पितं न किमपि स्पृशति ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वाविद्यकोऽपि बन्धो यदाऽस्ति तदाऽऽत्मनो ब-न्धस्य च परस्परसंबन्धस्यावश्यकत्वेन तत्र बन्धाभा-वायोगात् कथं नित्यमुक्तता तस्येत्याशङ्क्याह । न हि कल्पनेति । कल्प्यतेऽनयेति कल्पनाऽनिर्वचनीयाऽविद्या तत्कार्यमिति यावत् । येन संबन्धेन यत्र यत् प्रती-यते तेन संबन्धेन तत्र तस्य त्रैकालिकनास्तितायाः ए-व मिथ्यात्वलक्षणत्वाद् बन्धवैतथ्यस्य चोपपादितत्वा-दात्मनि बन्धदशायामपि बन्धात्मनोरितरेतरस्पर्शा-भावात्तस्य नित्यमुक्ततोपपद्यत इत्यर्थः ॥ २४ ॥

न हि भूमिरूषरवती मृगतृड्
जलवाहिनीं सरितमुद्वहति ॥
मृगवारिपूरपरिवारवती
न नदी तथोषरभुवं स्पृशति ॥ २५ ॥

ननु यदाऽऽत्मनि बन्धो वर्त्तते तदैव कथं तत्र त-दभावो घटेत भावाभावयोरेकदैकत्र विरोधादित्याश-ङ्कां परिहरन् पूर्वपद्योक्तमर्थं दृष्टान्तेन स्पष्टयति । न हि भूमिरिति । मृगतृड्जलवाहिनीमिति । मृगैस्तृष्णा-शादारोपितजलप्रापणीमित्यर्थः । अत्रोपाधिनात्मन्यारो-पितं बन्धनं न स्पृशतीत्यत्र दृष्टान्तः प्रथमेनार्द्धेन दर्शि-तः । द्वितीयेन त्वारोपितो बन्धस्तं न स्पृशतीत्यत्रेति द्रष्टव्यम् । इदमत्राभिप्रेतम् । मरुभूम्यादौ जलाद्यारो-पदशायामप्यदुष्टाक्षाणां विशेषदर्शनवतां तदा त [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाद्यभावस्य प्रमितत्वाद् भावाभावयोः समसत्ताकयो-रेकदैकत्र विरोधो न विषमसत्ताकयोरित्यभ्युपेयम्, तथा चात्मनि बन्धस्य मिथ्यात्वात्तदभावस्य त्रैकालिकस्य वास्तवत्वात्तयोरेकदैकत्र न विरोध इति ॥ २५ ॥

न तत्र क्वचिद् गमनमस्ति विभो-
र्न पुराष्टकस्य जडरूपभृतः ॥
न च मध्यवर्त्तिजडचिद्वपुषो-
र्गमनक्षमं किमपि संभवति ॥ २६ ॥

नन्वेष आत्मा उत्क्रामतीत्यादिश्रुत्या जीवस्यो-त्क्रान्तिगत्यागतिभिः संसारप्रतिपादनात् कथं तस्य मृषात्वमित्याशङ्क्य युक्तिभिस्तावत्तदसंभवमाह । न तत्रेत्यादिना । किं चिदात्मनो गत्यादिरूपः संसारो वास्तवः, किं वा जडस्य देहस्य, उत तृतीयस्य चिज्जडात्मकस्य । नाद्यः, तस्याणुमध्यमपरिमाणायोगेन सर्वगतस्य वास्तवगत्यादेरसंभवात् । न द्वितीयः, तस्य पुर्यष्टकान्तःपातिनो घटकुड्यादिवज्जडस्योक्तसंसारायोगात् । न तृतीयः, चिज्जडात्मकस्यैकस्य वस्तुनो विरुद्धत्वेनासंभवान् कस्य गत्यादि स्यादित्यर्थः । जडचिद्वपुषोर्मध्यवर्त्तिताभ्यामन्यत् तृतीयं चिज्जडात्मकं वस्त्विति यावत् ॥ २६ ॥

पुरवेष्टितं न खलु चिद्वलयं
परलोकमार्गमनुसर्त्तुमलम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटवेष्टितं न हि नभोवलयं
व्रजति व्रजत्यपि घटेऽविततें ॥ २७ ॥

जीवस्य ब्रह्मात्मना विभुत्वेऽपि लिङ्गावच्छिन्न-
या परिच्छिन्नत्वाद् गत्याद्युपपत्तिरित्याशङ्क्य तथाप्यु-
पाधेरेव गमनं स्यान्नात्मन इति दृष्टान्तेनाह । पुरवे-
ष्टितमिति । चिद्वलयम् , चितः परिच्छिन्नरूपम् । घ-
स्याविततत्वमव्यापित्वम् ॥ २७ ॥

घट एव गच्छति नभस्त्वचलं
व्रजता घटेन तु ततश्च ततः ॥
परिवेष्टनेन घटखं क्रियते
घटखानि तत्र सुबहूनि ततः ॥ २८ ॥

दृष्टान्तासंप्रतिपत्तिमाशङ्क्याह । घट एवेति । ननु
शुद्धस्य नभसोऽचलत्वेऽपि घटावच्छिन्ननभसो यत्रयत्र
घटो गच्छति तत्रतत्र दर्शनात् तस्यापि गमनमुपेय-
मिति तत्राह । व्रजतेति । तुशब्दः शङ्कानिरासार्थः ।
घटतत्क्रियासंतत्या घटनभसोरन्योऽन्यसंयोगस्य जा-
यमानत्वादवच्छेदकभेदेनावच्छिन्ननभसोऽपि नानाभू-
तस्य जायमानत्वात् सर्वत्र तस्यैकस्य दर्शनात्तद्गम-
नं मानहीनमित्यर्थः ॥ २८ ॥

पुरमेव गच्छति चितिस्त्वचला
व्रजता पुरेण यदि सापि चितिः ॥
परिवेष्ट्यते तु सुबहूनि तदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वलयानि पूर्वत्रदुपाश्रयसे ॥ २९ ॥

तर्ह्येतदेवास्त्वात्मनः परलोकगमनं यल्लिङ्गगमन-प्रयुक्तं तदवच्छिन्नचैतन्यस्य तत्र जन्मेति शङ्कते । पुरमेवेति । यद्युपाश्रयस इति संबन्धः । तुशब्दो मुख्यगमनाभावाङ्गीकारार्थः ॥ २९ ॥

अकृतागमश्च कृतनिष्फलता
फलतः समापतति कर्त्रगतेः ॥
अपरस्य भोक्तुरुदयाच्च दिवि
व्यसनस्य संततिरहो विषमा ॥ ३० ॥

दूषयति । अकृतागम इति । भूभागे ह्युपाधिपरिच्छिन्नचैतन्यस्य सुकृतादिकर्तृत्वम्, तस्यास्मिन् पक्षे परलोकगमनाभावान्न तत्फलभोक्तृत्वम् । यच्च परलोकगाम्युपाध्यवच्छिन्नं चैतन्यं फलभोक्तृत्वेनाभिमतम्, न तस्य तत्कर्तृत्वमित्यकृताभ्यागमादि देहात्मवाद इवापद्येत । नन्विहलोकपरलोकयोश्चैतन्यस्य स्वरूपैक्यात् कथं देहात्मवादसमदोषापत्तिरिति तत्राह । फलत इति । शुद्धचिदात्मनः कर्तृत्वायोगादुपाध्यवच्छिन्नस्य तदुपेयम्, तस्य चेह कर्मकर्तुः परलोकगमनादेरुक्तरीत्याऽसंभवादकृताभ्यागमादेर्दुष्परिहरत्वात् फलतो देहात्मवादसमतेत्यर्थः । नन्ववच्छिन्नचैतन्यानामन्यत्वेऽपि सन्तानैक्यादुक्तदोषानवकाश इत्याशङ्क्य, तर्हि बौद्धमतापात इत्यभिप्रेत्याह । व्यसनस्येति ॥ ३० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चलने ह्युपाध्यभिमतस्य भवे-
ज्जनितस्य तेन विगमः सुदृढम् ॥
ननु कुण्डलापसरणे पुरुषा-
द्थ न प्रणश्यति न कुण्डलिता ॥ ३१ ॥

ननु घटे चलति तदवच्छिन्नाकाशस्य तद्विहि-
व्यस्येव सर्वत्र प्रत्यभिज्ञायमानत्वादबाधितप्रत्यभि-
या तस्यैकत्वे सत्यवश्यमुपेयमन्यत्र गमनम्, एवं पु-
पहितचैतन्यस्यापि परलोकगमनमित्याशङ्क्य, उपा-
संयोगस्य नानात्वेन तद्घटितोपहितनानात्वस्या-
वापरिहार्यत्वादुत्तरजन्मसमये पूर्वनाशस्यावश्यक-
त्तत्प्रत्यभिज्ञाप्रामाण्यायोगाद् वास्तवगमनायोग इ-
त्याह । चलन इति । उपाध्यभिमतस्य, उपाधि-
नाभिमतस्य । तत्र विशेषणसंबन्धापगमे विशिष्टा-
मं दृष्टान्तयति । ननु कुण्डलेति । न प्रणश्यतीति
किं तु प्रणश्यतीत्यर्थः ॥ ३१ ॥

न पुरान्वयश्च तव चिद्वपुषः
परमार्थतो भवति तर्कसहः ॥
नभसो यथा घटसमागमनं
न ततोऽपि लिङ्गघटितो व्रजसि ॥ ३२ ॥

चिदात्मनः परसम्बन्धमङ्गीकृत्य तद्गमनाद्
स्तवं गमनं नेत्युक्तम्, इदानीं तस्य तत्संबन्ध
विभोर्दुर्निरूपः कुतस्तदधीनं गमनमित्याह । न पु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वय इति। चोऽवधारणे। नभसो निरवयत्वमतेनोदाहरणमाह। नभस इति। समागमनं संयोगो यथा न तर्कसह इत्यनुषङ्गः॥ ३२॥

नभसः प्रदेशविरहान्नभसो
न घटः प्रदेशपरिवेष्टनकृत्॥
न नभः समस्तमपि वेष्टयते
नभसोऽवशेषविरहापतनात्॥ ३३॥

विभुद्रव्यस्य सकलमूर्त्तद्रव्यसंयोगित्वाद् घटसंयुक्तस्य नभसस्तदवच्छिन्नत्वोपपत्तेर्दृष्टान्तोऽसंमत इत्याशङ्क्याह। नभस इति। घटसंयोगः किं नभसः प्रदेशसमवायी तमवच्छिनत्ति, किं वा नभोव्यापी सन् कृत्स्नं नभोऽवच्छिनत्ति। नाद्यः, तस्य परमतेऽवयवपर्यायप्रदेशस्याभावात्। घटाद्यवच्छिन्नभागएव तत्प्रदेश इति चेन्न। परस्पराश्रयापत्तेः। तत्संयोगे सति नभसस्तदवच्छिन्नभागसिद्धिस्तत्सिद्धौ च तदाश्रितसंयोगसिद्धिरित्यन्योन्यापेक्षणात्। न द्वितीयः, परिच्छिन्नद्रव्यसंयोगस्य विभुद्रव्यव्यापित्वासंभवेन नभोमात्रस्य तदवच्छिन्नत्वायोगात्। इतरथा घटाद्यनवच्छिन्नाकाशाद्यभावापातात्, तथा चालोकानवच्छिन्ननभसोऽसत्त्वेन नभसि तमः कदाऽपि न स्यात्। स्याच्च देहसंयोगस्यात्मव्यापित्वात्तदधीनदुःखादेरपि तद्व्यापित्वम्। न चैतदिष्यत इति नभसो घटावच्छिन्नत्वं वास्तवं न घटव इ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यर्थः ॥ ३३ ॥

परमात्मभागपरिवेष्टनकृ-
न्न पुरं तथाऽनवयवो हि परः ॥
न च कृत्स्नमेव परमं पुरुषं
पुरवस्तु वेष्टयितुमुत्सहते ॥ ३४ ॥

तथापि स समानः सन्नुभौ लोकावनुसंचरति, ध्यायतीव लेलायतीव, स हि धीः स्वप्नो भूत्वेत्यादिश्रुतिसिद्धत्वादात्मनः पुरावच्छिन्नत्वं वस्तुसदेवेत्याशङ्क्य, पूर्वोक्तविकल्पदोषयोरत्रापि तुल्यत्वादाविद्यकावच्छिन्नत्वाद्यनुवादिनीयं श्रुतिरिति वक्ष्यते, ततो नैतद् वस्तुसदित्यभिप्रेत्याह । परमात्मेति । पूर्वपद्योक्तविकल्पदूषणातिदेशार्थस्तथाशब्दः । आत्मानवयवत्वस्य श्रुतियुक्तिभ्यां प्रसिद्धिर्हिशब्दार्थः ॥

यदि कृत्स्न एव परमः पुरुषः
पुरवेष्टितो भवति जीवतया ॥
न तदेश्वरो भवितुमुत्सहते
न च जीवजातमपरं सकलम् ॥ ३५ ॥

नन्वव्याकृताकाशाद्युपाधेर्व्यापित्वात्तदवच्छिन्नस्य विभोरपि चिदात्मनः सर्वात्मना घटत इत्याशङ्क्य, तथापि तदवच्छिन्नः किं जीव उतेश्वरः, आद्ये सर्वज्ञत्वादिरूप ईश्वरो न लभ्येत, तथा च यः सर्वज्ञः स सर्ववित, य आत्मनि तिष्ठन्नित्यादिश्रुतिविरोध इत्यभिप्रेत्याद्यपक्षमनुवदन्नाह । यदि कृत्स्न इति । द्वि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वरादपकृष्टजीवाभावो जीवतारतम्याभावश्च स्यादित्याह । न च जीवजातमिति ॥ ३५ ॥

गुरुशिष्यसङ्गतिरतो न भवे-
न्न च बन्धमोक्षनियमो घटते ॥
विषयं विना सकलमापतति
स्फुटमत्र वेदवचनं च वृथा ॥ ३६ ॥

ईश्वरासत्त्वे दोषान्तरमाह । गुरुशिष्येति । न च जीवस्यैव हिरण्यगर्भादेः सर्वज्ञत्वाद्गुरुत्वमिति वाच्यम् । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा इत्यादिश्रुतिभिः तद्विद्याया अपीश्वराधीनत्वप्रतीतेस्तस्यापि स्वतस्तदसंभवादिति भावः । जीवभेदाभावे दोषमाह । न च बन्धेति । किं च ज्ञानकर्मणोरीश्वरस्यानधिकारात्तदतिरिक्तजीवाभावेऽधिकार्यभावात् कर्मज्ञानकाण्डात्मकः सकलो वेदो व्यर्थः स्यादित्याह । विषयं विनेति ॥ ३६ ॥

न पुरान्वयोऽत उपपत्तिसहः
परमार्थतोऽस्ति परमार्थदृशेः ॥
व्रियतो घटान्वयवदेव ततः
परिकल्पितं पुरसमागमनम् ॥ ३७ ॥

दृष्टान्तदार्ष्टान्तिकयोरुपाध्यवच्छिन्नत्वं वास्तवं दुर्निरूपमित्युक्तमुपसंहरति । न पुरान्वय इति । कथं तर्ह्युभयत्र तत्परिच्छिन्नत्वधीरित्याशङ्क्य, असंभावित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यानुभूयमानस्यापि नभोनैल्यादिवत् कल्पितत्वमुपे-
यमित्याह । तत्र इति ॥ ३७ ॥

यत एवमेतदुपपत्तिपथं
न तत्र प्रयाति विरहय्य तमः ॥
परलोकमार्गगमनं स्वतमः-
परिकल्पितं चलनवन्नभसः ॥ ३८ ॥

ननु तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरू-
पणाभ्यामित्यादिना सूत्रकारेणैव जीवस्य भूतपरिष्व-
क्तदधीनगत्यादेः श्रुतिप्रतिपन्नस्य न्यायैरुपपादितत्वा-
त् कथं तदपह्नव इत्याशङ्क्य, घटाकाशस्येव तस्योक्त-
विधया वस्तुतो गत्यादेरसम्भवात्तस्यौपाधिकत्वनिरू-
पणेन मिथ्यात्वमेव सदभिप्रेतं न सत्यत्वमित्यभिप्रे-
त्याह । यत एवमिति । एतत्, पुरसमागमनम् । प-
रलोकपदात् प्राक् तत इति पूरणीयम् ॥ ३८ ॥

पुरधर्ममात्मनि विकल्प्य तथा
स्वचिदात्मतां च पुरधर्मतया ॥
स्वपुरं स्वयं च दृढमेकतया
परिकल्पयन् व्रजसि मूढमतिः ॥ ३९ ॥

ननु घटाकाशदृष्टान्तेनात्मनः पुरोपाधिकाऽलीकसं-
साराङ्गीकारे कथमहङ्कारादिरूपे पुरे चैतन्यानन्दादिरू-
पात्मस्वभावप्रतिभासः स्यात्, न ह्याकाशोपाधौ घटे
तत्स्वभावो नीरूपत्वामूर्त्तत्वादिः प्रतिभासत इत्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्काहङ्कारादेरात्मनश्च परस्पराभेदाध्यासाधीनः परस्परस्वभावव्यत्यासः, घटाकाशयोस्तु परस्पराभेदाध्यासाभावात्तदभाव इत्याभिप्रेत्याह । पुरधर्ममिति । जाड्यगतिदुःखादिसंसारमित्यर्थः । चशब्द आनन्दादेः समुच्चयार्थः । पुरधर्मतया, विकल्प्येत्यनुषज्य व्रजसीति योजनीयम् । धर्मव्यत्यासकल्पनायां धर्म्यभेदाध्यासं हेतुमाह । स्वपुरमिति । तत्रापि हेतुमाह । मूढमतिरिति । मोहावृतस्वयाथात्म्यानुभव इत्यर्थः ॥३९॥

परिपूर्णचिद्घनः सततं
स्वमहिम्नि तिष्ठसि निरस्तमले ॥
न तथापि तत्त्वमिति वाक्यकृतां
मतिमन्तरेण तव केवलता ॥ ४० ॥

कल्पितस्यापि संसारस्यानादित्वादात्मनो न नित्यमुक्ततेत्याशङ्क्य, कल्पितराहित्यस्य वास्तवस्याधिष्ठाने तत्कालेऽप्युपपादित्वात् सदा नित्यशुद्धादिरूप आत्मेति फलितमाह । परिपूर्णेति । तर्हि मुमुक्षूणां शमादिपूर्वकश्रवणाद्यायासो वृथेत्याशङ्क्य, अविद्यादशायामनर्थस्यैव तत्र प्रतिभासात् तत्प्रतिभासशून्यनिरतिशयानन्दमात्रानुभवरूपकैवल्याप्रतिभासादज्ञातस्य तस्य विस्मृतकण्ठमणिवत् प्रेप्साविरोधित्वाभावादनर्थनिदानाज्ञाननिवर्त्तकज्ञानाय मुमुक्षुव्यापारोऽर्थवानित्यभिप्रेत्याह । न तथापीति ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तव प्रतीचि करणानि बहि-
र्विषयाणि येन करणानि सदा ॥
सहजं च गाढमतिमूढतमं
तम इत्यतः पुरमनुव्रजसि ॥ ४१ ॥

ननु वाक्यकृतामिति विशेषणमयुक्तम्, अविद्यानि
निवर्त्तकसाक्षात्कारस्यात्मन्यन्यथैव संभवादित्याशङ्क्य
ह । न तवेति । किं बाह्याभ्यन्तरकरणानामन्यतमज
ब्रह्मात्मसाक्षात्कारस्तदज्ञाननिवर्त्तक इत्युच्यते, किं
स्वरूपसाक्षात्कार एव । नाद्यः । पराञ्चि खानि व्यतृ
णत् स्वयंभूरितिश्रुतेरनुभवाच्च, येन स्वभावतोऽज्ञस्य त
व सर्वाणि करणानि पराग्विषयाणि तेनाविषयस्व
काशचिद्रूपे प्रतीचि तानि न प्रवर्त्तितुं समर्थानीत
र्थः । द्वितीये स्वरूपचैतन्याज्ञानयोः सहभावस्यानादि
कालेऽविरलमनुवर्त्तमानत्वान्न स्वरूपचैतन्यस्य तन्नि
वर्त्तकत्वोपपत्तिः । तस्मात्तत्र वाक्यकृत एव सा
त्कारोऽभ्युपेय इत्यभिप्रेत्याह । सहजमिति । एवं
सङ्गिकं चोद्यं निरस्य, कल्पितपुरोपाधिनाल्पीं
ल्पितं संसरणमिति प्रकृतमुपसंहरति । इत्यत इति

स समान इत्युपनिषद्वचनं
प्रतिपादयत्युदितमर्थमतः ॥
स्वमनीषिकेति न कदाचिदपि
प्रतिपत्तिरत्र भवतो भवतु ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वाविद्यकोपाधिकल्पितमात्मनः संसरणमिति स्वकपोलकल्पितयुक्तिभिर्मां प्रतारयसि, न त्वत्र किंचिन्मानमस्तीति तत्राह। स समान इति। सः, योऽयं विज्ञानमय इत्यादिना बुद्ध्यादिभ्यो विवेचितश्चिदात्मा स समानः सन्माध्यन्दिनशाखायां वाक्यशेषे स धीरिति श्रवणाद् बुद्धैरैक्यमापन्नः सन्नुभौ लोकौ इहलोकपरलोकौ बुद्धिमनुसंचरति। एतच्च तदीयसकलव्यापारानुकरणोपलक्षणार्थम्। तस्य मिथ्यात्वमाह। ध्यायतीव लेलायतीव चलतीव। वस्तुतो न ध्यानादि करोति किं तु तत् करोतीव भ्रान्त्या भातीतीवशब्दात् प्रतीतेरात्मनि संसरणं कल्पितमितीदं वचनं प्रतिपादयतीत्यर्थः। तत्कल्पितत्वस्य प्रामाणिकत्वे फलितमाह। अत इति। अत्र, संसारमिथ्यात्वे ॥ ४२ ॥

> पुरहेतुकं यदभवच्च विभोः
> परिकल्पितं किमपि चित्सदृशम् ॥
> जलपात्रहेतुकमिव द्युमणे-
> स्तदसंततं भवति तद् व्रजति ॥ ४३ ॥

एवं घटाकाशदृष्टान्तेनात्मनो गमनादि कल्पितमित्युक्तम्। इदानीं रूपं रूपं प्रति रूपो बभूवेत्यादिवचनाज्जलसूर्यादिप्रतिबिम्बदृष्टान्तेनाऽपि तदुपपादयति। पुरहेतुकमिति। तदधीनसत्ताकमिति यावत्। विभोः शुद्धचिदात्मनोऽपरिच्छिन्नस्य। किमपि केवल-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जड़रूपेण केवलचिद्रूपेण वा दुर्निरूपमत एव चित्-
दृशमुपाध्युपरागतद्धर्मविशेषविशिष्टं चिदाभासात्म
जीवपदवाच्यं यद्रूपं परिकल्पितमभवत्तदसंततमव्यापि
भवति, ततस्तदेव मिथ्यागमनादिद्भवति, तत्तादात्म्या-
च्चिदात्मन्यपि तद्भ्रान्तिरित्यर्थः। प्रतिबिम्बस्य कल्पिते-
ऽपि बिम्बविपरीतरूपे दृष्टान्तमाह। जलपात्रेति। एवं
च चित्प्रतिबिम्बस्य चिज्जडात्मत्वेऽपि चित्प्राधान्येन प्रति-
बिम्बव्यवहारः, कल्पितजड़प्राधान्येनाभासव्यवहारश्चे-
ति प्रतिबिम्बस्य बिम्बाभेदाभिधानम्, आभासस्य
तु मिथ्यात्वाभिधानं सर्वत्रोपपद्यत इति ॥ ४३ ॥

जड़शक्तिरस्ति च परस्य विभोः
परमात्मनस्तम इति प्रथिता ॥
पुरमष्टकं तव यथा भवति
श्रुतितः प्रसिद्धमिदमप्यखिलम् ॥ ४४ ॥

ननूक्तोपाधेरेव परलोकगमनमनुपपन्नं कुतस्तदु-
पाधिकं तदात्मनि स्यात्, बुद्ध्यादेर्जड़स्य चेतनानधि-
ष्ठितस्य स्वतो गमनादिप्रवृत्त्ययोगात्, जीवस्य चो-
त्क्रान्तिकाले संपिण्डितकरणत्वेन विशेषबोधरहितत्वे-
तत्प्रेरकत्वायोगात्, परमात्मनोऽपि कूटस्थचिन्मात्र-
तया तत्प्रेरणायोगादित्याशङ्क्य परमेश्वरस्य मायाश-
क्तिमतस्तदधीनव्यापारेण पुरतदवच्छिन्नजीवाधि-
ष्ठातृत्वसंभवात् पुरादिगमनोपपत्तिरिति वक्तुं तस्य तद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तिमत्त्वमाह । जड़शक्तिरिति । चशब्दस्तदधीनप्रेरणाव्यापारसमुच्चयार्थः । सा च जीवं प्रति तमोवद् वस्तुतत्त्वावरकत्वेनाविद्यायामन्तरे वर्तमानाऽहमज्ञ इत्यादिश्रुत्यनुभवसिद्धेत्याह । तम इति । अस्तीत्यभिधानात् परशक्तिसंबन्धवास्तवत्वशङ्कां दृष्टान्तोक्त्याऽपाकरोति । पुरमष्टकमिति । अष्टकमष्टसंख्याकम् । परस्य तच्छक्तिमत्त्वे किं मानम्, संबन्धे सति सा तमपि जीववत् किमिति न व्यामोहयेत्, तस्य तन्नियन्तृत्वेन तत्कूटाभिज्ञत्वान्न व्यामोह इति चेत्, अत्रापि किं मानमित्याशङ्क्याह । श्रुतित इति । मायिनं तु महेश्वरम्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, यो योनिंयोनिमधितिष्ठत्येक इत्यादिश्रुतिभ्य उक्तार्थसिद्धिरित्यर्थः ॥ ४४ ॥

पुरहेतुकं तत्र यथा च वपु-
र्भवतीह जीववचसो विषयः ॥
जड़शक्त्युपाधिकममुष्य तथा
परमेश्वरत्ववपुरुद्भवति ॥ ४५ ॥

ननु न तस्य कार्यं करणं च विद्यत इत्यादिश्रुतेः परमात्मनः कृतिकर्तव्याभावप्रतीतेः कथं माययापि तस्य पुराद्यधिष्ठातृत्वसंभव इत्याशङ्क्य तस्य स्वरूपेण वस्तुतस्तदभावेऽपि कल्पितरूपेण तदुपपत्तिरित्यभिप्रेत्य पुरहेतुकं यदभवदित्युक्तसंसारयोग्यजीवरूपदृष्टा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तेन सर्वाधिष्ठातृत्वादियोग्यमीश्वरपदवाच्यं सर्वज्ञत्व-
सर्वशक्तित्वादिविशिष्टात्मकं परमात्मनो मायिकमी-
श्वरत्वाख्यं रूपमाह । पुरहेतुकमिति । स्वरूपावरणा-
ज्ञानप्रयुक्तमिति यावत् । चशब्दोऽवधारणे, स च भ-
वादिपदेन संबध्यते । इह अविद्यादशायाम् । जडश-
क्त्युपाधिकमिति । स्वरूपानावरकेश्वरपरतन्त्रमायाप्रयु-
क्तमित्यर्थः । अमुष्य कल्पितपारोक्ष्यपरमात्मन इति
यावत् । उद्भवति प्रकटीभवति, जगत्सृष्ट्यादिनेत्य-
र्थः ॥ ४५ ॥

पुरहेतुरूपघटितस्य दृशे-
र्जडशक्त्युपाधिपरमेश्वरतः ॥
भयमुद्भवत्यनवबोधवशा-
दिति च त्रयीशिरसि राजपथः ॥ ४६ ॥

ईश्वरस्य मायिकोक्तरूपवत्त्वेऽपि जीवस्य तदभिन्न-
त्वात् कथं तदधिष्ठेयत्वमित्याशङ्क्य तदज्ञानाद् विप-
रीतरूपाभिमानित्वाच्च तदधिष्ठेयतया जीवस्य कर्माधी-
नसंसारानर्थसिद्धिरिति फलितमाह । पुरहेतुरूपेति ।
ईश्वरप्रेरितो जीवः संसरतीत्यत्र य आत्मनि तिष्ठन्ना-
त्मानमन्तरोऽयमयति, एष उ एव साधु कर्म कारयति
तं यमेभ्यो लोकेभ्य उन्निनीषत इत्यादिश्रुतिर्मानमि-
त्याह । इति चेति । बहुवेदान्तवाक्यसिद्धत्वाद्राजमा-
र्गवदसंदिग्धोऽयमर्थ इत्यर्थः ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमेश्वरेण विभुना रणयन्
परिबृंहितः शकटवद्व्रजसि ॥
शकटं हि शाकटिकयोगवशाद्
व्रजति स्वयं न परतन्त्रतया ॥ ४७ ॥

जीवस्यैहिकामुष्मिकः कर्मफलभोगः परमेश्वरदातृक इत्येतावद्न तु जीवस्तदधिष्ठितो गच्छतीति केचित्, तान् प्रबोधयन् तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् यातीति श्रुत्यर्थं दर्शयति। परमेश्वरेणेति। विभुना प्रभुणा, रणयन्नूर्ध्वोच्छ्वासदशायां दुःसहवेदनावशाच्छब्दं कुर्वन्, एतच्च उत्सर्जन्निति श्रुतिपदोदोक्तम्, तदुक्तिश्च वैराग्यार्थम्, परिबृंहितोऽधिष्ठितः। शकटस्य परमेश्वराधिष्ठितत्वमप्रसिद्धमित्याशङ्क्य दृष्टान्तं विवृणोति। शकटं हीति। स्वयं न व्रजतीत्यनुषङ्गः। परतन्त्रतयेति हेतुर्व्रजतीत्यत्रापि योजनीयः ॥ ४७ ॥

पुरवेष्टितः पुरवशानुगतः
पुरतन्त्रचिन्निभविभिन्नवपुः ॥
दिवि यातनां भुवि च कर्मफला-
न्यनुभूय भूय इह संभवति ॥ ४८ ॥

ननु शकटस्याचेतनतया पारतन्त्र्यं युक्तं चेतनस्य तु जीवस्य तदयुक्तमित्याशङ्क्य चेतनस्याप्यज्ञस्य दुर्बलस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च बहुज्ञप्रबलपारतन्त्र्यदर्शनाज्जीवस्याप्यज्ञत्वाद्यभि मानित्वात्सर्वज्ञादिरूपेश्वरपारतन्त्र्यं युक्तमित्यभिप्रे त्याह । पुरवेष्टित इति । तमसावृतस्वरूप इत्यर्थः पुरवशानुगतः बुद्ध्यादिगतकतिपयशक्तियुक्तः । बुद्ध्या दौ चित्प्रतिबिम्बोऽपि जीव इति मतेनापि तदाह पुरतन्त्रेति । चिद्भिन्नोऽशत्वादिविशिष्टरूपश्चिदाभास स्तदभिन्नस्वरूपो जीवोऽतः पारतन्त्र्यमित्यर्थः । ईश्व रप्रेरणया जीवस्य स्वर्गनरकयोर्गमनसंभवेऽपि तत्र सु खदुःखभोगाभ्यां पुण्यपापयोः क्षीणत्वात्तावताऽज्ञस्या पि संसारोपरमः स्यादित्याशङ्क्यानादिभवपरंपरासं चितकर्मणां बहुत्वादभुक्तफलपुण्यपापाभ्यां पुनर्मनुष्य देहप्राप्तेस्तदधीनकर्मणामप्यवश्यं भावित्वान्नैवमित्य भिप्रेत्याह । दिवि यातनामिति । इदं पदद्वयं संयमि न्याः सुखस्य चोपलक्षणम् । भुवि भारतवर्षातिरिक्ते लावृतादिवर्षेषु । पश्वादिजातिसमुच्चयार्थश्चशब्दः । इ ह भारतवर्षे मनुष्यजातौ ॥ ४८ ॥

सुकृतदुष्कृतकर्मवशादयं
दिवमथो यमसादनमेव वा ॥
अनुभवेन समाप्य पुनर्मही-
तलमवोधवशादवरोहति ॥ ४९ ॥

स्वर्गनरकादिशब्दानां सुखदुःखमात्रवाचित्वात्त दनुभवस्य चेहैव संभवात् कर्मवशाद् गन्तव्यदेशविशे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव नास्ति, तत्प्रमाणाभावात्, धूमादिमार्गश्रुतेरर्थवादत्वादर्थवादानां च विधिनिषेधापेक्षितस्तुतिनिन्दामात्रपरतया स्वार्थे प्रामाण्याभावादिति केचित्, तान् प्रत्याह । सुकृतदुष्कृतेति । पद्याक्षराणि स्पष्टार्थानि । अयं भावः । मन्त्रार्थवादेतिहासपुराणानां स्वार्थे प्रामाण्यस्यौत्सर्गिकस्य देवताधिकरणोक्तन्यायैर्बाधाभावेनावश्यमभ्युपेयत्वात्तेषु च कर्मफलभोगापेक्षितदेशोपकरणादिविशेषप्रतिपादनादितरथा पुण्यपापतारतम्याधीनसुखदुःखतारतम्यानुपपत्तेः, ततश्च गत्यादिपूर्विका तत्प्राप्तिरिति तद्रूपसंसारस्येश्वराधीनत्वं युक्तमिति ॥ ४९ ॥

यदि वा समुच्चयवशात् पुरुषः
कमलासनं व्रजति कामुकधीः ॥
पुनरेव मानवमिमं तु विना
परिवर्त्तमाव्रजति मूढमतिः ॥ ५० ॥

ननु केवलेष्टादिकारिणामनिष्टादिकारिणां चाज्ञानां चन्द्रलोकं संयमिनीं वा गत्वा कर्मफलं भुक्तवताम् अथैतमेवाध्वानं पुनर्निवर्त्तन्ते इत्यादिवचनादिहावरोहादुक्तविधया संसारानुपरमेऽपीष्टादिसमुच्चितसूत्राद्युपासनावशादर्चिरादिमार्गेणापरं ब्रह्म प्राप्तानां विनाप्यात्मतत्त्वानुभवं न तेषामिह पुनरावृत्तिः, एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त इति वच-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नादिहावरोहाभावात् संसारोपरमसिद्धिरिति नेत्याह-
यदि वेति । कामुकधीः केवलब्रह्मलोककामो मानवं
मनुवंशगं मनुष्यदेहम् इमं वर्त्तमानं विना परिवर्त्त-
पुनः पुनः परिवर्त्तमानं जन्मादिनिरन्तरं व्रजति यतो
मूढमतिरज्ञानी, क्रममुक्तिप्रापकदहराद्युपासनारहिता-
नां पुण्यविशेषाद् ब्रह्मलोकं गतानामिह नावृत्तिः; इ-
मं नावर्त्तन्त इति चैतत्कल्पविशेषितावृत्तिनिषेधात्
कल्पान्तरीयावृत्तिः सूच्यते । इतरथा तेषामावर्त्तं ना-
वर्तन्त इत्येतावतैवात्यन्तिकानावृत्तिसिद्धेर्विशेषणवै-
यर्थ्यापातात्, तत्त्वबोधं विना संचितसर्वकर्मक्षयायो-
गेन कर्मान्तराधीनावृत्तेरावश्यकत्वाच्च । ब्रह्मलोकं ग-
तानां न नियताऽनावृत्तिरित्यर्थः ॥ ५० ॥

अथ वा स तत्र परमात्ममतिः
परिमुच्यते सकलबन्धनतः ॥
क्रमयोगमुक्तिरुदिता श्रुतिषु
प्रतिशाखमेवमुपपन्नतरा ॥ ५१ ॥

ब्रह्मलोकगतानां पुनरावृत्तावनावृत्तिः शब्दादित्य-
धिकरणविरोध इत्याशङ्क्य क्रममुक्तिफलकोपासनाभि-
र्ब्रह्मलोकं गतानां कार्यात्यये तदध्यक्षेण सहातः परम-
भिधानादित्यत्रोक्तन्यायेन तत्रैवोत्पन्नविवेकवैराग्यादि-
मतां तदध्यक्षोपदेशलब्धतत्त्वबोधानां तद्बलान्मुक्तिरि-
त्यन्त्याधिकरणं ज्ञानादेव कैवल्यमित्येतद्विषयमित्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिप्रेत्याह । अथ वेति । परम आत्मेति मति र्यस्य स परमात्ममतिः । तत्र मानमाह । क्रमयोगेति । कार्यब्रह्मप्राप्तिपूर्वकपरब्रह्मप्राप्तिरूपा मुक्तिर्ब्रह्मलोकमभिसंपद्यते न स पुनरावर्त्तत इत्यादिश्रुतिषु योदिता सैवमुपपन्नतरेत्यर्थः ॥ ५१ ॥

देवयानपितृयाणयोः पथो-
र्ज्ञानकर्मरहितत्वकारणात् ॥
नैकमप्यनुसरन्ति ये पुनः
क्षुद्रजन्तव इहोद्भवन्ति ते ॥ ५२ ॥

एवं केवलेष्टादिकारिणां समुच्चयकारिणां चोत्कृष्टलोकप्राप्तावपि जन्ममरणादिसंसारानुपरम इत्युक्तम्, इदानीं मनुष्येषु प्राकृतजनबाहुल्यादिष्टादिकर्मानुष्ठानमेव दुर्लभं तदभावे तदधीनदेवयानपितृयाणमार्गद्वयप्राप्तिरहितानां तेषां रागादिपरवशानां दुरितबाहुल्यसंभवात्तद्बलात् पुनःपुनः कीटपतङ्गादिक्षुद्रजन्तुभावरूपतृतीयपथप्राप्तानामत्यन्तं कष्टप्राप्तिरपरिहार्येति वैराग्यार्थं वदन् अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुत्यर्थं दर्शयति । देवयानेति । स्पष्टार्थः श्लोकः ॥ ५२ ॥

इति कामुकस्य तव संसरणं
शतशो बभूव वत मूढमतेः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इह विप्रजन्मनि विरक्तमतिः
कुरु साधनं यदपवर्गकरम् ॥ ५३ ॥

एवं पुण्यपापफले संसारे वैराग्यार्थं मिथ्यात्वानित्यत्वजन्ममरणानुपरमदुःखबाहुल्यादिदोषं प्रदर्श्य पुण्यादेरपि प्रयोजकं कामान् यः कामयते मन्यमान इत्यादि श्रुत्युक्तं दर्शयन्नुपसंहरति। इति कामुकत्वेति। यथा संसारहेतुप्रयोजको रागस्तथा मुक्तिहेतुप्रयोजकं वैराग्यम्। परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादित्यादिश्रुत्योक्तं वदन् विरक्तस्यापि न कर्मत्यागमात्रादभीष्टसिद्धिरित्यभिप्रेत्याह। इहेति ॥ ५३ ॥

श्रवणादिकं शमदमादिपरः
परमात्मनः परमभागवतः ॥
कुरु तावता परममेव पदं
परमात्मनस्त्वमवलोकयसि ॥ ५४ ॥

अपवर्गस्य ब्रह्मभावस्यासाध्यत्वात्तत्साधनमेव नास्तीत्याशङ्क्य तद्व्यञ्जकज्ञानान्तरङ्गसाधनानि मुमुक्षुणानुष्ठेयानीत्याह। श्रवणादिकमिति। कस्य श्रवणादीत्यपेक्षायामुक्तम्। परमात्मन इति। यस्य देवे परा भक्तिरित्यादिवचनात् सगुणपरमात्मभक्तिरप्यन्तरङ्गसाधनमित्यभिप्रेत्याह। परमभागवत इति। श्रवणादीनामप्रमाणत्वात्ततः कथं तत्त्वसाक्षात्कारोदय इत्याशङ्क्य श्रवणपदार्थस्य वेदान्तघटितत्वात्तत्प्रमाणाच्चतु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पत्तिरित्यभिप्रेत्याह । तावतेति । आत्मनस्तत्र परम-
विद्यातत्कार्यातीतं स्वरूपं परमं निरतिशयानन्दं ब्र-
ह्मैवावलोकयसि साक्षात्करोषीति संबन्धः । उक्तविशि-
ष्टाधिकारिणो ब्रह्मसाक्षात्कारे विलम्बाभावपरो वर्त्त-
मानत्वव्यपदेशः ॥ ५४ ॥

यदि तब्र पश्यसि हरेः परमं
पदमम्बुशीतलमिवेद्धशिराः ॥
न खलु प्रदीप्तशिरसोऽस्ति सुखं
तव दुःखपावकशिखाभिरहो ॥ ५५ ॥

परमपदावलोकनेऽपि किं स्यादित्याशङ्क्य य एत-
द्विदुरमृतास्ते भवन्ति, एतावदरे खल्वमृतत्वमिति श्रु-
तेः सर्वदुःखरहितसुखात्मकब्रह्मभावरूपाऽमृतत्वं ततो
भवतीत्यभिप्रेत्य तदभावे दुःसहदुःखानुपरममथेतरे दुः-
खमेवापियन्तीत्यादिश्रुत्युक्तं सदृष्टान्तमाह । यदि त-
त्र पश्यसीति । इद्धशिराः प्रदीप्तशिराः । दुःखसंभिन्न-
सुखस्यापि दुःखत्वात्सुखं नास्तीत्युक्तम् । दुःखसामान्या-
त्मकपावकस्य आध्यात्मिकादितापविशेषाः शिखाः ता-
भिः प्रदीप्तशिरसो व्याप्तसर्वाङ्गस्य । शिरोग्रहणमितरा-
ङ्गोपलक्षणार्थम् । तत्त्वविदामप्युक्तसंसारिदर्शनाधीनं
खेदं द्योतयति । अहो इति ॥ ५५ ॥

एवं विज्ञाय तापत्रयमतिगहनं मोहमूलं परस्मि-
न्नात्मन्यात्मप्रकाशे त्वयि परमसुखे निष्कले निष्कलङ्के॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्ये नित्यस्वभावे परिहृतसकलद्वैतकूटानुषङ्गे
सम्यग्ज्ञानानुरागं कुरु विषयगतं भिन्द्धि निर्बन्धमेनम् ॥

ननु प्रदीप्तशिरसोऽपि शीतलाम्बुदर्शनमात्रेण तत्तापानिवृत्तिवदनादिकालप्रवृत्तसंसारतापस्याप्यात्मदर्शनमात्रेण निवृत्त्ययोगादुपायान्तरस्यापि तत्राभावाद्यथाशक्ति दुःखं परिहृत्य दुःखेऽपि संसारे वैषयिकसुखमेव विवेकवताऽपि प्रार्थनीयमिति कुतस्ततो वैराग्यमित्याशङ्क्य शिरस्यग्निदाहस्य जलाज्ञानविलसितत्वाभावात्तद्दर्शननिवर्त्यत्वाभावेऽपि संसारतापस्य नित्यशुद्धादिरूपात्माज्ञानविलसितत्वस्य बहुधोपपादनात्तद्दर्शनात्तस्यात्यन्तिकनिवृत्त्युपपत्तौ नित्यनिरतिशयसुखब्रह्मभावानुभवलक्षणमोक्षस्य ज्ञानमात्रायत्तत्वात्तदर्थिनो विषयवैराग्यदार्ढ्यमावश्यकमित्यभिप्रेत्योपसंहरति । एवं विज्ञायेति । अतिगहनमतिनिबिडम् । आत्मनि तापत्रयस्य मोहविलसितत्वे हेतुः । परिहृतेति । तत्र वस्तुतो द्वैतानुषङ्गपरिहारहेतुत्वेनात्मानं विशिनष्टि । आत्मप्रकाश इत्यादिना । सत्ये बाधायोग्यस्वरूपे । नित्यस्वभावे कूटस्थस्वभावे । स्वभावपदं विपरीतप्रतीतिविरोधपरिहाराय सर्वविशेषणेषु योजनीयम् । निर्बन्धं नितरां बन्धकम् । एनमनुरागम् ॥ ५६ ॥

इत्युक्त्वोपरते गुरौ पुनरयं जिज्ञासया प्रेरित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्त्वंशब्दनिगद्यलक्ष्यविषयं शिष्यो गुरुं पृच्छति ॥
वैराग्येऽतिदृढीकृते सति यतः प्राज्ञो यतिर्मन्यते
संदीप्तं शिरसीव पावकमिदं संसारदुःखं महत् ॥५७॥

एवं रंहतिपादार्थं वैराग्यस्य दृढत्वमेकमिति संगृहीतं शिष्यवैराग्यदार्ढ्यं सोपपत्तिकमुपपाद्यानन्तरपादार्थमपरं तत्त्वंपदार्थज्ञतेति संगृहीतं प्रपञ्चयिष्यन्नापृष्टः कस्य चिद्ब्रूयादिति शास्त्रार्थं शिक्षयन् प्रथमं गुरूपरमं शिष्यप्रश्नं चावतारयति । इत्युक्त्वेति । अत्यन्तं विरक्तस्य कुतः प्रश्नोद्यम इति वीक्षायामाह । जिज्ञासयेति । तत्त्वमिति । तत्त्वंपदयोर्वाच्यलक्ष्यात्मको यो विषयस्तमित्यर्थः । तत्त्वंशब्दवाच्याभ्यां लक्ष्यं विषयमिति वा । जिज्ञासोरप्यविलम्बेन प्रश्नोद्गमे हेतुमाह । वैराग्य इति । शिरसि संदीप्तं पावकमिव महत्संसारदुःखं यतो मन्यतेऽतो गुरुं पृच्छतीति योजना ॥ ५७ ॥

वैराग्यं विषयेषु पूर्वमपि मे जातं हरेरर्चनाद्
यज्ञादिक्रियया निरस्तफलया किं त्वद्य दार्ढ्यं गतम् ॥
संसारस्य निरूपणेन धिगिदं कर्मादिजन्यं फलं
विश्वं नश्वरमम्बुबुद्बुदसमं पद्मासनान्तं जगत् ॥५८॥

उक्तं रंहतिपादार्थं श्रुतवन्तोऽपि के चित्संसाराद्वैराग्यं तद्दार्ढ्यं वा न लभन्ते तथा किमयमपि तथा च तत्त्वोपदेशानर्ह इति शङ्कां निराकुर्वन् स्वस्यात्यन्तिकं वैराग्यं सामग्रीप्रदर्शनपूर्वकं शिष्यो ज्ञापयति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैराग्यं विषयेष्विति । निरस्तमनपेक्षितं फलं यस्याः सा तथोक्ता तयेत्यर्थः । यज्ञाद्यनुष्ठायिनामपि केषांचिद्वैराग्यादर्शनादीश्वरार्पणबुद्धैव तदनुष्ठानं तत्साधनमित्यभिप्रायेण हरेरर्चनादित्युक्तम् । तेनापि पूर्वं ब्रह्मलोकावधिककर्मफलेष्वनिच्छात्मकमेव वैराग्यं जातम्, इदानीं तु तेष्वतितरां जिहासालक्षणं तद्दार्ढ्यं प्राप्तमित्याह । किं त्विति । तद्दार्ढ्यमेवाभिनयेन दर्शयति । धिगिति ॥ ५८ ॥

किं तु त्वंपदलक्ष्यमर्थमधुना कर्तृत्वभोक्तृत्वयो-
र्जाग्रद्भूगतयोरपोहमुखतो वाञ्छाऽवगन्तुं मम ।
कर्तृत्वादिकमस्य किं निजमभूत् स्वाभाविकं जाग्रतः
किं वा तत् परतः कुतश्चिदभवच्चैतन्यधातोरिति ॥५९॥

तर्हि सर्वतो विरक्तस्य संन्यासिनः कृतकृत्यस्य तवेदानीं कुत्र वाञ्छेत्याशङ्क्य त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणामिति वचनात् त्वंपदवाच्यस्य लोकत एवावगतत्वात् सर्वानर्थशून्यतल्लक्ष्यज्ञाने मम वाञ्छेत्याह । किं त्विति । स्वप्नभूगतकर्तृत्वादेर्मिथ्यात्वेन तदपोहस्यात्मनि निश्चितत्वाज्जाग्रद्भूगतयोरित्युक्तम् । तामेव वाञ्छां सप्रकारां दर्शयति । कर्तृत्वादीति । प्रमातृत्वभोक्तृत्वादिकमादिपदार्थः । निजमित्यनेन स्वरूपेणानादीति पृष्टमिति शङ्क्येत, तन्निवारणाय स्वाभाविकमित्युक्तम् । अनन्यप्रयुक्तमित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परतः स्फटिकलौहित्यादिवदुपाधित इत्यर्थः। चैतन्यधातोरिति। चैतन्यैकरसस्येति द्वितीयकोटौ बीजम्। कर्तृत्वादिमद्वस्त्वन्तरादर्शनमाद्यकोटौ बीजमिति द्रष्टव्यम्॥ ५९॥

यावत्त्वंपदलक्ष्यवस्तुविषयो बोधो न मे वर्त्तते
तावन् मे बधिरेषु गीतमिव तच्छ्रौतं वचोऽनर्थकम्॥
तस्मात्त्वंपदलक्ष्यवस्तुविषयः कर्तृत्वभोक्तृत्वयो-
र्जाग्रद्भूगत्रयोरपोहमुखतो बोधो ममोत्पाद्यताम्॥६०॥

ननु तत्त्वमादिमहावाक्यैरेवाकर्त्रादिरूपब्रह्माभेदप्रतिपादनाज्जीवस्य कर्तृत्वादि न स्वाभाविकमिति गम्यते, तथा स यत्तत्र किं चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्याद्यवान्तरवाक्यैरपि कर्तृत्वादिसंसर्गरहिततया स्पष्टं जीवस्वरूपप्रतिपादनात् कथं तत्र जिज्ञासा तवेति तत्राह। यावदिति। इदमहं करोम्यदोऽकरवम् अग्रे च करिष्यामीत्याद्यनुभवैः प्रत्यक्षादिप्रमाणाधीनैः, शास्त्रफलं प्रयोक्तरीतिन्यायानुगृहीतया स्वर्गकामो यजेतेत्यादिश्रुत्या चात्मनि त्रैकालिककर्तृत्वादिसंसारसंबन्धनिश्चयात्तस्यासंसारित्वविषयश्रुतिशतेनापि वह्निरनुष्ण इति वाक्येनेवायोग्यतानिश्चयान्निर्विचिकित्सो बोध एव न जायते, तेनात्मनोऽसङ्गत्वादिप्रतिपादकं श्रुतिवचो बधिरेषु श्रोतृषु सङ्गीतमिवानर्थकं प्रतिभाति, ततस्तत्र जिज्ञासा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम समुल्लसतीत्यर्थः। तर्हि तव चित्तदोषात्तद्बोधानु-
दये श्रुत्या मया वा किं कर्त्तव्यमित्याशङ्क्य त्वयैव यु-
क्तितस्तद्दोषापनयेन स बोधः सम्पादनीय इत्याह।
तस्मादिति ॥ ६० ॥

कर्त्रादेरवभासकत्वमगमः शुद्धः स्वयंभास्वर-
श्चैतन्येन निजेन तेन भवतः कर्त्रादिबुद्धिर्भ्रमः।
कूटस्थस्य चिदात्मनस्तव कुतः कर्तृत्वभोक्तृत्वयोः
शङ्का जागरितेऽपि कारकगणं कर्त्रादिकं पश्यतः॥६१॥

एवं शिष्येण प्रार्थितो गुरुः प्रत्यगात्मनि संसारि-
त्वप्रमितिविरोधादसंसारित्वं दुरवगममित्युक्तं निरा-
कुर्वन्नात्मनि कर्तृत्वादिबुद्धेर्देहतादात्म्यादिबुद्धेरिव प्र-
बलानुमानविरोधाद् भ्रान्तित्वं तावदाह। कर्त्रादेरिति।
आत्मा कर्त्रादिरूपो वस्तुतो न भवति तदवभासक-
त्वाद् यो यदवभासकः स तदात्मा न भवति यथा घ-
टद्रष्टा घटानात्मा, कर्त्रादिः स्वव्यतिरिक्तद्रष्टृको दृ-
श्यत्वाज्जडत्वाद्वेत्यादिप्रयोगाणां प्रबलत्वात्तद्विरोधात्त-
वाहं कर्ता भोक्तेत्यादिबुद्धिर्भ्रमस्ततस्त्वं शुद्धः नित्यमु-
क्तः। नन्ववभासकत्वमवभासक्रियाकर्तृत्वमेव तत्र
प्रतिज्ञाहेतुवचनयोर्व्याघात इति चेत्तत्राह। चैतन्येन
निजेनेति। अस्य कर्त्रादेरवभासकत्वमित्यनेन संबन्धः।
निजेन स्वरूपतया नित्येनेत्यर्थः। तथा चात्मनस्तत्र क-
र्तृत्वासंभवात्तद्बलेनात्मनः कर्त्रादिसत्ताप्रकारकसंशया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिविरोधित्वमेव तदवभासकत्वमिमि नोक्तव्याघातः। तर्ह्यात्मनो ज्ञानगुणकत्वात्तस्य तद्रूपत्वमेव नेत्याशङ्‌क्याह। स्वयंभास्वर इति। आत्मनः स्वयंप्रकाशचिद्रूपत्वस्य पूर्वमुपपादितत्वादग्रे वक्ष्यमाणत्वाच्च चैतन्यं तदात्मकमेवेत्यर्थः। एतेनात्मन्येव दृश्यत्वहेतोरनैकान्तिकतेति निरस्तम्, चिदात्मनि तस्मिंश्चैतन्यविषयत्वरूपदृश्यत्वस्यैवाभावादिति भावः। चिद्रूपस्यात्मनः कादाचित्कक्रियाकर्तृत्वं तदधीनभोक्तृत्वं च स्यादित्याशङ्‌क्याह। कूटस्थस्येति। न तस्य कार्यं करणं च विद्यते कूटस्थमचलं ध्रुवमित्यादिवचनैरात्मनि सर्वव्यापारप्रतिषेधाद् विज्ञानं यज्ञं तनुत इत्यादिना सर्वव्यापारस्य बुद्धिकर्तृकत्वाभिधानात् साक्षी चेताकेवलो निर्गुणश्चेति श्रुतेः कर्त्रादिसाक्षिणस्तदात्मत्वायोगादात्मनः स्वतःकर्तृत्वादिशङ्का कदापि न कार्येत्यर्थः ॥ ६१ ॥

व्यापारं सकलस्य भासयति यो भास्वत्करो भास्करो
नासौ कर्तृतया जनस्य विदितो भूमौ द्युलोकस्थितः॥
एवं स्वे महिमन्यवस्थितवतः संघातमुत्पश्यतः
स्वव्यापारसमन्वितं तव कुतः कर्तृत्वमुत्प्रेक्ष्यते ॥ ६२ ॥

किं च योऽयं व्यापारमवभासयति स तत्र न कर्ता यथा दिविष्ठो भास्करो भूमिष्ठसकलजनवर्त्तिगमनादिव्यापारावभासको न तत्कर्त्तेति व्याप्तिः प्राक्-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तानामपि सुप्रसिद्धा, ततश्च चिदात्मापि पूर्वोक्तविधया सव्यापारकार्यकरणसंघातावभासकत्वात्तद्व्यापारे न कर्त्तेति निष्प्रत्यूहमनुमानोदयात्तस्य स्वतःकर्तृत्वमेवासंभावितमित्याह । व्यापारमिति । सकलस्य जनस्येति संबन्धः । भास्करस्य द्युलोकस्थित इति विशेषणमतिव्यवधानेन तस्य भूमिष्ठजनव्यापारे कर्तृत्वसंभावनैव नेति वक्तुम् । एवं पक्षेऽपि । स्वे महिम्न्यवस्थितवत इति कूटस्थासङ्गानतिशयानन्दस्वरूपभूते महिमनि स्थित्युक्त्या नैकत्रापि व्यापारे कर्तृत्वसंभावनेत्युक्तम् ॥ ६२ ॥

> भूतानि पञ्च तव मोहसमुद्भवानि
> संघातरूपपरिणाममुपागतानि ॥
> कुर्वन्ति कर्मफलमश्नुवते च तेषां
> साक्षी त्वमन्तरविलुप्तचिदेकरूपः ॥ ६३ ॥

नन्वात्मनः स्वतःकर्तृत्वाद्यभावे यथाकारी यथाचारी तथा भवतीत्यादिश्रुतेः, कर्त्ता शास्त्रार्थवत्त्वादिति सूत्रस्य च पीड़ा स्यादित्याशङ्क्य, श्रुतेरेवंजातीयकाया औपाधिककर्तृत्वाद्यनुवादत्वादात्मन्यौपाधिकमपि कर्तृत्वं नेत्येतन्मतनिराकरणपरत्वाच्च सूत्रस्य नोक्तदोष इत्यभिप्रेत्य, तर्हि कोऽयं कर्तृत्वादिमानुपाधिरिति वीक्षायाम्, "एतेभ्यो भूतेभ्यः समुत्थाय," "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" "प्रकृत्यैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च कर्माणि क्रियमाणानि सर्वशः,, इत्यादिवचनात् कार्यकारणसंघाताकारपरिणताविद्यकभूतसंघात एव कर्तृत्वादिमानुपाधिरित्याह । भूतानीति । कर्तृसंघातमध्यप्रवेशमात्मनो वारयति । तेषामिति । अन्तः साक्षीति संबन्धः । तत्र हेतुरविलुप्तेति ॥ ६३ ॥

क्षीरस्य पूर्णे चषके निरस्तो
मणिर्यथा मारकतो महार्हः ॥
क्षीरं समस्तं क्षणमात्रतस्तत्
करोति तच्छायमनूनतेजाः ॥ ६४ ॥

ननु स्फटिके लौहित्यवच्चिदात्मनि कर्तृत्वादेरौपाधिकत्वे लोहितद्वयवत् कर्तृद्वयं विविक्तमेकदेहे प्रतीयेत, तथाऽलक्तकादौ स्फटिकत्वादिवत् कार्यकरणसंघाते चेतनत्वादि न प्रतीयेतेत्याशङ्क्य चिच्छायाग्राहिणि संघाते चिदभेदारोपान्नोक्तदोषद्वयमित्यभिप्रेत्य तच्छायाग्राहिणि तदाकारारोपे दृष्टान्तमाह । क्षीरस्येति । क्षीरेणेति यावत् । निरस्तः परीक्षणाय प्रक्षिप्तः । तत्समस्तं क्षीरमिति संबन्धः । अनूनतेजा अनभिभूतप्रभायुक्त इत्यर्थः ॥ ६४ ॥

तथा तमःसंभवमच्छमन्त-
र्बहिर्जडिम्नाऽन्वितमन्तरात्मा ॥
जगद्विदेकच्छवि चित्स्वरूपः
करोति सान्निध्यवशेन विश्वम् ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दार्ष्टान्तिकमाह । तथेति । चित्स्वरूपोऽन्तरात्मा तमस्तत्संभवं विश्वं जगच्च सान्निध्यवशेन व्यापार-रहितस्वसत्तामात्रेण चिदेकच्छवि चिदविविक्तच्छायाकारं करोतीति सम्बन्धः । ननु सात्त्विकस्य स्वच्छस्यान्तःकरणादेश्चिच्छायाग्राहित्वेऽपि भूतभौतिकात्मकस्य तामसस्य जगतोऽस्वच्छस्य कथं तच्छायाग्राहिता तदभावे वा चित्संबन्धाऽयोगात् कथं तत्स्फुरणं कथं वा तस्य तत्र स्थूलदेहे आत्मत्वाभिमान इत्याशङ्क्य जगद् विशिनष्टि । अच्छमन्तरित्यादिना । बहिः बुद्धेर्बहिर्भूतं बुद्धयुपरागरहितं जड़िम्ना तमसाऽस्वच्छभावेनान्वितमावृतमपि अन्तरच्छं बुद्धितादात्म्यादभिभूतपराग्भावमभिभूतजाड्यं चेत्यर्थः । इदमत्राभिप्रेतम् तत्तद्देहस्य तत्तदन्तःकरणसंपिण्डितचिदात्मन्यध्यासात् सात्त्विकान्तःकरणसम्बन्धादभिभूतजाड्यस्य तस्य तद्वदेव स्वच्छत्वेन चैतन्यबिम्बोद्ग्राहितया तदात्मना प्रतीतिः क्षीरदृष्टान्तेनोपपद्यते, ततो बहिर्भूतघटादेरपि प्रमाणाधीनचिच्छायावदन्तःकरणोपरागादभिभूतजाड्यस्य चिच्छायावतस्तदधीनस्फुरणं चोपपद्यते, एवं पृथिव्यादिष्वपि तत्तद्देवतान्तःकरणतादात्म्यवत्सु तत्तद्देवतानामात्मत्वाभिमानः, एवं विराजोऽपि व्यापिसमस्तान्तःकरणतादात्म्यवति सर्वस्थूलप्रपञ्चेऽहमभिमान उपपद्यत इति सर्वमवदातमिति ॥६५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तान्येव कार्यकरणानि बहुप्रकारं
भेदं च बिभ्रति भवानपि तत्र लग्नः ॥
भेदेन भाति जलपात्रनिविष्टमूर्त्ति-
मार्त्तण्डमण्डलवदन्वयमन्तरेण ॥ ६६ ॥

ननु नानात्मानो व्यवस्था त इत्यक्षपादसूत्रवचनादात्मनि वस्तुतो नानात्वस्य तल्लिङ्गभूतकर्तृत्वादिव्यवस्थाया न्यायतः सिद्धत्वात् पूर्वोक्तं सर्वमनुपादेयमिति चेन्न, "एको देवः सर्वभूतेषु गूढः„ "इन्द्रो मायाभिः पुरुरूप ईयते„ "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्„ "उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे„त्याद्यैकात्म्यपरश्रुतिविरोधान्निर्मूलत्वात् सौत्रस्य हेतोर्व्यधिकरणसिद्धत्वाच्च तदेव सूत्रं सुगतादिसूत्रवदनुपादेयमित्यभिप्रेत्य कथं तर्ह्यात्मनि देवमनुष्यतिर्यगादिभेदप्रतिभास इति वीक्षायां तस्याप्यौपाधिकत्वमुपाधिनिर्द्देशपुरःसरं सदृष्टान्तमाह । तान्येवेति । कर्तृत्वाद्युपाधितयोक्तान्येवेत्यर्थः । बहुप्रकारं देवमनुष्यादिलक्षणम् । चशब्दः कर्तृत्वसमुच्चयार्थः । तत्र कार्यकरणसंघाते । लग्नो मिथ्यातादात्म्यमुपगतः । अन्वयं वास्तवसम्बन्धम् । अन्तरेण विना । भिन्नोपाधिपरामर्शमन्तरेणाप्रतीयमानत्वाद् भेदानां मिथ्यात्वम् , जलपात्रेषु रविभेदवत् , इतरथा रवेरपि स्वतो नानात्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादिति भावः ॥ ६६ ॥

अध्यात्ममेवमधिभूतमथाधिदैवं
सूत्रं विराजमपि पश्यसि साक्षिभूतः ॥
साक्षित्वकारणमशेषजगन्निदान-
मज्ञानमात्मचिदलज्वलितं सदैव ॥ ६७ ॥

तर्हि चिदात्मनः प्रमातृत्वं स्वाभाविकमन्यस्याचेतनस्य तदसंभवादिति शङ्कां निराकुर्वन् सर्वशरीरेष्वात्मभेदस्यौपाधिकतया मिथ्यात्वप्रतिपादनफलं तदैक्यसिद्धिमाह । अध्यात्ममिति । अहमित्यात्मतया भासमानं शरीरादिकं तद्धर्मश्चेत्यर्थः । अधिभूतम् इदन्तया परात्वेन भासमानानि सविकाराणि आकाशादिभूतानीति यावत्, अधिदैवम् आध्यात्मिककरणानुग्राहकं सपरिकरमादित्यादिदेवताजातम्, सूत्रं प्राणप्रधानसमष्टिलिङ्गोपाधिकम्, विराजं स्थूलसमष्ट्युपाधिकं च त्वमेव साक्षिभूतः पश्यसि कूटस्थस्वरूपचैतन्येनैव तद्गोचराभिज्ञादिव्यवहारं प्रवर्तयसि न तु प्रमातृतया, मातृमानादिसाक्षिणि तदसम्भवात्तस्याः कर्तृत्वादिसमानयोगक्षेमतया साभासबुद्धिधर्मत्वोपपत्तेः । आत्मनि तदवभासस्तदुपाधिनिबन्धन इति न त-स्य स्वतः प्रमातृताऽपीति भावः । ननु कूटस्थासङ्गचैतन्यात्मनः केनापि सम्बन्धाभावात् कथं साक्षितियोगिकं सर्वसाक्षित्वमित्याशङ्क्य, अघटितघट-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानप्रयुक्तानिर्वचनीयसम्बन्धादेव तस्य सर्वसाक्षितोपपत्तिरित्यभिप्रेत्याह । साक्षित्वकारणमिति । सदैवात्मचिदवज्वलितं यावत्सत्त्वमात्मचैतन्यावभासितमित्यर्थः ॥ ६७ ॥

देहव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥
देहव्यक्तिर्देहताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ६८ ॥

नन्वाज्ञानादप्येकस्मिन्नेव देहेऽहंममाभिमानान् मम तेनैव संबन्धो न देहान्तरैस्तत्र तदननुभवान्मानान्तराऽभावाच्च ततो न युक्तं सर्वदेहसाक्षित्वं ममेत्याशङ्क्य तत्तत्समस्तदेहाभिमानिनस्त्वदभिन्नत्वान्मैवमित्यभिप्रेत्य सर्वशरीरेषु तत्त्वतो जीवाभेदेऽनुमानान्याह । देहव्यक्तिरित्यारभ्य सप्तभिः श्लोकैः । विप्रतीतिः विप्रतिपत्तिः । तदास्पदत्वं तद्गोचरः । तावकी त्वदीया । त्वया ममायं देह इति निश्चितदेहातिरिक्ताः सर्वे देहास्त्वदात्मना सात्मकाः, तवैव भोगायतनानीति वा देहत्वात् त्वया तथानिश्चितस्वदेहवदित्यर्थः । तर्हि मम सर्वदेहवर्त्तिभोगानुसंधानं स्यादित्याशङ्क्यैवदन्तःकरणविशिष्टस्य तव परिच्छिन्नत्वेन सर्वभोगसंबन्धाभावाद् न तदनुसंधानम् , तदुपलक्षितचिन्मात्रस्वरूपस्य तव सर्वसाक्षितया सर्वानुसंधानमिष्टमेव, त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्तस्य सर्वशरीरेष्वैक्ये न किं चिद् बाधकमित्यभिप्रेत्य तदुपसंहरति । तस्मादिति । एवमुत्तरत्रापि यो-ज्यम् ॥ ६८ ॥

संविद्व्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥
संविद्व्यक्तिः संविदात्मत्वहेतो-
स्तस्मादात्मा सर्वभूतस्थ एकः ॥ ६९ ॥

एवं देहवदेवैकात्मसंबन्धित्वेनाविप्रतिपन्नैकव्यक्तिदृष्टान्तेन तदितरेषु तज्जातीयेष्वनेकात्मसंबन्धित्वेन विप्रतिपन्नेषु वस्तुषु तज्जातीयत्वहेतुना तदेकात्मसंबन्धित्वमनुमेयम्, ततश्च सर्वेष्वात्मीयेषु विप्रतिपन्नमात्मैक्यं वास्तवमवश्यमुपेयमित्यभिप्रेत्य प्रत्युपस्थितिक्रमेण कतिपयानुमानानि दर्शयति । संविद्व्यक्तिरित्यादिना । वैदिकाभिमतस्वप्रकाशस्फुरणं संविच्छब्दार्थः । अन्यत् समानम् ॥ ६९ ॥

बुद्धिव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥
बुद्धिव्यक्तिर्बुद्धिताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७० ॥

साङ्ख्ययोगवेदान्त्यभिमता बुद्धिर्बुद्धिशब्दार्थः ॥ ७० ॥

अक्षव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अक्षव्यक्तिस्त्वक्षताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७१ ॥

विप्रतिपन्नमिन्द्रियसमुदायमेकैकं चक्षुरादिकं वाऽभिप्रेत्याक्षव्यक्तिरित्युक्तम् ॥ ७१ ॥

ज्ञानव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव
ज्ञानव्यक्तिर्ज्ञानताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७२ ॥

जडज्ञानं ज्ञानशब्दार्थः ॥ ७२ ॥

रागव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥
रागव्यक्ती रागताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७३ ॥

इच्छा रागशब्दार्थः ॥ ७३ ॥

द्वेषव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ॥
द्वेषव्यक्तिर्द्वेषताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७४ ॥

द्वेषशब्दार्थस्तु स्पष्टः । एवं सुखदुःखप्रयत्नधर्माधर्मादि च पक्षीकृत्यात्मैक्यमनुमेयमिति भावः ॥ ७४ ॥

एवं सतीदमविवेकनिबन्धनं ते
कर्तृत्वमात्मनि विभाति न वस्तुभूतम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बालेन कल्पितमतीव विशुद्धरूपे
व्योम्नीव भूम्नि मलिनत्वमबोधहेतोः ॥ ७५ ॥

ननूक्तविधयैकस्यैवात्मनो रागद्वेषादिमत्त्वेन त-न्नियतकर्तृत्वादिसर्वसंसारोऽपि तस्यैव स्यादिति शा-न्तिकर्मणि वेतालोदयन्यायापातः, न चाहङ्कारस्यैव रागादयो धर्मास्तन्नियतसंसारस्तस्यैव न त्वसङ्गस्य तत्साक्षिणश्चिदात्मन इति वाच्यम्, तथा सत्युक्तानु-मानैस्तस्यैव सर्वत्रैक्यं साधितं स्यान्न तदतिरिक्तात्म-न इत्यसमञ्जसं स्यादित्याशङ्क्य वस्तुत उक्तरूपस्या-प्यात्मनोऽविद्याकृतरागादिमदहङ्कारतादात्म्याधीनरा-गाद्यन्वयः प्रातिभासिक उपेयते तथा चोक्तानुमानै-स्तादृशरागाद्यन्वयानुवादेन तत्साक्षिण एवैकत्वं सा-ध्यते, अहङ्कारस्य तु प्रतिशरीरं स्वसमानसत्ताकभे-दवत्त्वस्यानन्यथासिद्धानुभवादिसिद्धतयोक्तानुमानानां तद्विरोधेन न तत्र प्रवृत्तिरिति वैषम्यमभिप्रेत्य सा-क्ष्येकत्वसाधनफलमाह । एवं सतीति । सर्वभूतस्थ-साक्ष्यैक्ये सतीत्यर्थः । भूम्नीति विशेषणमात्मनि व्यो-म्नि च योजनीयम् । कर्तृत्वादिभेदस्याश्रयभेदसापेक्ष-त्वाच्चिदात्मनश्चोक्तविधया सर्वत्रैक्यात्तदाश्रयतायो-गात्तत्र तद्भानं भ्रम आकाशनैल्यभानवदित्यर्थः ॥ ७५ ॥

बाह्यैरसौ रविनिशाकरवह्निवाग्भि-
र्ज्योतिर्गणैरुपकृतोऽपि हि कर्मजातम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्वर्तयन्न खलु तावकमन्तरेण
चैतन्यसन्निधिबलं पुरुषः करोति ॥ ७८ ॥

ननु कार्यकरणसंघातातिरिक्तः सर्वसाक्षी चिदात्मैव नास्ति यस्मिन् कर्तृत्वादिसंसारः कल्पितः स्यात्, न च स्वतो घटकुड्यादितुल्यसंघातस्य चित्प्रकाशाधीनचैतन्यभावं विना बाह्याभ्यन्तरसर्वकर्मकर्तृत्वानुपपत्तेः स्वतन्त्रश्चिदात्मोपेय इति वाच्यम्, आदित्यादिजड़ज्योतिरुपकृतेन्द्रियवृत्तिबलादेव तस्य सर्वव्यवहारसंभवादित्याशङ्क्य तदभावेऽपि स्वप्नमनोरथसमाध्यादिगतव्यवहारदर्शनात् संघातगतचिदाभासद्वारेण तदीयसर्वव्यवहारप्रयोजक एकश्चिदात्मा सर्वत्राभ्युपेय इत्यभिप्रेत्याह । बाह्यैरसाविति । उपकृतः पुरुषः संघातो निर्वर्तयन्नपि क्व चित् कर्मणि समर्थोऽपि तावकं त्वत्कृतं चैतन्यसन्निध्याधीनचिदाभासरूपं बलमन्तरेण कर्मजातं सर्वकर्माणि न करोति खल्विति संबन्धः । उक्तोपपत्तिसूचनार्थः खलुशब्दः । अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति श्रुतिसूचको हिशब्दः ॥ ७८ ॥

ज्योतिर्द्वयान्तरित एव हि कर्मजातं
सर्वं करोति पुरुषोऽन्नमयः सदैव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मादिकारणविनिर्मितमस्य बाह्यं
ज्योतिस्त्वनित्यमनिमित्तकमान्तरं चित् ॥

ननु संघातगतकर्तृत्वादिप्रयोजकं यच्चैतन्यज्योति-स्तत्तद्धर्मतया तदन्तर्भूतमेवास्तु तस्य स्वातन्त्र्यानुप-लम्भात्ततो न तदात्मा श्रुतिस्त्वीश्वरविषयेत्याशङ्क्याह ज्योतिर्द्वयेति। जडाजडज्योतिर्मध्यवर्ती वस्तुतस्तदसंस्पृष्ट इति यावत्। जडज्योतिरसंसर्गो दृष्टान्तत्वेनोक्तः। अन्नमयोऽन्नोपलक्षिभूतमयश्चैतन्यं न संघातान्तःपाति तदुपकारकज्योतिष्ट्वादादित्यादिवत्, इतरथा त-दानन्त्यप्रसङ्गेन गौरवापत्तेः, उदाहृतश्रुतिविरोधश्च। न च सेश्वरविषया। कतम आत्मेति योऽयं विज्ञान-मयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यादिवाक्यशेषा-सामञ्जस्यप्रसङ्गात्। ततश्चैतन्यस्य स्वातन्त्र्यालब्धे-रोधेन स एवात्मेत्यर्थः तथापि तस्य चैतन्यस्य संघा-तोपकारकत्वादादित्यादिवदनित्यत्वं स्यादित्याशङ्क्याह कर्मादीति। आदित्यादिपदप्रापकोपासना आदि-पदार्थः। किं तदान्तरमिति. वीक्षायामुक्तं चिदिति आदित्यादेः कर्मादिसाध्यत्वात्तन्नाशे नाशस्यावश्यक-त्वात्कर्मसाध्यत्वं तन्त्रोपाधिः, चैतन्यस्य त्ववस्थात्र-यानुयायिनस्तदभावादुक्तलाघवाच्च नित्यमेवेत्यर्थः॥

श्रोत्रादिजन्यमतिवृत्तिषु बाह्यशब्दा-
द्यर्थाकृतिर्विशति कर्मवशेन कर्तुः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधाकृतिस्तु तत्र सन्निधिमात्रहेतु-
र्धीवृत्तिषु प्रविशति स्वरसेन नित्यम् ॥ ७८ ॥

ननु शब्दादिविषयस्फुरणस्य कादाचित्कत्वात्सुखादि-हेतुत्वाच्च तदात्मकचैतन्यं कथं न कर्मजन्यमिति तत्राह । श्रोत्रादीति । जन्यत्वं वृत्तिविशेषणम् । अर्थाकृतिरर्थप्रतिबिम्बः । बोधाकृतिः स्वप्रकाशचैतन्यप्रतिबिम्बः । धीवृत्तिषु प्रत्यक्षाप्रत्यक्षसर्वबुद्धिवृत्तिषु । सन्निधिरेव कर्माधीन इत्याशङ्कयोक्तं स्वरसेनेति, व्यापिचैतन्यस्वभावेनेत्यर्थः । शब्दाद्याकारबुद्धिवृत्तीनां स्वरूपेण कादाचित्कत्वात्सुखादिहेतुत्वाच्च कर्मजन्यत्वमावश्यकं तासु चैतन्यप्रतिबिम्बरूपस्फुरणस्यापि कर्माधीनत्वे कदा चित्सतीष्वपि तासु स्फुरणं न स्यात्, न चैवमस्ति, तस्माद्वृत्त्युत्पत्तिमात्रमेव तत्र चैतन्यप्रतिफलनेऽपेक्ष्यते न कर्मेति न तत्साध्यं स्फुरणम्, न वा स्वरूपेण कादाचित्कं तत् स्वरूपचैतन्यस्य सदा सत्त्वादिति भावः ॥ ७८ ॥

स्वाभाविकी हि वियदन्विततता घटादेः
क्षीरादिवस्तुघटना पुनरन्यहेतुः ॥
एवं धियामपि चिदन्विततताऽनिमित्ता
शब्दादिवस्तुघटना खलु कर्महेतुः ॥ ७९ ॥

वृत्तिषु चिदाकारः कर्मनिमित्तः तद्गतान्यान्याकारत्वात्तद्गतविषयाकारवदित्याशङ्कायास्याप्रयोजकत्वमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यभिप्रेत्य दृष्टान्तेनोक्तं स्पष्टयति । स्वाभाविकीति। घटना अन्वितता । अन्यहेतुः भोक्तुः कर्महेतुका । अ-निमित्तेति च्छेदः ॥ ७९ ॥

संवेदनं यदिह मानफलं प्रसिद्धं
तच्च प्रमातरि विकारिणि निष्ठितं नः ॥
तस्य प्रमातुरपि साक्षितयान्तरात्मा
सर्वस्य तिष्ठति भवानविकाररूपः ॥ ८० ॥

ननु प्रमाणजन्यानित्यज्ञानव्यतिरेकेण तदुपाधिकं बोधाकृतिशब्दितं संवेदनमेव नास्ति यस्या निमित्तत्वं नित्यत्वं च स्यादित्याशङ्क्याह । संवेदनमिति । इह व्य-वहारभूमौ यन्मानफलं प्रसिद्धं तदेव स्वप्रकाशं संवेदनं जडज्ञानस्येच्छादिवत्स्वपरव्यवहारासमर्थस्य मानफल-त्वायोगात् स्वयंप्रकाशं मानफलमुपेयमिति तदेव संवे-दनमित्यर्थः । तथापि प्रमातृव्यापाराहिता विषयग-ता स्वप्रकाशज्ञातसैव संवेदनादिपदाभिलप्या मानफलं तच्चानित्यमिति नेत्याह । तच्चेति । स्वप्रकाशे मा-नफले स्वतोऽन्यतो वोत्पत्त्यादेरसिद्धेर्जडधर्मस्य रू-पादिवज्जडत्वनियमात्तस्य प्रमेयनिष्ठत्वायोगात् स्वा-भिव्यञ्जकवृत्तितादात्म्यात्तद्द्वारा प्रमातृनिष्ठत्वमेवा-हमुपलभ इत्याद्यनुभवानुरोधादित्यस्मन्मतं युक्तमि-त्यर्थः । तर्हि प्रमातुरेव स्वनिष्ठसंवेदनेन सर्वसाधकत्वसं-भवात् किं तदतिरिक्तसाक्षिणेत्याशङ्क्य मातृमानादि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातृमानान्तरासम्भवात् स्वस्य स्वस्मिन्वृत्तिविरोधा-त्तत्साधकं वस्तुतः स्वतन्त्रं नित्यमेकं मानफलत्वादि-कल्पनारहितं स्वप्रकाशं संवेदनं सर्वसाक्षिभूतमुपेयं त-देवैष त आत्मा सर्वान्तर इत्यादिश्रुत्युक्तं त्वत्स्व-रूपमित्याह । तस्येति ॥ ८० ॥

कर्त्रादिसंनिधिबलेन तवापि कर्तृ-
भोक्तृप्रमातृवपुरापतति भ्रमेण ॥
तद्बुद्धिसंश्रयमनात्मगतं प्रतीचि
शुद्धेऽपि पश्यसि तमःपटलावृताक्षः ॥ ८१ ॥

ननूक्तरूपसाक्षिसद्भावेऽपि न तन्मम स्वरूपम्, अ-हंप्रत्यये प्रकाशमानस्यैव मत्स्वरूपत्वात्तत्र कर्त्रादिरू-पस्यैव प्रकाशमानत्वादित्याशङ्क्य वस्तुत उक्तरूपस्यैव तवाहंप्रत्यये विपर्यस्ततयाऽन्यथा प्रकाशमानत्वात्तद्-गोचरकर्त्रादिरूपं स्थूलादिरूपवत्तव नैवास्तीत्यभिप्रे-त्याह । कर्त्रादीति । ननु स्थौल्याद्याश्रयदेहवत् स्वतः कर्तृत्वादिमदात्मनोऽन्यन्नास्ति यत्संनिधिबलेनात्मनि त-द्भ्रमः स्यादित्याशङ्क्य विज्ञानं यज्ञं तनुते अहमि-हैवास्मीत्यादिश्रुत्यनुभवसिद्धो साभासबुद्धिरेव तद्वती तदविवेकादेवात्मनि कर्तृत्वादिभ्रम इत्याह । तद्बु-द्धिसंश्रयमिति । तत्कर्त्रादिवपुः कर्तृत्वादीति याव-त् । किं च कर्तृत्वादिनं तावदात्मपरिणामो निरव-यवस्य तस्य हेतूपरागायोगेन परिणामायोगात् स्वत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव तत्परिणामित्वे मुक्त्यभावप्रसङ्गादविकारित्वश्रुतिविरोधाच्च। नाप्यात्मनि मनःसंयोगजो गुणः निरवयवे प्रदेशवृत्तिसंयोगायोगात्। अत एव न मनस्तत्र तत्साधकं न चान्यत्तत्साधकमस्ति तस्मादात्मनो निर्गुणत्वश्रुतेः कामसंकल्पादेर्मनोधर्मत्वश्रुतेश्च तद्विषयकर्तृत्वादेरपि मनोधर्मत्वादात्मनि तद्धीर्भ्रम इत्यभिप्रेत्योक्तम्। अनात्मगतमिति ॥ ८१ ॥

कर्तृत्वादि च दृश्यवर्गपतितं द्रष्टुः स्वभावः कथं
संभाव्येत तत्र प्रसन्नविमलस्वच्छप्रकाशात्मनः॥
यद्वद्दृश्यतया जगत्यभिमतं सर्वस्य तत्तद्भवेद्
दूरं द्रष्टुरिति प्रसिद्धमखिलं भूभृत्समुद्रादिकम् ॥८२॥

किं च कर्तृत्वादि वस्तुतो नात्मा तद्धर्मश्च दृश्यत्वात्पर्वतादिवत्, न चाप्रयोजकत्वम्, तस्य स्वरूपत्वे आत्मधर्मत्वे च तेनाकारेण दृश्यत्वायोगात्, अनाश्रयस्य तस्य कदाप्यप्रतीतेश्च तस्य दृश्यत्वानुपपत्तेरेव विपक्षे बाधकत्वादित्यनुमानादपि तस्यात्मवद्धर्मत्वाभावसिद्धौ तत्प्रतीतिर्भ्रम इत्यभिप्रेत्याह। कर्तृत्वादि चेति। द्रष्टुः साक्षिणः। आत्मत्वादौ व्यभिचारमाशङ्क्य तदेवासम्प्रतिपन्नमित्यभिप्रेत्य सामान्यव्याप्तिमेवाह। यद्वदिति। द्रष्टुर्दूरं तदनात्मकमधर्मश्चेत्यर्थः ॥ ८२ ॥

एतस्माच्च न जाग्रतस्तव भवेत् स्वाभाविकी कर्तृता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्येषा स्वत एव किं न भवति स्वप्नेऽपि ते तिष्ठतः ॥
यत् स्वप्ने परिपश्यसि त्वमखिलं त्वन्मायया निर्मितं
कर्तृत्वादि न सत्यमत्र घटते कात्स्न्र्यानभिव्यक्तितः ८३

किं चेदं कर्तृत्वादिकमात्मनोऽग्नेर्ज्वालादिवदागन्तुकं किं वौष्णयादिवत् स्वाभाविकम्, नाद्यः पूर्वोक्तविधया तद्धेतोर्दुर्निरूपत्वान्न हि निर्हेतुकमागन्तुकं सम्भवति आगन्तुकत्वे वा तस्य रज्जुसर्पादिवन्मिथ्यात्वापत्तेश्चेत्यभिप्रेत्य द्वितीयं निराकरोति। एतस्मादिति। वक्ष्यमाणहेतोरित्यर्थः। चशब्दः प्रथमपक्षप्रतिक्षेपसमुच्चयार्थः। एतस्मादित्युक्तं विशदयति। यद्येषेति। अग्न्यौष्ण्यस्य यावदग्निस्वरूपानुवृत्तिवत् कर्तृत्वादेरात्मनः स्वाभाविकत्वे यावदात्मस्वरूपं तदनुवृत्तिः स्यान्न च साऽस्ति स्वप्ने सत्यप्यात्मनि तदभावादित्यर्थः। ननूक्तहेतुरसिद्धो जाग्रतीव स्वप्नेऽपीदं करोमीदं भुञ्ज इत्याद्यनुभवेनात्मनि तदापि कर्तृत्वादेः सत्त्वादित्यत आह। यत्स्वप्न इति। स्वप्ने यत्कर्तृत्वादि त्वं परिपश्यसि तदखिलं मायया निर्मितमिति सम्बन्धः। कात्स्न्र्यानभिव्यक्तितः परमार्थवस्तूचितदेशकालसाधनसंपत्तिः कात्स्न्र्यं तत्पूर्विका याऽभिव्यक्तिस्तद्रहितत्वादित्यर्थः। स्वे शरीरे यथाकामं परिवर्त्तत इति वचनात्स्वशरीर एव स्वप्नवस्तु दृश्यते तत्र च वास्तवस्नानभोजनगमनाद्युचितदेशका-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लसाधनसंपत्तेरसम्भवात्तदभावेऽप्यभिव्यक्तस्य तस्यैन्द्रजालिकसृष्टवस्तुवदनिर्वचनीयमायामात्रविनिर्मितत्वान्मिथ्यात्वमावश्यकम् । तदुक्तम् । मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति । ततो न जागरितकर्तृत्वादेः स्वप्नेऽनुवृत्तिरिति सिद्धमित्यर्थः ॥८३॥

कार्त्स्न्ये हीष्टमबाधनं न खलु तत् स्वप्नस्य जाग्रद्धिया
बाधाद् बाधितमेव सत्यमिति चेन्नैवं विरोधान्मिथः।
सत्यत्वे न हि बाधितत्वघटना बाधे च सत्यं कुतः
सत्यं बाधितमित्यतीव पदयोः संबन्धिता दुर्घटा ॥८४॥

कार्त्स्न्यशब्दस्यार्थान्तरं वदन्स्वप्नस्य तदभावेनासत्यत्वमाह । कार्त्स्न्ये हीति । भाष्यकारादिसंमत्यर्थो हिशब्दः । जाग्रद्धिया बाधादिति । यद्यपि सिद्धान्ते स्वप्नस्य मूलाज्ञानकार्यस्य जाग्रद्धिया भ्रमान्तररूपया सविलासाविद्यानिवृत्तिरूपबाधो न संभवति। तथापि रश्नासमारोपितभुजङ्गस्यानन्तरोत्पन्नदण्डभ्रमेणेव जाग्रद्धिया स्वप्नदृष्टवस्तुनस्तदाप्यभावनिश्चयेन तन्मिथ्यात्वनिश्चयरूपबाधनं तदधीनमभिप्रेत्य तथोक्तमिति द्रष्टव्यम्। अथ रथान् रथयोगान्पथः सृजत इति श्रुतेः। स्वप्नदृष्टस्य जाग्रद्धिया निवृत्तिमात्रं बाधशब्दार्थं मन्वानः शङ्कते। बाधितमेवेति । पूर्वोक्तमिथ्यात्वनिश्चयं बाधमभिप्रेत्य परिहरति । नैवमिति । मिथोविरोधमेव प्रकटयति । सत्यत्व इति ॥ ८४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मायामेनां जागरे लोकसिद्धा-
मुक्त्वा तद्वत् स्वप्नमायां विविच्य ॥
शक्तिव्याप्ती तत्र सिद्धे गृहीत्वा
मायासिद्धं जागरं साधयामः ॥ ८५ ॥

ननु मायां तु प्रकृतिं विद्यादित्यादौ वियदादिसत्यवस्तुप्रकृतित्वेन मायास्वरूपनिश्चयात्सूत्रकारेण च स्वप्नस्य मायामात्रत्वाभिधानात्सोऽपि जाग्रत्तुल्यस्तदभिप्रेतस्तथा च न तत्र रथा इत्यादिश्रुतिर्जाग्रद्रथाद्यभावपरेति न तस्यालीकत्वमित्याशङ्क्य लोकेऽनिर्वचनीयाऽविद्याया एव मायापदार्थत्वाद्वैदिकमायाशब्दस्यापि तदर्थत्वात्तत्कार्यवियदादेरप्यनिर्वचनीयत्वाज्जाग्रद्वस्तुनोऽपि न सत्यत्वं जाग्रत्स्वप्नयोर्मिथ्यात्वाविशेषेऽपि स्वप्नस्याविद्यातिरिक्तकारणजन्यत्वात्प्रातीतिकत्वं झटिति बाधश्चोपपद्यत इत्यभिप्रेत्य वक्ष्यमाणमर्थजातं प्रतिजानीते । मायामेनामिति । लोकसिद्धाम् ऐन्द्रजालिकादौ प्रसिद्धामुक्त्वा अविद्यामात्रतया प्रतिपाद्य स्वप्नमायां सूत्रकारोक्तस्वप्नमूलमायां विविच्याविद्यात्मतया निरूप्य तत्राविद्यायां स्वप्ने वा सिद्धे वृद्धप्रयोगभूयोदर्शनाभ्यामवगते शक्तिव्याप्ती मायाशब्दस्य शक्तिं कार्यत्वादिहेतोरविद्याकारणकत्वेन व्याप्तिं च गृहीत्वाऽविस्मृत्य जागरं जाग्रदवस्थागतं वियदादिप्रपञ्चमपि मायासिद्धमविद्याकार्यं श्रुतियुक्त्यनुमानैरनुप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दमेव साधयिष्याम इत्यर्थः ॥ ८५ ॥

लोके हि मायाधिगता न माया
तमोऽतिरिक्ताऽस्ति निरूप्यमाणा ॥
व्याप्तिश्च शक्तिश्च निरूप्यमाणा
भविष्यतीहैव तु नेतरत्र ॥ ८६ ॥

तत्र तावल्लोके मायायास्तमःशब्दिताऽविद्याऽभेदं साधयितुमुपक्रमते । लोके हीति । लक्षणादिना निरूप्यमाणा माया नाऽविद्याविलक्षणा शक्या निरूपयितुमिति वक्ष्यमाणत्वात्तस्या अविद्यामात्रत्वे फलितमाह । व्याप्तिश्चेति । इह अविद्ययाम् । तुरवधारणे। इतरत्र सत्यरूपमायायाम् । नेव भविष्यतीत्यनुषङ्गः ॥८६॥

मायाविनो न मणिमन्त्रमथौषधं वा
मायेति शक्यमिह वर्णयितुं कुतश्चित् ॥
सत्यं हि तत् सकलमिष्टमियं त्वसत्या
माया ततोऽन्यदिह किं चन वर्णनीयम् ॥८७॥

ननु मणिमन्त्रौषधादिसत्यवस्तुमति पुरुषविशेषे लोके मायाविशब्दप्रयोगनियमात्तद्विशेषणीभूतमायाऽपि सत्यभूतैवेत्याशङ्क्य सा किं मन्त्रादिरूपसत्यवस्त्वेव तत्कृतः पुरुषशक्तिविशेषो वा, नाद्य इत्याह । मायाविन इति । मायाशब्दस्य मण्यादिवाचकत्वे बाधकाभावमभिप्रेत्य शङ्कते । कुत इति । बाधकाभावोऽसिद्ध इति परिहरति । सत्यं हीति । किं मण्यादी

नां स्वस्वरूपेणैव मायाशब्दवाच्यत्वम् उत मिथ्या-
कार्यसंवलितरूपेण , नाद्यः केवलमण्यादिसंबन्धा-
वगमेऽपि तद्वति मायाविशब्दायोगाद्, द्वितीयेऽपि
प्राप्ताप्राप्तविवेकेनानिर्वचनीयगजतुरगादिकार्यसम्बद्ध ए-
व मायाशब्दगोचर इति तदेव मिथ्याकार्यं माया-
शब्दवाच्यमुपेयम् , तस्य च स्वरूपेण नानाजातियु-
क्तस्यैकशब्दवाच्यत्वायोगात्तादृशकार्यकल्प्यं तस्मि-
न्सर्वस्मिन्नुपादानतयाऽनुगतमनिर्वचनीयमज्ञानमेव
मायाशब्दवाच्यम् , तत्तादात्म्याद् घटादौ मृदादिशब्द-
वत्तत्कार्ये मायाशब्दस्तद्योगात्पुरुषेऽपि मायाविशब्दो
युज्यत इति न मन्त्रादिर्मायाशब्दार्थ इति भावः ॥८७॥

सामर्थ्यमस्य मणिमन्त्रनिमित्तमस्ति
माया भविष्यति जनभ्रमहेतुरेषा ॥
इत्युच्यते यदि तदप्यतिफल्गु कस्मात्
सामर्थ्यमप्यवितथं हि तदिष्टमस्य ॥ ८८ ॥

पुरुषे शक्तिविशेषे मायेति पक्षमनूद्य प्रतिक्षिपति ।
सामर्थ्यमिति । तस्याः पार्श्वस्थजनभ्रामकत्वानुपप-
त्तिकल्प्यत्वात्कस्मादतिफल्गु नेति शङ्कते। कस्मादिति।
तत्किं सामर्थ्यं कार्यानुरोधेनासत्यङ्कल्प्यते किं वा स-
त्यम्, नाद्यः, त्वदिष्टविघातापातात् अस्मदिष्टापत्ते-
श्चेत्याशयेनाह । सामर्थ्यमिति । तदपीति सम्बन्धः,
मिथ्याकार्यकल्प्यमपीत्यर्थः । अस्य पुरुषस्य प्रतिवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिनो वा । द्वितीये कार्यस्यापि सत्यता स्यात्सत्यसा-मर्थ्याधीनकार्यस्यापि सत्यत्वनियमात्ततश्च तत्र मा-याशब्दप्रत्ययावनुपपन्नौ, भ्रमगोचर एव तयोः प्रसि-द्धेरिति हिशब्दार्थः ॥ ८८ ॥

न च शक्तिरस्य सहजा यदि वा
जनिताऽस्ति केन चिदिति ब्रुवतः ॥
परिपुष्कलं स्वमतनिर्वहणं
भवितुं क्षमं तदनिरूपणतः ॥ ८९ ॥

ननु काचकामलादिगतसामर्थ्यस्य सत्यत्वेऽपि त-दधीनकार्यस्य मिथ्यात्ववत्पुरुषगतशक्तिविशेषरूपमा-यायाः सत्यत्वेऽपि तदधीनं कार्यं मिथ्या किं न स्यादि-त्याशङ्क्य तर्हि दोषगतसामर्थ्यवत्पुरुषे सा सहजा उ-चक्षुरादौ भ्रमसामर्थ्यवदागन्तुकीति विकल्पयोर्भयथा-ऽपि दुर्निरूपत्वात्तस्याः सत्यत्वनिर्वहणमशक्यमित्या-ह । न च शक्तिरिति । दोषादावपि सत्यसामर्थ्या-प्रतिपत्तिसमुच्चयार्थश्चशब्दः । केन चिद्‌ गुरुदे-पुरुषेण । परिपुष्कलं पक्षद्वयेऽप्यनवद्यम् ॥ ८९ ॥

न च शुक्रशोणितसमागमने
न च गर्भशायिन इयं विदिता ॥
न च मातृयोनिविवरादुदरा-
दपसर्पतो बहिरियं घटते ॥ ९० ॥

तत्राद्यकल्पस्य दुर्निरूपत्वमुपपादयति । न च शु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्केति । पुरुषस्य स्वतो जन्माभावात्तच्छक्तेः सहजत्वं तच्छरीरेण सह जन्मेति वक्तव्यम्, तत्किं गर्भाधानसमये शुक्रशोणितसंसर्गादेव भवति किं वा गर्भ एव करचरणादिमत्पिण्डरूपपरिणामान्मातुरुदरादतिकष्टद्वारेण वहिर्निर्गमनाद्वा, न सर्वथापि तत्तत्समयानन्तरमेव मायाकार्यादर्शनेन तच्छक्तिकल्पकाभावात्, तत्सत्त्वासिद्धौ तस्या जन्मासिद्धेरित्यर्थः ॥ ९१ ॥

मणिमन्त्रमौषधमितीदृशकं
विरहय्य नापरमिहार्पयति ॥
पुरुषोऽपि कश्चिदत एवमियं
परतोऽपि नास्य घटनामटति ॥ ९१ ॥

द्वितीये गुरुः किं शिष्ये मण्यादिकमेव समर्पयत्युत तद्द्वारा शक्तिविशेषमपि, आद्ये न त्वदिष्टशक्तिसिद्धिः, न द्वितीयः, मण्यादे रज्जुसर्पादिमिथ्यावस्तुकारणत्वेन क्लृप्तसामर्थ्याज्ज्ञानक्षोभकत्वेन मिथ्याकार्योपयोगोपपत्तौ पुरुषे शक्त्यादिकल्पकाभावेन तदयोगादित्यभिप्रेत्याह । मणीति । पुरुषो गुरुभूतोऽपरं सामर्थ्यमिह शिष्ये नार्पयतीति सम्बन्धः । आगन्तुकी पुरुषशक्तिर्मायेति पक्षासम्भवमुपसंहरति । अत एवमिति । इयं शक्तिरस्य पुरुषस्य घटनां सम्बन्धसम्भावनां नाटति न गच्छतीत्यर्थः ॥ ९१ ॥

अन्यस्य विभ्रमकरी पुरुषस्य शक्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिनो वा । द्वितीये कार्यस्यापि सत्यता स्यात्सत्यसा-मर्थ्याधीनकार्यस्यापि सत्यत्वनियमात्ततश्च तत्र मा-याशब्दप्रत्ययावनुपपन्नौ, भ्रमगोचर एव तयोः प्रसि-द्धेरिति हिशब्दार्थः ॥ ८८ ॥

न च शक्तिरस्य सहजा यदि वा
जनिताऽस्ति केन चिदिति ब्रुवतः ॥
परिपुष्कलं स्वमतनिर्वहणं
भवितुं क्षमं तदनिरूपणतः ॥ ८९ ॥

ननु काचकामलादिगतसामर्थ्यस्य सत्यत्वेऽपि त-दधीनकार्यस्य मिथ्यात्ववत्पुरुषगतशक्तिविशेषरूपमा-यायाः सत्यत्वेऽपि तदधीनं कार्यं मिथ्या किं न स्यादि-त्याशङ्क्य तर्हि दोषगतसामर्थ्यवत्पुरुषे सा सहजा उत चक्षुरादौ भ्रमसामर्थ्यवदागन्तुकीति विकल्प्योभयथा-ऽपि दुर्निरूपत्वात्तस्याः सत्यत्वनिर्वहणमशक्यमित्या-ह । न च शक्तिरिति । दोषादावपि सत्यसामर्थ्या-प्रतिपत्तिसमुच्चयार्थश्चशब्दः । केन चिद्ध गुरुतर-पुरुषेण । परिपुष्कलं पक्षद्वयेऽप्यनवद्यम् ॥ ८९ ॥

न च शुक्रशोणितसमागमने
न च गर्भशायिन इयं विदिता ॥
न च मातृयोनिविवरादुदरा-
दपसर्पतो बहिरियं घटते ॥ ९० ॥

तत्राद्यकल्पस्य दुर्निरूपत्वमुपपादयति । न च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रेति। पुरुषस्य स्वतो जन्माभावात्तच्छक्तेः सहजत्वं तच्छरीरेण सह जन्मेति वक्तव्यम्, तत्किं गर्भाधानसमये शुक्रशोणितसंसर्गादेव भवति किं वा गर्भ एव करचरणादिमत्पिण्डरूपपरिणामान्मातुरुदरादतिकष्टद्वारेण बहिर्निर्गमनाद्वा, न सर्वथापि तत्तत्समयानन्तरमेव मायाकार्यादर्शनेन तच्छक्तिकल्पकाभावात्, तत्सत्त्वासिद्धौ तस्या जन्मासिद्धेरित्यर्थः ॥ ११ ॥

मणिमन्त्रमौषधमितीदृशकं
विरहय्य नापरमिहार्पयति ॥
पुरुषोऽपि कश्चिदत एवमियं
परतोऽपि नास्य घटनामटति ॥ ११ ॥

द्वितीये गुरुः किं शिष्ये मण्यादिकमेव समर्पयत्युत तद्द्वारा शक्तिविशेषमपि, आद्ये न त्वदिष्टशक्तिसिद्धिः, न द्वितीयः, मण्यादे रज्जुसर्पादिमिथ्यावस्तुकारणत्वेन क्लृप्तसामर्थ्याज्ज्ञानक्षोभकत्वेन मिथ्याकार्योपयोगोपपत्तौ पुरुषे शक्त्यादिकल्पकाभावेन तदयोगादित्यभिप्रेत्याह। मणीति। पुरुषो गुरुभूतोऽपरं सामर्थ्यमिह शिष्ये नार्पयतीति सम्बन्धः। आगन्तुकी पुरुषशक्तिर्मायेति पक्षासम्भवमुपसंहरति। अत एवमिति। इयं शक्तिरस्य पुरुषस्य घटनां सम्बन्धसम्भावनां नाटति न गच्छतीत्यर्थः ॥ ११ ॥

अन्यस्य विभ्रमकरी पुरुषस्य शक्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राकारमन्यमनपेक्ष्य मनीषिता चेत् ॥
वाच्येह लौकिकजनव्यवहारभूमौ
मायागिरस्तदपि दुर्घटमिष्टहानेः ॥ ९२ ॥

ननु मायां तु प्रकृतिं विद्यात् दैवी ह्येषा गुणमयी मम माया दुरत्ययेत्यादिवचनादनादिसिद्धा मायाशक्तिरीश्वरे तावदङ्गीकर्त्तव्या, न च साऽज्ञानमेवेति वाच्यम्, तस्य स्वाश्रयव्यामोहकत्वाद् भ्रान्तिविषयसदृशवस्त्वपेक्षयैव रज्ज्वादौ सर्पादिभ्रमहेतुत्वाच्च, ईश्वरमाया तु ततो विलक्षणा न हि सा स्वाश्रयमीश्वरं मोहयति यः सर्वज्ञः सर्ववित् यो योनिं योनिमधितिष्ठत्येक इत्यादौ तस्य सर्वज्ञत्वमायानियन्तृत्वश्रवणेन तन्मोहितत्वायोगात्, न च तस्या वियदादिभ्रमजनने तत्सदृशवस्त्वन्तरापेक्षाऽस्ति, तदकार्यस्य तस्याभावात्, सैव मन्त्राद्युपासितेश्वरप्रेरितायोगिप्रभृतिजीववश्या सती इतरान्भ्रामयतीति सर्वत्र माया न जन्या ततो नोक्तदोष इति मायाऽविद्याभेदवादिनमेकदेशिनं प्रत्याह। अन्यस्येति। स्वाश्रयादन्यस्येत्यर्थः। अन्यमनपेक्ष्य। आकारं भ्रमविषयाकारं तत्सदृशमिति यावत्। इति त्येतद्विवृणोति। लौकिकेति। मायागिरो वाच्या मनीषिताऽभिमता चेदिति संबन्धः। दूषयति। तदपीति। मुक्तरूपा मायाऽनिर्वचनीया उत सत्या, न प्रथमो घटते, अनिर्वचनीयत्वस्याविद्यास्वरूपलक्षणत्वेन मा

या अपि तथात्वे मायाऽविद्याभेदस्त्वदिष्टो न लभ्येत। न चानिर्वचनीयत्वाविशेषेऽपि स्वपरव्यामोहकत्वतदभावाभ्यां भेद इति वाच्यम्। अविद्याया अपि द्विचन्द्रकेशोण्ड्रादिभ्रमहेतोस्तन्मिथ्यात्वनिश्चयवत्स्वाश्रये व्यामोहकत्वाभावात्। त्वदुक्तरीत्यामायिनां जीवानामीश्वरार्पिततदीयमाययेतरव्यामोहकत्ववत्तयैव वियदादिसत्यत्वभ्रमहेतुभूतया तेषामपि व्यामूढत्वोपगमान्मायाया अपि स्वाश्रयव्यामोहकत्वस्य समानत्वात्। एतेन कर्तुरिच्छया कार्यकरी मायाऽविद्या तु नैवमिति तद्भेद इति निरस्तम्। मायाक्षोभकमन्त्रादिप्रयोगवदविद्याक्षोभकालातचक्रभ्रमणादेरपि कर्तुरिच्छया निष्पाद्यमानत्वात्, क्षुब्धायां मायायां तत्कार्यस्य तदनिच्छायामप्यविद्याकार्यवदुत्पद्यमानत्वादुभयत्रापि कार्यस्येच्छा न तु विधानस्यापि तुल्यत्वात्, तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायाममेयाय तस्मै विद्यात्मने नम इत्यादिवचनान्मायाऽविद्ययोरभेद एव युक्त इति भावः ॥ १२ ॥

मायामयत्ववचनादखिलं मृषेति
यद्भाष्यकारवचनं तदसङ्गतं स्यात् ॥
मत्यक्षमुत्सृजसि कारणमन्यदन्यद्
यत्किञ्चिदानयसि कष्टमतः किमन्यत् ॥ १३ ॥

माया सत्येति द्वितीयकल्पमपसिद्धान्तप्रसङ्गेन दू-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षयति । मायामयत्वेति । मायायाः सत्यत्वे तत्का-
स्यापि सत्यत्वमावश्यकं स्यात्, ततश्च मायैव सन्ध्ये
सृष्टिर्न परमार्थगन्धोऽप्यस्तीत्यादिभाष्यकारवचनमप्र-
माणं स्यात्, मायाकार्यस्यापि सत्यत्वे मायामात्रं तु
सिद्धान्तसूत्रमप्यसङ्गतं स्यात्, सन्ध्ये सृष्टिराह हीत्यु-
क्तपूर्वपक्षानिरसनात्, कात्स्न्येनानभिव्यक्तस्वरूपत्वा-
दिति सौत्रहेतुरपि विरुद्धः स्यात्तस्यासत्यत्वेनैव स्व-
प्नत्वात्, मायायाः सत्यत्वे तस्या ज्ञाननिवर्त्यत्वाभा-
वात् भूयश्चान्ते विश्वमायानिवृत्तिः मायामेतां तरन्ति
त इत्यादिवचनमप्यप्रमाणं स्यादिति भावः । किं
मायाद्रष्टृणां तत्तत्त्वविषयाज्ञानमनुभवसिद्धमस्त्येव तं
श्च तस्यैवान्वयव्यतिरेकाभ्यां दृश्यमानमायाहेतुत्व-
शब्दवाच्यत्वयोः सम्भवे सति तदतिरिक्ता शक्तिः शक्ति-
मती वा माया न कल्पनीया कल्पकाभावात्तदभावेऽपि
कल्पनेऽतिप्रसङ्गादित्याह । प्रत्यक्षमिति ॥ १३ ॥

अज्ञानमेव च भविष्यति शक्तिरेषा
सर्वप्रपञ्चजननी परमेश्वरस्य ॥
मायाश्रुतिस्मृतिवचोभिरुदीर्यमाणा
शक्तिग्रहो हि परविभ्रमहेतुशक्तौ ॥ १४ ॥

ननु सर्वज्ञेश्वरेऽज्ञत्वप्रयोजकाज्ञानासंभवात्त-
श्रुतिस्मृतिप्रसिद्धा माया ततोऽन्यैव जगत्प्रकृतिरूपा-
पगन्तव्येत्याशङ्क्य चिन्मात्राश्रिताज्ञानस्य तदात्मके-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्त्वेऽपि तस्य तं प्रति स्वरूपानावरकत्वात्तत्राज्ञत्वाद्य-प्रयोजकाज्ञानमेवोक्तमायेत्यभ्युपगन्तुमर्हति कृतमति-रिक्तमायाकल्पनयेत्यभिप्रेत्य परिहरति । अज्ञानमेव चेति । श्रुतिस्मृतिवचोभिरुद्गीर्यमाणा सर्वप्रपञ्चजन-नी परमेश्वरस्य मायाशक्तिरेषाऽज्ञानमेव भविष्यतीति सं-बन्धः । न त्वतिरिक्तेति चशब्दार्थः । ननु मायाद्रष्टृणा-मनुभवसिद्धाज्ञानस्यैव मायात्वेन तदज्ञाने तेषु च मायामायाविशब्दप्रयोगः स्यादित्याशङ्क्यानादिवृद्ध-व्यवहारानुरोधेन तरभ्रामकत्वविशिष्टेऽज्ञाने मायाश-ब्दस्य शक्तिग्रहात्पश्चात्तत्रैव तत्प्रयोगस्तथा तद्वन्यभ्रा-न्ते मयाविशब्दप्रयोगो नाज्ञानमात्रे तद्वन्मात्रे वा तयोः प्रयोग इति व्यवस्थोपपत्तेर्मैवमित्यभिप्रेत्याह । श-क्तिग्रह इति ॥ ९४ ॥

न च प्रसिद्धार्थपदान्तराणां
प्रयोगसान्निध्यवशेन शक्तिः ॥
ग्रहीष्यतेऽस्येति समञ्जसं स्या-
दलौकिके शब्द इदं हि युक्तम् ॥ ९५ ॥

ननु यूपाहवनीयादिशब्दवत् मायां तु प्रकृतिं वि-द्यादित्यादिवाक्ये मायाशब्दस्य प्रसिद्धार्थेतरपदसम-भिव्याहारादलौकिकेश्वरशक्तौ जगदुपादाने सङ्गतिग्रह-संभवात् स्वाश्रयातिरिक्तव्यामोहकत्वविशिष्टाज्ञानेऽस्य शक्तिग्रहकल्पना न युक्तेति नेत्याह । न च प्रसिद्धेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननूक्तं यूपाहवनीयादिशब्दवदिति तत्राह । अलौकिक इति । लोके वृद्धव्यवहारे यूपादिशब्दप्रयोगाभावात्त-दधीनसङ्गतिग्रहस्यासंभवाद्वेदे प्रयुक्तयूपादिशब्दस्य स-ङ्गतिग्रहं विना तद्युक्तवाक्यस्याबोधकत्वात्तत्सङ्गतिग्र-हे चोपायान्तराभावात्प्रसिद्धार्थपदसमभिव्याहार एव तदुपायो युक्त इत्यर्थः ॥ ९५ ॥

अयं तु मायेति न शब्द एव-
मलौकिको लौकिक एव तस्मात् ॥
यदर्थवाची जगति प्रसिद्ध-
स्तमेव वेदेऽपि स वक्ष्यतीह ॥ ९६ ॥

मायाशब्दे ततो वैषम्यमाह । अयं त्विति । एवं यू-पादिशब्दवत् मायेत्ययं शब्दोऽलौकिको न किं तु लौ-किक एवेति सम्बन्धः । तुः किं त्वर्थः । तस्य लौकि-कत्वे फलितमाह । तस्मादिति । इह मायां त्वित्यादि-वाक्ये लौकिकवृद्धव्यवहारे प्रयुज्यमानमायाशब्दस्य परभ्रमहेत्वनिर्वचनीय एव वस्तुन्युक्तविधया सङ्गतिग्र-हात्तयोरेव शब्दार्थयोर्वेदे प्रत्यभिज्ञायमानत्वात्तमर्थ-मादायैव वाक्यार्थप्रतीत्युपपत्तौ तत्र पृथक्सङ्गतिग्रहे प्रमाणप्रयोजनयोरभावात्सोऽयुक्तः, अन्यथा व्रीह्यादिश-ब्दानामपि त्वदुक्तविधया वेदे पृथक् सङ्गतिग्रहप्रस-ङ्गादिति भावः ॥ ९६ ॥

ननूद्भिदादेर्यदि नाम लोके

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसिद्धमर्थान्तरवाचकत्वम् ॥
तथापि भावार्थनिपीड़ितस्य
विजानते कर्मणि शक्तिमस्य ॥ ९७ ॥

ननूद्भिच्चित्रादिशब्दानां लोके खनित्राद्यर्थवाचिनामपि वेदे उद्भिदा यजेत पशुकामः चित्रया यजेत पशुकामः इत्यादिप्रयोगेषु लौकिकार्थपरित्यागेन कर्मविशेषनामधेयतदर्थत्वं निरूपितं प्रथमे तन्त्रे, तथाहि, तत्र यजेतेत्यस्य यागेनेष्टं भावयेदित्यर्थे सति खनित्रादिवाचकोद्भिदापदस्य न तावत्सामानाधिकरण्येनान्वयः उद्भिद्यागपदयोरेकार्थत्वासंभवात्, न चोद्भिदेति पदेन तद्वतेति विवक्षितत्वात्तदुपपत्तिरिति वाच्यम, तथा सति मत्वर्थलक्षणाप्रसङ्गात्, नापि वैयधिकरण्येन, तदा हि दध्यादिवदन्यतः प्राप्तयागानुवादेन गुणविधिर्वा स्यात्, सोमेन यजेतेतिवद्विशिष्टविधिर्वा स्यात्, नाद्यः, अधिकारान्तरस्थयजिनाऽपूर्वयागोपस्थितेस्तदनुवादायोगेन तत्र गुणविध्यसंभवात्, नापि द्वितीयः, तदा हि उद्भित्साध्ययागेन पशुं भावयेदिति वाक्यार्थः स्यात्स तु न संभवति यागेन पशुं भावयेदित्येतावतैवाधिकारविधेर्निराकाङ्क्षत्वाद्विशिष्टविषयत्वे गौरवात्, रक्तपटन्यायेन उद्भिदोऽपि वाक्यार्थप्रवेशे योग्यतानुसारेण उद्भिदा यागं यागेन च पशुं भावयेदित्येवंान्वयः स्यात्, ततश्च सकृच्छ्रुते यागे वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जपेयाधिकरणोक्तन्यायेन गुणविधानायोद्देश्यतया सिद्धत्वं फले विधेयत्वादनुष्ठेयत्वम्, उद्देश्यत्वादेवानूद्यत्वं विधानादेवाज्ञातत्वं गुणसाध्यतया प्राधान्यं फलसाधनतया च गुणत्वम् इत्येवं विरुद्धत्रिकद्वयापत्तिः स्यात्, सोमेन यजेतेत्यस्य तु द्रव्यविशिष्टयागोत्पत्तिविधित्वेनान्वयभेदाभावान्न विरुद्धत्रिकद्वयापत्तिः तस्मादुद्भित्पदार्थस्य लोकसिद्धस्य खनित्रादेः कथमपि वेदवाक्यार्थेऽन्वयायोगाड्डित्थादिपदवत्समव्याभिहृतकर्मनामधेयत्वकल्पनया वैदिकोद्भिदादिपदस्य तत्र पृथक् शक्तिरिति सिद्धम्, तथा मायाशब्दस्यापि वेदे पृथगर्थवत्त्वमिति शङ्कते। ननूद्भिदादेरिति। भावार्थनिपीड़ितस्येति। भावार्थवाचियजिसामानाधिकरण्येन त्याजितलौकिकार्थस्येत्यर्थः ॥ ९७॥

सत्यं न गत्यन्तरमस्ति तत्र<br>
ततस्तथा निश्चिनमत्र नैवम् ॥<br>
मायागिरोऽज्ञाननिवेदनेऽपि<br>
न काचिदत्रानुपपत्तिरस्ति ॥ ९८ ॥

उक्तन्यायेन वैदिकोद्भिदादिपदस्य पृथगर्थवत्त्वमुपेत्य दार्ष्टान्तिके मायाशब्दे ततो वैषम्यं वदन् परिहरति। सत्यमिति। अङ्गीकृतमेवाह। न गत्यन्तरमिति। तत्र वैदिकोद्भिदादिपदे कर्मनामधेयत्वं विना लौकिकार्थार्पणेन वाक्यार्थप्रतिपत्त्युपयोगित्वं यतो ना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्ति ततः कर्मनामतया वेदे पृथक्शक्तित्वं निश्चितमित्यर्थः। मायाशब्दे वैषम्यमाह। अत्र नैवमिति। तत्र हेतुः। मायागिर इति। अत्र मायां तु प्रकृतिं विद्यादित्यादिवाक्ये मायाशब्दस्य लोके तदर्थत्वेनावगतस्याज्ञानस्य निवेदनेऽपि न काचिदनुपपत्तिरस्ति, तस्यानिर्वचनीयजगत्प्रकृतित्वयोग्यत्वादित्यर्थः ॥ १८ ॥

अज्ञानं जडशक्तिमात्रवपुषा सर्वेश्वरस्येष्यते
सर्वज्ञत्वविरोधि तन्न च भवेदुक्तप्रकारेण नः ॥
सर्वज्ञेश्वरसंश्रया भवति सैवाज्ञानमाया श्रुतौ
तस्मादुद्धिदिवेति वर्णनमिदं वैषम्यदुष्टं तव ॥१९॥

मायाशब्दस्य लौकिकाज्ञानार्थत्वे यद्यपि मायां तु प्रकृतिं विद्यादित्यत्र न काचिदनुपपत्तिः तथापि मायिनं तु महेश्वरमित्यत्र सास्त्येव सर्वज्ञादिरूपमहेश्वरस्याज्ञानित्वानुपपत्तेरित्याशङ्क्य स्वतः कूटस्थासङ्गाद्वितीयचिद्रूपेश्वरस्य जडप्रपञ्चजननानुकूलशक्तिरूपाज्ञानवत्त्वेऽपि तस्य तं प्रति जीववत्स्वरूपतत्त्वावारकत्वाभावेनेश्वरस्याज्ञत्वादिप्रसङ्गाभावस्यानेकत्र निरूपितत्वात्सर्वज्ञत्वाद्यविरोध्यज्ञानाश्रयत्वे न काचिदनुपपत्तिरित्याह। अज्ञानमिति। मात्रचा सर्वेश्वरं प्रत्यज्ञानस्य तत्त्वावारकत्वं निवारयति। श्रुतौ मायिनमित्यादिश्रुतौ। सैव लोकसिद्धाज्ञानरूपा माया। सर्वज्ञेश्वरसंश्रया विवक्षिता भवतीति शेषः। वैदिकमायाशब्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्य लोकसिद्धार्थाविदनेऽनुपपत्त्यभावात्तस्योद्भिदादिपद- साम्योक्तिरयुक्तेति फलितमाह । तस्मादिति ॥ ६१॥

मायाऽनिर्वचनीयमेव तु तमो मायाविनो गीयते
द्रष्टृणां भ्रमकारणं विषयता मायाविता तस्य तु ।
तं हस्त्यादिविकल्पनाघटितवन्मूढाशयं जन्तवो
रज्जुं सर्पतयेव तद्विरहितं जानन्त्यबुद्धत्वतः ॥६२॥

ननु लोके मायाशब्दोऽज्ञानवाचीति कथं येन वेदेऽपि तदर्थः स्यात्, न तावन्मायाविनोऽज्ञानं तदर्थः, त- स्य विशेषदर्शनवतो भ्रमाभावेन तन्मूलाज्ञानायोगा- त्, पार्श्वस्थानां तद्विषयाज्ञानवत्त्वेऽपि तेषु मायावि- त्वप्रसिद्धेरभावान्मायाशब्दस्य तदज्ञानवाचित्वस्याप्य- योग इत्याशङ्क्य द्रष्टृणां भ्रमोपादानभूताज्ञानमेव लोके मायाविनो मायेति गीयते तच्च चिन्मात्राश्रयविषयं मू- लाज्ञानमेवेति गूढाभिसन्धिः, परिहरति । मायाऽनिर्व- चनीयमिति । एवेति तमसः सत्यत्वं वारयति । तुरव- धारणे तम एवेति तदर्थः । ननु मायाविनि व्याघ्रा- दिभ्रमकारणमज्ञानं न तस्यास्ति किं तु द्रष्टृणामेव त- त्, मायावी तु तद्विषय एव न तदाश्रयः, ततश्चान्या- श्रिताज्ञानस्य मायात्वं तदनाश्रयः स कथं मायावी स्यादित्युक्ताभिसन्धिमजानतः शङ्कामङ्गीकृत्यैकदेशि- भिरुक्तं परिहारमाह । विषयतेति । तुरवधारणे । त- स्याज्ञानस्य विषयतैव मायाविता न तदाश्रयत्वं हठे-

मायाद्रष्टृभिरज्ञात एव पुरुषे मायाविशब्दप्रयोगप्रत्ययनियमादित्यर्थः। पुरोऽवस्थितस्य मायाविनस्तैरज्ञातत्वमेव कथमित्याशङ्क्य तस्यान्यथा तैर्दृश्यमानत्वाद्यथावदज्ञातत्वं रज्ज्वादाविव कल्प्यमित्याह। तं हस्त्यादीति। व्याघ्रादिरादिपदार्थः। हस्त्यादय एव विकल्पना विविधरचनात्मिकास्तद्घटितवत्तद्भावमापन्नवज्जानन्तीति सम्बन्धः। वतिना सूचितं स्पष्टयति। तद्विरहितमिति। वस्तुतो हस्त्यादिभावरहितं तं मायाविनं तदात्मना भ्रान्त्या यतो जानन्ति ततस्तस्य याथातथ्येनाज्ञानत्वमावश्यकमिति तदेव तस्य मायावित्वमित्यर्थः॥ १०० ॥

सम्यग् ज्ञानबलेन तं विरहितं हस्त्यादिभिर्यत्क्षणे
जानीयुस्तदनन्तरं न स भवेद्धस्त्यादियुक्तः पुमान्॥
तेनास्मत्तम एव तत्र विषये मायास्तु मायाविनः
सोऽज्ञातो वयमज्ञकोटिपतिता मायी स तेनोच्यते॥१०१॥

ननु सूर्यादौ नभोगतत्वेन यथावत्प्रतिभासमानेऽज्ञातत्वाभावेऽपि जलादिगतत्वादिरूपेण प्रतिबिम्बभ्रमदर्शनान्न भ्रमाधिष्ठानस्याज्ञातत्वं नियतं तथा च कथं तेन मायाविनोऽज्ञातत्वसिद्धिरित्याशङ्क्य सोपाधिकभ्रमाणामुपाधिप्रतिबद्धाधिष्ठानतत्त्वबोधनिवर्त्यत्वाभावेऽपि निरुपाधिकभ्रमाणां नियमेनाधिष्ठानतत्त्वबोधनिवर्त्यानां तदज्ञातत्वाधीनत्वं नियतमेव माया-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विगोचरहस्त्यादिभ्रमस्योपाधेरनिरूपणान्निरुपाधित्वे न विवाद इत्यभिप्रेत्य तस्याधिष्ठानतत्त्वबोधयोग्यत्वमुपपादयति । सम्यग्ज्ञानेति । मायाविना मन्त्राद्युपसंहारे कृते द्रष्टॄणां नेत्रादिप्रतिबन्धाभावादप्रतिबद्धसंनिकर्षादयममुको मम रथहस्त्यादिरूप इति तं मायाविनं यदा तत्त्वतो जानीयुः पार्श्वस्थास्तदनन्तरं तेषां पूर्ववत्तद्गोचरभ्रमाभावात्स तत्त्वबोधयोग्य इत्यर्थः। तत्त्वबोधनिवर्त्यभ्रान्त्यधिष्ठानस्याज्ञानविषयत्वनियमे फलितमाह । तेनास्मदिति । येन मायाविगोचरमज्ञानं द्रष्टॄणां सिद्धं तेनेत्यर्थः । तत्र विषये तद्विषयमिति यावत् । उभयसम्बन्ध्यज्ञानस्य मायात्वे कथं तद्विषयस्यैव मायावित्वं न तदाश्रयस्येत्याशङ्क्य तदाश्रयस्याज्ञत्वभ्रान्तत्वादिमतो मायावित्वस्य क्वाप्यदर्शनादज्ञत्वादिरहितस्य तद्विषयस्य लोकवेदयोर्मायावित्वेन व्यवहाराच्च स एव तथोच्यते इति निगमयति । सोऽज्ञात इति ॥ १०१ ॥

नन्वेवं सति रज्जुखण्डलकमप्यज्ञातमज्ञानिर्भिर्मायावीति गिरोच्यतां न तु तथा लोके प्रसिद्धिः क्व चि
तेनाज्ञातविलक्षणत्वमुचितं मायाविनो लौकिका
मायावीति पुमांसमेव निपुणं येनाहुरत्यादरात् ॥१०
एवमज्ञानात्मकमायाया आश्रयविषयभेदमङ्गीकृत्य तद्विषयस्यैव मायावित्वं यदेकदेशिनोक्तं तदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पति । नन्वेवमिति । अज्ञानविषयस्य मायावित्वे सती-त्यर्थः । खण्डलकं खण्डः । अपिशब्दः स्थाणुत्वेन भ्रमविषयपुरुषसमुच्चयार्थः । उच्यताम् उच्येत । प्रसिद्धिर्व्यवहारः । येनाज्ञातत्वमतिप्रसङ्गि तेन मायाविनो मायावित्वस्याज्ञातविलक्षणत्वम् अज्ञातत्वादन्यत्वमेव वक्तुमुचितमित्यर्थः । मायामयहस्त्यादिभावं विना तटस्थतया स्वरूपेण दृश्यमानेऽपि नरेऽज्ञातत्वरहिते मायावित्वं येन तेनापि नाज्ञातत्वं मायावित्वमित्याशयेनाह । लौकिका इति ॥ १०२ ॥

नैवं भ्रान्तिनिमित्तकारणमयं संगृह्य सर्वक्षणे
मन्त्रादिप्रचुरं प्रयत्नजनितं तज्जीवनो वर्त्तते ॥
तेनात्रैव तु लोकरूढिरभवन्मायाविता गोचरा
यद्वद्ब्राह्मणताप्रसिद्धिरभवन्मुक्त्वा परिव्राजकान् ॥१०३॥

एवमेकदेशिमते पूर्वपक्षिणा दूषिते स्वाशयं प्रकटयन्नाह सिद्धान्ती । नैवमिति । यथैकदेशिनोक्तं नैवं किं तु शुद्धचिन्मात्राश्रयविषयं मूलाज्ञानमेव लोकेऽपि माया सैव लौकिकमायोपादानं तदधीनाज्ञत्वादिरहितः परमेश्वर एव तयाऽज्ञान् भ्रामयन्सर्वत्र मुख्यो मायावीति भावः । तर्हि कथं लोके जीवविशेषे मायावित्वप्रसिद्धिरित्याशङ्क्य मायाक्षोभकमन्त्रादिप्रयोक्तुस्तत्कार्योत्पत्त्यादौ स्वातन्त्र्यात्तत्कृतव्यामोहाभावाच्च मुख्यमायाविसदृशत्वादज्ञातमुख्यस्य तस्मिन्मुख्यत्वभ्रो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

के मायावित्वव्यवहारो न तद्व्यामूढेष्वित्यभिप्रेत्याह। भ्रान्तिनिमित्तेति। अयं प्रतारकः पुमान्मन्त्रादिप्रचुरंम- न्त्रौषधादिप्रधानं प्रयत्नजनितं यत्नेन प्राप्तं प्रयत्नगुणि- तमिति पाठे तेन वर्धितं प्रतिघातरहितमिति यावत्, ए- तादृशं भ्रान्तिनिमित्तकारणं संगृह्य तज्जीवनस्तद्रूपजीव- नोपायवानयं सर्वक्षणे वर्त्तत इति संबन्धः। तेन मा- यया सहोक्तसम्बन्धविशेषेण, तुशब्दोऽवधारणार्थोऽनेन सम्बध्यते, अत्र मायाक्षोभके पुंसि मायावितागोच- रा लोकरूढिर्मायाविशब्दस्यायं मुख्योऽर्थ इतिलोक- प्रसिद्धिरभवदित्यर्थः। ननु मायाविशब्दस्य यौगिक- त्वाद्योगस्य मायासंबन्धस्य द्रष्टृष्वपि सत्त्वात्कथं त- त्क्षोभक एव तस्मयोगप्रत्ययावित्याशङ्क्य सामर्थ्यावि- शेषेऽपि पूर्वपूर्वप्रचुरप्रयोगप्रत्ययवशादेकत्रैव तौ भव- तो नान्यत्रेत्येतद् दृष्टान्तेनाह। यद्वदिति। यत्र परि- व्राजका अपि विवक्षितास्तत्र केवलब्राह्मणशब्दात्तद- प्राप्तिरिति परिव्राजकशब्दस्यापि प्रयोगदर्शनात्केवल- ब्राह्मणशब्दात्परिव्राजकप्रसिद्धिर्यथा नेत्यर्थः। मुख्य- अज्ञातमुख्यानां गौणे मुख्यवद्व्यवहारे दृष्टान्तमाह। य- द्वदिति। अमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्म- णःशिखा ज्ञानमयी यस्य उपवीतं च तन्मयं ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुरित्याद्युक्तान्ब्राह्मणा- दः परिव्राजकान्मुख्यब्राह्मणान्विहाय शिखादिमत्स्वे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व तत्प्रसिद्धिवदीश्वरं मुख्यं मायाविनं विहाय लोके प्राकृतेषु परभ्रामकेषु मायावित्वप्रसिद्धिरित्यर्थः ॥१०३॥

एवं तावल्लोकसिद्धा न माया
मिथ्याज्ञानाद्भिद्यतेऽतश्च तत्र ॥
शक्तिव्याप्तिप्रत्ययौ वर्णयित्वा
वेदाल्लिङ्गाच्चान्यमायात्वसिद्धिः ॥ १०४ ॥

एवं मायाऽविद्ययोरभेदं तत्र बाधकाभावं चोपपाद्य तदनुवादेन फलितमाह । एवं तावदिति । लोकसिद्धमायातत्कार्ये अविद्यातत्कार्याभ्यां न भिद्येते इत्यर्थः । चोऽवधारणे । तत्र लोके मायाशब्दस्याविद्यायां शक्तिप्रत्ययं यन्मायाकार्यं तदविद्याकार्यमिति व्याप्तिप्रत्ययं च निर्वर्त्य वैदिकमायाशब्दाद्वियदादिद्वैतप्रकृतेस्तत्कार्यद्वैतस्य च कार्यत्वलिङ्गान्मिथ्यात्वं साधयेदित्यर्थः ॥ १०४ ॥

जाग्रद्भूमौ या प्रसिद्धेह माया
सा निर्णीता तावदज्ञानमेव ॥
तस्यां शक्तिव्याप्तिविज्ञानसिद्धे-
र्विज्ञातव्या सैव वेदानुमानात् ॥ १०५ ॥

शुक्त्याद्यज्ञाने मायात्वप्रसिद्ध्यभावात्कथं तयोरभेद इत्याशङ्क्य तथापि नाज्ञानादन्यत्र तत्प्रसिद्धिः मूलाज्ञानस्यैवोक्तरीत्या तथा प्रसिद्धत्वादित्याशयेनाह । जाग्रद्भूमावियिति । ततश्च जाग्रत्प्रपञ्चस्य मायाकार्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वश्रुतेरुक्तविधया तन्मिथ्यात्वसिद्धिरिति फलितं नि-
गमयति । तस्यामिति । द्वन्द्वैकवद्भावाद्भेदानुमानादि-
त्येकवचनम् ॥ १०५ ॥

स्वप्नेऽप्येवं स्वप्नदृङ्मोहमात्रा-
दन्या का चिन्न प्रसिद्धाऽस्ति माया ॥
तत्रैवायं सूत्रकारस्य तस्मान्
मायाशब्दो वर्त्तते नापरत्र ॥ १०६ ॥

यदि मूलाज्ञानमेव माया तर्हि स्वप्नस्य झटिति बा-
ध्यमानस्य तत्कार्यत्वायोगात्कथं तत्र सूत्रकारस्य मा-
यामात्रत्वव्यपदेश इत्याशङ्क्य शुक्तिरजतादिवत्स्वप्नस्य
किंचिदवच्छिन्नचैतन्याज्ञानकार्यत्वस्य वक्तुमशक्यत्वा-
ज्जाग्रद्वत्पूर्णात्मन्येवाध्यासात्तद्गोचरमूलाज्ञानकार्यत्व-
मेव तस्यावश्यमुपेयम् । अत एव तस्य जाग्रत्कार्य-
येन न सविलासाविद्यानिवृत्तिरूपो बाधो भवति
किं तु मिथ्यात्वनिश्चयमात्ररूपः स च प्रसिद्धमायाका-
र्येऽपि समानः, तथा च स्वप्ने सूत्रकारस्य मायामात्र-
त्वनिर्देशो युक्त एवेत्याशयेनाह । स्वप्नेऽपीति । तदु-
पादानभूतापीत्यर्थः । शुद्धचैतन्याज्ञानं मोहमात्रशब्दा-
र्थः । अवच्छिन्नचैतन्यगोचराज्ञानमन्यपदार्थः । तस्मा-
त्तत्रैवेति संबन्धः ॥ १०६ ॥

शक्तिव्याप्तिप्रत्ययौ कारयिष्यन्
स्वप्ने स्थित्वा प्रत्यगज्ञानमात्रे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मायाञ्चाचा लोकवत्सूत्रकारो
वेदं लिङ्गं चोपनेतुं प्रवृत्तः ॥ १०७ ॥

मोहमात्रं तत्रेत्युक्तम् । तथापि स्वप्नद्रष्टर्व्यामूढत्वादन्यस्य च तत्र भ्रामकस्यादर्शनात् सूत्रकारः केनाशयेन तत्राविद्याशब्दं विहाय मायाशब्दं प्रायुङ्क्तेति वीक्षायां तदाशयमाह । शक्तिव्याप्तीति । सूत्रकारः प्रत्यगज्ञानमात्रे स्वप्ने स्थित्वा तमाश्रित्य शक्तिव्याप्तिप्रत्ययौ कारयिष्यन्मायाशब्दस्याज्ञाने शक्तिं मायामयत्वलिङ्गस्य दृश्यत्वकार्यत्वादेराविद्यकत्वेन व्याप्तिञ्च लोके ग्राहयन् लोकवत्तत्सिध्दस्वप्नादिवज्जाग्रत्प्रपञ्चस्याविद्यकत्वे मायामात्रमित्यादिदृश्यत्वादिलिङ्गं च मानतया घटयितुं मायामात्रत्वप्रतिज्ञया स्वप्नं निरूपितवानित्यर्थः ॥ १०७ ॥

अज्ञानमावरणमावरणं च माया
सर्वेश्वरेण हरिणा दृढमभ्यधायि ॥
चैतन्यवस्तुन इति प्रतिपद्यमाना-
स्तत्त्वं तदेकमिति निश्चयतः प्रतीमः ॥१०८॥

एवमाविद्यकत्वेन लोकसिद्धस्वप्ने सूत्रकारस्य मायामयत्वनिर्देशसामर्थ्यान्मायाऽविद्ययोरभेदमुपपाद्य मायायामज्ञानासाधारणधर्मप्रतिपादकभगवद्वचनसामर्थ्यादपि तयोरभेदे विमतिर्न कर्तव्येत्याह श्लोकत्रयेण । तत्र प्रथमं चिदात्मतत्त्वावारकत्वमविद्यालक्षणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मामायामपि भगवतोक्तं तद्विजानतां तयोरेकत्वनिश्च-
योऽवश्यंभावीत्याह । अज्ञानमात्ररणमिति । चैतन्य-
वस्तुन आवरणमिति संबन्धः । तदभिधानं प्राकृता-
भिधानवन्न मन्तव्यमित्याशयेनोक्तं सर्वेश्वरेणेति । दृ-
ढं कुतर्कैरन्यथा कर्त्तुमशक्यं यथा स्यात्तथेत्यर्थः । त-
दभिधायकं भगवद्वचनं तृतीयपद्ये वक्ष्यति । तन्माया-
ऽविद्यात्मकं तत्त्वं स्वरूपम् एकमभिन्नं स्वप्रकाशप्र-
त्यगभिन्नवस्तुनोऽनिर्वचनीयाज्ञानव्यतिरेकेणावरणानु-
भवात्तद्वावारकत्वेन भवतोक्ता माया अज्ञानमेवेति
निश्चिनुम इत्यर्थः ॥ १०८ ॥

ज्ञानं निवर्त्तकमपि द्वितयस्य तस्य
गीतागतः करुणया भगवानुवाच ॥
तेनापि तत्त्वमिदमेकमिति प्रतीति-
रानीयते कथितलक्षणतुल्यभावात् ॥ १०९ ॥

किं च तत्त्वज्ञानैकनिवर्त्यत्वस्यानिर्वचनीयाज्ञाना-
दन्यत्रासंभवात्तदप्यज्ञानस्यैव लक्षणं तच्च मायाया-
पि भगवतैवोक्तं ततोऽपि तयोरभेदः श्रद्धया ग्राह्य इ-
त्याह । ज्ञानं निवर्तकमिति । तस्य मायाऽज्ञानात्मक-
स्य । द्वितयस्य द्वित्वेन भ्रमाद्वगतस्य । गीतागतो भा-
रतसारभूतगीतायां प्रवक्तृत्वेन प्रवृत्तः । प्राकृतवद् स्वा-
त्माद्यर्थं प्रवृत्तिशङ्कां निवारयितुं करुणयेत्युक्तम् । ते-
नापीत्यस्य कथितेत्यनेन संबन्धः । तेन भगवद्वचने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदम् मायाऽविद्यात्मकम् । तत्त्वं स्वरूपम् । एकमभिन्नम् ॥ १०९ ॥

नाहं प्रकाश इति तावदनेन माया-
ऽज्ञानेन चावृतमितीतरदप्यभाणि ॥
मामेव ये तु परमं पुरुषं प्रपन्ना
ज्ञानेन तु प्रभृतिना च धिया निवृत्तिः ॥११०॥

कानि तानि भगवद्वचनानि यैर्मायाऽज्ञानयोस्तत्त्वावारकत्वं तत्त्वबोधनिवर्त्यत्वं चोक्तमिति वीक्षायां तानि निर्दिशति । नाहं प्रकाश इति । नाहं प्रकाशः सर्वस्य योगमायासमावृत इत्यनेन मायावारकत्वेनाभाणि, एवमज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इत्यनेनाज्ञानमप्यावारकमभाणि तेन चिदात्मतत्त्वावारकत्वमुभयोः समानमित्यर्थः । एवं मायाऽज्ञानयोस्तत्त्वज्ञाननिवर्त्यत्वप्रतिपादकं भगवद्वचनं दर्शयति । मामेवेति । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इत्यनेन मायाया ब्रह्मज्ञाननिवर्त्यत्वमुक्तम् । न चानेन वचनेन भक्त्या मायातरणमात्रं न तु तत्त्वबोधात्तन्निवृत्तिरिति वाच्यम् । ज्ञानी त्वात्मैव मे मतमित्यादिवाक्यशेषे ज्ञानस्यैव प्रशंसादर्शनेन प्रपद्यन्ते इत्यनेन तस्यैव विवक्षितत्वात्, मायाया मुख्यतरणासंभवेन तरति ब्रह्महत्यामित्यादिवत्तरन्तीत्यनेन तन्निवृत्तेरेव विवक्षितत्वाच्च । ज्ञानेन तु तदज्ञानं येषां ना-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शितमात्मन इत्यनेनाज्ञानस्यापि ज्ञाननिवर्त्यत्वमु-
क्तमिति तदप्युभयोस्तुल्यमित्यर्थः ॥ ११० ॥

ज्ञानस्य प्रागभावादपरमभिहितं प्रत्यगज्ञानमेत-
त्संसारव्याधिबीजं कथितनयवशादेव बुध्यस्व बुद्ध्या।
ज्ञानेनाज्ञाननाशङ्कथयति भगवानेष गीतागतः स-
न्न ज्ञानात् प्रागभावक्षय इति घटते तत्क्षये तत्प्रसूतेः॥

ननु सर्वत्राज्ञानपदस्थनञा ज्ञानाभाव एवोच्यते, स
च परिशेषात्तत्प्रागभाव एव, माया च भावरूपा क-
थं तदभिन्ना स्यादित्याशङ्क्याधर्मासुरादिपदानां धर्मा-
दिविरुद्धभावरूपदुरितादिप्रतिपादकत्ववदज्ञानपदस्या-
पि ज्ञानविरुद्धभावरूपमायाप्रतिपादकत्वोपपत्तेर्मैवमि-
त्याह । ज्ञानस्येति । किं च तत्त्वज्ञाननिवर्त्यतया
श्रुतसंसारस्यानिर्वचनीयं प्रत्यगज्ञानमेवोपादानमित्य-
नेकधा मानयुक्तिबलेनोपपादितं ततोऽपि न तद-
भावरूपमित्याह । प्रत्यगज्ञानमिति । किं च सर्वज्ञ-
श्रीहरिरेव ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन इ-
त्यनेनाज्ञाननाशे हेतुं ज्ञानं कथयति स्म, तदज्ञानस्य
ज्ञानप्रागभावत्वे नैव घटते, ज्ञानस्य स्वप्रागभावना-
शरूपतया तद्धेतुत्वायोगात्, येषां मते प्रागभावनाशः
प्रतियोगिनोऽन्य इत्यभ्युपगमस्तेषां सोऽनुपपन्नः ज्ञान-
प्रागभावस्य तदन्यनाशस्य प्रागभावात्मत्वानुपपत्तेरा-
गन्तुकनाशप्रागभावोऽन्योऽभ्युपेयः स्यात्ततश्च तस्याप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यो नाशस्तस्याप्यन्यः प्रागभाव इति मानहीनप्रागभावतन्नाशानवस्थादोषप्रसङ्गात्। किं च तन्मते ज्ञानसामग्र्यैव तदन्यनाशोत्पत्त्ययोगाज् ज्ञानमेव स्वप्रागभावनाशहेतुर्वक्तव्यः स न सम्भवति ज्ञानस्य स्वप्रागभावसमये जन्मासम्भवात्तन्नाशसमयोत्पन्नस्य तद्धेतुत्वायोगाच्च तन्नाशानन्तरमेव ज्ञानजन्म वाच्यं ततश्च पश्चाद्भाविज्ञानस्य पूर्वभाविनाशहेतुत्वं सुतरामनुपपन्नमिति ज्ञानप्रागभावरूपाज्ञानस्य कथमपि भगवदभिहितज्ञाननिवर्त्यत्वासम्भवात्तन्निवर्त्यमज्ञानं भावरूपमेवोपेयमित्यभिप्रेत्याह। ज्ञानेनेति ॥ १११ ॥

मायामात्रमतः समस्तमभवत् स्वप्ने प्रसिद्धं दृशः
कर्तृत्वादि तमोमयं वितथमेवाज्ञानमात्रं यतः ॥
तस्माज्जागरितेऽपि नैतदभवत् स्वाभाविकं यत पुनस्तादृक्षं तव सर्वदैव तु भवेत् स्वप्नेऽपि चैतन्यवत् ११२

उक्तविधया मायाया अज्ञानात्मत्वे सति स्वप्नावस्थागतकर्तृत्वादिप्रपञ्चस्य सूत्रोक्तं मायामात्रत्वमज्ञानमात्रत्वमेव ततस्तन्मिथ्यात्वसिद्धिरिति फलितमाह। मायामात्रमिति। अतो मायाया अज्ञानत्वाद्‌ दृशो दृगात्मनो यत्स्वप्ने समस्तं कर्तृत्वादि मायामात्रं प्रसिद्धमभवत्तत्तमोमयं वितथमेवेति संबन्धः। तद्द्रष्टृत्वादीनामवस्थोपाधिधर्माणां व्यभिचारेऽपि न तटस्थरूपस्य सर्वत्राव्यभिचाराद्व्यभिचारित्वम्, एवं सति तस्य कुतस्तत्र व्यभिचा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र इति भावः । स्वाभाविकत्वे बाधकमाह । यत्पुनरिति । तादृक्षं स्वाभाविकम्, कर्तृत्वादेः स्वाभाविकत्वे स्वप्नेऽप्यनुवृत्तिः स्यात्, चैतन्यवदित्यर्थः ॥ ११२ ॥

सत्यप्यलुप्तचिति यत्त्वयि नास्ति कर्तृ-
भोक्तृप्रमातृमुखमन्यदपीह किं चित् ॥
जाग्रद्दशाऽवगतमप्यखिलं न तत्ते
स्वाभाविकं भवितुमुत्सहते विरोधात् ॥ ११३ ॥

कादाचित्कमपि स्वाभाविकमस्तु पक्वामघटगतरक्तत्वश्यामत्ववदिति चेन्न, विकारिणि तस्य संभवेऽपि कूटस्थात्मन्यसंभवादित्याह । सत्यपीति । न ह्यलुप्तचिद्रूपस्यागन्तुकं कर्तृत्वादि सहजं स्यादित्यर्थः। हेतोरदृष्टत्वे फलितमाह । अप्यखिलमिति । तदखिलमपि ते स्वाभाविकं परमार्थसद्भवितुं नोत्सहत इति संबन्धः। अप्रयोजकत्वमाशङ्क्याह । विरोधादिति । सतोऽपि व्यभिचारित्वे तस्य कदा चिदसत्त्वं स्यान्न च तत्संभवति सत्त्वासत्त्वयोरेकत्वे विरोधात् । तदुक्तं श्रीकृष्णेन । नासतो विद्यते भावो नाभावो विद्यते सत इति । तस्माद्व्यभिचारि सर्वमनिर्वचनीयमेवेत्यर्थः ॥ ११३ ॥

स्वाभाविकी हुतभुजः खलु नोष्णता तं
जातु प्रमुञ्चति न तामपि जातवेदाः ॥
एवं भवन्तमपि जागरितोपलब्धं
स्वप्ने भवानपि च जागरितं न मुञ्चेत् ॥ ११४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं चात्यन्तभिन्नयोर्गवाश्वादिवद्धर्मधर्मिभावानुपपत्तेस्तत्सत्यत्वत्वादिना तयोरभेदोऽपि वास्तवो वक्तव्यः, ततश्चैकस्यानुवृत्तावपरस्य व्यावृत्तिर्दुर्घटेति सदृष्टान्तमाह। स्वाभाविकीति। जागरितोपलब्धं कर्तृत्वादि स्वप्ने न मुञ्चेदित्यनुषङ्गः। मुञ्चति च तस्मात्कर्तृत्वादेरात्मनश्च धर्मधर्मिभावो न वास्तव इति शेषः ॥ ११५ ॥

स्वप्ने न जागरितमस्ति मृषात्वहेतोः ॥
स्वप्नस्य सत्यमिति जागरितं वदन्ति ॥
स्वप्नस्य बाधनबलादमृतत्वमुक्तं
तस्माच्चिदेव तव रूपमतोऽन्यदार्त्तम् ॥११६॥

ननु स्वप्नेऽपि जागरितवदेव व्यवहारदर्शनाज्जाग्रत्कर्तृत्वादि मुञ्चतीति कथमुक्तमित्याशङ्क्य तदुपपादयति। स्वप्न इति। स्वप्नस्य मृषात्वहेतोस्तद्विलक्षणजाग्रत्कर्तृत्वादि न तत्रास्तीत्यर्थः। ननु सिद्धान्ते जागरितस्यापि मृषात्वात्कथं स्वप्नवैलक्षण्यं तस्येत्यत आह। सत्यमितीति। जागरितोपलब्धवस्तूनामनिर्वचनीयत्वे समानेऽप्यविद्यातिरिक्तदोषाजन्यतया स्वोचितार्थक्रियासामर्थ्यरूपव्यावहारिकसत्यत्वस्य नियतान्वयव्यतिरेकविधिनिषेधशास्त्रसिद्धस्यौपनिषदात्मतत्त्वसाक्षात्कारात्प्राग् बाधाभावात्तत्सत्यत्वं जाग्रत्कृतदुरितध्वंसाय प्रायश्चित्तविधायका धर्मशास्त्रकारा वदन्ति। स्वप्नस्य तु निद्रादिदोषजन्यस्य प्राकृतैरपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथ्यात्वेन निश्चितस्योक्तविपरीतत्वादनृतत्वमेव रज्जुसर्पादितुल्यं सूत्रकारादिभिरुक्तम्। ततश्च स्वप्नप्रपञ्चस्य जाग्रदुपलब्धादन्यत्वात्स्वप्ने न तदनुवृत्तिरित्यर्थः। दृग्दृश्ययोरनुवृत्तिव्यावृत्तिप्रतिपादनफलमाह। तस्मादिति। रूपं वास्तवस्वरूपम्। आर्तं नश्वरं तत्त्वबोधाध्यमिति यावत् ॥ ११५ ॥

स्वप्नोपलब्धमखिलं वितथं तथापि
तत्सूचयत्यवितथं परमार्थवस्तु ॥
जाग्रद्दशावगतमप्यनृतं तथापि
तद्वत्तदप्यवगतिक्षममेव भूम्नः ॥ ११६ ॥

जाग्रदवस्थागतस्यापि मृषात्वे तद्गतश्रुतेरपि तथात्वाद्बाष्पधूमादेरिव ततस्तत्त्वबोधो न स्यादित्याशङ्क्य सूचकश्च हि श्रुतेरितिसूत्राभिप्रेतं परिहारमाह। स्वप्नोपलब्धमिति। तत्स्वप्नोपलब्धं कुञ्जरारोहणादि अवितथं स्वप्नप्राप्तवद्बाधरहितम्। परमार्थवस्तु अर्थक्रियासमर्थेष्टवस्तु। तदपि जाग्रद्गतमनृतमपि श्रुत्याचार्यादि। मिथ्यात्वाविशेषेऽपि तत्त्वमादिवाक्यस्य सर्वथा विषयाबाधात्तत्त्वावेदनसामर्थ्यात्तत्त्वबोधहेतुत्वं घटते, न तथान्यस्य, तद्विषयस्य श्रुत्यादिबाध्यत्वादिति भावः ॥ ११६ ॥

स्वप्नभ्रमोऽपि सुकृतादिनिबन्धनत्वा-
त्तावत् परिस्फुरति यावददृष्टमस्ति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षीणे तु तत्र लयमेति जगन्निदाने
गाढे तमस्यनुभवावगते प्रतीचः ॥ ११७ ॥

ननु जाग्रत्स्वप्नयोर्मृषात्वे कथं तयोः पूर्वोक्तं वैषम्यं भवेत्, यद्यविद्यातिरिक्तनिद्रादिदोषजन्यत्वात्स्वप्नस्य प्रातिभासिकत्वं तद्दोषापगमे बाधश्चोपपद्यते जागरितस्य तदभावाद्व्यावहारिकत्वमिति वैषम्यमुच्यते, तर्हि यावन्निद्रा तावत्स्वप्न एव स्यादिति सुषुप्तिर्न स्यात्, स्वप्नवैचित्र्यं च न स्यात्तद्धेतोर्निद्राया एकरूपत्वादित्याशङ्क्य स्वप्नस्यापि सुखदुःखपर्यवसायितयाऽदृष्टसाध्यत्वस्यावश्यकत्वात्सत्यामपि निद्रायां तदुपरमे स्वप्नलयात्सुषुप्तिः स्यात्कर्मवैचित्र्याच्च स्वप्नवैचित्र्यमित्याशयेनाह। स्वप्नभ्रम इति। तत्रादृष्टे क्षीण इति सम्बन्धः। प्रतीचस्तमसीति सम्बन्धः। गाढे सर्वविशेषप्रकाशशून्ये जगन्निदाने तमसि स्वप्नस्य लयं वदतो ग्रन्थकारस्य मूलाविद्याकार्यत्वं तस्याभिमतम् ॥ ११७ ॥

निष्पादिता सकलकारकवर्गसाध्या
सर्वेण कारकगणेन सहैव तावत् ॥
तिष्ठेत् क्रिया परमसूक्ष्मतयेक्ष्यमाणा
सर्वेश्वरेण पुरुषः फलमेति यावत् ॥ ११८ ॥

नन्वाशुतरविनाशिन्याः पुण्यपापक्रियायाः कालान्तरभाविस्वप्नादिहेतुत्वमेवानुपपन्नं कुतस्तदुपरमात्स्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्नोपरम इत्याशङ्क्य कदा चित्सुकृतं कर्म कूटस्थमिव ति-
ष्ठतीतिवचनाद्विधिनिषेधशास्त्रसामर्थ्याच्च कारकाश्रि-
तक्रियायास्तत्कारकाणां च यावत् फलावसानं स्थायि
सूक्ष्मरूपं कल्प्यते, नाशशब्दस्याप्यदर्शनवाचिनः सू-
क्ष्मरूपसत्त्वानुकूलत्वान्न तावता तदसत्त्वापत्तिः, त-
था चादृष्टसूक्ष्मरूपेण स्थायिन्याः क्रियायाः शास्त्राव-
गतस्वप्नादिहेतुत्वादि युक्तमेवेत्याशयेनाह । निष्पा-
दितेति । तथापि जडस्य तस्य कथं कालविशेषे फला-
रम्भाय प्रवृत्तिश्चेतनस्याप्यज्ञस्य तत्प्रेरणाशक्तेरित्या-
शङ्क्य फलकालाभिज्ञेश्वरेक्षणप्रेरितं नियमेन तत्र व्या-
प्रियत इत्यभिप्रेत्याह । ईक्ष्यमाणा सर्वेश्वरेणेति । पु-
रुषः कर्मकर्ता, अर्थात्फलावसाने सूक्ष्मरूपमपि न-
श्यतीति द्रष्टव्यम् ॥ १३८ ॥

स्वप्नश्च जागरितमप्युभयं तवैव
मोहप्रसूतमपि कर्मफलं विभाति ॥
कर्मक्षये तदखिलं परमात्ममाया-
माश्रित्य सूक्ष्ममवतिष्ठत एव लीनम् ॥१३९॥

ननु विचित्रस्वप्नस्य विचित्रवासनावदज्ञानादेवो-
त्पत्तिसंभवात्तत्र कर्मणो नोपयोग इत्याशङ्क्य वास-
नोद्बोधद्वारा तत्र तदुपयोग इत्याशयेनाह । स्वप्नश्चे-
ति । दृष्टान्तार्थं जागरितग्रहणम् । यथा ज्ञानकर्म-
मपि जागरितं यत्कर्म कुरुते तदभिसंपद्यत इत्यादि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वचनात्कर्मकार्यमेवमाविद्यकोऽपि स्वप्न उक्तवचनादेव कर्माधीन उपेय इत्यर्थः । तर्हि स्वप्नारम्भकवासनानां स्वप्नानुभवावसाने नाशात्पुनः स्वप्नो न स्यादित्याशङ्क्य स्वप्नस्यापि निरन्वयनाशाभावात्तद्वासनाश्चान्याः पुनः स्वप्नहेतवः सुलभा इत्यभिप्रेत्याह । कर्मक्षय इति । तत्कर्मारब्धम् । अखिलं जाग्रत्स्वप्नदृश्यम् ॥११९॥

उत्थानलिङ्गकृतकल्पनयैतदेवं
विज्ञायते न तु तथावगतं तदानीम् ॥
अज्ञानलीनमखिलं जगदस्ति सूक्ष्मं
तत्रेति नानुभवनादवगम्यते हि ॥ १२० ॥

ननु किमिदं सूक्ष्मरूपं वासनेति चेत्सा किं पराभिमतभावनासंस्कारस्ततोऽन्या वा, नाद्यः, तस्यानुभवमात्रजन्यस्य स्मृतिमात्रहेतोस्त्वदिष्टदृश्यवस्तुजन्यत्वतद्धेतुत्वयोरसंभवान्नष्टस्य दृश्यस्य तद्रूपत्वासंभवाच्च, न द्वितीयः, तदनिरूपणान्मानाभावाच्च, सा किमनुभूयमानस्थूलवस्त्वभिन्ना भिन्ना वा, नाद्यः, नष्टस्य स्थित्यवस्थातो विशेषाभावप्रसङ्गाद्वस्तुनो नित्यत्वापत्तेः स्थूलसूक्ष्मरूपयोर्हेतुहेतुमद्भावानुपपत्तेश्चेति, द्वितीये स्थूलस्य नाशे सूक्ष्मरूपेणावस्थानोक्तिर्विरुध्येत वस्तुनो निरन्वयनाशोऽसतश्चोत्पत्तिरित्यपि प्रसज्येत, न चैतदिष्टम्, मानमपि तत्र न तावत्प्रत्यक्षमस्ति अननुभवात्, अन्यथा तत्र विप्रतिपत्त्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावप्रसङ्गात्, नाप्यन्यन्मानमस्ति तत्र लिङ्गाद्यनि-
रूपणादिति तत्राह । उत्थानेति । यद्यप्यविद्या-
कार्याणां वासनापरपर्यायं सूक्ष्मरूपं तेभ्यस्तत्कार-
णाच्च भेदाभेदाभ्यां सत्त्वासत्त्वाभ्यां च दुर्निरूपमनि-
र्वचनीयत्वादेव, तथापि कार्याणामुत्पत्तेः प्राक् सत्त्वे-
सत्त्वे वा तदयोगात्सैवानुपपद्यमानाऽनिरूपितविशेष-
सूक्ष्मरूपं तेषां कल्पयति । न चानुपलब्धिविरोधः ।
तस्य तदोपलम्भायोग्यत्वात् । नैवेह किं चनाग्र आसी-
न्मृत्युनैवेदमावृतमासीत्तद्धेदं तर्ह्यव्याकृतमासीत्तन्नाम-
रूपाभ्यामेव व्याक्रियत अव्यक्ताद्व्यक्तयः सर्वाः प्रभ-
वन्त्यहरागमे इत्यादिश्रुतिस्मृतिपर्यालोचनयाऽपि त-
दुपेयमिति भावः । तर्हि जागरितादाविव स्वप्नेऽपि
सर्वोपाधिसत्त्वे सता सोम्य तदा संपन्नो भवतीत्या-
दिनोच्यमाना सत्संपत्तिर्विरुध्येतेत्याशङ्क्य तदा त-
नुपलम्भेन तदधीनविक्षेपाभावमात्रात्तदुक्तिरुपपद्य-
त्याशयेन तदा तदनुपलम्भमुपपादयति । अज्ञानमे-
नमिति । तत्र सुषुप्तौ । इतिहेतौ । सतोऽपि सूक्ष्मस्या-
नुपलम्भो लोके प्रसिद्ध इति हिशब्दार्थः ॥ १२० ॥

अज्ञानमेव तु तदावगतं त्वदीयं
येनोत्थितो वदसि नावगतं मयाद्य ॥
सुप्तेन किं चिदपि गाढतमस्यभूवं
क्षिप्तः समस्तविषयावगमासमर्थः ॥ १२१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सुषुप्तावज्ञानमेव नास्ति तत्साधकाभावात् यत्र लीनं जगत्सूक्ष्मरूपेण तिष्ठेन्न तावत्तत्रेन्द्रियव्यापारोऽस्ति तेषां तदोपरमात्तदधीनलिङ्गादिधीरपि तत्र न सम्भवति, न च साक्षिणैव तत्सिद्धिः केवलस्य तत्साधकत्वेऽतिप्रसङ्गादित्याशङ्क्य केवलसाक्षिणा तदाऽज्ञानमेवानुभूयते-तदान्यस्य तद्योग्यस्याभावादित्यभिप्रेत्याह । अज्ञानमेवेति । अवगतमेवेति सम्बन्धः । तुशब्दोऽन्यावगतिनिरासार्थः । तदाऽज्ञानावगतिरपि नेत्याशङ्क्याह । येनेति । सुप्तेन मयेति सम्बन्धः । किंचिन्नावगतमित्यत्र हेतुमाह । गाढेति । असमर्थोऽभूवमिति सम्बन्धः । स्वापकालीनाऽज्ञानव्यवहारस्य व्यवह्रियमाणाज्ञानावगत्यधीनत्वात्तत्सिद्धिरित्यर्थः ॥१२१॥

अज्ञानमत्र यदि नानुभवात् प्रसिद्धं
नाज्ञासिषं त्विति कुतस्तव निश्चयोऽभूत् ॥
अज्ञानमस्त्यवगतं च सुषुप्तिकाले
तेनेति निश्चिनु तवानुभवप्रमाणात् ॥ १२२ ॥

ननु स्वापादुत्थितस्यास्मरणलिङ्गकस्वापकालीनज्ञानाभावगोचरानुमानादेवोक्तव्यवहारोपपत्तेः कथमनेन स्वापे त्वदभिमताज्ञानतदनुभवसिद्धिरिति चेन्न, सत्यपि ज्ञाने कालान्तरे तस्य तद्विषयस्य वा स्मरणानुदयस्य बहुशो दर्शनेन व्यभिचारिणोऽस्मरणस्य ज्ञानाभावगमकत्वायोगाल्लिङ्गान्तरस्याप्यनिरूपणात्तस्य न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं चिदवगतं स्वापे मयेत्येतत्तत्रत्यसमस्तवस्त्वज्ञान-स्मरणमेवेत्यवश्यमाश्रयणीयम्, न च स्वापे तदनुभ-वाभावे तत उत्थितस्य तत्स्मरणं घटते, नापि तत्स्म-रणं तन्मूलानुभवश्च ज्ञानाभावगोचराविति युक्तम्, परमते तदा धर्म्यादिज्ञानाभावे तदयोगात्तदङ्गीकारे च सुषुप्तिभङ्गप्रसङ्गात्, न किं चिदवगतमित्यनुपपत्ते-श्च, सिद्धान्त्यभिमतसाक्षिणापि विशिष्य प्रतियोग्यु-पस्थितिं विना ज्ञानाभावग्रहणासम्भवात्तत्स्मरणस्या-प्यनुपपत्तेः, तस्मात्समस्तसत्तागोचरभावरूपाज्ञानमेव तदा साक्षिणानुभूतं पश्चाच्च स्मर्यत इति वक्तव्यमित्य-भिप्रेत्य विपक्षे बाधकमाह । अज्ञानमत्रेति । तत्रो-त्थितस्येति शेषः । सर्वकार्यलयस्थानं तदनुभवं च साधितमुपसंहरति । अज्ञानमस्तीति । तेन नाज्ञासिष-मितिनिश्चयेन । ननु स्वापे न किञ्चित्प्रमाणं प्रवर्तते कथमज्ञानानुभवं निश्चिनुयां तत्राह । तवानुभवेति । साक्षिणोऽप्यहंकारतद्धर्मादिसाधकत्वेन क्लृप्तत्वात्तत्सि-द्धं नापह्नवमर्हतीत्याशयेन प्रमाणादित्युक्तम् ॥ १२१ ॥

स्पष्टानुभूतिविषयो न तमस्तदानी-
मासीदहंकरणहीनतयाऽधुना तु ॥
निष्पाद्य कार्यमिदमंशमहं न जाने
मूढोऽस्मि चेत्यवगतेर्विषयत्वमागात् ॥ १२२ ॥

ननूक्तपरामर्शसामर्थ्यात्सुषुप्तावज्ञानतदनुभवौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तर्हि नाहं तदा किंचिदवेदिषमित्यपि परामर्शद-र्शनात्तदाहंकारतदनुभवावपि कल्प्येयाताम्, न चैतदि-ष्टमुपपन्नं वा, तदा सकलकार्यलयाभावाद्विशेषविज्ञा-नभावाच्च सुषुप्तिभङ्गप्रसङ्गादित्याशङ्क्य तदा सत्संपत्ति-प्रतिपादकवचनविरोधादहंकारस्तदनुभवश्च नैवास्ति सति संपद्य न विदुरित्यादिवचनादज्ञानमात्रं तत्परा-मर्शबलात्तन्मात्रानुभवश्चोपेयते, ततो नोक्तदोष इत्याश-येनाह । स्पष्टानुभूतीति । अहं न जानामीति सविक-ल्पकानुभवविषयो नेत्यर्थः । तर्हि जागरितादौ कथं तादृशसविकल्पकानुभवगोचरत्वं तस्येत्याशङ्क्य तदाधि-ष्ठानचैतन्याभेदेनैवाविद्यया तस्योत्पादितत्वात्तत्संसर्ग-गोचरतया तदनुभवस्य सविकल्पकत्वापत्तिरित्याह । अधुना त्विति । तमोविषयत्वमागादित्यनुषङ्गः । एवं चोत्थितस्य नाहमवेदिषमिति परामर्शेऽप्यहंकारस्तदा-नींतन एव दैवगत्या तदाश्रयकोटिनिक्षिप्ततयाऽनुभूयते साक्षिणा न तु परामर्शविषयतया स्मर्यते ततश्चाहं नावेदिषमित्यस्याहंकारांशे परामर्शत्वाभावात्तद्बला-त्स्वापेऽहंकारतदनुभवकल्पना नेति भावः ॥ १२३ ॥

एतावता तव तमोऽपि सुषुप्तिकाले
नास्तीति बुद्धिरुदितं गुरुभिश्च कैश्चित् ॥
स्थाने क्वचित् क्वचिदतो द्वयमुच्यमानं
ग्राह्यं विविच्य भवता विषयं विभज्य ॥१२४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सुषुप्तेऽज्ञानमनुभूतं चेत्किंचिदपि नान्वभूव- मिति सर्वानुभवनिषेधोऽनुपपन्नः स्यात्ततोऽवगच्छा- मि तदा नाज्ञानं तदनुभवो वास्तीति, किं च तत्र अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपमित्यादिश्रु- तिसमाश्रयणेन त्वंपदार्थशोधनाय प्रवृत्ता भाष्यका- रादयः सुप्तावज्ञानमपि नास्तीति वदन्ति स्म ततोऽपि तदा नाऽस्त्यज्ञानमित्याशङ्क्याह। एतावतेति। तदा त- त्स्पष्टं सविकल्पकेन नानुभूयत इत्येतावतैव न किं- चिदन्वभूवमितिव्यपदेशोपपत्तेस्तव तदाऽज्ञानादि ना- स्तीति बुद्धिरप्येतावता विपर्यस्ता जायते, भाष्यकारा- दिभिश्चाचार्यैः क्वचित् क्वचित्त्वंपदार्थशुद्धिप्रकरणे त- दा स्पष्टमनुभवाभावादेवाज्ञानं नास्तीत्युदितं न तु तस्यैवाभावात्, तैरेवैतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः सति संपद्य न विदुरित्यादिश्रुत्यर्थतया तदा- ऽज्ञानस्य निरूपितत्वादित्यर्थः। कथं तर्हि विरुद्धार्था- नां तद्वचनानामुपादेयता तत्राह। अतो द्वयमिति। यतो विरोधधीरापाततोऽतो विचार्य वचनद्वयस्याविरुद्धं विषयं विभागेन कल्पयित्वोभयमप्युपादेयमित्यर्थः॥

> नाज्ञानमस्ति च सुषुप्तिगतस्य पुंसो
> गाढे तमस्ययमभूत् पुरुषः सुषुप्तः॥
> इत्युच्यमानमविरुद्धतया विविच्य
> ग्राह्यं त्वयाऽनुभवयुक्तिनिरूपणेन॥ १२५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं तदाचार्यैर्विरुद्धवदुक्तं द्वयमितिवीक्षायामाह । नाऽज्ञानमिति । स्पष्टमननुभवादभावोक्तिर्न किं चिद्वेदिषमितिपरामर्शकल्प्यानुभवात्तदाऽज्ञानाभावे पुनरुत्थानाद्यनुपपत्तिरिति युक्तेश्च तद्भावोक्तिराचार्याणामिति तदुभयोपादेयतां निगमयति । अविरुद्धतयेति ॥ १२५ ॥

एवं तमोऽपि न बभूव सुषुप्तिकाले
भाषान्तरेण पुरुषः पर एव जीवः ॥
निर्बीजतामुपगतः स निरन्वयेन
न स्पष्टमत्र तमसोऽनुभवोऽस्ति यस्मात् ॥१२६॥

एवमन्यैरप्याचार्यैरज्ञानपदं विहाय पदान्तरवद्वाक्यैर्मुखतोऽर्थाच्च तदाऽज्ञानाभाव उच्यते तदपि स्पष्टं तदनुभवाभावादेव न तदभावादित्याह । एवं तम इति । भाषान्तरेण शब्दान्तरेण । तदा जीवः परः पुरुष एवेत्यनेनार्थादज्ञानाभावः सूचितः । स जीवस्तदा निरन्वयेन दुःखरागादिसंसारसंबन्धाभावेन,निर्बीजतां संसारकारणरहिततामुपगत इति वाक्यान्तरम् । अत्र स्वापे तमसः स्पष्टमनुभवो नास्ति यस्मात्तस्मादेतानि वाक्यान्युक्तानीत्यर्थः ॥ १२६ ॥

अज्ञानतज्जमतिहीनतया सुषुप्ते
शुद्धः परोऽसि भगवानसि नित्यमुक्तः ॥
कामश्च कर्म सकलं च तदा कुतस्त्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्सागरेऽनवकरे त्वयि तायमाने ॥ १२७ ॥

मयाप्येतादृशवाक्यान्युच्यन्ते न चैतावता मम न-दाऽज्ञानाभावोऽभिप्रेतः, किं त्वहं न जानामीत्येवं स-ष्टमनुभूयमानं विद्यमानमपि तदविद्यमानप्रायं वुद्ध्या-दिकार्यराहित्यादिष्टमेवेति ततस्त्वं शुद्ध इत्यादि मदी-यमपि वचनं ग्राह्यमित्याशयेनाह । अज्ञानतज्जमति-हीनतयेति । अहंकारघटिताज्ञानगोचरसविकल्पक्ष-तिहीनतयेत्यर्थः । सकलं कामादिकार्यम् । अनवकरे अवच्छेदकरहिते । तायमाने विस्तीर्णे त्रिविधपरिच्छे-दरहित इति यावत् । चित्सागरं इत्यादिसप्तमीचतु-ष्टयं समानाधिकरणम् ॥ १२७ ॥

आसीदहंकरणमात्मतमोनिमित्तं
तज्जाग्रतश्च भवतः स्वपतश्च दुःखम् ॥
आनीय दर्शयति तन्न सुषुप्तिकाले
बीजक्षयादिति भवानतिनिर्मलोऽभूत् ॥१२८॥

ननु सुषुप्तावुक्तरीत्यात्मनो भवतु शुद्धतादि नित्य-मुक्तता तु न घटते जाग्रत्स्वप्नयोर्विविधदुःखान्वनु-भवतस्तदयोगादित्याशङ्क्य तदा दुःखादिवन्धप्रतिभाने-ऽपि तस्यात्मन्यौपाधिकतया स्फटिके लौहित्यवन्मिथ्या-त्वात्तत्प्रसञ्जकस्याहंकारादेराविद्यकत्वेन तथात्वाज्जा-ग्रदादावपि वस्तुतो मुक्तः शुद्धश्च भवत्येवात्मा सुषुप्तौ तु तत्प्रतिभासस्याभावान्नित्यमुक्तत्वादि तस्य नानुप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पन्नमित्यभिप्रेत्याह । आसीदिति । आनीय मि-
थ्यैव प्राप्य । तद्दुःखम् । सुषुप्तिकालेनेत्यत्र हेतुर्बीज-
क्षयादिति, उपाधितयात्मनि दुःखप्रसञ्जकोऽहंका-
रस्तद्बीजं तत्क्षयादित्यर्थः । इतिर्हेतौ । अतिनिर्मलः
नित्यशुद्धादिरूपः ॥ १२८ ॥

सद्रूपमावरणतानुभवादभीष्ट-
मज्ञानमात्मचिति नैशतमोवदेतत् ॥
ज्ञानं दिवाकरवदस्य जडप्रकाश-
रूपं निवर्तकमिति प्रवदन्ति धीराः ॥१२९॥

ननु किं तदात्मतमो यदहंकारादिकारणं स्यात्, अज्ञानमेवेति चेन्न, स्वप्रकाशचिद्रूपात्मनि ज्ञानाभाव-रूपस्य तस्यासंभवात्, तस्याहंकारादिकारणत्वायोगाच्च, अनादिभावरूपं चाज्ञानं मानहीनम्, तस्य निव-र्तकानिरूपणेनानिर्मोक्षप्रसङ्गश्चेति तत्राह । सद्रूपमि-ति। भावरूपमित्यर्थः। एतदज्ञानमात्मचिति आवरण-तानुभवात्सद्रूपमिति सम्बन्धः । स्वप्रकाशात्मतत्त्वेऽद्व-यातिशयानन्दब्रह्मणि तन्नास्ति न प्रकाशत इति विपरी-तव्यवहारदर्शनेन तद्योग्यतारूपावरणप्रयोजकतयाऽहं ब्रह्म न जानामीत्यनुभूयमानाज्ञानमेव क्लृप्तम्, भगव-ता चोक्तम्, अज्ञानेनावृतं ज्ञानमिति, तच्च भावरूप-म् आवरकत्वात् प्रसिद्धतमोवदित्यनुमानाद्भावरूपत्व-सिद्धेस्तस्याहंकाराद्युपादानत्वे न काचिदनुपपत्तिः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापि तन्निवर्त्तकानिरूपणम्, स्वरूपात्मकचित्प्रका-
स्योक्तावरणप्रतिबद्धस्यानिवर्तकत्वेऽपि महावाक्यजनि-
तब्रह्मभावसाक्षात्कारादावरणनाशे प्रतिबन्धशून्यस्व-
स्य दिवाकरवज्जडप्रकाशरूपवृत्तिसाक्षात्कारस्यैव वा
तन्निवर्तकत्वोपपत्तेरित्यादि प्रागेवोपपादितं ततो न
किं चिदवद्यमिति भावः ॥ १२९ ॥

प्रावादुकैरपि तथैव तदेषितव्यं
संवेदनेऽस्फुरणमभ्युपयद्भिरग्रे ॥
संवेदने न खलु संविदभावरूप-
मज्ञानमभ्युपगतं न च बुद्ध्यभावः ॥ १३० ॥

किं च स्वप्रकाशसंविद्वादिभिस्तदुत्पत्त्याद्यङ्गीकुर्वद्भि-
स्तदुत्पत्तेः प्राक् तदस्फुरणरूपं तदज्ञानमङ्गीक्रियते त-
द्भावरूपमेव तैरवश्यमभ्युपेयं संविद्विषयस्य स्वप्रका-
स्य जडरूपस्य वा ज्ञानस्य तन्मतेऽभावेन तदभावरूपा-
ज्ञानस्यासंभवात्, वस्तुतस्तेषां संविदुत्पत्त्यादिभ्रान्ति-
मूलतयापि तद्गोचरभावरूपाज्ञानसिद्धिः, उक्तविध-
तन्मते तत्र ज्ञानाभावरूपाज्ञानासंभवादित्याशयेनाह
प्रावादुकैरिति। अग्रे उत्पत्तेः प्राक् संवेदने अस्फुरण-
मुपयद्भिः प्रावादुकैरपि तदज्ञानं तथैव भावरूपमेवैषि-
तव्यमिति सम्बन्धः। एवकारोक्ताभावरूपाज्ञानाभावं हे-
तुमाह। संवेदने न खल्विति। बुद्ध्यभावः संवेदने अ-
बुद्ध्यभावश्च नाभ्युपगत इति योजनीयम् ॥ १३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादशेषजगदेकनिदानभूत-
मज्ञानमात्मविषयं न विरुद्धमूचुः ॥
वेदावसानवचनानि मुनीश्वराश्च
स्थानेषु भूरिषु ततोऽवकरो न कश्चित् ॥१३१॥

एवमनादिभावरूपाज्ञानमुक्तमेव विस्मरणशीलं प्रत्युपपाद्यास्य जगदुपादानत्वं फलितं वदन्सुषुप्तौ तद्भावाभाववादिश्रुत्याचार्यवचसामविरोधं प्रागुक्तमुपसंहरन्नात्मनो नित्यशुद्धत्वादि फलितमाह । तस्मादिति । आत्मविषयमधिकृत्य विरुद्धं नोचुरित्यर्थः । वेदावसानवचनानि सता सोम्य तदा संपन्नो भवति सति संपद्य न विदुरित्येवमादीनि । तद्व्याख्यातारो मुनीश्वराः । भूरिषु बहुषु । स्थानेषु प्रदेशेषु । अवकरोऽशुद्धत्वादिबन्धः ॥ १३१ ॥

साक्षित्वमात्मतमसा मतिकञ्चुकेन
मातृत्वमेतदपि नेह सुषुप्तिकाले ॥
यद्धेतुकं भवति यच्च हि तद्विना तन्
सम्भाव्यते न च तदत्र सुषुप्तिकाले ॥ १३२ ॥

एवमज्ञानमस्त्यवगतं च सुषुप्तिकाल इत्यत्रोक्तमज्ञानसत्त्वमुपपाद्य तथापि तदवगतिर्न सम्भवति, तदा अवगन्तुः प्रमातुरभावात्, भावे वा तदुपाधेरहङ्कारस्यापि तदा सत्त्वापत्तेः सुषुप्त्यभावापातात्, न च साक्षिणैतदवगतमिति वाच्यम्, लोके प्रमातुरेव सा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षित्वावगमात्, विनाहङ्कारं कूटस्थासङ्गचैतन्यस्य सा- क्ष्यसंबन्धायोगेन साक्षित्वासम्भवाच्चेत्याशङ्क्य सुषुप्ता- वज्ञानमात्रस्य साक्ष्यत्वात्तत्संबन्धस्यानादेरपि चैतन्- स्वभावानुरोधेनाज्ञानमात्रप्रयुक्तत्वोपपत्तेरहङ्कारस्य त- त्रानुपयोगादसंभवाच्चाज्ञानोपहित एव चिदात्मा तदा- ज्ञानसाक्षी तद्द्वाराऽज्ञातवस्तुसाक्षी च, स एव चान्- दाहङ्कारेणाप्युपहितोऽहङ्कारतद्धर्मसाक्षी अन्यथातिप्र- सङ्गात् । तदुभयोपहित एव मानजन्यवृत्तिमपेक्ष्य ज्ञातवस्तुसाक्षी भवतीति प्रमातुः साक्ष्यस्याहङ्कारवि- शिष्टस्य न क्वापि साक्षित्वमित्याशयेनाह । साक्षित्व- मात्मतमसेति । तर्हि साक्षिणैव सर्वप्रतीतिसंभवात् किं प्रमात्रेत्याशङ्क्य लोकसिद्धप्रमात्रादिव्यवहारस्य निर्विषयत्वायोगात्तदभावे कर्तृत्वाद्ययोगाच्च स एव बुद्धितादात्म्यापन्नः प्रमाश्रयतया प्रमाता जागर्ति भवति । सुषुप्ते तु बुद्धेरेवाभावान्न तद्भावोऽपीत्याह । मतिकञ्चुकेनेति । बुद्ध्यभावेऽप्यज्ञानशबलस्य तस्य प्रमातृत्वं किं न स्यादित्याशङ्क्य प्रमाया बुद्धिपरिणा- मविशेषसंपिण्डितचैतन्यरूपत्वात्तत्कर्तृत्वरूपप्रमातृत्वं बुद्धिसंपिण्डितस्यैव घटते नाज्ञानमात्रशबलस्येत्यभि- प्रेत्याह । यद्धेतुकमिति ॥ १३२ ॥

अज्ञानमस्ति सकलं च सुषुप्तिकाले
तत्र प्रलीनमिति यद्यपि नास्ति पुंसः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्पष्टानुभूतिरपवर्गविलक्षणत्वा-
देष्टव्यमेव तु सुषुप्तिभुवस्तथात्वम् ॥ १३३ ॥

ननु सुषुप्तौ बुद्ध्यभाव एव कुतो येन तदधीनप्रमातृत्वं न भवेत्, न हि तदा बुद्धिर्नष्टेत्यनुभवोऽस्ति, न चाननुभवादेव तदभावः कल्प्यत इति वाच्यम्, तथा सत्यज्ञानस्यापि स्पष्टमननुभवाद् निर्विकल्पकमात्रस्य च तदसत्त्वशङ्काऽनिवर्तकत्वादज्ञानस्याप्यभावः स्यात् , तत्र लीनं कार्यजातं सूक्ष्मरूपेण तिष्ठतीत्येतदप्यननुभवादेव न सिद्ध्येदिति चेत्तत्राह । अज्ञानमस्तीति । बुद्धेः सविकल्पकतया यावत्सत्त्वं साक्षिभास्यत्वात्सुषुप्ते तदप्रतिभासात्तत्सत्त्वे सुषुप्तिभङ्गप्रसङ्गाच्च तदा बुद्धेरभाव आवश्यकः, अज्ञानादेस्तु स्पष्टमनुभवाभावेऽपि तदा तदस्तितामात्रमुपेयम् , इतरथा कारणमात्राभावान्मुक्तिरेव तदा स्यादिति पुनरुत्थानं न स्यात्, तस्मात्तदवस्थाया मुक्तिविलक्षणत्वाज्जाग्रदादिविलक्षणत्वाच्च समस्तकार्यं तदा लीनमज्ञाने सूक्ष्मरूपेणावतिष्ठत इत्युपेयम्, अन्यथाऽसत उत्पत्त्यनुपपत्तेः, यदा सुप्तः स्वप्नं न कं चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति सुषुप्तिकाले सकले विलीने तमोऽभिभूत इत्यादिश्रुतितोऽप्युक्तमेष्टव्यमिति भावः । अक्षरार्थः स्पष्टः ॥ १३३ ॥

एवं सतीह तमसो न विविच्य वस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साक्षान्निवेदयितुमस्ति निदर्शनं चेत् ॥
नैतत् परागवगतेर्विषयो विभाति
गाढं तमो न तु तथावगतिः प्रतीचि ॥१३४॥

ननु सुषुप्तेऽज्ञानं स्वरूपेणास्ति चेत्तर्हि जाग्रत्स्वप्नयोस्तदस्तित्वे विवादाभावाच्चैतन्यवदवस्थात्रयेऽप्यव्यभिचारात्तदात्मस्वभावः स्यात्, ततश्च स्वभावात्तमसो विवेचने निदर्शनाभावात्ततो विवेकासिद्धावज्ञ एवात्मा स्यादिति शङ्कते। एवं सतीति । इहावस्थात्रये । मुक्त्यवस्थायाः परोक्षत्वाद्विप्रतिपन्नत्वाच्च न तन्निदर्शनमित्यभिप्रेत्योक्तम् । साक्षादिति । नास्तीति वेदितीति शब्दो द्रष्टव्यः । यदाऽज्ञानं स्पष्टमनुभूयते तदा ममात्राज्ञानमस्तीति पराग्भावेन दृश्यते आत्मा त्वहमिति दृश्यविलक्षणतयाऽपरोक्षदृग्रूपप्रत्यक्त्वेन स्वयं प्रथते ततश्चाज्ञानस्य घटादिवत्पराक्त्वेन तद्विरुद्धप्रत्यक्स्वभावता नेतिविवेचनादात्मनि शुद्ध्युपपत्तिमाह सिद्धान्ती । नैतदिति ॥ १३४ ॥

प्रत्यक्पराग्विषयवस्तुविवेचनाय
क्लेशो न सम्भवति कस्य चिदत्र जन्तोः ॥
दृश्यं तमो घटपटादिवदेप तस्य
द्रष्टा सुषुप्तिभुवि चिद्घनविग्रहोऽभूत् ॥१३५॥

तथापि सुषुप्तौ तयोः स्पष्टं प्रत्यक्पराग्भावेनानुभवात्तदा तद्विवेचनं दुःशकमित्याशङ्क्योक्तरीत्या अ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गरितादौ विवेचितानन्यत्वात्तयोस्तत्रापि विवेचनं सुकरमित्याशयेनाह। प्रत्यक्परागिति। अत्र सुषुप्तौ तस्य तमसश्चिद्घनविग्रह एष आत्मा द्रष्टा साक्षी अभूदिति संबन्धः॥ १३५॥

तिस्रोऽपि चिद्घनतनोस्तव दृश्यभूता
दूरे चकासति मतेर्बहिरेव तावत्॥
आविस्तिरोभवनधर्मतया ह्यवस्थाः
कः सङ्करो विमलचिद्वपुषस्तवाभिः॥ १३६॥

तथाप्यवस्थात्रयस्य चेतनधर्मत्वानुभवात्तत्कलुषितस्यात्मनः कुतः शुद्धत्वमिति चेत्तत्राह। तिस्रोऽपीति। तिस्रोऽप्यवस्थाः चिदेकरसस्य तव तावद् दृश्यभूतास्ततो घटादिवद्बहिरेव त्वद्धर्मत्वरहिताः इति यावत्, किंच जाग्रदवस्थाया इन्द्रियादिजन्यबुद्धिवृत्तिरूपत्वात्स्वप्नस्य च तद्गतवासनाविलासत्वात्सुषुप्तेस्तदीयलयात्मकसूक्ष्मरूपत्वादनात्मबुद्धिसम्बन्धिन्यस्ताः स्वरूपनिरूपणदशायां दृगात्मनो दूरे तत्संसर्गानर्हदेशे भासन्ते, ततः कथं तासां तद्धर्मत्वमित्याह। दूरे चकासतीति। तासामागमापायितया रज्जुसर्पवन्मिथ्यात्वादपि तदधीनाऽशुद्धिरात्मनो नेत्याशयेनाह। आविस्तिरोभवनेति। संकरो वास्तवः संश्लेषः॥ १३६॥

त्वय्येव कल्पितमहंकरणं बिभर्ति
तिस्रोऽपि ताः सहितमेव तु तच्च ताभिः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वच्चित्प्रकाशविषयत्वमुपेत्य भाति
स्वाज्ञानवत्तव न रूपमतश्चतुष्कम् ॥ १३७ ॥

नन्ववस्थावदहङ्कारसम्बन्धादग्निसम्बद्धजलौष्ण्यवच्चिदात्मनोऽप्यवस्थावत्त्वं दुष्परिहरमिति तच्छुद्धिर्दुर्घटेत्याशङ्क्याहङ्कारतत्सबन्धयोरप्यद्वितीयासङ्गचिदात्मन्यविद्यया कल्पितत्वात्तदभावे च तौ वस्तुतो न स्त कुतस्तदधीनाऽशुद्धिरित्यभिप्रेत्याह । त्वय्येवेति । ता अवस्थाः । ननु योऽवस्थावान्स एवात्मा कुतस्तस्य कल्पितत्वमिति प्राक्तशङ्कां निराकुर्वन् दृश्याहङ्कारादिसाक्षिणो दृगात्मनस्ततो विवेकमनेकधोक्तं स्मारयति । सहितमिति । मिलितमित्यर्थः । तदहङ्करणम् । चशब्द उक्तशङ्कानिरासार्थः । फलितमाह । तवेति । अहङ्कारोऽवस्थाश्चेत्येतच्चतुष्कं वस्तुतस्तव स्वरूपं त्वद्धर्मश्च नेत्यर्थः ॥ १३७ ॥

नान्वेति तत्तव चिता व्यतिरेकिता च
दूरे न सम्भवति तस्य चतुष्टयस्य ॥
नाभावरूपभजनाय समर्थमेत-
देवं चिदेव तु चतुष्टयमेतदासीत् ॥ १३८ ॥

उक्तचतुष्टयस्यात्मनः पृथक्त्वे तस्याद्वयत्वं न स्यात्. स्याच्च सांख्यादिमतानुमतिरित्याशङ्क्याह । नान्वेतीति । तच्चतुष्टयम् । तव चिता त्वत्स्वरूपचैतन्येन तस्य किं सत्त्वमसत्त्वं वा, आद्येऽपि किं चिदभेदे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्त्वमुत भेदेन भेदाभेदेन वा । नाद्यः, जड़ाजड़योर्व्य-भिचार्यव्यभिचारिणोश्च वस्तुतोऽभेदासम्भवात् । न-द्वितीयः, भेदस्यैव द्वितीयाध्यायोक्तविधया दुर्निरूप-त्वेन सत्त्वायोगात्, किं च तस्यापि भेदेन सत्त्वेऽनव-स्थापातात्, तदभेदस्य चोक्तविधयाऽसंभवात् । न तृ-तीयः, पक्षद्वयोक्तदोषापत्तेः, विरोधाच्चैकत्र भेदाभेदा-संभवात् । नाप्यसत्त्वं नरशृङ्गवदपरोक्षत्वानुपपत्तेः, सदनुभवविरोधाच्च । तस्मादन्वयव्यतिरेकाभावपरिहा-रेणाविद्यातत्कार्यात्मकद्वैतस्य चिदेकता न सन्मात्रत्वे पर्यवसानात्तदेव तत्त्वं तद्विपरीतं त्वनिर्वचनीयं त-त्त्वबोधेन बाधितमुक्तस्वरूपेणैवावशिष्यते तत उक्तदो-षद्वयप्रसङ्गो नेति भावः ॥ १३८ ॥

जाग्रत्स्वप्नसुषुप्तिमूर्छिततनूनिष्क्रान्त्यवस्थासु य-
स्चैतन्यं व्यभिचारिवस्त्वनुगतं तत्सत्यमेवात्मनः ॥
यत्किंचिद्व्यभिचारि तन्ननु मृषा स्रक्सर्पदण्डादिव-
न्नानुस्यूतचिदात्मवस्तु वदितुं शक्यं मृषा रज्जुवत्॥१३९

स्यादेतदेवं यदि जाग्रदादीनां मिथ्यात्वं चैतन्यस्यै-व सत्यतया तदधिष्ठानत्वं च स्यात्, न त्वेतदस्ति साधकाभावाद्व्यभिचारित्वस्य स्वापमूर्छाद्यवस्थासु चै-तन्येऽपि सत्त्वादित्याशङ्क्य न हि द्रष्टुर्दृष्टेर्विपरिलो-पो विद्यते इत्यादिश्रुतेः प्रत्यभिज्ञाप्रामाण्याच्च तदापि तदागमापायस्य साक्षि चैतन्यमनुगतमस्त्येव इतरथा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्तदवस्थापरामर्शानुपपत्तिः, ततश्च तस्य सत्यत्वाद्व्य-
भिचार्यवस्थाधिष्ठानत्वं युक्तमित्याशयेनाह । जाग्र-
त्स्वप्नेति । तनूनिष्क्रान्तिः स्थूलशरीरान्निर्गमनं मरण-
मिति यावत्, एतच्च पुनः शरीरप्राप्त्यवस्थोपलक्षण-
म् । तथाप्यवस्थानां मृषात्वे व्यभिचारित्वमप्रयोज-
कमित्याशङ्क्य सतोऽसतो वागमापायित्वासम्भवाच्च
निर्वचनीयत्वमावश्यकमिति व्यभिचारित्वस्य मिथ्या-
त्वेन व्याप्तिसिद्धेर्नाप्रयोजकत्वमित्यभिप्रेत्याह । यति-
चिदिति । निन्विति निश्चये । चैतन्यं मिथ्या मिथ्या-
सम्बन्धित्वान्मिथ्यावस्तुवदित्याशङ्क्य तत्र व्यभिचारि-
त्वमुपाधिः । न च साधनव्यापकता पक्षे तदभावादि-
ति सदृष्टान्तमाह । नानुस्यूतेति ॥ १३९ ॥

जाग्रत्स्वप्नसुषुप्तिधर्मकमिदं चित्तं त्वदज्ञानतः
प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते ॥
स्वाज्ञानं च तवानुभूतिबलतः सिद्धं मृषा. तत्त्वतो
नासीदस्ति भविष्यतीति भवतः. पूर्णा चितिः शिष्यते ॥

ननु स्त्रक्सर्पादे रज्ज्वज्ञानविलसितत्वात्सैव त-
त्त्वं तद्विपरीतं तु मिथ्येति युक्तम्, नैवमवस्थाधर्मि-
योक्तमन्तःकरणमात्माज्ञानविलसितं येनात्मैव त-
स्यात् तस्यानादित्वात्, अन्यथा तद्गतकर्मतत्फल-
हस्थानादित्वायोगात्, आत्मन्यवस्थात्रयेऽपि साक्षि-
या भासमानेऽज्ञानासंभवाच्च तस्य तद्विलसित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगादिति तत्राह । जाग्रत्स्वप्नसुषुप्तिधर्मकमिति । न तावदन्तःकरणस्य व्यक्तरूपेणानादित्वम्, तन्मनोऽकुरुत, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेत्यादिश्रुतौ जन्मश्रवणात् साक्षिमात्रगम्यस्य तस्यागमापायित्वमन्तरेण कादाचित्कानुभवायोगाच्च तदापीतेः संसारव्यपदेशादित्यत्रोक्तन्यायेन सुषुप्त्यादावपि सूक्ष्मरूपेण विद्यमानत्वादनादिकर्मादिप्रवाहस्यैकाश्रयत्वोपपत्तिः । यत्तु भासमानात्मन्यज्ञानमेव नेति । तन्न, भासमाने तस्मिन्ननतिशयानन्दाद्वयब्रह्मात्मताज्ञानस्यानुभवयुक्तिसिद्धत्वात् । जडस्य स्वातन्त्र्येण स्वतः स्फुरणायोगाच्चिदात्मन्यविद्याकल्पितं तदिति स एव सर्वावस्थासहितचितिसतत्त्वमिति भावः । तर्ह्यज्ञानस्याज्ञान विलसितत्वाभावान्मिथ्यात्वासिद्धौ द्वैतापत्तिरित्याशङ्क्याह । स्वाज्ञानं चेति । अद्वयासङ्गस्वप्रकाशचिदात्मनि तस्य वस्तुतोऽसंभवाज्जाड्यदृश्यात्वाभ्यां तस्मिन्मिथ्यात्मत्वसिद्धेः कालत्रयेऽपि स्वतः सत्त्वहीनस्य तस्य सविलासस्य प्रतिभासेऽपि वास्तवत्वेन पूर्णानन्दचिदात्मावशिष्यत इत्यर्थः ॥ १४० ॥

ज्योतिर्ब्राह्मणवाक्यमानबलतः संपूर्णरूपा चिति-
र्जाग्रत्स्वप्नसुषुप्तिधर्मरहिता मोक्षाय निश्चीयते ॥
तस्मादस्मदुदीरितं स्वकवपुः श्रद्धत्स्व मानं विना
नास्माभिः प्रतिपादिता चितिरियं वाक्यार्थसंबन्धिनी॥१४१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सर्वेऽपि वादिनः स्वस्वमते युक्तिजालं वदन्ति तावता मम न तत्र श्रद्धा भवति, एवं युक्तिभिरुपपादितायामपि त्वमर्थशुद्धौ सा कथं भवेदित्याशङ्क्य युक्तिमात्रस्याप्रतिष्ठितत्वात्तावता तत्र श्रद्धानुदयो युक्त इह तु युक्त्युपोद्बलितागमवाक्यैरेव स्पष्टं प्रतिपादनादुक्तत्वमर्थशुद्धौ श्रद्धा विधेयेत्याह। ज्योतिर्ब्राह्मणेति। मोक्षाय तद्धेतुवाक्यार्थबोधाय । तत्र ह्यादित्यादीनां व्यवह्रियमाणवस्तुप्रकाशकज्योतिषामभावे स्वप्नमनोरथादौ व्यवहारहेतुभूतं ज्योतिः किमित्यभिप्रेत्य किंज्योतिरेवायं पुरुष इतिप्रश्नस्यात्मैवास्य ज्योतिरित्युत्तरं श्रुत्वा देहादीनां बहूनामहमितिप्रतिभासात्तत्रासाधारणात्मरूपजिज्ञासया कतम आत्मेति पुनः प्रश्ने तस्योत्तरमुक्तं योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यादिना। तेन हि देहेन्द्रियप्राणबुद्धितद्वृत्तिक्षणिकविज्ञानाज्ञानविलक्षणमात्मानमुक्त्वा तस्य समानः सन्नुभौ लोकावनुसंचरतीति बुद्ध्युपाधिकं संसारं निर्दिश्य तस्य ध्यायतीवेत्यादिना मिथ्यात्वमुक्तम्। पुनः स धीः स्वप्नो भूत्वेत्यादिना जाग्रत्स्वप्नमरणजन्मनां पर्यायेण प्राप्तिमनूद्य तेषां व्यभिचारिणामतत्स्वभावत्वं प्रतिपाद्य पुनः स वा एष एतस्मिन्संप्रसाद इत्यादिना क्रमिकावस्थानुवादपुरःसरं स यत्तत्र किं चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति क्रि

यासमभिहारेण तत्तदवस्थागतवस्तुसाक्षिमात्रत्वेन त-
दसङ्गत्वमुपपाद्यानन्तरं यत्र सुप्तो न कं चन कामं का-
मयते न कं चन स्वप्नं पश्यतीति सुषुप्तिमवतार्य त-
द्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपमित्यादि
ब्राह्मणशेषेण समस्तकामकर्मादिरहितस्वप्रकाशनित्य-
चिदानन्दात्मकत्वंपदलक्ष्यं पृष्टात्मरूपं निरूपितम्।
एवं स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपाप-
विद्धं दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अ-
प्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर इत्यादिश्रुति-
भिरप्युक्तरूप एव त्वमर्थो निरूपितः। ततोऽस्मिन्नि-
रूपितेऽर्थे नाशङ्काकारणमस्तीति भावः॥ १४१॥

एतत्त्वंपदलक्ष्यवस्तु भवता यत् पृष्टमासीत् पुरा
तन्निर्णीतमतोऽन्यदस्ति यदि ते चित्तस्थितं पृच्छ तत्॥
बुद्धिस्थं कुरु पूर्वमुक्तमखिलं यद्वक्ष्यमाणं च तद्
बोद्धुं, धारय ते मनः स्थिरतरं श्रद्धाधनाद्याश्रयः॥१४२

त्वंपदार्थशुद्ध्यर्थमन्यदपि श्रोतव्यमिति मतिं नि-
राकुर्वंस्तन्निर्णयमुपसंहरति। एतदिति। तत्पदलक्ष्यप्र-
करणे शङ्कितचित्तं प्रति सामान्येन तदनुज्ञां सूचय-
ति। अतोऽन्यदिति। श्रुतस्याविस्मरणं श्रोतव्ये चित्तै-
काग्र्यं च श्रवणस्य फलवत्त्वाय शिष्यस्यावश्यकमि-
त्याशयेनाह। बुद्धिस्थमिति। यत् पूर्वमुक्तं तदखिलं बु-
द्धिस्थं कुरु यच्च वक्ष्यमाणं तद्बोद्धुं लौकिकधनादि वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हाय श्रुत्युक्तश्रद्धारूपधनाढ्यबुद्धिः सन् मनः स्थिरतरम् अत्यन्तमेकाग्रं यथा स्यात्तथा धारयेति संबन्धः ॥ १४२ ॥

एत्युक्ते गुरुणा स पृच्छति पुनस्त्वंशब्दलक्ष्यं मम
ज्ञातं न्यायबलेन पूर्वमुदितावस्थात्रयापोहनात् ।
तच्छब्देन तु लक्ष्यमर्थमधुना बोद्धुं मनो मामकं
धावत्याशु तमप्यपोह्य सकलद्वैतप्रपञ्चं वद ॥१४३॥

एवं गुरोरनुज्ञां प्राप्य शिष्यो निःशङ्कः सन्नुदितेऽर्थे जिज्ञासानिवृत्तिं सूचयन्नापातप्रतिपन्नवस्तुनि जिज्ञासौत्कट्यप्रकटनपुरःसरं तत्पृच्छतीत्याह । इत्युक्त इति । पृच्छतीत्यस्य वदेत्येतदुपरीतिपदमध्याहृत्य संबन्धो ज्ञेयः । यद्यपि पूर्वं द्वैतप्रपञ्चमिथ्यात्वमुक्तम्, तथापि वाक्यार्थान्वयितत्पदार्थनिर्णयं विना तद् दृढं न भवतीत्याशयेनापोह्य सकलद्वैतप्रपञ्चमित्युक्तम् ॥१४३॥

किं सप्रपञ्चमिदमस्त्वथ वा समस्त-
द्वैतप्रपञ्चरहितं परिपूर्णरूपम् ॥
यद्वोभयात्मकमिदं परमार्थतोऽस्तु
विष्णोः परं पदमितीह विचारणीयम् ॥ १४४ ॥

आपातप्रतीत्यधीनसंशयकोटिं दर्शयंस्तन्निवर्तकनिर्णयाय विचारारम्भः कार्य इत्याह । किं सप्रपञ्चमिति । इदं सा काष्ठा सा परा गतिरित्यादिश्रुत्यवगतं विष्णोः परमं पदमिति सम्बन्धः । परमार्थत इत्येत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्कोटिद्वयेऽपि योजनीयम्, इतरथा कोटीनां विरोधानभिव्यक्तेः ॥ १४४ ॥

वेदान्तवाक्यगतिरत्र बहुप्रकारा
का चित्कथञ्चिदिति संशय उत्थितो मे ॥
तत्त्वं प्रकाशय निवर्तय मोहमूलं
मत्संशयं मम हिताय भव प्रसीद ॥ १४५ ॥

ननु ब्रह्मणोऽलौकिकत्वाद्वेदान्तानां च दोषरहितत्वात्कुतस्ते तत्रोक्तसंशय इत्याशङ्क्य सम्भावितासम्भावितविषयविविधवेदान्तवाक्यश्रवणसमुपजातमदीय चित्तदोषादेव स इत्याशयेनाह। वेदान्तवाक्येति। गतिः प्रवृत्तिः। अत्र ब्रह्मणि। बहुप्रकारत्वमेवाह। काचिदिति। सृष्ट्यादिवाक्यगतिः सप्रपञ्चे नेतिनेत्यस्थूलादिवाक्यगतिर्निष्प्रपञ्चे तदेजति तन्नैजति पश्यत्यचक्षुः स शृणोत्यकर्णः आसीनो दूरं व्रजति शयानो याति सर्वत इत्यादिवाक्यगतिर्विरुद्धोभयरूपे ब्रह्मणि दृश्यत इत्यर्थः। इतिर्हेतौ। तर्हि मया किं कर्तव्यमिति गुरोराशयमाशङ्क्य तत्प्रतिज्ञां स्मरन् स्वाभीष्टं प्रार्थयते। तत्त्वमिति। तत्समन्वयाध्याय एवौपनिषदब्रह्मतत्त्वं प्रकाशितमित्याशङ्क्याह। निवर्तयेति। मोहोऽसंभावनादिबुद्धिर्मूलं यस्य तम्। मया प्रष्टुमपि न ज्ञायते त्वयैव मद्धितं जानता तद्विधेयमित्याशयेनाह। मम हिताय भवेति। कथमयमेवं निर्बन्धं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करोतीत्येवमपि न मन्तव्यमित्यभिप्रेत्याह । प्रसी-देति ॥ १४५ ॥

न स्थानतोऽप्यस्ति परस्य कश्चिद्
विशेषयोगः परमार्थरूपः ॥
स्वतः पुनर्दूरनिरस्त एव
परस्य तत्त्वस्य विशेषयोगः ॥ १४६ ॥

एवं प्रार्थितो गुरुर्न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीत्यादिसूत्रसूचितन्यायनिर्णीतत्वाद्वस्तुतो निष्प्रपञ्चं ब्रह्म वेदान्तवेद्यमित्युपपादयति । न स्थानत इति । उपाधितोऽपीत्यर्थः । किं सविशेषत्वं निर्विशेषत्वं च ब्रह्मणः स्वाभाविकम्, उतान्यतरदौपाधिकम् । नाद्यः, वस्तुनः स्वभावतो विरुद्धरूपद्वयायोगात् । द्वितीये किं निर्विशेषरूपं सोपाधिकम्, किं वा सविशेषरूपम् । नाद्यः, वियदाद्युपाधीनां सर्वेषां सविशेषत्वेन स्वतः सविशेषे तदधीननिर्विशेषत्वायोगात्, अन्यथा प्रपञ्चस्यैव तदुपाधिकं निर्विशेषत्वं किं न स्यात् । न द्वितीयः, औपाधिकरूपस्य स्फटिकलौहित्यादिवन्मिथ्यात्वेन स्वाभाविकत्वायोगात् स्वभावतो निर्विशेषमेव ब्रह्मेत्यस्मदिष्टसिद्धेः । न च वस्तुतः सविशेषमेव ब्रह्म निर्विशेषत्वं तस्य स्वाभाविकं वौपाधिकं वा नैवास्तीति वाच्यम् । तत्परानेकश्रुत्यादिविरोधात्, तत्रैव च श्रुतिसमन्वयस्योपपादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्वादिति भावः ॥ १४६ ॥

स्वभावतश्चिद्घनविग्रहस्य
मृषा ह्युपाधिप्रभवा विशेषाः ॥
यथा जपापुष्पनिबन्धनः स्यान्
मृषा मणेर्लोहितिमा तथैव ॥ १४७ ॥

नन्वन्तस्तद्धर्मोपदेशादित्यादिसूत्रैः सगुणं ब्रह्म निरूपितम्, न च न स्थानतोऽपीत्यनेन विरोधः, सगुणत्वस्यौपाधिकत्वेन तत्परिहारादित्याशङ्क्यौपाधिकस्यापि सत्यत्वे तत्परिहारायोगात्तन्मिथ्यात्वमुपेयमित्याशयेनाह । स्वभावत इति । किं च विमतं मिथ्या औपाधिकत्वात् स्फटिकलौहित्यवदित्यनुमानादपि तन्मिथ्यात्वसिद्धिरित्याह । यथेति । न च स्फटिकमणावपि तदा सत्यमेव लौहित्यमुत्पन्नमिति साध्यवैकल्यमिति वाच्यम् । तद्गतशुक्लरूपे स्थिते तदुत्पत्त्ययोगात्, तन्नाशस्य च तदा रूपनाशे क्व प्रकारणाभावेनासम्भवात् । एवं तद्वास्तवलौहित्योत्पत्तिकारणासम्भवाच्च तदसम्भवः । नापि जपापुष्पतद्रूपाभ्यामविवेकमात्रात् स्फटिके लौहित्यव्यवहारस्य तद्रूपस्यैव वा स्फटिके भ्रान्त्या प्रतिभासो न तत्रानिर्वचनीयं लौहित्यान्तरमस्तीति वाच्यम् । नेदं जापापुष्पं तल्लौहित्यं च स्फटिके नास्तीति स्पष्टं विवेकदर्शनात्, तस्मिन्प्रति स्फटिके तद्रूपारोपासम्भवाच्चेत्यादि प्रप-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ञ्चेन पद्मपादाचार्यादिभिरेवोपपादितम् । तस्मान्मि-
थ्यालौहित्यमेव स्फटिके भातीति न साध्यवैकल्यमिति
भावः ॥ १४७ ॥

मायोपाधेरद्वयस्येश्वरत्वं
कार्योपाधेर्जीवता च प्रतीचः ॥
मिथ्यैव स्याद् बन्धुजीवप्रसून-
संपर्कोत्था रक्ततेवाभ्रकादेः ॥ १४८ ॥

नन्वीश्वरत्वजीवत्वयोरनादित्वेन स्फटिकलौहित्य-
वदौपाधिकत्वायोगाद्वास्तवत्वमुपेयम् , ततश्च वस्तु
एवात्मनः सविशेषत्वमित्याशङ्क्याह । मायोपाधेरिति ।
ईश्वरत्वं हि जगत्सृष्ट्यादौ निरङ्कुशं सामर्थ्यम् , तच्च
कूटस्थासङ्गाद्वितीयस्य स्वतो न घटत इति तत्समर्थ-
स्वाभासमायाप्रयुक्तमेव ब्रह्मण ईश्वरत्वं तदुपाधिकं
च, अनादेरपि तस्य मायासम्बन्धवत्तदधीनसत्ताक-
या तत्प्रयुक्तत्वोपपत्तेः तेन तस्य व्यावहारिकत्वेऽपि
मिथ्यात्वमपरिहार्यम् , यद्यपि जीवत्वमप्यज्ञत्वरूपम-
नादि, तथापि बुद्ध्यादिकार्ये सति तदुपहितस्य कर्तृ-
त्वादिविक्षेपरूपानर्थरूपेणापि भातीति तेन रूपेण त-
स्य कार्योपाधिकत्वव्यपदेशः, स्वरूपेण तु तदप्यविद्या-
प्रयुक्तत्वादविद्योपाधिकमिति तदपि कर्तृत्वादिना स-
ह मिथ्येति स्वतो निर्विशेषं ब्रह्मेत्यर्थः । औपाधिक-
त्वस्य मिथ्यात्वेन व्यभिचारशङ्कानिरासायोदाहरण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तरमाह। बन्धुजीवेति। तत्प्रसूनं वर्तुलमारक्तं प्रसिद्धम्। अभ्रकं स्वच्छधातुविशेषः, आदिपदेन तत्तुल्यमन्यदुपादीयते ॥ १४८ ॥

भल्लातकादिरसयोगनिबन्धनं च
वस्त्रे कलङ्कितमनेन यथा निरस्तम्॥
तस्यापि पक्षपतितत्वमभीष्टमेव
तस्मादसौ न भवति व्यभिचारभूमिः ॥१४९॥

ननु शुक्लवस्त्रादौ भल्लातकनीलीद्रव्यादिरसौपाधिककालिम्नो यावद्वस्त्रादवपायमपायादर्शनात्तत्र तस्य सत्यत्वमुपेयम्, ततश्च तत्रौपाधिकत्वं मिथ्यात्वं व्यभिचरतीति नेत्याह। भल्लातकादीति। कलङ्कितमिति भावप्रधानं कालिमेति यावत्, पटादिगतस्वाभाविकशौक्ल्यनाशे क्लृप्तकारणाभावेन तन्नाशायोगात् स्थिते च तस्मिन् वास्तवरूपान्तरोत्पत्त्ययोगात् तदुत्पत्तौ क्लृप्तकारणाभावाच्च तत्र तद्व वस्तुतो न घटते, तदिदमुक्तमनेन यथा निरस्तमिति, एवं च तदपि स्फटिके लौहित्यादिवदेव मिथ्येति कल्प्यते, तत्र स्वाभावे सत्येव भावात्. तत्रोपाधिभूतद्रव्यसंसर्गस्य मधुरोदके लवणसंसर्गवद् दुर्निवारत्वात्तत्प्रसञ्जितस्य मिथ्याभूतस्यापि कालिम्नो यावद्द्रव्यसत्त्वं स्थित्युत्पत्तेश्च, ततश्चोक्तहेतोरेतादृशं न व्यभिचारस्थलत्वेनोभयसंप्रतिपन्नमित्याह। तस्यापीति ॥ १४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन् ॥
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ १५० ॥

नन्वद्वितीयात्मनि जीवेश्वरत्वादिविशेषस्य मिथ्या-
त्वेऽपि तस्यौपाधिकत्वं कुतः सिध्येदित्याशङ्क्य तत्र
श्रुतिं प्रमाणयति । यथा ह्ययमिति । अयं नभस्येकत्वे-
न प्रत्यक्षो ज्योतिरात्मा तद्रूपो विवस्वान् सूर्यः पात्र-
भेदेन बहुधा भिन्ना अपः स्तोकास्तोकादिरूपेण भि-
न्नास्वप्सु एक एवानुगच्छन्प्रतिबिम्बभावेन प्रविशन्नु-
पाधिना स्वतः प्रकारतश्च भिन्नानुरूपोपाधिना भेद-
रूपः क्रियते, भेदो रूप्यतेऽनेनेति भेदरूपस्तस्य धर्मी
प्रतियोगी च स्वप्रतियोगिकमिथ्याभेदवान् ज्ञाप्यत
इति यावत्, एवं देवः स्वरूपप्रकाशेन दीप्यमानोऽय-
मात्माऽजोऽपि क्षेत्रेषु महाभूतान्यहङ्कार इत्यादिना
भगवतोक्तेषूपाधिषु प्रतिबिम्बभावेन प्रविष्टो मिथ्यैव
भेदरूपः क्रियते, स्वतस्तु शुद्धबुद्धाद्वितीयानन्दरूप इ-
त्यर्थः ॥ १५० ॥

ऐश्वर्यमस्य परमात्मन उक्तमन्यैः
साक्षात् स्वरूपमवबोधसुखादितुल्यम् ॥
तेनेशते किल यथायथमीशतव्यान्
भृत्यान् प्रतीश्वरतया जगतीभृतोऽपि ॥ १५१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमीशितव्यजीवभेदस्यौपाधिकत्वात्तदपेक्षमीश्वरत्वमप्यौपाधिकत्वान्मिथ्या, साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिसिद्धशुद्धचिदात्मानन्दाखण्डात्मस्वरूपमेव सत्यमिति स्वमतमुक्त्वा मतान्तरमुत्थापयति । ऐश्वर्यमिति । साक्षादुपाधिं विना, ऐश्वर्यं द्विविधं स्वाभाविकमौपाधिकं चेति, तत्र निरुपाधिकस्य परमात्मनः स्वरूपभूतमैश्वर्यं स्वाभाविकमेकरूपं च, अन्तर्याम्यादिषु तु तदीश्वरत्वं मायोपाधिकं तरतमभूतं च, तत्राद्यं दृष्टान्तेन दर्शयति । अववोधेति । सत्तादिशब्दार्थः । ननु ब्रह्मादीनामधिकारिणां सविशेषाणामेवैश्वर्यं शास्त्रादिना प्रसिद्धं तत्कथं निर्विशेषात्मनि स्यादित्याशङ्क्य तेषामपि परमात्मस्वरूपभूतैश्वर्येणैव स्वेशितव्यान् प्रतीश्वरत्वं तच्चैतन्येनैव बोद्धृत्ववदित्यभिप्रेत्याह । तेनेति । ईशते नियामका भवन्ति, किलेत्यस्वारस्यं सूचयति ॥ १५१ ॥

> नित्यं प्रियादिषु सुखं प्रतिबिम्बितं स-
> ल्लोके वदन्ति विषयेन्द्रियसंप्रयोगात् ॥
> उत्पन्नमन्यदिति तद्वदिहेश्वरत्वं
> मायातदुत्थमतिषु प्रतिबिम्बितं सत् ॥ १५२ ॥

ननु तेषामैश्वर्यं ज्ञानकर्मादिसाध्यं तारतम्यान्वितं च तत्कथं परात्मस्वरूपात्मकं स्यादित्याशङ्क्य न तत्तेषामपि ज्ञानकर्मादिजन्यं किं तु तदभिव्यङ्ग्यं व्यञ्जक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तारतम्याच्चौपाधिकं तारतम्यं नानात्वं चेति सुखादि-दृष्टान्तेन वदन् द्वितीयं दर्शयति। नित्यमिति। प्रियमोदप्रमोदा अभीष्टवस्तुदर्शनलाभोपभोगजन्याः स्वरूपसुखाभिव्यञ्जका अन्तःकरणवृत्तिविशेषाः। प्रतिबिम्बितं सत् प्रतिबिम्बभूतमित्यर्थः। अन्यादिति। नानेति चेत्यर्थः। इह लोकागमयोः, प्रतिबिम्बितं तदीश्वरत्वमुत्पन्नमन्यदिति च वदन्तीत्यनुषङ्गः। यथा सुखस्य चैतन्यस्य च वस्तुतः कूटस्थैकरसस्वरूपत्वेऽप्यन्तःकरणपरिणामरूपोपाधिषु प्रतिबिम्बनात्तदुपाधिका उत्पत्तिनाशनानात्वतारतम्यव्यपदेशा एवमैश्वर्यस्यापि स्वतो निरपेक्षत्वकूटस्थत्वैकरूपत्वे सत्यप्युपाधिवशात्सापेक्षत्वादिव्यपदेशा उपपन्ना इत्यर्थः॥१५२॥

> मायानिविष्टवपुरीश्वरबोध एष
> सर्वेश्वरोभवति सर्वमपेक्षमाणः॥
> बुद्धिप्रविष्टवपुरेष तथेश्वरः स्या-
> दात्मीयभृत्यजनवर्गमपेक्षमाणः॥ १५३॥

तत्र मायाप्रतिबिम्बितमैश्वर्यमन्तर्यामिणस्तन्मायातत्प्रतिबिम्बितचैतन्यस्येश्वरत्वात्, तदैश्वर्यस्येशितव्यापेक्षित्वोत्कृष्टत्वाभिन्नत्वानि मायोपाधिकानि, समष्टिव्यष्टिबुद्ध्युपाधिकहिरण्यगर्भादीश्वर्यस्य चोत्पत्तिनाशतारतम्यादि बुद्ध्युपाधिकमित्याशयेन पूर्वपद्यस्य चरणार्थं विभजते। मायानिविष्टवपुरिति। ईश्वरबो-

धः स्वतो निरपेक्षैश्वर्यरूपबोधात्मा एष परमात्मा मायाप्रतिविम्बितः सन्समस्तमीशितव्यमपेक्ष्य निरङ्कुशैश्वर्यवान् भवत्येष एव परमात्मा बुद्धिप्रतिविम्बितहिरण्यगर्भादिरूपः सन्कतिपयेशितव्यान्प्रति तारतम्यान्विनकादाचित्कैश्वर्यवान्स्यादित्यर्थः ॥ १५३ ॥

सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः
स्वीये रूपे निर्गुणे निर्विशेषे ॥
पूर्णैश्वर्ये स्वप्रकाशस्वभावे
स्वाराज्येऽस्मिन् स स्वराडेव तिष्ठेत् ॥ १५४ ॥

तर्हि निरुपाधिकपरमात्मस्वरूपात्मकैश्वर्यं वृथा तस्याकिञ्चित्करत्वाद् बुद्ध्युपाधिकजीवैः प्राप्तुमशक्यत्वाच्चेत्याशङ्क्य, तादृशपराभेदसाक्षात्कारवता बुद्ध्याद्युपाधिबाधे तत्प्रतिविम्बितभावरहितस्य प्रतिविम्बान्तरात्मत्वायोगाद् विम्बरूपनिरुपाधिकपरमात्मभूतस्य तत्स्वरूपभूतनिरपेक्षैश्वर्यस्यापि लाभात्स्वाराज्यरूपाप्तकामत्वसिद्धेर्न वृथेत्याह । सम्यग्ज्ञानेति । अत्यन्तभिन्नगुणवत्त्वाभावेऽपि तादात्म्येन विशेषत्वशङ्कानिरासाय निर्विशेष इत्युक्तम् ॥ १५४ ॥

ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ॥
तस्याभिध्यानात्तृतीयं देहभेदे
विश्वैश्वर्यं केवल आप्तकामः ॥ १५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐश्वर्यावाप्तिरूपमुक्तेर्ज्ञानलभ्यत्वे श्वेताश्वतरश्रुतिं प्रमाणयति । ज्ञात्वा देवमिति । तस्येश्वरस्याभिध्यानादाभिमुख्येन प्रत्यक्त्वेन ध्यानात्तं देवं ज्ञात्वा साक्षात्कृत्य देहे सत्येव सर्वेषां पाशानामविद्यास्मितादिरूपक्लेशानामपहानिः क्रियते, तैः क्षीणैः क्लेशैः कर्मानारम्भात्तन्मूलजन्ममरणयोरात्यन्तिकहानिर्भवति, ततः प्रारब्धकर्मणां भोगान्नाशेन देहस्य भेदे जाते सर्वं केवलो निर्विशेष एव उक्तापेक्षया तृतीयं विश्वैश्वर्यं प्राप्याप्तकामस्तिष्ठतीत्युक्तश्रुत्यर्थावगमान्मुक्तावैश्वर्यसिद्धिरिति तदभिमानः ॥ १५५ ॥

स स्वराडिति च विद्यते श्रुति-
र्वर्णितेश्वरवपुःप्रकाशिनी ॥
तेन सत्यसुखबोधवद्भवे-
दीश्वरत्वमिति केचिदूचिरे ॥ १५६ ॥

ननु पूर्वार्द्धेन ज्ञानाद्बन्धनिवृत्तिरूपा मुक्तिः स्पष्टमेवोक्तोत्तरार्धेन तु तस्याभिध्यानादिति सगुणाहंग्रहोपासनमनूद्य तत्फलं तृतीयं बन्धमोक्षापेक्षया तृतीयं तदुभयविलक्षणं विश्वैश्वर्यं समस्तस्थूलसूक्ष्माधिकेशितव्यविषयं हिरण्यगर्भैश्वर्यम्, तत्र च न बन्धो दुःखाभावात्, नापि मोक्षो द्वैतविषयत्वादविद्याकार्यत्वान्मुक्तिहेतुविद्यानधीनत्वाच्च, तस्मात्तत्तृतीयं तत्रावस्थितस्तत्रैव विवेकवैराग्यादिमान्स्वयं प्रतिभातब्रह्म

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तत्रावयोदिततत्त्वसाक्षात्काराद्भ्र तद्देहान्ते केवल आप्तकामो नित्यशुद्धादिरूपब्रह्मैव भवतीति क्रममुक्तिरेवाभिप्रेता ततः कथमियं श्रुतिः परमुक्तावैश्वर्यसत्त्वे मानमित्यरुच्या तत्र छान्दोग्यश्रुतिं दर्शयति । स स्वराडिति । साम्राज्यादिस्वतस्वाराज्यस्याप्यैश्वर्यात्मना प्रसिद्धेरुक्तश्रुत्या तच्च तत्सिद्धिरिति भावः । एवमेकदेशिमतं सदृष्टान्तमुपपाद्य तदुपसंहरति । तेनेति ॥ १५६ ॥

तन्न भाति चतुरस्रमुच्यके-
स्तत्प्रमाणविरहादिह श्रुतौ ॥
सत्यबोधसुखवच्च तत्परा
सत्युवाच यत ईश्वरं श्रुतिः ॥ १५७ ॥

तद् दूषयति । तन्न भातीति । चतुरस्रं सुन्दरं नैव भातीत्यर्थः । किं परमात्मनश्चिदेकरसात्मकं स्वरूपमेव वास्तवमैश्वर्यं यत्तत्त्वविदां प्राप्यम्, किं वा सर्वज्ञत्वसर्वनियन्तृत्वादिरूपो धर्मः । नाद्यः, अखण्डचैतन्यैकरसस्य मुक्तोपसृप्यस्य सिद्धान्तिनाप्यङ्गीकारात्स्वतभेदायोगेन तत्रैश्वर्यपरिभाषाया अनिवार्यत्वात् । द्वितीये किं धर्मधर्मिणोरत्यन्तभेदः, उत भेदः, भेदाभेदो वा । नाद्यः, धर्मधर्मिभावानुपपत्तेः, सापेक्षनिरपेक्षयोर्वास्तवाभेदासम्भवाच्च । न द्वितीय, अत्यन्तभिन्नयोरपि गवाश्वादिवद्धर्मधर्मिभावानुपपत्तेः, मुक्तावपि तत्सत्त्वेऽद्वैतविघातात्, भेदस्वरूपतत्प्रमाणयोर्द्वि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं याख्यायोक्तरीत्या दुर्निरूपत्वेन तत्सत्यत्वायोगाच्च। एतेन तृतीयोऽपि विकल्पो निरस्तः। किं च भेदस्याभेदाभावात्मत्वेन तयोरेकत्र विरोधादयं पक्षोऽसम्भवी, अभेदाविरुद्धवस्त्वन्तरत्वे च भेदग्रहात्क्वाप्यभेदभ्रमानुदयः? न स्यात्तस्य तदविरोधात्, तत्सत्त्वेऽपि स्तम्भकुम्भादीनामिव धर्मधर्मिभावाभावाच्च। किं चोक्तमैश्वर्यं दृश्यमदृश्यं वा, आद्ये न तस्य सत्यत्वं दृश्यस्य मिथ्यात्वनियमात्, तद्गोचरदर्शनतत्संबन्धानिरूपणेन तदसम्भवश्च, द्वितीये तत्स्वप्रकाशमुपेयमन्यथा तदसत्त्वप्रसङ्गात्, तथा च तस्यात्ममात्रत्वमिति कुतस्तद्धर्मत्वम्। किं चोक्तेश्वरत्वस्येशितव्यापेक्षत्वान्मुक्तौ तदभावात्तदपेक्षेश्वरत्वमपि न स्यात् पूर्वमपि तत्सापेक्षत्वान्मायिकमेवेति त्वदुक्तं तद्द्वैविध्यमसम्भवीति भावः। किं च लोके वेदे च तत्त्वसाक्षात्कारवतां मुक्तावप्यैश्वर्यमस्तीत्यस्य गमकाभावात्तदसिद्धिरित्याह। तत्प्रमाणेति। ननु सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतेर्यथा ब्रह्मणः सत्याद्यात्मत्वसिद्धिरेवं सर्वस्य वशी सर्वस्येशान इत्यादिश्रुतेस्तस्येश्वरत्वसिद्धेस्तद्वास्तवं ब्रह्मणः, ततश्च तद्भावमापन्नस्य विदुषस्तदैश्वर्यं दुर्निवारमित्याशङ्क्य तत्पराऽतत्परश्रुतिप्रतिपन्नत्वेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्नैवमित्याशयेनाह। सत्यबोधेति॥ १५७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्पर श्रुतिवचःप्रमाणकं
सत्यबोधसुखविग्रहं परम् ॥
ब्रह्म तद्वदिह नेश्वरत्वभाक्
तत्परश्रुतिवचःप्रमाणकम् ॥ १५८ ॥

उक्तमेव वैषम्यं स्पष्टयति । तत्परश्रुतीति । इह विचारदशायां तद्वत्सत्यादिरूपवत्तत्परश्रुतिवचःप्रमाणकं नेति सम्बन्धः । सत्यं ज्ञानमनन्तमित्यादिवाक्यानां जिज्ञासितब्रह्मस्वरूपलक्षणाभिधायित्वात्तस्य चापूर्वत्वाद्ब्रह्मणः सत्याद्यात्मत्वस्य वास्तवत्वाभावे तल्लक्ष्यब्रह्मत्वायोगात्तज्ज्ञानान्मुक्तिश्रुतेरनन्तरसंदर्भेण तदानन्त्यादेः प्रतिपादनात्तस्यासत्त्वादिज्ञाने निन्दाश्रवणाच्च तत्प्रकरणस्यार्थान्तरायोगात्तेषां सत्याद्यात्मब्रह्मणि तात्पर्यं युक्तम्, सर्वस्य वशीत्यादेस्तु सापेक्षैश्वर्याभिधायित्वात्तस्याविद्यादशायामेव सम्भवात्तन्मात्रस्य कार्यलिङ्गकानुमानगम्यत्वेनापूर्वत्वाभावान्निरतिशयानन्दब्रह्मभावादेव परमपुरुषार्थसिद्धौ तस्याप्रयोजनत्वादनन्तरं स एष नेतिनेत्यात्मेत्यादिनिषेधश्रुतिविरोधाच्च सा न तदैश्वर्यपरा किं तु तदनुवादेन तदुपलक्षितस्य प्रत्यगभेदपरा स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्मेति तस्यैवोपसंहारादिति भावः ॥ १५८ ॥

या फलश्रुतिरिहोरिपवर्णिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्धा न तत्परतयाऽवगम्यते ॥

तत्त्वमादिवचनं हि तत्परं

तत्परा न तु फलश्रुतिः क्वचित् ॥ १५१ ॥

ननु स स्वराड् भवतीति निरपेक्षसाम्राज्यस्य तत्त्वज्ञानफलत्वप्रतिपत्तेः कथं तदपह्नव इत्याशङ्क्याह । न फलश्रुतिरिति । स्वाराज्यं यदि निरतिशयानन्दानुभवे नैरपेक्ष्यलक्षणं स्वातन्त्र्यं तदिष्टमेव, तदावरणापगमे तादृशब्रह्मभूतस्य तदवश्यंभावात्. यदि तु सर्वस्य तदिच्छावशवर्तित्वादिरूपं स्वातन्त्र्यं स्वाराज्यं तन्न तस्य तदाऽसम्भवात् यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुत्या द्वैतगोचरसर्वव्यवहारप्रतिषेधात्, आविद्यकस्य द्वैतस्याविद्यानिवृत्तौ निवृत्तेरवश्यंभावाच्च तदपेक्षस्य तस्य तदाऽनुपपत्तेः, सापेक्षस्य तत्कल्पितत्वाच्च स्वाराज्यश्रुतिर्न तत्परेत्यर्थः । किं चार्थवादावगतफलस्य प्रधानवाक्यापेक्षितत्वनिबन्धनं प्रतितिष्ठन्तीत्याद्यर्थवादस्य स्वार्थपरत्वमङ्गीक्रियते, प्रकृते तु सच्चिदानन्दानन्तब्रह्मात्माभेदपरतत्त्वमादिमहावाक्यैः प्रधानभूतैर्नोक्तरूपस्वाराज्यं फलमपेक्षितं प्रत्युत तद्विरोधि नत् फलमिति तत्परता तदर्थवादस्य नैवोपद्यत इत्याशयेनाह । तत्त्वमादिवचनमिति ॥१५१॥

सामगानमपि तत्स्वरूपतां

लक्षणं च जगतश्च सर्जनम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अश्नुवीत फलवाक्यतः श्रुतं

तत्स्वरूपमिति यद्युपेयते ॥ १६० ॥

प्रधानवाक्यानपेक्षितार्थकार्थवादस्य स्वार्थपरत्वेऽतिप्रसङ्गमाह । सामगानमिति । फलवाक्यतः श्रुतं तत्स्वरूपमिति यद्युपेयते तदा सामगानमित्यादौ योजनीयम्, तदेतत्साम गायन्नास्ते हावु३ जक्षत्क्रीडन्रममाणः यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति इति फलश्रुत्यवगतं सामगानादि, अपिचशब्दैः सूचितमिमाँल्लोकान् कामान्नीकामरूप्यनुसंचरन् तस्य सर्वेषु लोकेषु कामचारो भवति मनसैतान्कामान्पश्यन्रमत इत्यादिश्रुतिगतं कामान्नादि च तत्स्वरूपं स्यादित्यर्थः । मुक्तिर्मुक्तो वा तच्छब्दार्थः ॥ १६० ॥

अर्थवादगतमभ्युपेयते

न प्रमान्तरविरोधि यन् मतम् ॥

सामगानमथ जक्षणादि वा

तत्परश्रुतिविरुद्धमिष्यते ॥ १६१ ॥

ननु सिद्धान्तेऽर्थवादगतं देवताविग्रहादि यथोपेयते एवं मुक्तस्य सामगानाद्यभ्युपेयतां तथा चोक्तातिप्रसङ्गोऽपादिष्ट एवेत्याशङ्क्य सत्यं मानान्तरादिविरोधाभावादर्थवादजन्यदेवताविग्रहादिप्रत्ययस्य स्वतः प्रामाण्यस्यासांनः प्राप्तस्यानपायात्तदुपगमो युक्तः सामगानादेस्तु शरीरादिसापेक्षत्वान् मुक्तौ चाथायम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शरीरोऽमृतः अशरीरं वाव सन्तं तथा विद्वान्नामरूपा-द्विमुक्त इत्यादिश्रुतिभिः शरीरादिप्रतिषेधात्तदपेक्षसा-मगानादिरर्थवादादन्यपरादवगतोऽभ्युपगन्तुमयुक्त इ-त्याह । अर्थवादगतमित्यादिना । स्पष्टार्थान्यक्षरा-णि ॥ १६१ ॥

ईश्वरत्वमपि तत्परश्रुति-
र्नेतिनेति परिदुःखिता सती ॥
वारयत्यवशिनष्टि केवलं
चित्स्वरूपमनवद्यविग्रहम् ॥ १६२ ॥

तर्हीश्वरत्वस्य परमात्मनि शरीराद्यनपेक्षत्वादुक्त-श्रुतिविरोधाभावादर्थवादावगतं तदुपेयमित्याशङ्क्य त-थापि निर्विशेषपरश्रुत्यन्तरविरोधात्तदपि सामगाना-दितुल्यमित्याशयेनाह । ईश्वरत्वमपीति । नेतिनेत्यस्थू-लमनणु अतोऽन्यदार्तमित्यादिश्रुतिर्भेददर्शनाद्दुःखादि-भाजः संसारिणो दृष्ट्वा दुःखिता सती आत्मातिरिक्तं सर्वं निराकृत्याभयानन्दानुभूतिमात्रमात्मानं परिशेष-यति, तद्विरोधादीश्वरत्वमपि तदा नोपेयमित्यर्थः १६२

सोपाधीश्वरतानिषेधनपरा सा नेतिनेति श्रुतिः
साक्षाद् भागवतं निरस्तनिखिलोपाधिस्वरूपं पुनः ।
विश्वैश्वर्यमिहोच्यमानमधुना मोक्षे ततस्तत्परै-
र्वाक्यैरस्य विरुद्धतानवसरा मुख्यं ततो गृह्यताम् ॥ १६३

ननु दाहृतश्रुतिर्मायोपाधिकमेवेश्वरत्वादिविशेषं नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पेक्षति न तु स्वाभाविकं भगवतो भगशब्देरितं ततश्च भगवत्स्वरूपायां मुक्तौ तदुपेयमित्याशङ्कते । सोपाधीति । साक्षादित्यस्य विवरणं निरस्तेति, पुनः-शब्दस्तुशब्दसमानार्थः । इह स स्वराडित्यादिवाक्ये मोक्षे उच्यमानं विश्वैश्वर्यं तु निरस्तनिखिलोपाधि-स्वरूपं भागवतमिति सम्बन्धः । निषेधश्रुतीनां सोपा-धिकविशेषनिषेधपरत्वे फलितमाह । तत इति । अ-स्य निरुपाधिकैश्वर्यस्य । अविरोधे फलितमाह । मु-ख्यमिति ॥ १६३ ॥

सामगानमथ लक्षणं जग-
त्सर्जनं च निरुपाधि गृह्यताम् ॥
नेतिनेति वचसा निषिध्यते
लक्षणादिकमुपाधिसंश्रयम् ॥१६४॥

सिद्धान्ती सोपाधिकैश्वर्यातिरेकेण निरुपाधिकस्व-रूपभूतैश्वर्ये मानाभावादुक्तविभागो न युक्तः, निरपे-क्षपरमात्मवस्तुनः सापेक्षैश्वर्यस्वरूपत्वं चायुक्तमत एव भगवच्छब्दोऽपि मायिकैश्वर्यादिसम्बन्धं निमि-त्तीकृत्य तत्र वर्तते, यदि मुक्तिदशायामुदितत्वात्तस्य निरुपाधिकत्वं स्वरूपत्वं चास्थीयेत निषेधश्रुतीनां च सोपाधिकस्वरूपविषयत्वं तदाऽतिप्रसङ्ग इत्याशये-न दूषयति । सामगानमिति । स्पष्टार्थान्यक्षराणि॥१६४॥

सामगानमथ लक्षणं जग-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्सर्जनं च न खलु द्विधेष्यते ॥
तत्प्रमाणविरहादिहेति चे-
दीश्वरस्वरमपि न द्विधा भवेत् ॥ १६५ ॥

सामगानादौ मानाभावादयुक्तं द्वैविध्यमिति यदुच्येत तदैश्वर्येऽपि तुल्यमिति स्वाशयं परमतानुवादेनाविष्करोति । सामगानमथेत्यादिना । इहेत्यत्र लोकवेदयोरिति वा । न द्विधा भवेदित्यत्रापि तत्प्रमाणविरहादित्यनुषङ्गः ॥ १६५ ॥

ज्ञानमस्ति खलु बाह्यगोचरं
निर्विशेषमविनाशि च द्विधा ॥
बाह्यगोचरमपोह्य केवला
स्वापमोक्षसमये चितिः स्थिता ॥१६६॥

यत्तूक्तमैश्वर्यमस्य परमात्मन उक्तमन्यैः साक्षात्स्वरूपमवबोधसुखादितुल्यमिति तत्र दृष्टान्तमुपेत्य दार्ष्टान्तिके वैषम्यं वक्तुं ज्ञाने तावद्द्वैविध्यमुपपादयति । ज्ञानमस्तीति । बाह्यगोचरम्, इन्द्रियादिसन्निकृष्टार्थविषयं तज्जन्यं चेत्यर्थः । एवमन्तःकरणवृत्तिरूपमेकं ज्ञानमुक्त्वा तत्साध्यक्रमपरं साक्षिरूपमस्तीत्याह । निर्विशेषमिति । विषयकरणाद्यनपेक्षमित्यर्थः । तस्यैवाविनाशित्वं विशेषणम् । इति ज्ञानं द्विधास्ति खल्विति सम्बन्धः । तत्राद्यं सापेक्षत्वादागमापायित्वाच्च नात्मनः स्वरूपं किं त्वौपाधिकमलीकं च, द्विती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं तु सदाभावान्निरपेक्षत्वाच्च परमार्थात्मस्वरूपमेव तस्य ततो भेदे मानाभावात्, ज्ञानोत्पत्त्याद्यनुभवस्येतरविषयत्वादित्यभिप्रेत्याह । बाह्यगोचरमिति ॥१६६॥

पश्यन्नपश्यतिगिरा कथयांबभूव
साक्षादनश्वरविनश्वरचिद्विभागम् ॥
तात्पर्यतः श्रुतिवचः स्फुटमेव नैव-
मैश्वर्यवस्तुनि विभागवचः श्रुतिर्नः ॥ १६७ ॥

ननूक्तद्वितीयज्ञाने मानाभावोऽस्मतिज्ञामात्रेणोक्तद्वैविध्यादि न सिद्ध्यतीति चेन्न, अहङ्कारतद्धर्मकामसङ्कल्पादीनां धारावाहिकप्रत्ययानां स्वप्नमनोराज्यसुषुप्तीनां च स्वप्रकाशनित्यचैतन्यं विना स्वकाले प्रतिभासायोगात्तेषु च मानप्रवृत्तेरसक्तन्निरस्तत्वात्स्वकाले प्रतिभासानङ्गीकारे च तेषां कालान्तरे परामर्शायोगात्तदा तत्साधकं नित्यचैतन्यमावश्यकमित्यभिप्रेत्योक्तज्ञानद्वये वैदिकं प्रति श्रुतिं प्रमाणयति । पश्यन्नपश्यतीति । साक्षान्मुख्यवृत्त्या, उक्तमपि तात्पर्यहीनमुपेक्ष्यं स्यादयं तु न तथेत्याह । तात्पर्यत इति । तेन पदद्वयेन स्फुटमेवेत्येतद्विवृतं सुषुप्तिमधिकृत्य यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति श्रुतिवाक्यं तदा द्वैतं न पश्यतीति यन्न तत्सर्वथा ज्ञानाभावात्किं तु पश्यन्वै तन्न



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्यतीत्यनया गिरा स्वप्रकाशस्वरूपज्ञानं प्रतिपा-
यदेव द्वैतविषयमिन्द्रियाद्यधीनं सविकल्पकज्ञानं निषे-
धति, तदा स्वप्रकाशस्वरूपज्ञानसत्त्वे हेतुं चाह। न
हीति। द्रष्टुरात्मनः स्वरूपभूताया दृष्टेर्द्रष्टुरहङ्का-
स्य यो दृष्टिः साक्षिरूपा तस्या वा दृष्टेर्विपरिलोपो
विद्यते, अविनाशित्वात्सर्वविनाशसाक्षित्वेन तदन-
त्वादित्येवं नित्यदृष्टिमुपपाद्य तदितरदृष्टिर्निषिद्ध-
पपादयति। न तु तद्द्वितीयमस्तीत्यादिना। इयं च
श्रुतिरुक्तार्थपरा यद्वै तं न जिघ्रतीत्याद्यनन्तरसन्द-
णास्यैवार्थस्याभ्यासात्, ततश्चोक्तज्ञानद्वैविध्यादौ वि-
मतिर्न कार्येत्यर्थः एवं ज्ञानदृष्टान्तं सप्रमाणकमङ्गीकृ-
त्य दार्ष्टान्तिकमप्रामाणिकत्वादनङ्गीकार्यमित्याह। एवं
चमिति ॥ १६७ ॥

एवं न वा अर इति श्रुतमेव तावत्
पुत्राद्युपाधि पुरुषस्य सुखं विनाशि॥
नित्यं निरन्तरमनन्तमपारमुक्तं
ब्राह्मं सुखं वचनकोटिशतैश्च यत्नात्॥१६८॥

इदानीं सुखदृष्टान्तादपि दार्ष्टान्तिके वैषम्यं व-
ज्ञानवत्सुखद्वैविध्यं प्रामाणिकत्वादुपेयत इत्याह। ए-
नि वाइति। स्रक्चन्दनवस्त्रालङ्कारादिविषयजन्यं वि-
नाशि सुखपदवाच्यमेकमनुभवसिद्धम्, विषयाभा-
वदशायामपि परप्रेमास्पदत्वेनानुमीयमानमात्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यं चापरं सुखं सिद्धम्, तथा श्रुतितोऽपि तद्द्वैविध्यमुपेयम्, न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्तीत्यादिश्रुतिर्ह्यात्मसुखशेषतया पुत्रादीनां प्रियत्वं वदन्ती तदधीनमनित्यं सुखं दर्शयति, एवं यो वै भूमा तत्सुखं विज्ञानमानन्दं ब्रह्म एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति आनन्दरूपममृतं यद्विभाति आनन्दं ब्रह्मणो विद्वानित्यादिश्रुतिभिः प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्, उपैति शातरजसं ब्रह्मभूतमकल्मषम्, सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्, यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत इत्यादिस्मृतिभिश्च नित्यनिरतिशयाद्वितीयपूर्णब्रह्मस्वरूपसुखं च तात्पर्येण दर्शितम्। आनन्दादयः प्रधानस्येति सूत्रमपि तद्विषयमेव, तथा च तद्द्वैविध्यं युक्तमिति भावः ॥ १६८ ॥

ऐश्वर्यवर्णनमिह द्विविधं न वेदे
नित्यं क्व चित् क्व चिदनित्यमिति प्रतीमः ॥
ऐश्वर्यमात्रकथनं पुनरस्ति मोक्षा-
दर्वाक्षु मोक्षसमये च न तत्परं तत् ॥ १६९ ॥

इदानीं नैवमैश्वर्यवस्तुनि विभागवचःश्रुतिर्न इत्युक्तं विवृण्वन्सुखादपि वैषम्यं दार्ष्टान्तिकस्याह। ऐश्वर्यवर्णनमिति। न तावदिह लोके नित्यादिरूपेण द्विविधमैश्वर्यं प्रसिद्धं नापि वेदे परावरात्मनोर्नित्यानित्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वविभागेनैकत्रानेकत्र वा तच्छ्रुतं येन विशेषनिषेध-श्रुतिरौपाधिकविषया कल्प्येत्यर्थः। नन्वेष सर्वेश्वर इत्यादिना मोक्षदशायां श्रूयमाणत्वात्तथा ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता इन्द्रो दिव इन्द्र ईशः पृथिव्याः वैवस्वतं सङ्गमनं जनानां यमं राजानमित्यादिना मोक्षादर्वाग्भूमिष्वपि श्रूयमाणत्वान्नित्यानित्यभावेन द्विविधमप्यैश्वर्यं प्रामाणिकमित्याशङ्क्य मोक्षदशायां तदभिधायकार्थवादस्य श्रुत्यन्तरविरोधादिना सामगानादिश्रुतिवदतत्परत्वस्योक्तत्वान्नैवमित्याशयेनाह। ऐश्वर्यमात्रेति ॥ १६९ ॥

प्रियशिरस्त्वकथा खलु यादृशी
भवति तादृशमेव तदीरणम् ॥
तदनु नेति च नेतिवचः श्रुते-
र्यदपि मोक्षगतं स्तुतये हि तत् ॥ १७० ॥

ननु पारमेश्वरं निरङ्कुशमैश्वर्यं नेतीत्यादिश्रुत्या न निषेद्धुं शक्यम्, तस्यान्यतोऽप्राप्तस्य निषेधायोगात्, न च श्रुतिप्राप्तस्यैव तस्य निषेध इति वाच्यम्, श्रुतेस्तत्परत्वाभावे प्रत्यापकत्वायोगात्, तस्यास्तत्परत्वे च तद्विरोधादेव निषेधकश्रुत्या तन्निषेद्धुमशक्यम्, न च सिद्धे वस्तुनि विकल्पोऽवतरति, ततश्च निषेधश्रुतिस्तदतिरिक्तविषयेति तद्विरोधाभावादैश्वर्यश्रुतिस्तत्परेत्याशङ्क्य प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्रावष्टम्भेन परिहारमाह । प्रियशिरस्त्वेति । आनन्दमयस्य ब्रह्मत्वपक्षे विज्ञानमयकोशगतप्रियमोदादिकमुपासनार्थमानन्दमयावयवत्वेन प्रापयन्ती तस्य प्रियमेव शिर इत्यादिका श्रुतिर्न तत्परा तस्यास्तथोपासनपरत्वात्. एवं सत्यकामत्वसत्यसङ्कल्पत्वसंयद्वामत्वादिश्रुतिरपि व्यावहारिकेश्वरेऽनुमानावगतमुपासनार्थं प्रापयन्ती न तत्परा उपासनाविधिपरत्वात्तस्याः, तथा तत्पदवाच्यव्यावहारिकेश्वरेऽवान्तरतात्पर्येण श्रुतिप्रापितमनुमानप्रापितं वा ऐश्वर्यं मुक्तावपि स्तुत्यर्थमनूद्य सृष्ट्यादिश्रुत्यर्थवन्महावाक्यापेक्षिततत्पदलक्ष्यसिद्ध्यर्थं निषेधोपपत्तेर्न मुक्तावैश्वर्यसिद्धिरित्यर्थः । एष सर्वेश्वर इत्यादिश्रुतेः स एष नेतिनेत्यात्मेतिश्रुतिसमभिव्याहारेणैकवाक्यत्वादपि तन्निषेध आवश्यक इत्याह । तदन्विति । ननु निषेध्यं चेत्तन्न मोक्षे कीर्तनीयं पङ्कप्रक्षालनन्यायापातादित्याशङ्क्याह । यद्यपीति ॥ १७० ॥

स्वातन्त्र्यमीश्वरगिरा गुणमार्गवृत्ति-
माश्रित्य पूर्वगुरवः प्रतिपादयन्ति ॥
सिंहस्य शौर्यगुणवत् परमेश्वरस्य
स्वातन्त्र्यलक्षणगुणोऽव्यभिचारिरूपः ॥ १७१ ॥

ननु क्वचिन्निषेधवाक्यसमभिव्याहारं विनाप्यैश्वर्यं परमात्मनो निर्दिश्यते, यथा इदं सर्वमसृजत भी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षास्माद्वातः पवते इत्यादौ तत्कथं न वास्तवमित्याश-
ङ्क्य तद्वाक्यानामपि निर्विशेषवस्तुपरत्वं भाष्यकारो-
क्तरीत्या स्वीकार्यमन्यथा तत्परबहुश्रुतिविरोधापरि-
हारादित्याशयेनाह। स्वातन्त्र्यमिति । अपारवश्यमि-
त्यर्थः । गुणमार्गवृत्तिं गौणवृत्तिम् । भाष्यकारा ई-
कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेरित्यधि-
करणे इदं सर्वमसृजतेतिवाक्यं स्वातन्त्र्यं दर्शयत्परमा-
त्मानमपरप्रयोज्यत्वेनेश्वरमब्रवीदित्याहुः, तथा चे-
श्वरशब्दस्य गौण्या वृत्त्या तत्स्वातन्त्र्यमात्रपरत्वात्त-
देव सृष्ट्यादिवाक्याभिप्रेतमिति भावः । ननु स्ववाच्या-
व्यभिचारिगुणयोगमभिप्रेत्यान्यत्र गौणः शब्दः प्रयु-
ज्यते स्वातन्त्र्यं त्वीश्वरशब्दवाच्ये राजपुत्रादौ व्यभि-
चरतीत्याशङ्क्य मुख्यमैश्वर्यमीश्वरस्यैवेति स एवेश्वर-
शब्दवाच्यस्तत्र च स्वातन्त्र्यमव्यभिचारीति तद्विषय-
गौणप्रयोगो युक्त इति सदृष्टान्तमाह। सिंहस्येति ॥१५३॥

ऐश्वर्यवस्तु परिगृह्य तदत्यजन्तः
सामर्थ्यसिद्धिमुपपादयितुं क्व चिच्च ॥
सर्वेश्वरश्रुतिवचः समुदाहरन्ति
स्वातन्त्र्यलक्षणगुणस्य तमस्वितायाम् ॥१५४॥

ननु परमात्मन्येवेश्वरशब्दो गौण इति भाष्यकारैरु-
क्तं ततः कथं स एव तद्वाच्यः कथं वा स्वातन्त्र्यमि-
त्याशङ्क्याविद्यादशायां तच्छबलस्यैश्वर्यं निरङ्कुश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति स एवेश्वरशब्दवाच्यस्तद्बलादेव च तस्य स्वातन्त्र्यं सिद्ध्यति स एव निरुपाधिकस्तस्य गौणोऽर्थ इति तत्रापि तत्प्रयोगोपपत्तिरित्याह । ऐश्वर्यवस्त्विति । पूर्वगुरवस्तमस्वितादशायां स्वातन्त्र्यलक्षणगुणस्येश्वरत्वस्यार्थात्सिद्धिमुपपादयितुमैश्वर्यवस्तु परिगृह्य मायोपाधिकं मुख्यमैश्वर्यं स्वीकृत्य तदत्यजन्तस्तदनिराकृत्यैव क्व चित्सगुणप्रकरणे सर्वेश्वरत्वविषयश्रुतिवचः समुदाहरन्तीति सम्बन्धः ॥ १७२ ॥

सिंहश्रुतिर्न घटते यदि शूरताऽस्य
न स्यात्तथैव परमेश्वरताश्रुतिश्च ॥
नैश्वर्यलक्षणगुणः परमात्मनश्चे-
दित्यर्थलब्धिमभिसंदधते महान्तः ॥ १७३ ॥

इदानीं सर्वेश्वरश्रुतिसामर्थ्यात्स्वातन्त्र्यसाधनप्रकारं सदृष्टान्तमाह । सिंहश्रुतिरिति । ऐश्वर्यं लक्षणं गमकं यस्य स्वातन्त्र्यलक्षणगुणस्य स तथोक्तः, यथा सिंहत्वव्यापकत्वात् सिंहशब्देनानुक्तमपि शौर्यं तदर्थेऽर्थात्सिद्ध्यति तथा यस्य यं प्रत्यैश्वर्यं तस्य तदपारवश्यमिति व्याप्तेः सर्वावश्यत्वलक्षणस्वातन्त्र्यं विना सर्वेश्वरत्वायोगात्तच्छ्रुतिबलादेवेश्वरेऽनुपचरितस्वातन्त्र्यगुणसिद्धिरित्यर्थः ॥ १७३ ॥

श्रौतार्थवृत्तिबललभ्यमपीह वस्तु
श्रौतं वदन्ति निकटत्वमनुस्मरन्तः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आसन्नवृष्टिमपि देवमुदीरयन्ति
वर्षन्तमेव हि जना भुवि तादृगेतत् ॥ १७४ ॥

ननु श्रुतार्थापत्तिगम्यस्य श्रुतत्वाभावादीश्वरे श्रुत-विरुद्धवस्तुत्वादिलिङ्गकपारतन्त्र्याशङ्का दुर्निरासा स्यादित्याशङ्क्य श्रुतार्थापत्तिगम्यं विना श्रुतार्थस्यैवानिर्वाहाच्छ्रुतिमूलार्थापत्तेः श्रुतितुल्यत्वं श्रुत्यैव प्रापितमिति न्यायवित्संमतम्, तथा च तद्विरोधेऽप्यनुमानमुदेतुं नार्हतीत्याशयेनाह । श्रौतार्थेति । मुख्यार्थे शब्दस्य या वृत्तिस्तत्सामर्थ्यलभ्यमित्यर्थः । तदव्यवहितस्य तच्छब्देन व्यवहारं दृष्टान्तेनोपपादयति । आसन्नेति । देवं पर्जन्यम् । अत्रेश्वरश्रुतिलक्षितस्वातन्त्र्यस्य शुद्धात्ममात्रतया विवक्षितत्वान्न तेन तस्य सगुणत्वापत्तिरित्यपि द्रष्टव्यम् ॥ १७४ ॥

ऐश्वर्यमज्ञानतिरोहितं सद्
ध्यानादभिव्यज्यत इत्यवोचत् ॥
शरीरिणः सूत्रकृदस्य यत्तु
तदभ्युपेत्योदितमुक्तहेतोः ॥ १७५ ॥

ननु सूत्रकार एव पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति सूत्रेण जीवस्य स्वाभाविकमैश्वर्यमविद्यादशायां देहाद्यभिमानवशात्तिरोहितमीश्वरध्यानान्मुक्तावभिव्यज्यते इत्याह, तत्कथं मुक्तं निर्विशेषत्वमात्मन इति शङ्कां सूत्रकाराभिप्रायप्रदर्शने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिहरति। ऐश्वर्यमिति। अस्य शरीरिण इत्यादौ योज्यम्। यत्त्ववोचदिति सम्बन्धः। तत्र हि स्वप्नरथादेः क्लृप्तकारणाभावेऽपि जीवस्येश्वरांशत्वात्स एव स्वकीयैश्वर्यवशाद्वास्तवमेव स्वप्नप्रपञ्चं स्रक्ष्यतीति शङ्कायां विद्यमानस्याप्यैश्वर्यस्य तदा तिरोहितत्वाज्जीवस्य तद्वन्न विचित्रवास्तवप्रपञ्चस्रष्टृत्वमित्यभ्युपगमवादेनोक्तं सूत्रकारेण न स्वसिद्धान्ततया, न स्यान्नतोऽपि परस्येत्यादिनोक्तश्रुतिन्यायविरोधापातात्, तद्विरोधाभावादेर्दुर्निरूपत्वाच्चेत्यर्थः ॥ १७५ ॥

अथ वा चितिवत् प्रतीयतां
पुरुषस्येश्वरतापि वास्तवी ॥
यदि किं चन कारणं भवे-
न्न विना सा तदिहाभ्युपेयते ॥ १७६ ॥

किं च सूत्रोक्तमित्येतावता न वास्तवमैश्वर्यमभ्युपेयं तस्य श्रुतिवत्स्वतः प्रमाणत्वाभावात्प्रमाणापेक्षितन्यायमात्रसूचकत्वाच्च, न च जीवस्य स्वाभाविकैश्वर्ये किं चित्प्रमाणं न्यायो वा शक्यते वक्तुम्, न चेश्वरांशत्वाज्जीवे तदैश्वर्यमस्तीति वाच्यम्, तस्यैव भेदादिना दुर्निरूपत्वेनासिद्धेः, अंशस्यांशिगतसामर्थ्यवत्त्वानियमाच्च, ईश्वरैश्वर्यस्यापि स्वाभाविकत्वे मानं नेत्युक्तमित्याशयेनाह। अथ वेति। एतदनास्थायाम्। कारणं प्रमाणम् ॥ १७६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कामादि तत्र च भवेदितरत्र चेति
यत् सूत्रकारवचनं तदुदीक्षमाणाः ॥
कामादिकेन दहरस्थगुणेन तुल्यं
सर्वेश्वरादिगुणजातमिति प्रतीम. ॥ १७८ ॥

किं च कामादीतरत्र तत्र चायतनादिभ्य इति सूत्रे छान्दोग्ये अथ यदिदमस्मिन्ब्रह्म पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश इति प्रस्तुतदहराकाशस्य य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इत्युक्तसत्यकामादिगुणानां बृहदारण्यके स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशान इति परात्मन्युक्तवशित्वादिगुणानां चेतरेतरत्रोपसंहारो वर्णितः, तत्र दहर उत्तरेभ्य इत्युक्तन्यायाद् दहराकाशो ब्रह्मैव तथापि तद्विद्या सगुणब्रह्मविषया तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानिति कामादिगुणानामपि वेद्यत्वश्रवणाद् बृहदारण्यकेऽपि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति प्रश्नोपक्रमात्स एष नेति नेत्यात्मेत्युपसंहाराच्च तद्विद्या निर्गुणविषया, तथा च भिन्नविद्ययोरुपसंहृतानामेतेषामुपासनं प्रमितिर्वा न प्रयोजनम्, ततश्चोपसंहृतैः कामादिगुणैः सगुणत्वं बृहदारण्यके न विवक्षितं सूत्रकारस्य, एवं वशित्वादिभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रप्युपसंहृतैरिव श्रुतैरपि सगुणत्वं ब्रह्मणो न विवक्षितमिति गम्यत इत्याशयेनाह । कामादीति । उदीक्षमाणा उक्तरीत्या विचारयन्तो वयमित्यर्थः ॥ १७७ ॥

दहरस्थगुणोपसंहृतेः
स्तुतिमात्रं विरहय्य नापरम् ॥
फलमस्ति परात्मनिष्ठिते
वचने वाजिभिरादृते महत् ॥ १७८ ॥

तर्हि तेषामितरेतरत्रोपसंहारस्य किं फलमित्याशङ्क्य बृहदारण्यके सत्यकामादिगुणोपसंहारस्य परिशेषात् स्तुतिमात्रं फलमिति तावदाह । दहरस्थेति । महत् साक्षात्पुरुषार्थपर्यवसायि ॥ १७८ ॥

दहरादुपसंहृतैर्गुणैः
सदृशाश्चेद् वशितादिलक्षणाः ॥
न तदा परमात्मरूपतां
प्रतिपत्तुं कलयाऽपि शक्नुयुः ॥ १७९ ॥

तथापि वशित्वादिगुणानां वस्तुतत्त्वबोधप्रकरणे श्रुतत्वाद्वस्तुविशेषकत्वमित्याशङ्क्य सूत्रकारेणैव तेषां सत्यकामादिगुणसमानयोगक्षेमत्वाभिधानादुपसंहृतानामिव श्रुतानामपि स्तावकत्वमुक्तविधया स्वातन्त्र्योपलक्षकत्वं चापेयं न वस्तुस्वभावत्वं केनापि प्रकारेणेत्याशयवानाह । दहरादुपसंहृतैरिति । स्पष्टार्थान्यक्षराणि ॥ १७९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमेश्वरतागुणोऽप्यतः
स्स्तुतये तस्य परस्य वस्तुनः ॥
परिकीर्तित इत्युपेयता-
मविशेषाद्वशितादिलक्षणैः ॥ १८० ॥

ननु तस्य प्रकृतिलीनस्य यः परः स महेश्वर इति श्रुतावव्याकृतात् परस्य शुद्धस्य परमेश्वरत्वाभिधानात्तस्य तद्वास्तवमित्याशङ्क्य वशित्वादिसन्निधिपठितसर्वेश्वरत्वस्यैवात्रापि प्रत्यभिज्ञायमानत्वात्तस्य च पूर्वोक्तविधया स्तावकत्वादिदमपि तथैवेत्याह। परमेश्वरतेति। अतःशब्दार्थं विशदयति। अविशेषादिति ॥१८०॥

कारणत्वमपि चित्सुखादिव-
त्तत्स्वरूपमिति किं न गृह्यते ॥
ईश्वरत्वविषये विपश्चितां
पक्षपातकरणे न कारणम् ॥ १८१ ॥

नन्वीश्वरत्वं प्रतिवेदान्तं बहुशः श्रुतत्वात्तद्वास्तवं स्वरूपमित्याशङ्क्य कारणत्वसाक्षित्वप्रतिबन्द्या परिहरति श्लोकद्वयेन। कारणत्वमपीति। कारणत्वस्य सापेक्षत्वान्निरपेक्षात्मस्वरूपं तदिति न गृह्यत इत्याशङ्क्येश्वरत्वस्यापीशितव्यापेक्षत्वं तुल्यमित्याशयेनाह। ईश्वरत्वविषय इति ॥ १८१ ॥

साक्षितापि परमात्मनो भवे-
दीश्वरत्ववदियं न संशयः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यसिद्धनिजबोधरूपव-
द्रूपमेव निरुपाधिकं विभोः ॥ १८२ ॥

इयं श्रुतियुक्तिसिद्धा । साक्षितायाः साक्ष्यसापेक्षत्वान्न परमात्मस्वरूपत्वमित्यपि न शङ्कनीयम्, उक्तोत्तरत्वादित्याशयेनाह । न संशय इति । इयं साक्षितापि विभोः परमात्मनो निरुपाधिकं रूपमेव भवेदिति सम्बन्धः ॥ १८२ ॥

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ॥
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ १८३ ॥

साक्षित्वं कारणत्वं च ब्रह्मणः श्रुत्या नैवोक्तमिति वैषम्यमाशङ्क्य तत्र मन्त्रानुदाहरति त्रिभिः । एको देव इत्यादिना । ब्रह्मविष्ण्वादिभेदनिरासाय एक इत्युक्तम्, तस्य जडत्वनिरासाय देव इति, द्योतनस्वभावश्चिद्रूप इत्यर्थः । तस्य ब्रह्माण्डाद्बहिरवस्थितिशङ्कां निराकरोति । सर्वभूतेष्विति । तत्रानुपलम्भविरोधं परिहरति । गूढ इति । तर्हि परिच्छिन्नत्वं नेत्याह । सर्वव्यापीति । तथाप्याकाशादिवत्पराक्त्वशङ्कां वारयति । सर्वभूतान्तरात्मेति । तर्हि जीववत्कर्तृत्वादिसंसारी स्यान्नेत्याह । कर्माध्यक्ष इति । कर्मसु बुद्ध्यादिव्यापारेषु क्रियमाणेषु स्वयं संनिधिमात्रेणाध्यक्ष एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तु तद्वानित्यर्थः । ततोऽन्यस्य जगदुपादानत्वम्
वारयति । सर्वभूताधिवास इति । सर्वाणि भूतान्य
ध्यस्ततया वसन्त्यस्मिन्निति स तथोक्तः । जगदाका-
रेण परिणामित्वं निराकरोति । साक्षीति । साक्ष्यत्व-
नः साक्षिधर्मत्वायोगादाध्यासिकसम्बन्धेनैव तत्साक्षी-
त्यर्थः । तर्हि सा क्षादीक्षणात्साक्षीतीक्षणव्यापारवत्त्वा-
न्न कौटस्थ्यमिति नेत्याह । चेता, स्वरूपभूतचित्त्वेना-
भासको न व्यापारद्वारेणेत्यर्थः । तत्र व्यापाराभावे
हेतूपरागाभावं हेतुमाह । केवलः, असङ्ग इत्यर्थः । त-
र्हि सुखादिगुणसम्बन्धादसङ्गत्वं कथमित्याशङ्क्य त-
तत्स्वरूपत्वान्न गुणगुणिभावोऽस्तीत्याह । निर्गुण इ-
ति । सर्वसाक्षित्वादेव तस्यान्योऽपि भावोऽभावो वा
वास्तवो धर्मो नेति चशब्दार्थः ॥ १८३ ॥

> न तस्य कार्यं करणं च विद्यते
> न तत्समश्चाभ्यधिकश्च दृश्यते ॥
> परास्य शक्तिर्विविधैव श्रूयते
> स्वाभाविकी ज्ञानबलक्रिया च ॥ १८४ ॥

जीववद्देहद्वयपरिच्छिन्नत्वं वारयति । न तस्येति ।
तर्हि तदधीनत्वात्कर्तृत्वादेस्तद्रहितस्य सर्वकर्तृत्वं स-
र्वज्ञत्वं वा कथं स्यात्तदभावे वा कथमीश्वरत्वमिति
त्त्राह । न तत्समश्चेति । देहादिपरिच्छेदाभिमानि-
एव सर्वज्ञत्वादि दुर्घटं तद्रहितस्य तु स्वातन्त्र्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तृत्वादौ, सम एव न कुतोऽभ्यधिकः, अतः स एव सर्वज्ञः सर्वकर्ता चेति तस्य कारणत्वमीश्वरत्वं च सिद्धमित्यर्थः। देहादिहीनस्य किञ्चित्कर्तृत्वमपि न सम्भवति कुतः सर्वकर्तृत्वमित्याशङ्क्य यस्य देहाद्यधीनं सामर्थ्यं तस्य तदभावे सामर्थ्याभावान्मास्तु कर्तृत्वादि यस्य तु स्वतःसिद्धा मायाख्या परा निरतिशया विविधा विचित्रकार्यानुकूला शक्तिस्तस्य देहादिना विना किं हीयत इत्याह। पराऽस्येति। श्रूयते, मायिनं तु महेश्वरमित्यादौ। तथापि जड़या तया कथं सर्वज्ञत्वसिद्धिरित्यत आह। स्वाभाविकीति। ज्ञानस्य स्वरूपभूतस्य यद्बलमनावृतत्वं तेन व्याकृताव्याकृतसर्वविषयावच्छिन्नस्फुरणरूपफलक्रिया तदभिव्यक्तिः, स्वाभाविकी देहादिनिरपेक्षैव सिद्धा यः सर्वविदित्यादिश्रुतौ, तत ईश्वरत्वादि नानुपपन्नमित्यर्थः ॥१८४॥

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ॥
स कारणं वै करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ १८५ ॥

तथापि तस्य सर्वेश्वरत्वं सर्वकारणत्वं च कथं तस्यापि स्वाम्यन्तरादेः संभवादित्याशङ्क्याह। न तस्य कश्चिदिति। पतिः स्वामी। ईशिता नियन्ता। तदभावे हेतुमाह। नैव चेति। लिङ्ग्यते चेतनोऽनेनेति कार्यकार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णसंघातो लिङ्गम्, यो हि देहादिपरिच्छिन्नोऽयनाबा-दिमान्भवति तस्यैव स्वाम्यादिः संभाव्यते, ईश्वरस्य तु तदभावादेव स्वाम्यन्तराद्यसंभवात्स्वयं सर्वेश्वर इत्यर्थः। सर्वकारणत्वमुपपादयति। स कारणमिति। सर्वकार्यस्येति शेषः। न तस्य कश्चित्पतिरस्तीत्यत्र हेत्वन्तरमाह। करणेति। चक्षुरादिकरणानामधिपाः सूर्यादयस्तेषामप्यधिष्ठाय पालयिता, अतो न तस्य कश्चित्पतिरस्तीत्यर्थः। सर्वकारणत्वादि निगमयति। न चास्य कश्चिदिति। यतोऽस्य कश्चिज्जनिता नास्ति अतोऽयमेव मूलकारणम्, यतश्चान्योऽधिपो नास्ति अतोऽयं सर्वेश्वर इत्यर्थः॥ १८५॥

इति श्रुतिः कारणसाक्षिभाव-
मैश्वर्यवद्व वक्ति परस्य पुंसः॥
अतत्परत्वान्न तदिष्यते चेद्
द्वयं तृतीयं न तथैषितव्यम्॥ १८६॥

ईश्वरत्ववत्कारणत्वादेः श्रौतत्वं निगमयति। इतिश्रुतिरिति। कारणत्वं साक्षित्वं चेति द्वयमन्यपरमन्त्रा-दिसमर्पितत्वाद्वस्तुस्वाभावतया नोपेयत इत्याशङ्क्य तृतीयमीश्वरत्वं मन्त्रादिना तेन सहैवोक्तत्वात्तद्वदेव न ग्राह्यमित्याह। अतत्परत्वादित्यादिना॥ २८६॥

अतत्परत्वं श्रवणस्य तुल्यं
त्रिषु त्रयं तेन विवर्जनीयम्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथेष्टमेकं त्रयमेषितव्यं
विशेषहेतोरनिरूपणेन ॥ १८७ ॥

कारणत्वादिश्रवणस्याखण्डैकरसत्वपरश्रुत्यन्तरविरोधादतत्परत्वं चेदीश्वरत्वश्रवणस्यापि तत्तुल्यम्, तेन त्रयमपि वर्जनीयमित्याह। अतत्परत्वमिति। ईश्वरत्वस्याखण्डस्वरूपमात्रत्वान्न श्रुत्यन्तरविरोधश्चेत्कारणत्वाद्यपि तथेष्यताम्, तस्य सापेक्षत्वान्न निरपेक्षवस्तुमात्रत्वं चेदीश्वरत्वस्यापि तत्तुल्यमित्याशयेनाह। अथेष्टमिति ॥ १८७ ॥

ईशितव्यमनपेक्ष्य नेश्वरो
नेशितव्यमपि तद्वदीश्वरम् ॥
अन्तरेण घटते ततो मृषा
मोहमात्रपरिकल्पितं द्वयम् ॥ १८८ ॥

तर्हि त्रयमपि वस्तुरूपं सत्यं च भवत्वित्याशङ्क्य तत्र तावदीश्वरेशितव्ययोः परस्परापेक्षत्वेन तद्भावस्य मिथ्यात्वं वदंस्तस्याखण्डवस्तुस्वरूपत्वमयुक्तमित्याशयवानाह। ईशितव्यमिति। ईश्वरो न घटत इति सम्बन्धः, ईश्वरत्वं न सम्भवतीति यावत्, तद्वदीश्वरत्ववदीशितव्यमपीश्वरमन्तरेण न घटते, द्वयोरप्यन्योन्याधीननिरूपणतया परस्परप्रमापेक्षकत्वादुभयोरपि प्रमित्यनुपपत्तेरुभयं भ्रान्तिमात्रसिद्धत्वादनिर्वचनीयमित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ १८८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यवस्तु विरहय्य कारणं
न क्व चिद् घटयितुं क्षमेमहि ॥
नापि कारणमपोह्य केवलं
कार्यवस्तु परिकल्पयेमहि ॥ १८९ ॥

एवं कारणत्वमपि सापेक्षत्वात्कार्यवत्कल्पितम्, तथाहि, कारणत्वस्य कार्यान्नियतपूर्वभावात्मत्वात्कार्यत्वस्य च कारणान्नियतपश्चाद्भावात्मत्वेन परस्परापेक्षत्वात्पूर्वोत्तरभावयोरपि परस्परापेक्षत्वादित्याह। कार्यवस्त्विति । कारणं तत्त्वम्, तथा च तदपि न वस्तुरूपमिति भावः ॥ १८९ ॥

साक्ष्यवस्तु परिहृत्य साक्षिता
साक्षिणं च परिहृत्यसाक्ष्यता ॥
नेष्यते न घटते च तेन तत्
सव्यपेक्षमुभयं परस्परम् ॥ १९० ॥

इदानीं साक्षिताया अपि सापेक्षत्वेन कल्पितत्वान्न वस्तुरूपत्वमित्यभिप्रेत्याह । साक्ष्यवस्त्विति । एकैकं परिहृत्योभयस्याप्यसम्भवे फलितमाह । तेनेति । परस्परापेक्षत्वे फलितमाह । न घटत इति । तदुभयं वस्तुतो न घटते, ततः कल्पितत्वात्साक्षित्वमपि न वस्तुरूपमिति चशब्दार्थः ॥ १९० ॥

न प्रमेयमपहाय मातृता
नापि मातृविरहे प्रमेयता ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातृमेयरहिता न च प्रमा
न प्रमाणरहितं प्रमाफलम् ॥ १९१ ॥

ननु मातृमेयादेः परस्परसव्यपेक्षत्वेऽपि सत्यत्ववदीश्वरत्वादेरपि तत्किं न स्यादित्याशङ्क्य दृष्टान्तासिद्धिमभिप्रेत्य तत्राप्युक्तन्यायेन कल्पितत्वं साधयति । न प्रमेयमिति । प्रमारहिते च न मातृमेये इति चशब्दार्थः । एवं प्रमायाः प्रमाणापेक्षत्वं तस्य च प्रमापेक्षत्वमिति परस्परापेक्षत्वात्सर्वमेतत्कल्पितमित्याशयेनाह । न प्रमाणेति । प्रमैव फलम् ॥ १९१ ॥

कर्तृ कर्म परिहृत्य नेष्यते
कर्म कर्तृरहितं न च क्वचित् ॥
कर्तृकर्मरहिता न च क्रिया
न क्रियाविरहितं क्रियाफलम् ॥ १९२ ॥

एवं कर्मादिकारकप्रेरकस्य कर्तृत्वात्कर्तुरीप्सिततमस्य कर्मत्वात्तयोरपि परस्परापेक्षत्वम् , एवं क्रियाकारकयोः क्रियातत्फलयोश्च परस्परापेक्षत्वेन कल्पितत्वान्न सत्यत्वमित्यभिप्रेत्याह । कर्तृ कर्मेति । क्रियाफलं कार्यम् ॥ १९२ ॥

सामान्यं न विशेषवस्तुविरहे तस्माद्‌ विना तन्न च
स्वातन्त्र्येण घटामुपाश्नुते ततः सापेक्षमेतद्‌ द्वयम् ॥
यत् सापेक्षमिहेक्षितं भवति तन्मायामयं स्वप्नवत्तस्मादीश्वरतादि कल्पितवपुः स्वीकुर्महे न्यायतः ॥१९३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं सामान्यविशेषयोरप्यनुवृत्तव्यावृत्तस्वरूपयोः परस्परापेक्षत्वान्मृषात्वमित्याह । सामान्यमिति । अस्मात् सामान्यात् । तद् विशेषवस्तु । घटां घटनाम् । उपाञ्चति उपगच्छति । आस्तां तावद् यत्परस्परापेक्षं तन् मिथ्येति यदेत्र यत्किंचित्सापेक्षं तत्सर्वं मायिकं किमु परस्परापेक्षमित्याशयेनाह । यत्सापेक्षमिति । फलितं निगमयति । तस्मादिति ॥ ११३ ॥

अभिन्नता भिन्नतया विरुद्धा
विभिन्नताऽभिन्नतया तथैव ॥
उपाधिभेदे परिकल्पतेऽपि
विना पुनस्तं किमुदीरणीयम् ॥ ११४ ॥

किं च किं भिन्नयोरीश्वरेशितव्यभावः, उताभिन्नयोः, भिन्नाभिन्नयोर्वा, नाद्यः, भिन्नस्येश्वरस्य जीवैः सह सम्बन्धानिरूपणेन तस्य तत्प्रेरणादिरूपेशनानुपपत्तेः, तदभेदपरश्रुत्यादिविरोधाच्च, न द्वितीयः, अत्यन्ताभिन्ने तद्भावायोगादित्यभिप्रेत्य तृतीयेऽपि पक्षे स्वतोऽभिन्नयोर्जीवेश्वरयोर्भेदः किमौपाधिक उत निरुपाधिकः, आद्येऽपि स किं सत्योऽसत्यो वा, सत्यत्वपक्षेऽपि भेदस्यौपाधिकत्वं किमभेदेनाविरोधायोच्यते तत्सत्त्वाय वा, नान्त्यः, व्याघातादित्यभिप्रेत्याविरोधार्थं तिपक्षं दूषयति पादत्रयेणाभिन्नतेत्यादिना । वस्तुतः भिन्ने वस्तुनि सत्यस्यौपाधिकभेदस्य क्वाप्यदर्शनात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याप्यभेदेन विरोधोऽपरिहार्य इत्यर्थः। औपाधिकभेदस्यासत्यत्वपक्षे तदधीनेश्वरत्वेशितव्यादिभावस्यापि तथात्वापत्तेरिष्टापत्तिमभिप्रेत्य भेदस्यानौपाधिकत्वपक्षे कैमुतिकन्यायेनाभेदेन विरोधं वदंस्तयोरेकत्रासम्भवमाह। विनेति। तमुपाधिम्, यदा सोपाधिकस्यापि विरोधस्तदा निरुपाधिकभेदस्याभेदेन विरोध इति किं वक्तव्यम्, ततोऽयमपि पक्षो न सम्भवतीत्यर्थः॥ १९४॥

स्वभावतो यन् मिथुनं विरुद्धं
न तन्निमित्तान्तरतः कदा चित्॥
उपैति सख्यं परमार्थवृत्त्या
भ्रमादलभ्यं न च किं चिदस्ति॥ १९५॥

ननु स्वभावतः शीतेऽपि जलेऽग्निसम्बन्धादौष्ण्यं सत्यमेव दृष्टं ततोऽपि दाहादिदर्शनात्, एवमौपाधिकोऽपि भेदः सत्यः किं न स्यादित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या परिहरति। स्वभावत इति। सख्यं सामानाधिकरण्यम्, तत्रापि जलगताग्न्यौष्ण्यस्यैव दाहादिहेतुत्वे सम्भवति जलगतसत्यौष्ण्यादौ मानाभावान्न तत्र शैत्यौष्ण्ययोः सामानाधिकरण्यमित्यर्थः। तर्हि कथं जलगततयौष्ण्यादिप्रतीतिः, शैत्यं च तद्गतं किमिति न प्रतीयत इति तत्राह। भ्रमादिति। स्वत उष्णाग्निरूपोपाधिसम्बन्धात् स्फटिकलौहित्यादृ भ्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मादेव जलादावौष्ण्यादेः प्रतिभासः, तदीयशैत्यस्य च स्फटिकशौक्ल्यवदुपाध्यभिभवदोषादप्रतिभासश्च घटते, इतरथा जलगतौष्ण्यशैत्ययोरुत्पत्तिविनाशयोः क्लृप्तकारणानिरूपणात्तयोः प्रतिभासाप्रतिभासौ न स्यातामिति भावः ॥ १९५ ॥

न रविशार्वरसख्यकृदीक्ष्यते
जगति कश्चिदुपाधिरमोहतः ॥
यदि भवेत् स भवेद्भवतो मतः
स न भवेद्यदि सोऽपि न सम्भवेत् ॥ १९६ ॥

ननु त्वन्मत इव भेदाभेदयोः साहित्यं परमतेऽपि किं न स्यादित्याशङ्क्य मन्मते वास्तवाभेदे सत्यपि भेदस्यानिर्वचनीयाविद्याप्रयुक्तत्वेन मिथ्यात्वात्तयोः समसत्ताकत्वाभावेनाविरोधाच्छुक्तौ रजततदभावयोरिव साहित्यं घटते, एवं त्वन्मतेऽप्यनिर्वचनीयमोहोपाधिको भेदः स्वाभाविकस्त्वभेदो जीवेश्वरयोरिति यद्यभ्युपगमस्तदोमिति ब्रूमः, यदि तु मोहातिरिक्तसत्योपाधिकृतो भेदो वास्तव इत्यभ्युपगमः स न सम्भवति समसत्ताकयोर्विरुद्धयोरेकत्रैकदा साहित्यायोगात् घटकोपाधेरेवासम्भवादिति दृष्टान्तेनाह । न रविति । शार्वरं तमः । अमोहतो मोहातिरेकेण । रविशार्वरयोः साहित्यहेतुरुपाधिरदर्शनादेव मा भूदभिन्ने वस्तुनि भेदघटक उपाधिः किं न स्यादित्याशङ्क्य तस्यापि इ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्राप्यदर्शनात्तत्समानयोगक्षेमत्वमाह। यदि भवेदिति।
सोऽपि त्वदभिमतोऽपि ॥ ११६ ॥

खमपि खादति खण्डितमीक्षते
निजशिरो नयनेन करार्पितम् ॥
किमपि दुर्घटमस्य न विद्यते ॥
यदि विमूढमतिर्भवति स्वयम् ॥ ११७ ॥

मोहोऽपि कथमात्मवस्तुन्यनुपपन्नं भेदं घटयेदित्याशङ्क्य न हि दृष्टेऽनुपपन्नं नामेति न्यायेन परिहरति। खमपीति। खादतीत्यादिक्रियाद्वयं स्वप्नोन्मादादिदशायामिति द्रष्टव्यम्। एवं जागरितेऽपि नभोनैल्यचन्द्रप्रादेशिकत्वादि वस्तुतोऽघटितं मोहादेव घटितमित्यभिप्रेत्याह। किमपीति ॥ ११७ ॥

इतश्च निर्भेदकमात्मतत्त्वं
निरूपणे कारणकार्यतादेः ॥
अनादिमायैकनिबन्धनत्वा-
दसम्भवादस्य तु वस्तुवृत्त्या ॥ ११८ ॥

एवमीश्वरेशितव्यभेदस्याविद्यकत्वेन मिथ्यात्वात्तदधीनेश्वरत्वादिकमपि तथेति स्वतो निर्विशेषमात्मतत्त्वमित्युक्तम्, इदानीं यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतिभिर्जगत्कारणत्वप्रतिपत्तेः कथं निर्विशेषत्वमित्याशङ्क्य कारणत्वादेरपि वक्ष्यमाणविधया दुर्निरूपत्वेनाविद्यकत्वात्तच्छ्रुतेरप्यतत्परत्वात्स्वतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कूटस्थैकरसं वस्त्वित्याह । इतश्चेति । तमेव हेतुं वि
णोति । कारणेति । तद्विशेषोपादानोपादेयत्वादिरर्थ
पदार्थः । मायामात्रनिबन्धनत्वे हेतुरसम्भवादिति
अस्य कारणकार्यतादेर्वक्ष्यमाणरीत्या निरूपणे वस्तु
त्याऽसम्भवादेवेति सम्बन्धः, तुरवधारणे ॥ १९८ ॥

असन्न कार्यं गगनप्रसून-
बन्ध्यासुतादेः करणाप्रसिद्धेः ॥
न प्रागसत् कार्यमिति प्रवादः
प्रशस्यते तस्य विरोधहेतोः ॥ १९९ ॥

तत्र कार्यताया दुर्निरूपत्वात्तन्निरूपितकारणताऽ
तथेति मन्वानोऽसतः सतो वा कार्यत्वमिति विकल्प
प्रथमं दूषयति । असन्न कार्यमित्यारभ्य सतोऽपि का
र्यत्वमयुक्तमित्यन्तेन ग्रन्थेन । करणमुत्पत्तिरुत्पाद
वा, तदप्रसिद्धेरित्यर्थः । ननूत्पत्तेः पूर्वमसतोऽपि का
र्यस्याभावप्रतियोगित्वं बन्ध्यासुतादेर्विशेषोऽस्ति
तस्तदुत्पत्त्याद्युपपद्यत इति चेन्न, निःस्वरूपेऽसति
र्मभूतस्य स्वस्वरूपात्मकस्य वासतोऽभावप्रतियोगि
त्वस्याप्यसंभवात्, तस्याप्यसत्त्वेऽसतः कार्यस्य
विशेषेण विशेषवत्त्वं न स्यात्, इतरथा बन्ध्यासु
देरपि तेन विशेषेण तद्वत्त्वप्रसङ्गात्, तद्धर्मभाव
तः कार्यस्य विशेष इति चेन्न, तस्यासता सम्बन्ध
भावेन विशेषत्वायोगात्, न चाभावस्वरूपमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्सम्बन्ध इति वाच्यम्, तथा सति वन्ध्यासुतादेरपि स विशेषः स्यात्, अभावमात्रस्य तद्रूपसम्बन्धस्य च सर्वासत्साधारणत्वात्, किं चासतः कार्यस्याभाव एव वन्ध्यासुतादेरिवासंभवी यस्तस्य विशेषः स्यादिति भावः। ननु वन्ध्यासुतादेरत्यन्तासत्त्वात्तस्योत्पत्तिरभावो वा मास्तु कार्यस्य तूत्पत्तेः प्रागेवासत्त्वादत्यन्तासत्त्वाभावात्तदुत्पत्त्याद्युपपत्तिरिति नेत्याह। न प्रागिति। तत्र किं कार्यस्य सत्त्वासत्त्वे धर्मौ स्वरूपं वा, आद्येऽपि किं भिन्नयोर्धर्मिणोस्ते धर्मावेकस्यैव वा। आद्ये नासतः कार्यत्वसिद्धिः, उत्पन्नस्य सतः कार्यस्य ततोऽन्यत्वात् कार्यस्याप्युत्पत्तेः प्रागसत्त्वं न स्यात्, तदाऽसतस्तस्य ततोऽन्यत्वात्। न द्वितीयः, धर्मिणं विना कादाचित्कधर्माभावेनासत्त्वकाले तद्धर्मिकार्यसत्त्वस्यावश्यकत्वेन तत्र तद्विरोध्यसत्त्वस्यानुपपत्तेः सत्कार्यवादापातात्। नाप्याद्यद्वितीयः, सत्त्वासत्त्वयोर्भिन्नयोर्विरुद्धयोश्चाविरुद्धाभिन्नवस्तुस्वरूपत्वायोगात्, तयोर्भिन्नवस्तुस्वरूपत्वे वा नासतः कार्यत्वसिद्धिरित्यादिनोक्तदोषोऽपरिहार्यः स्यात्। तस्मादसतः कालान्तरसत्त्वायोगाद्यदसत्तत् सर्वदाऽसदेवेति नासतः कार्यत्वसंभावनेत्यर्थः ॥ १९९ ॥

विशेषणानामसति प्रवृत्ति-
र्न दृश्यते क्वापि न युज्यते च ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युधिष्ठिरात् प्रागभवन्नरेन्द्रो
वन्ध्यासुतः शूर इतीह यद्वत् ॥ २०० ॥

किं चासतः कार्यस्योत्पत्तेः प्रागसदिति प्राक्कालविशेषितत्वमेव न घटते येन तदत्यन्तासतो व्यावर्त्येत, नहि निरुपाख्यस्यासतः केन चिद्विशेषणेन योग उपपद्यतेऽङ्गीक्रियते वा, इतरथा निरुपाख्यत्वव्याघातात्, प्रत्यक्षादिप्रमाणानामन्यतमस्य तत्साधकत्वायोगात्तत्साधकान्यप्रमाणापत्तेश्चेत्यभिप्रेत्यासतो विशेषणमात्रासंभवं सदृष्टान्तमाह । विशेषणानामिति । स्पष्टार्थान्यक्षराणि ॥ २०० ॥

उत्पत्तिरप्यस्य निरूप्यमाणा
न का चिदागच्छति युक्तिमार्गम् ॥
स्वसत्तया स्वैः समवायिकारणै-
रपीह या स्यात् समवायिताऽस्य ॥ २०१ ॥

एवमसतः कार्यत्वासम्भवमुक्त्वा तदुत्पत्तेरप्यसंभवमाह । उत्पत्तिरपीति द्वयेन । अस्यासत उत्पत्तिर्निरूप्यमाणाऽसत्कार्यवादिभिरनेकधोच्यमाना का चिदपि न युक्तिसहेत्यर्थः । तैरुच्यमानां तामनूद्य तदसंभवं प्रतिजानीते । स्वसत्तयेत्यादिना । अस्य कार्यस्य स्वसत्तया या समवायिता स्यात्कार्ये सत्तायाः समवाय इति यद्वत्, इह कारणेषु स्वैः समवायिकारणैः सह या वा समवायिता स्यात्, वार्थोऽपिशब्दः, समवायिकारणगतत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वं न विवक्षितम्, स्वस्य समवायिकारणसमवायितेति यावत् ॥ २०१ ॥

असज्जनिः सेत्युपवर्ण्यमानं
सुदुर्घटं न ह्यसतो युजैभिः ॥
सदेव सद्भिः सह सर्ववस्तु
सङ्गच्छते न त्वसदेव सद्भिः ॥ २०२ ॥

साऽसज्जनिरित्युपवर्ण्यमानं निरूच्यमानमसज्जन्मात्यन्तमसम्भवीत्यर्थः । तत्र हेतुः । न हीति । जन्मनः प्रागसतः केनापि सम्बन्धानर्हस्योक्तसत्तादिभिर्युजा सम्बन्धो न युज्यत इत्यर्थः । असतः सम्बन्धानर्हत्वे युक्तिमाह । सदेवेति । सम्बन्धस्य सत्सम्बन्धिद्वयपारतन्त्र्यनियमात्तस्यासत्पारतन्त्र्यायोगात्स सतोरेव घटेत न सदसतोरित्यर्थः ॥ २०२ ॥

सती हि सत्तास्य पटस्य दृष्टा
तथैव तन्तुः पटतन्तवोऽपि ॥
तया च तैश्चास्य कथं पटस्य
सम्बन्धिता स्यादसतो यदैतत् ॥ २०३ ॥

ननु त्वन्मते सतो ब्रह्मणोऽसङ्गतया केनापि सम्बन्धाभावत्तद्वतां च जडाना सत्त्वाभावात्कथं सदेव वस्तु सद्भिः सह सङ्गच्छत इत्युक्तमित्याशङ्क्य परमतेनेदमुक्तमित्यभिप्रेत्य तन्मते सम्बन्धिनः सत्त्वनियमं दर्शयंस्तद्रहितकार्यस्य सम्बन्धासम्भवमाह । सती हीत्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिना । एतद्ध एतदुत्तरं वदेत्यर्थः ॥ २०३ ॥

स्वकारणैस्तन्तुभिरेवमस्य
स्वसत्तया चान्वय एव जन्म ॥
तवेष्टमेवं सति जन्म तस्य
न शक्यते वर्णयितुं पटस्य ॥ २०४ ॥

तर्हि जन्मना लब्धसत्ताकस्य कार्यस्य कारणैः स-
त्तया चान्वयो भवत्वित्याशङ्क्य तदन्वय एव तज्जन्मे-
ति त्वयोक्तत्वादात्माश्रयतापत्तेर्जन्मैवानुपपन्नं स्यादि-
त्याह । स्वकारणैरिति । अक्षरार्थः स्पष्टः ॥ २०४ ॥

तदन्वयात् प्रागसतः कथं स्या-
त्तदन्वयो न ह्यसदन्वयाय ॥
सता समर्थं न हि वन्ध्यया त-
त्पुत्रः समन्वेति कदा चिदत्र ॥ २०५ ॥

ननु कार्यस्य जन्मनः पूर्वमसत्त्वेऽपि जन्मक्षणे स-
त्त्वात्तदैव सत्तादिनान्वयात्सदेव सद्भिरन्वेतीति नि-
मोऽत्रापि घटत इत्याशङ्क्य किं तदसतो जन्म तत्क्ष-
तत्सत्त्वं किं वा सत्ताद्यन्वय एव तदुभयमिति चे-
र्हि सत्ताद्यन्वयक्षणे सत्ताद्यन्वयवतः सत्ताद्यन्वय इ-
त्युक्तं स्यान्नैतद्युक्तमसत्यनुपपन्नस्यैव जन्मादेः स्वो-
पादकत्वायोगादित्यभिप्रेत्य प्रागुक्तमसतः सदन्व-
योग्यत्वं सोदाहरणं स्मारयति । तदन्वयादिति । त-
त्ताकारणे तच्छब्दाभ्यां परामृश्येते । असत्सता स-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वयाय न हि समर्थं योग्यमित्यन्वयः । अत्र जगति । किं च कार्यस्य न केवलं सत्तादिसमवाय एव जन्म, तस्य सदा सत्त्वेन तदर्थकारणवैफल्यापातात्, नापि कार्योपलक्षितस्तत्समवायः, उक्तदोषापरिहारात्, तस्मात्कार्यविशिष्टः सत्तादिसमवायः कार्यजन्मेति वाच्यम्, तच्चासतः कार्यस्यानुपपन्नम्, आगन्तुकविशेषणविशिष्टस्य विशेषणसाध्यत्वात्प्रागसतश्च कार्यस्य तत्साधकत्वायोगात्, तस्मादुक्तं जन्मलक्षणमसम्भवीति भावः ॥ २०५ ॥

न च किं चिदन्यदसतो वदितुं
पटवस्तुनोऽत्र शकनीयमितः ॥
जनिशब्दवाच्यमनवद्यतया
तदयुक्तमेवमसदुद्भवनम् ॥ २०६ ॥

ननु पटस्याद्यसमयसम्बन्ध एव जन्म न सत्तादिसमवायस्तस्य द्वितीयादिक्षणेऽपि सत्त्वादिति नवीनास्तत्राह । न च किं चिदिति । असतः सत्तादिनेवोक्तविधया न चाद्यक्षणेनापि सम्बन्धः सम्भवी । किं चासतः कार्यस्य तेन संयोगस्तावन्न सम्भवति, तस्य संयोगिहेतुकत्वादसतस्तद्धेतुत्वायोगात्, नापि समवायः, अस्य परेणाप्यनङ्गीकारात्, नापि स्वरूपसम्बन्धः; असत्त्वे निःस्वरूपत्वेनोक्तरीत्या स्वरूपासम्भवेन तद्रूपसम्बन्धस्याप्यसम्भवात्, परैर्नष्टानष्टयोरपि स्वरूपस-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वन्धाङ्गीकाराद् द्वितीयादिक्षणवर्त्तिकार्यरूपमप्याद्यक्ष-
णेन सह सम्बन्धः स्यादिति तदापि तदुत्पत्त्यापत्तेश्च,
स्वरूपसम्बन्धस्यान्यत्रापि दुर्निरूपत्वाच्च, किं च सर्व-
क्षणस्य स्वपूर्वक्षणोत्तरभावित्वेन तदाद्यत्वं चासम्भवि,
न च तत्तदुत्पत्तिक्षण एव तदाद्यक्षण इति वाच्यम्,
परस्पराश्रयापातात्, ननु स्वसमानकालीनपदार्थप्रति-
योगिकध्वंसानाधारक्षण आद्यक्षणः कार्यस्येति चेत्,
स्वशब्देनाद्यक्षणावच्छिन्नकार्याभिधाने परस्पराश्रया-
पातात्, तत्तत्कार्यमात्राभिधाने च द्वितीयादिक्षणव-
र्त्तिकार्यस्यापि स्वशब्दार्थत्वं स्यात्ततश्च द्वितीयादिक्ष-
णवर्त्तिकार्यसमानकालीनपदार्थप्रतियोगिका ध्वंसास्तृ-
तीयादिक्षणेष्वेव सम्भाविताः स्तदनाधारत्वं द्वितीयादि-
क्षणेष्वप्यस्तीति तेऽप्याद्याः क्षणाः स्युस्ततश्च जन्मलक्ष-
णे आद्यविशेषणं व्यर्थं स्यात्, स्याच्च द्वितीयादिक्षणल-
क्ष्येष्वतिव्याप्तिः, किं च स्वसमानकालीनेत्यादिलक्षणं
किं तादृशयत्किञ्चिद्वस्तुप्रतियोगिकध्वंसानाधारत्वं वि-
वक्षितमुत स्वसमानकालीनयावद्वस्तुप्रतियोगिकध्वंसा-
नाधारत्वम्, नाद्यः, पटसमानकालीनस्य कस्य चिद्वस्तु-
नो मासाद्यनन्तरं ध्वंससम्भवात्तदनाधारत्वं पटसम्ब-
न्धिद्वितीयादिक्षणेष्वप्यस्तीति तत्रातिव्याप्तिः स्यात्,
द्वितीये यावत्त्वं वस्तुविशेषणं वा स्याद् ध्वंसविशेष-
णं वा, नाद्यः, पटसमकालीनाकाशादिसमस्तवस्तूनां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमते ध्वंसाभावेन तद्घटितलक्षणासम्भवात्, न द्वितीयः, पटसमानकालीनदशद्वादशादिवस्तूनां कालान्तरभाविनो यावन्तो ध्वंसास्तदनाधारत्वं पटीयद्वितीयादिक्षणेष्वप्यस्तीत्युक्तदोषतादवस्थ्यात्, चरमध्वंससमकालीनस्य कस्यापि वस्तुनो ध्वंसाभावेन तदीयाद्यक्षणे तद्घटितलक्षणस्याव्याप्तेश्च, किं च यावदुक्तध्वंसानाधारत्वं नाम किं तदाधारभिन्नत्वं किं वा ध्वंसात्यन्ताभाववत्त्वम्, आद्ये कल्पान्तरीयादिक्षणानामेव वर्णितध्वंसाधारत्वसम्भवात्तद्भिन्नत्वं पटीयसर्वक्षणेष्वप्यस्तीति स दोषस्तदवस्थ एव, द्वितीयेऽपि वर्णितध्वंसात्यन्ताभावानां त्रैकालिकत्वेन पटीयद्वितीयादिक्षणेष्वावश्यकत्वेन तत्रातिव्याप्तेरपरिहारादित्यलमतिधिक्कारेण। एतदभिप्रेत्योक्तमन्यज्जनिशब्दवाच्यमनवद्यतया वदितुं न शकनीयं न श्रावयितव्यमिति। एवं-मसदुत्पत्तेर्दुर्निरूपत्वमुपपाद्य फलितमाह। तदयुक्तमिति ॥ २०६ ॥

न च वर्णितादपरमत्र भवा-
ननुमन्यते जनिवचोऽर्थमितः ॥
यदि वर्ण्यते किमपि तत्र भवेत्
स्वमतप्रहाणमलिनीकरणम् ॥ २०७ ॥

यद्यपि वैशेषिकादिभिर्वर्णितप्रकारेण कार्योत्पत्तिर्दुर्निरूपा तथापि कापिलमतानुवर्तिभिर्निरुच्यमाना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यन्तानभिव्यक्तस्य कारकाधीनाभिव्यक्तिरित्येवमादि-
रूपा निरपत्रादेत्याशङ्क्याऽसत्कार्यवादिभिस्तदनङ्गीका-
रादगत्याङ्गीकारे वा सत्कार्यवादापत्तेः स्वसिद्धान्तहानि-
स्यादित्याह। न चेति। चोऽवधारणे, इतो वैशेषिकादि-
भिर्वर्णितादपरं जनिवचोऽर्थं जन्म भवानसत्कार्यवादि
नैवानुमन्यत इति सम्बन्धः। किमपि तत्र सत्कार्यवादो-
क्तेष्वेकमपि लक्षणं यदि त्वया वर्ण्यते तदा स्वमत-
हाणरूपं मलिनीकरणं दोषस्तव भवेदित्यर्थः ॥ २०७ ॥

समवायिकारणगणेन तथा
सह सत्तया च पटवस्त्विह यत् ॥
समवैति तत् कणभुगिच्छति त-
ज्जनिशब्दवाच्यमिति नान्यदितः ॥ २०८ ॥

तदा कणादोक्तिविरोधादपि सिद्धान्तहानिरित्य-
भिप्रेत्य तन्निर्मितजन्मलक्षणमाह। समवायीति। इह
जगति पटवस्तु समवायिकारणादिना सह समवैति
यत्तत्तज्जनिशब्दवाच्यं तस्य पटस्य जन्म इतो नान्य-
दिति कणभुगिच्छतीति सम्बन्धः ॥ २०८ ॥

न तदत्र सम्भवति युक्तिवशा-
दुपवर्णितं तदतिविस्तरतः ॥
न च किं चिदन्यदुचितं भवतो
वदितुं स्वपक्षमपरित्यजतः ॥ २०९ ॥

तर्ह्यतीव तपस्विना तेन महामुनिनोक्तमादर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यमित्याशङ्क्य तदुक्तेर्मन्वादिस्मृतिवदनुष्ठेयविषयत्वाभा-
वात्सिद्धपदार्थनिर्णयोपयुक्तन्यायमात्रसूचकत्वात्तन्न्या-
यानां चोक्तरीत्या बलवच्छ्रुतिन्यायपराहतत्वान्नैवमि-
त्याह । न तदत्रेति । अत्र कार्यं तदुक्तं जन्म न सम्भ-
वतीति द्वितीयतच्छब्दार्थः । तर्हि तदुक्तं त्यक्त्वान्योक्तमे-
वाद्रियतामित्यशङ्क्यासत्कार्यवादिनस्तदयुक्तमुपवर्णिता
पसिद्धान्तदोषापत्तेरित्याह । न च किंचिदिति॥ २०९ ॥

निरूपणायां न यतोऽस्ति कश्चि-
दुत्पत्तिशब्दार्थ इह त्वदीये ॥
पक्षे ततो दुर्घटताप्रसिद्धि-
रसज्जनेरुक्तनयेन तावत् ॥ २१० ॥

जन्मनः प्रागसतः कार्यस्य जन्मेति पक्षस्योपपादि-
तां दुर्निरूपतामनूद्य फलितमाह । निरूपणायामिति ।
दुर्घटताप्रसिद्धिः सा सिध्येदित्यर्थः । तावदित्यनेनान-
न्तरं पक्षान्तरनिराकरणारम्भं सूचयति ॥ २१० ॥

सतोऽपि कार्यत्वमयुक्तमेव
निरूपणे कारणकृत्यहानेः ॥
न कारणव्यापृतिरत्र शक्या
सतः स्वरूपं वदितुं फलाय ॥ २११ ॥

इदानीमुत्पत्तेः प्रागपि सत एव कार्यस्योत्पत्तिरिति
मतं कारकव्यापारवैयर्थ्यापत्त्या दूषयति । सतोऽपी-
ति । कार्यसिद्धिरेव कारणव्यारसाध्येति चेत् सा किं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यसत्त्वैव तद्गुणसत्ता वा तदावरणनिवृत्तिर्वा तदभि-
व्यक्तिर्वा तदनभिव्यक्तिनिरासो वा, नाद्यः, तन्मते कार्य-
स्वरूपस्य कारणव्यापारात् प्रागपि सत्त्वेन तदसाध्य-
त्वादित्यादित्याह । न कारणेति ॥ २११ ॥

गुणं क्षिपत् कारणमर्थवत्त्वं
लभेत चेन्नात्र गुणस्य भावात् ॥
न चेद् गुणोऽसत्करणं प्रसक्तं
निरर्थकं कारणकर्म तस्मात् ॥ २१२ ॥

द्वितीयं शङ्कते । गुणमिति । क्षिपत्साधयत् । का-
र्यवत्तद्गुणोऽपि तत्र प्राक् सन्नसन्वेति विकल्पाद्ये
कार्यवदसाध्यतेत्याह । नात्रेति । द्वितीयमनूद्यापसि-
द्धान्तापातेन दूषयति । न चेद् गुण इति । कारणव्या-
पारात् प्रागिति शेषः । उक्तपक्षद्वये कारणव्यापारवै-
यर्थ्यं फलितमाह । निरर्थकमिति ॥ २१२ ॥

मलं निरस्यार्थवदिष्यते चेन्
मलोऽपि सन्नैव निरस्य इष्टः ॥
सतोऽविनाशादसतोऽजनेश्च
वृथा ततः कारणमत्र पक्षे ॥ २१३ ॥

तृतीयमनुवदति । मलमिति । अर्थवत्कारणमित्य-
नुषङ्गः, असतः सत्त्ववत् सतोऽप्यसत्त्वानङ्गीकारात्त्व-
मते तन्निराशोऽप्ययुक्त इत्याह । मलोऽपीति । सन्म-
लो निरस्योऽपि नैवेष्ट इति सम्बन्धः, अविनाशादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति च्छेदः । किं च विनाशोऽपि प्रागसन्सन्वा, नाद्यः, असज्जनेस्त्वयानिष्टत्वादित्याह । असत इति । अजनेरिति छेदः । न द्वितीयः, प्रागेव सति मलविनाशे कारणकर्मवैयर्थ्यादिति चार्थः । मलनिरासेऽप्यनुपयोगे फलितमाह । वृथेति ॥ २१३ ॥

तस्मादभिव्यक्तिकरी न हेतु-
प्रवृत्तिरत्रार्थवती घटेत ॥
न चानभिव्यक्तिनिरासवृत्या
तस्मान्न सत्कार्यवचः प्रशस्तम् ॥ २१४ ॥

अभिव्यक्त्यनभिव्यक्तिनिरासयोरपि कारणव्यापारात्प्राक् सत्त्वे तद्वैयर्थ्यम् असत्त्वे चापसिद्धान्तापत्तिरिति प्रागुक्तदोषादेव चतुर्थपञ्चमपक्षावप्यनुपपन्नावित्याह । तस्मादिति । उक्तदोषादित्यर्थः । तर्हि कारणव्यापारस्यानुपयोग एवास्तु कार्यजन्मनीत्याशङ्क्य स्वप्रक्रियाव्याघातात् सत्कार्यवाद एव त्याज्य इति फलितमाह । तस्मान्नेति ॥ २१४ ॥

नित्या च कारकगणस्य सती प्रवृत्ति-
र्नित्यं व्यनक्ति सकलं फलमित्यवश्यम् ॥
वक्तव्यमत्र न लयो न सुषुप्तिमूर्च्छे
नो चेन्न सृष्टिरिति कष्टमुपस्थितं वः ॥२१५॥

किं च सतः कार्यस्याभिव्यक्तिरेव जन्मेति पक्षे तदभिव्यञ्जककारणव्यापारस्य सत्त्वं किं सदातनमुत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कदा चिदेव, आद्ये सर्वाभिव्यञ्जकानां नित्यत्वात्तद-धीना सर्वकार्याभिव्यक्तिरपि सदा स्यादित्याह। नि-त्या चेति। द्वितीये कारणव्यापृतेरपि कार्यत्वात्तत्त्वस्य कादाचित्कत्वेऽपसिद्धान्तापात इति चार्थः। फलं कार्यम्। ओमिति चेत्, तत्र वक्तव्यं किं कार्याभिव्यक्तिस्तदुपलब्धेरन्या सैव वा, तत्राद्ये कार्यतद-भिव्यक्त्योः सदा सत्त्वोपातात्प्रलयकालेऽपि लयो न स्या-दित्याह। अत्रेति। अभिव्यक्तेरपि नित्यत्वोपगम इ-त्यर्थः। तदुपलब्धिरेवाभिव्यक्तिरिति पक्षे तस्या अ-पि सर्वस्या उक्तरीत्या नित्यत्वापातात्सर्वप्रकारज्ञानो-परमात्मके सुषुप्तिमूर्छे न स्यातामित्याह। सुषुप्तीति। लयाभावे ज्ञानज्ञेयात्मकप्रपञ्चस्य सृष्टिरपि न स्यात्स-दा सत्त्वादेव ततश्च कस्य चिदुत्पत्तये नाशाय वा प्रे-क्षावतः प्रवृत्त्ययोगात्सत्कार्यवादिनोऽचलस्य जीवन-मपि दुर्घटं स्यादित्याशयेनाह। नो चेदिति॥ २१३॥

वेदान्तवादिसमयेऽपि समानमेत-
च्चोद्यं परैर्न खलु वाच्यमिहाप्रसक्तेः॥
अस्मन्मतेन खलु संव्यवहारमात्रे
मायामये किमपि दूषणमस्ति यस्मात्॥२१४॥

ननु वेदान्तिभिरप्यसत उत्पत्त्याद्यनङ्गीकाराद-सत एव तद्वक्तव्यं ततश्च स्वपक्षेऽप्युक्तदोषप्रसक्तेः परं प्रति नोद्भावनीयः, यत्रोभयोः समो दोष इति न्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यादित्याशङ्क्यास्माभिः सतोऽप्युत्पत्त्यादेरनङ्गीकारात्त-न्नोक्तदोषाप्रसक्तेर्नैवमित्याह । वेदान्तेति । तर्हि दृश्य-मानमुत्पत्त्यादि कस्येत्याशङ्क्य सत्त्वादिना दुर्निरूपत-याऽनिर्वचनीयस्य नभोनैल्यादिवद्व्यवहारमात्रालम्बन-स्य तदिति वदन् पक्षद्वयोक्तदोषाप्रसक्तिमुपपादयति । अस्मन्मत इति । यस्मादस्मन्मते पूर्ववर्णितपक्षद्वयोक्त-दोषाणामप्रसक्तिस्तस्मात् ॥ २१६ ॥

आत्रेयवाक्यमपि संव्यवहारमात्रं
कार्यं समस्तमिति नः कथयाम्बभूव ॥
सत्कार्यवादविषयो न हि दोषराशि-
र्मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥

छान्दोग्यवाक्यकारेण ब्रह्मनन्दिनापि पूर्वपक्षेऽसतः सतश्चोत्पत्तौ दोषमुक्त्वा सांव्यवहारिकमायामयत्वपक्षे-ण समाधानमुक्तम्, नासत उत्पत्तिरनिष्पाद्यत्वान्ना-पि सतः प्रवृत्त्यानर्थक्यात्सत्त्वाविशेषात्, अभिव्यक्त्य-र्थमिति चेन्न, तस्या अपि सत्त्वात्प्रवृत्तिनित्यत्वाच्च स-दाऽभिव्यक्तिप्रसङ्गः, न संव्यवहारमात्रत्वादिति तद्वच-नं चोक्तन्यायोपोद्बलितवाचारम्भणादिश्रुतिमूलकमव-श्यमुपादेयमित्याशयेनाह । आत्रेयवाक्यमिति । अस्मि-न्मते सत्कार्यवादोक्तदोषाप्रसक्तिं तावदुपपादयति । सत्कार्येति । सद्विलक्षणत्वपक्षे सत्त्वनिबन्धनदोषराहित्य-स्यावश्यकत्वात्तद्विरोधात्तद्दोषाप्रसक्तिरित्यभिप्रेत्य वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोधादित्युक्तम् ॥ २१७ ॥

काणाददर्शनसमाश्रयदोषराशि-
र्दूरान्निरस्त इह संव्यवहारमात्रे ॥
वेदान्तभूमिकुशलो मुनिरत्रिवंश्य-
स्तेनाह कार्यमिह संव्यवहारमात्रम् ॥ २१८ ॥

कार्येऽसद्वैलक्षण्यस्याप्यङ्गीकारादसत्कार्यवादपक्षोक्तदोषाणामप्यत्राप्रसक्तिमाह । काणादेति । सत्कार्यवादिभिः कार्यकारणयोरत्यन्तभेदानङ्गीकारात्स वादोऽद्वैतवादस्येषदासन्नस्तथापि तत्रत्यदोषा यदाऽत्र निरस्तास्तदा दूरनिरस्ता अत्यन्तभेदगर्भासत्कार्यवादगतदोषा इत्याशयेन दूरादित्युक्तम् । येनात्र सदसत्पक्षद्वयोक्तदोषासम्भवस्तेन ब्रह्मनन्दी सिद्धान्तत्वेन कार्यत्वाद्यनिर्वचनीयस्यैवाहेति प्रकृतं निगमयति । वेदान्तेति ॥ २१८ ॥

षष्ठप्रपाठकनिबद्धमुदीरितं य-
त्तत् सत्यमेव खलु सत्यसमाश्रयत्वात् ॥
तत्रैव यत् पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९ ॥

ननु ब्रह्मनन्दिनानेकपक्षाणामुक्तत्वात्तत्र विवर्तपक्षादरणे को हेतुरित्याशङ्क्य छान्दोग्यषष्ठप्रपाठकप्रमेयाद्वितीयसद्वस्तुसिद्धये वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिमुपजीव्य विवर्तवादस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनोक्तत्वात्स एव तदभिमतसिद्धान्त इति स एवादरणीय इत्यभिप्रेत्याह। षष्ठप्रपाठकेति । ननु तत्रैव समुद्रफेन-तरङ्गादिदृष्टान्तेन परिणामवादस्यापि तेनोक्तत्वात्कथं सोऽपि नादरणीय इत्याशङ्क्य तेनैव सत्कार्यवादस्योक्तरीत्या दूषितत्वात्तद्वास्तवत्वं नाभिमतं किं तु व्यवहारदृष्टिमाश्रित्याद्वैतसम्भावनार्थमित्याशयेनाह । तत्रैवेति ॥ २१९ ॥

पूर्वं विकारमुपवर्ण्य शनैःशनैस्तद्दृ-
ष्टिं विसृज्य निकटं परिगृह्य तस्मात् ॥
सर्वं विकारमथ संव्यवहारमात्र-
मद्वैतमेव परिरक्षति वाक्यकारः ॥ २२० ॥

ननु सर्वभेदरहितमुख्याद्वैतसंभावनाय विवर्तवाद एव सन्निहित इति स एव वर्णनीयो न भेदसत्यत्वाविरोधी परिणामवादो व्यवहारदृष्टिपालनाय वर्णनीय इत्याशङ्क्यात्यन्तभेदसत्यत्वेऽभिनिविष्टचित्तस्य प्रथमत एव विवर्त्तवादे प्रवेशो दुर्घट इति तदभिनिवेशत्याजनाय व्यवहारदृष्टिं रक्षता परिणामवादः प्रथमतस्समुपपादितः पश्चात्तद्दृष्टिमपि युक्त्यसहत्वेन शनैस्त्याजयित्वा ततोऽपि निकटं विवर्त्तवादमुपवर्ण्य शुद्धाद्वैतं रक्षति स्म ब्रह्मनन्दी, ततस्तस्य परिणामोक्तिरपि युक्तैव सूत्रकारस्येवेत्याशयेनाह । पूर्वं विकारमिति। विसृज्य परित्यज्य तस्माद्विकारवादान्निकटं मुख्याद्वै-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सिद्धयेऽन्तरङ्गं सर्वमपि विकारं संव्यवहारमात्रं विव-र्त्तवादमथ पश्चात्परिगृह्य सिद्धान्तत्वेनोररीकृत्यापवा-दद्दृष्टिविषयं मुख्याद्वैतमेव सर्वानुपपत्तिपरिहारेण सा-धयतीत्यर्थः ॥ २२० ॥

अन्तर्गुणा भगवती परदेवतेति
प्रत्यग्गुणेति भगवानपि भाष्यकारः ॥
आह स्म यत्तदिह निर्गुणवस्तुवादे
सङ्गच्छते न तु पुनः सगुणप्रवादे ॥ २२१ ॥

ब्रह्मनन्दिरचितवाक्यानां सूत्ररूपाणां भाष्यकर्त्ता द्र-विडाचार्योऽप्यद्वयब्रह्मणः प्रत्यगभेदो वाक्यकाराभिप्रेत इति कथयति स्म ततो व्यवसीयते ब्रह्मनन्दिनो वि-कारवादोऽनभिमत इत्याह । अन्तर्गुणेति । सेयं देवै-क्षतेतिश्रुतिमनुसृत्य परदेवतेति ब्रह्मैवोच्यते । अन्त-र्गुणेत्युक्तं विषदयति । प्रत्यग्गुणेति । गुणशब्दः स्वरू-पपरः, अन्या देवताः पराग्रूपाः परदेवता तु प्रत्यग-त्मरूपा अपरोक्षचिदेकरसेत्यर्थः । निर्गुणवस्तुवादः विकारादिसमस्तविशेषरहितं परमार्थत आत्मवस्त्वि-ति मते ॥ २२१ ॥

न खलु कारणकार्यसमन्वयो
भवति जातु चिदत्र विभिन्नयोः ॥
किमिह सागरसहस्रसमाश्रयो
भवति कारणकार्यसमन्वयः ॥ २२२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं सतोऽसतो वा कार्यत्वासंभवादनिर्वचनीयस्यैव तदिति तन्निरूप्य कारणत्वमप्यनिर्वचनीयं न वास्तवमित्युक्तम्, किं च भिन्नयोरभिन्नयोश्च कार्यकारणभावायोगात्सोऽनिर्वचनीय इत्यभिप्रेत्य भिन्नयोस्तद्भावं निराकरोति। न खल्विति। कारणकार्यशब्दौ भावपरौ. जातु चित्कदा चिदपि। खलुशब्दसूचितां भेदस्य तदभावेन व्याप्तिं दर्शयति। क्वचिदिहेति। न च सह्यसागरयोरेकस्य नियतपूर्ववर्तित्वाभावादेव कार्यकारणत्वाभावो न भेदमात्रादिति वाच्यम्। भेदस्य तदभावेनापि व्याप्तत्वाद्भिन्नयोस्तद्भावस्याप्ययोगादिति भावः ॥ २२२ ॥

न च तथायमभिन्नसमाश्रयो
भवितुमुत्सहतेऽनभिवीक्षणात् ॥
न हि घटो विदधाति घटं क्व चि-
न्न च पटः पटमित्यमनीक्षणात् ॥ २२३ ॥

एवं कार्यकारणयोरभेदेऽपि तद्भावो न युक्त इति सनिदर्शनमाह। न च तथेति। यथायं कार्यकारणभावो भिन्नाश्रितो न सम्भवति तथाऽभिन्नसमाश्रयोऽपि नेत्यर्थः। अनभिवीक्षणमेवोभयसम्मतोदाहरणेन विशदयति। न हीति। विदधाति जनयति ॥ २२३ ॥

कुर्वत्कारणपक्षमाश्रितवतः कुर्वच्च कुर्वत्कृतं
तत्कुर्वच्च तथाविधान्यकृतमित्येषाऽनवस्था भवेत् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्वद्रूपमकार्यमिष्टमिति चेन्नित्यं जगज्जायतां
नित्यं मा जनि वा विशेषविरहादेतत् समस्तं जगत्॥२२४॥

किं च कारणत्वेनाभिमतं वस्तु किं चिद्व्यापारविशिष्टतया कुर्वद्रूपं सत्कार्यजनकमुताकुर्वदुदासीनमेव तथा, आद्ये तत् कुर्वद्रूपमपि कार्यमकार्यं वा, आद्ये कुर्वत्तद्रूपजनकतया कुर्वद्रूपमन्यदुपेयम् , एवं तस्यापि कार्यत्वात्तज्जनकमन्यत्तदुपेयमित्यनवस्थापातान्नैकमपि कार्यं सिध्येदित्याह । कुर्वत्कारणेति । कुर्वद्रूपमकार्यमिति पक्षमुत्थापयति । कुर्वद्रूपमिति । तर्हि तत्सर्वकारणानामस्ति न वा, आद्ये तस्याकार्यस्य सदा भावात्तत्कार्यं सर्वं सदा जायेत, कारणानां तदभावे तु तद्रहितानामजनकत्वात्सर्वं कार्यं कदापि न जायेतेत्याहे । नित्यमिति ॥ २२४ ॥

सर्वं सर्वसमुद्भवाय घटते कुर्वन्न चेत् कारणं
न ह्यस्मिन् क्वचिदस्ति कस्य चिदपि व्यापारवत्ता यतः॥
तस्मात् कारणकार्यतादि सकलं मायामयं तत्त्वतो
नासीदस्ति भविष्यतीति सकलं चैतन्यशेषं महत् ॥२२५॥

अकुर्वज्जनकमितिपक्षमतिप्रसङ्गेन दूषयति । सर्वं सर्वेति । घटते घटेतोपयुक्तं स्यादिति यावत् , अस्मिन्पक्ष इति शेषः । क्वचित् कार्ये । ननूदासीनस्याप्यन्वयव्यतिरेकाभ्यां क्वचित् क्वचिदेव कारणत्वग्रहान्नोक्तातिप्रसङ्ग इति चेन्न, उदासीनस्य वनस्थदण्डादेरिवान्-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यादेरेवाभावात्, न च व्यापारदशायां दण्डत्वादिसामान्यावच्छेदेनैवान्वयादिग्रहात्तेनैवाकारेण दण्डादेर्घटादिहेतुत्वमिति वाच्यम्, व्यापाररहितवनस्थदण्डादावन्वयाद्यभावनिश्चये सति सामान्येनान्वयादिग्रहस्यैवासम्भवात्, न च तस्येतरकारणसन्निधाने सत्यन्वयादिग्रहान्नोक्तदोष इति वाच्यम्, उदासीनस्य तत्सन्निधेरेवासम्भवाद्व्यापारवत एवान्वयादिना कारणत्वं वक्तव्यम्, व्यापारवतश्च तत्प्रागेव निरस्तमिति मायिकतया मिथ्यैव कारणादीति फलितमाह। तस्मात्कारणेति। मायामयेनापि तेन द्वैतापत्तिरित्याशङ्क्य पारमार्थिकद्वैतस्य कालत्रयेऽप्यभावान्मायिकस्यापि तत्त्वधीबाध्यत्वाद्वस्तुतश्चैतन्यमेवाद्वितीयं परिशिष्यत इत्याह। तत्त्वत इति ॥ २२५ ॥

सकलशक्तिविकल्पनयान्वये
सकलशक्यविकल्पनयान्वयः ॥
सकलशक्यविकल्पनयान्वये
सकलशक्तिविकल्पनयान्वयः ॥ २२६ ॥

ननु कुर्वत्त्वं विनापि यस्य यत्र शक्तिस्तत्कारणं यत्तु यस्य शक्यं तत्तत्कार्यमिति सर्वत्र कार्यकारणभावनियमसिद्धिरित्याशङ्क्याह। सकलशक्तीति। शक्तिशक्ययोः परस्पराधीननिरूपणत्वात्सकलशक्तीनां विकल्पनयेदमत्रैव शक्तमिति व्यवस्थयान्वये सति सक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लशक्यानामपि विकल्पनयेदमस्यैव शक्यमिति व्यवस्थयान्वयः स्यात्, सकलशक्यानामुक्तव्यवस्थान्वये सति सकलशक्तीनामप्युक्तव्यवस्थयान्वयो भवेदित्यर्थः ॥ २२६ ॥

इति परस्परसंश्रयता यदा
वद कथं जगतः परमर्थता ॥
यदि पुनर्जगतोऽपरमार्थता
परममस्ति पदं परमात्मनः ॥ २२७ ॥

ततः किमित्यत आह । इति परस्परेति । शक्तिशक्यात्मककारणकार्यात्मकस्य जगतः परस्पराधीनसिद्धिकतया वस्तुतोऽसम्भवान्मायामात्रत्वसिद्धिरित्यर्थः । कार्यकारणात्मकद्वैतस्य मिथ्यात्वे तदधिष्ठानमात्मतत्त्वं नित्यशुद्धादिरूपं श्रुतिप्रमाणात्सिध्यतीति फलितमाह । यदि पुनरिति ॥ २२० ॥

चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते
सत्यैवास्य जड़ा परा भगवतः शक्तिस्त्वविद्योच्यते ॥
संसर्गाच्च मिथस्तयोर्भगवतः शक्त्योर्जगज्जायते-
ऽसच्छक्त्या सविकारया भगवतश्चिच्छक्तिरुद्रिच्यते॥२२८॥

एवं विवर्तवादेनाविद्यातत्कार्यात्मकजगतोऽपरमार्थत्वादद्वयानन्दं ब्रह्मैव वास्तवमित्युक्तम्, परास्य शक्तिर्विविधैव श्रूयते इति श्रुतेः, जड़ाजड़ात्मकानेकशक्तिप्रतिपत्तेर्जड़ात्मकाविद्याशक्तेरसत्त्वेऽपि चिच्छ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तेः सत्यत्वात्तच्छक्तिमद्ब्रह्मापि सत्यमेव तत्परिणामश्च जगदिति ये मन्यन्ते तन्मतमनुवदति। चिच्छक्तिरिति। विमला स्वतोविकारा चिच्छक्तिरिति मतं वारयति। चैतन्यमिति। तस्या अपीतरशक्तिवदसत्यत्वमाशङ्क्य चैतन्यस्य सत्यत्वात्तद्रूपा सापि तथैवेत्याह। सत्यैवेति। ननु चिच्छक्तेः कूटस्थत्वादपरायाश्च जडत्वात्कथं ताभ्यां जगज्जनिरित्यत आह। संसर्गादिति। तथापि कूटस्थायाश्चिच्छक्तेः कथं विकार इत्याशङ्क्य स्वतस्तदभावेऽप्यौपाधिकः सम्भवतीत्याह। असच्छक्त्येति। उद्रिच्यते विकारात्मनोद्रेकं गच्छतीत्यर्थः ॥ २२८ ॥

इत्येवं कथयन्ति के चिदपरे श्रद्धालवस्तत् पुनः
कस्यां चिद्भुवि संमतं च विदुषां नेष्टं तु भूम्यन्तरे ॥
कर्मोपास्तिविधानभूमिषु तथा सत् संमतं निर्गुणे
तत्त्वे तत् परवेदवाक्यविषये त्वालोचिते नेष्यते ॥२२९॥

तन्मतं निगमयति। इत्येवमिति। प्रकारिप्रकारानुवादायेदं पदद्वयम्। तेषामुक्तेऽर्थे न किञ्चिन्मानमस्ति किं तु स्वगुरुवाक्येषु श्रद्धामात्रेणैवं वदन्तीत्यभिप्रेत्य के चिदिति। उक्तानेव विशदयति। अपर इति पराऽस्य शक्तिर्विविधेति श्रुतिस्त्वेकस्या एव परायामायाशक्तेः कार्यभेदेनैव विविधत्वं वदति। देवात्मशक्तिं स्वगुणैर्निगूढामिति तस्या एव सत्त्वादिगुणम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्वोक्तेऽस्मिच्छुक्तिर्नैवात्र श्रूयते नाप्यन्यत्रेति भावः। किं च यैरिदं मतं प्रवर्तितं तेषामपि पूर्वोक्तविकारदृष्टिदशायामेवेदमभिमतं शक्तिशक्तिमतोरभेदे वस्तुतद्भावायोगात्, भेदे च ब्रह्मणो जड़त्वापत्तेर्विज्ञानमानन्दमित्यादिश्रुतिविरोधाच्च, तस्मादुक्तदृष्टिदशायामिदं युक्तं न विवर्तदृष्टिदशायामित्याह। तत्पुनरिति। कस्यां चिदित्युक्तं विशदयति। कर्मेति। नेष्टमित्युक्तं विवृणोति। निर्गुण इति। निर्गुणतत्त्वपरवाक्यविषयालोचनं न स्थानतोऽपि परस्येत्यत्र प्रदर्शितमिति भावः ॥ २२९ ॥

मूर्त्तामूर्त्ततदुत्थलिङ्गपुरुषव्यामिश्रभूता चितिर्वीप्सापूर्वकनेतिनेतिवचनप्रध्वस्तसर्वद्वया ॥
संपूर्णे परमे सुखे परिहृताशेषे शिवे शाश्वते नित्ये शुद्धमहिम्नि तायिनि परे भूम्न्यक्षरे तिष्ठति॥२३०॥

किं च प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति सूत्रनिर्णीतमूर्त्तामूर्तब्राह्मणतात्पर्यादपि भूतभौतिकतत्तद्वासनात्मकसमस्तप्रपञ्चनिषेधेनाद्वयचिदानन्दादिरूपाखण्डब्रह्मण एव परमार्थतया निर्धारितत्वादुक्तपरिणामवादस्तत्त्वतो न ग्राह्य इत्याशयेनाह। मूर्तामूर्त्तेति। तायिनि व्यापके, द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेत्यादिनाऽध्यात्ममधिभूतं च पृथिव्यप्तेजांसि मूर्तं वाय्वाकाशे अमूर्तमिति सर्वं ज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गद् द्वैराश्येनोपपाद्य अध्यात्ममधिदैवं चामूर्तरसात्मकं लिङ्गात्मकं पुरुषं चोक्त्वा तस्य हैतस्य पुरुषस्य रूपं यथा माहारजतं वास इत्यादिना तद्वासनामयं स्वप्नादिप्रपञ्च-मुपन्यस्य अथात आदेशो नेतिनेतीत्यादिना वीप्सया प्रकृतं समस्तं द्वैतं साक्षात्प्रतिषेधन्ती श्रुतिस्तस्य सर्वस्य मिथ्यात्वमेव दर्शयति, न ह्येतस्मादित्यादिना च प्रतिषेधावधिभूतं रूपि ब्रह्म वास्तवं प्रतिपादयति। ततो न परिणामवदो युक्त इत्यर्थः ॥ २३० ॥

जगन्महिम्ना न जगत्प्रसिद्धि
र्न चिन्महिम्नाऽपि जगत्प्रसिद्धिः ॥
न च प्रमाणाज्जगतः प्रसिद्धि-
स्ततोऽस्य मायामयताप्रसिद्धिः ॥ २३१ ॥

ननु सत्यत्वेन प्रसिद्धस्य प्रपञ्चस्य श्रुत्यापि प्रतिषेधो न शक्यः कर्तुं सत्यत्वानुभवविरोधादित्याशङ्क्य स्वतः परतो वा तत्सिद्धेरसम्भवात्स्वतःसिद्धचैतन्ये तादात्म्येनाध्यासादेव तथानुभव इत्यभिप्रेत्य प्रकारान्तरेण तत्सिद्ध्यनुपपत्तिमाह। जगदिति। जड़मेयवस्तुसामर्थ्येनेत्यर्थः। तर्हि स्वप्रकाशचैतन्यसामर्थ्यात्तत्प्रसिद्धिर्न हीत्याह। न चिन्महिम्नेति। तथाऽपि प्रत्यक्षादिमानबलात्तत्प्रसिद्धिर्नेत्याह। न च प्रमाणादिति। अत्र सर्वत्र हेतूननन्तरमेव वक्ष्यति। कथं तर्हि तत्प्रथेत्याशङ्क्य स्वप्नवद् भ्रान्तिरेव सेत्यभिप्रेत्य तदुपप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्ये जगतोऽनिर्वचनीयमायाविलसितत्वमाह । तत इति ॥ २३१ ॥

जड़त्वहेतोर्न जगन्महिम्ना
न चिन्महिम्ना तदसङ्गभावात् ॥
न च प्रमाणात्तदकारकत्वात्
कृतस्य जाड्यादजड़ाऽजनेश्च ॥ २३२ ॥

इदानीं प्रतिज्ञातान् अर्थान् हेतुभिः साधयति क्रमेण। जड़त्वेति। त्रिष्वपि नकारेषु जगतः प्रतिद्धिरित्यनुषञ्जनीयम्। जड़ानां स्वतः परस्परतया वा सिद्धौ स्वसत्तायां संशयाद्यनुपपत्तिः स्यात्ततो न जगन्महिम्ना तत्सिद्धिः, नापि स्वप्रकाशचिन्महिम्ना तस्याः कूटस्थासङ्गात्मरूपतया वस्तुतो जड़सम्बन्धासम्भवेन तत्साधकत्वायोगात्, प्रमाणानामपि स्वरूपेण साधकत्वायोगाज्जडमजड़ं वोत्पाद्य फलं तत्साधकत्वं वाच्यम्, न च तद्युज्यते तेषां व्यञ्जकत्वेन कारकत्वायोगात्। न च स्वप्रकाशसंविज्जनकत्वमेव व्यञ्जकत्वमिति वाच्यम्, जन्यस्य घटादिवत्स्वप्रकाशत्वायोगात्, स्वप्रकाशवस्तुनः कूटस्थतया जन्मायोगाच्चेत्यर्थः ॥ २३२ ॥

न सङ्करो नापि च संयुतिस्तयो-
र्न चास्ति तद्वत् समवायसम्भवः ॥
ततो न चिच्चेत्यसमन्वयं प्रति
प्रतीयते का चन मूलसङ्गतिः ॥ २३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु स्वप्रकाशचिन्महिम्नैव जड़प्रसिद्धिः सेत्स्यति, न च तयोः सम्बन्धाभावः, विषयविषयिभावरूपस्य तस्य सम्भवादित्याशङ्क्य तस्य दृग्दृश्यमात्रप्रयुक्तत्वेऽतिप्रसङ्गात्तत्प्रयोजकतयाऽन्यस्तयोरसाधारणः सम्बन्धो वक्तव्यः, तादात्म्यं संयोगः समवायो वा दृग्दृश्ययोर्न सम्भवति, न चान्यो मुख्यः सम्बन्धोऽस्ति यस्तयोर्विषयविषयिभावसम्बन्धे मूलं भवेदिति तदपेक्षविषयविषयिभावोऽपि नेत्यभिप्रेत्याह । न सङ्कर इति । भेदाभेदयोः सङ्करस्तादात्म्यमिति यावत्, दृशा दृश्यस्याविद्यकं तादात्म्यं चेदोमिति ब्रूमः, वास्तवं तु तादात्म्यं प्रत्यक्पराग्भावेन विरोधान्न, सम्भवति भेदाभेदयोरपि परस्परं विरोधात्सङ्करात्मकं न तत् कुत्रापि सम्भवति, एवमद्रव्यत्वाद्द् दृशस्तया संयोगोऽपि न घटते, गुणादीनामपि दृश्यानां तदयोगाच्च, नापि सर्वस्य दृश्यस्य दृशा समवायः केन चिदङ्गीक्रियते, तस्याप्रामाणिकत्वेन सर्वत्रासत्त्वाच्च, अतो दृग्दृश्ययोर्मूलसम्बन्धस्य कस्याप्यभावान्न विषयविषयित्वसम्भव इति भावः॥२३३॥

न योग्यतामात्रनिबन्धनो भवे-
ज्जडात्मनोरत्र विवक्षितोऽन्वयः ॥
तदा हि तस्या अनपायिरूपतः
सदात्मनः स्यादनपायिसंसृतिः ॥ २३४ ॥

ननु दृग्दृश्ययोर्विषयविषयिभावे योग्यतैव मूलस-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्बन्ध इत्याशङ्क्याह। न योग्यतेति। सा किं तत्स्वरूपमेव तदतिरिक्ता वा, द्वितीयेऽपि सा नित्याऽनित्या वा। न द्वितीयः, तत्कारणानिरूपणात्, कूटस्थासङ्गरूपाया दृशः स्वतः परतो वा तदसम्भवाच्चेत्यभिप्रेत्येतरपक्षयोः सदा दृश्यदर्शनापत्तेस्तदधीनसंसृतेः कदाप्यपायो न स्यादित्याह। तदा हीति। तस्या योग्यतायाः॥२३४॥

ततो वियन्मुख्यमदो जगज्जडं
चिदात्मनोऽस्यैव विवर्त्त इष्यताम्॥
अनाद्यविद्यापटसंवृतात्मन-
स्तदोपलभ्यत्वममुष्य कल्प्यते॥ २३५॥

ननु स्वरूपसम्बन्ध एव दृग्दृश्ययोर्विषयविषयिभावनियामक इति चेन्न, तस्य ज्ञानस्वरूपमात्रत्वेऽतिप्रसङ्गः, घटादिरूपज्ञेयविशेषस्वरूपत्वे चान्यस्य तद्विषयत्वं न स्यात्, तस्य ज्ञेयमात्रस्वरूपत्वेऽप्यतिप्रसङ्गस्तुल्यः, अत एव न ज्ञानज्ञेयोभयस्वरूपत्वम्, तथात्वे उक्तदोषापरिहारात्, ननु सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययविषयत्वमेव स्वरूपसम्बन्ध इति चेन्न, विशिष्टप्रत्ययत्वस्य सम्बन्धघटितत्वेनात्माश्रयत्वापातात्, किं च वर्णितविषयत्वं प्रति विशिष्टप्रत्ययो विशेषणमुपलक्षणं वा स्यात्, आद्ये विशिष्टप्रत्ययविशिष्टविषयत्वरूपसम्बन्धावगाहिविशिष्टप्रत्ययस्य विशेषणगोचरत्वमपि स्यात्, न च तदुपपद्यते न वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परैस्तदुपेयते, द्वितीये विषयत्वमात्रं स्वरूपसम्बन्ध इत्युक्तं स्यात्, तथा चातिप्रसङ्गोऽपरिहार्यः स्यात्, तस्मादाविद्यकानिर्वचनीयस्वरूपसम्बन्धादेव वियदादिजड़प्रपञ्चस्य चिन्महिम्ना प्रसिद्धिर्वक्तव्येति जड़स्य सर्वस्य चिद्विवर्त्तत्वमावश्यकमित्याह। ततो वियदिति। तर्हि सर्वस्यैव चित्यध्यासात्सर्वं सदा तया प्रतिभासेतेत्याशङ्क्यावृतचैतन्यस्य स्वयमप्यप्रतिभासादन्यभासकत्वं दूरापेतम्, यस्य तु प्रमाणजवृत्तिज्ञानेऽनावृतचित्सम्बन्धः सम्भवति तदेव तदा तया भासत इति तन्नियमोपपत्तिरित्याशयेनाह। अनाद्यविद्येति ॥२३५॥

संवित्तिभेदतदभावतदीयजन्म-
नाशादयो न खलु मानवलेन लभ्याः ॥
न ह्यस्ति मानमिह किं चन तद्ध यदस्या
धर्मस्वरूपविषयीकरणे समर्थम् ॥ २३६ ॥

ननु संविदो मानफलत्वेन भेदाभावोत्पत्तिनाशादयोऽनुभूयन्ते ततः सा कथं सर्वाधिष्ठानं स्यात्, वियदादिकं वा कथं तद्विवर्त इत्याशङ्क्य तद्भेदादेरुपाधिपरामर्शं विनानवगमात् स तत्रोपाधिकल्पित एव भ्रान्त्याऽनुभूयते न तु प्रमाणत इति पूर्वमेवोपपादितम्, ततः सैव कूटस्थाऽद्वयादिरूपा सर्वविवर्त्ताधिष्ठानमिति नोक्तदोष इत्यभिप्रेत्याह। संवित्तीति। किं च स्वप्रकाशरूपायाः संविदः प्रकाशान्तरागोचर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात्सा स्वरूपेण भिदादिधर्मित्वेन वा मानान्तरान्न सिध्यति, स्वयं तु स्वसत्तामात्रस्य साधिका न भेदादेरपीति साधकाभावादेव संवित्तिभेदाद्यसिद्धिरित्याह। न ह्यस्तीति ॥ २३६ ॥

तस्मान्न मानफलता निरुपाधिकस्य
संवेदनस्य घटतेऽविषयत्वहेतोः ॥
एवं च मानफलसिद्धिसमन्वयेन
सिद्धिर्जडस्य जगतो न कदा चिदस्ति ॥२३७॥

कथं तर्हि संविदो मानफलत्वमित्याशङ्क्य निरुपाधिकायाः संविद उक्तविधया कूटस्थत्वादिसिद्धौ तद्विरोधाद्वस्तुतो न मानफलत्वमपीत्याह । तस्मादिति । तच्छब्दार्थमेवाह । अविषयत्वेति । उत्पत्त्यादिसाधकमानाविषयत्वादित्यर्थः । उक्तरीत्या स्वप्रकाशसंवेदनस्य मानफलत्वायोगान्मानस्य जडत्वे च जगदान्ध्यप्रसङ्गात् परमते मानफलभूतसंवेदनविषयत्वेन या जडस्य सिद्धिस्तदसत्त्वादिशङ्कानिवृत्तिरङ्गीकृता सा नैव घटत इति फलितमाह । एवं चेति ॥ २३७ ॥

इतरेतराध्यसनमस्त्वनयो-
रुभयोरतो दृगदृशोरनिशम् ॥
अपरस्परव्यतिकरानुभवा-
दिह शुक्तिकारजतविभ्रमवत् ॥ २३८ ॥

ननु सिद्धान्तेऽपि प्रत्यक्चैतन्ये पराचो जडस्य स-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्बन्धायोगात्कथं चैतन्यमहिम्ना जड़प्रसिद्धिः स्यात्, न चासम्बद्धमेव चैतन्यं तत्साधकमतिप्रसङ्गात्, परोक्षापरोक्षविभागायोगाच्चेत्याशङ्क्य चिज्जड़योः परस्परतादात्म्याध्यासोपगमादाध्यासिकसम्बन्धादेव जड़ं साधयच्चैतन्यं वृत्तिविशेषसंसृष्टविषयाभिव्यक्तं सत्तमपरोक्षतयाऽवभासयति, केवलतदाकारवृत्त्यभिव्यक्तं सत्परोक्षतया तमवभासयतीति न किं चिदस्मन्मतेऽनुपपन्नमित्याशयेनाह । इतरेतरेति । सम्बन्धान्तरासम्भवोऽतःशब्दार्थः । तथाप्येकतराध्यास एव भवतु नेतरेतराध्यास इत्याशङ्क्याध्यस्तमेव हि परिस्फुरति भ्रमेष्वित्यादिनोक्तं स्मारयन् घटः स्फुरति सन् घट इत्याद्यनुभवं सदृष्टान्तं तत्सिद्धौ हेतुत्वेनाह । अपरस्परेति ॥ २३८ ॥

संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-
र्नाधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान् संभ्रमः॥
केषां चिन् महतामनूनतमसां पाण्डित्यगर्वादय-
मन्योन्याध्यसने निरास्पदमिदं शून्यं जगत् स्यादिति२३९

चिज्जड़योरितरेतराध्यासेऽध्यस्तयोस्तयोर्मिथ्यात्वाच्छून्यमेव तत्त्वं स्यादिति यदि कश्चिदुक्तानुसन्धानाचतुरः शङ्कते तं प्रति प्रथमाध्यायोक्तं परिहारं स्मारयति। संसिद्धेति । सर्वभ्रमेष्वधिष्ठानाधारयोर्भेदादज्ञातविशेषांशस्याधिष्ठानत्वात्तदध्यस्तसमानाधिकृततया प्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भासमानसामान्यांशस्याधारत्वादाधारस्यैव प्रतीत्यनु-
रोधेनाध्यस्तसंसृष्टरूपेण तत्राध्यस्तत्वोपगमात्तेन रू-
पेण तस्य मिथ्यात्वेऽपि तद्विशेषस्याज्ञातस्याधिष्ठान-
पदवेदनीयस्याध्यासबाधकतत्त्वधीगोचरस्य सत्यज्ञा-
नादिरूपस्य परमात्मनः परमार्थत्वेन परिशेषान्न शू-
न्यवादप्रसङ्गः, तदज्ञानादेव केषां चिदस्मन्मते तदापा-
दनमित्यर्थः ॥ २३९ ॥

कृपणमध्यमपक्वधियां नृणां
मतिविलासविधात्रितयं क्रमात् ॥
परिणतिर्बहुजीवतमस्विता
परमपुंसि तमःपरिकल्पना ॥ २४० ॥

किं च द्वितीयाध्याये पुरुषबुद्ध्यवस्थाभेदेन जगतः
परिणामत्वद्विविधविवर्तत्वाश्रयणेन ब्रह्माद्वितीयत्वप्र-
तिपादनादपि न शून्यवादप्रसङ्ग इत्यभिप्रेत्य तत्रोक्तं
श्लोकचतुष्टयमनुवदति । कृपणेति । अत्यन्तभेदाभि-
निवेशेनाहमीशादिपरतन्त्रः संसार्येवेति ये दीनधियस्ते
कृपणधियः, अत्यन्तभेदवादे कार्यकारणभावाद्यनुपप-
त्तेस्तं परित्यज्य ब्रह्मपरिणाम एव जगदिति ये मन्य-
न्ते ते मध्यमधियः, विरोधाद्यननुसन्धानेन तमपि परि-
त्यज्य ब्रह्मणि माययाऽध्यस्तमनिर्वचनीयं जगदिति ये
मन्यन्ते ते पक्वधियः, एतेषां बुद्धिवृत्तित्रैविध्यमपेक्ष्य क्र-
मेणात्यन्तभेदधीत्याजनाय परिणामवादः, परिणाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धीत्याजनायानेकजीवाज्ञानकल्पनया विवर्तवादः, स-
त्यापि त्याजनेन शुद्धचिदानन्दरूपः परमात्मैव स्ववि-
द्यया स्वप्नादितुल्यं बन्धमनुभवति स्वविद्यया मुच्य-
त इत्यद्वितीयब्रह्मसत्यतोपपादिता ततो न शून्यता-
प्रसङ्ग इत्यर्थः ॥ २४० ॥

श्रुतिवचांसि मुनिस्मरणानि च
द्वयविशारदगीरपि सर्वशः ॥
त्रयमपेक्ष्य विधात्रितयं विना
न हि घटामुपयान्ति कदा चन ॥ २४१ ॥

परिणामादिदृष्टिकल्पनायां किं मूलमित्याशङ्क्य स-
द्वत्यच्चाभवत् वाचारम्भणं विकारो नामधेयमित्यादि-
श्रुतिः, भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् तदनन्य-
त्वमारम्भणशब्दादिभ्य इत्यादिसूत्राणि, उक्तश्रुतिसूत्र-
विषयभाष्याणि चात्र मूलमित्याशयेनाह । श्रुतिवचां-
सीति । त्रयमपेक्ष्य प्रवृत्तानीति शेषः । एतदेव व्यति-
रेकमुखेन द्रढयति । विधात्रितयमिति ॥ २४१ ॥

पुरुषमेकमपेक्ष्य च भूमिका-
त्रितयमस्ति पुरोदितमेव तत् ॥
तदनुसारवशादखिलश्रुति-
स्मृतिवचांसि वयं घटयामहे ॥ २४२ ॥

आसां दृष्टीनां विरुद्धविषयाणां नानापुरुषनिष्ठानां
कथमद्वितीयब्रह्मधीपर्यवसानमित्याशङ्क्यावस्थाभेदम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पेक्ष्यैकत्रैव तासां सम्भवस्योक्तत्वादेषा शङ्का प्रागेव निरस्तेत्याशयेनाह । पुरुषमेकमिति । तदनुसारवशादेकपुरुषवर्तिक्रमिकदृष्टिभेदानुरोधात् ॥ २४२ ॥

परिणतिं च विवर्तदशाद्वयं
स्थितमनुक्रमतः श्रुतिशासने ॥
अनुशशास मुनिप्रवरः सुधीः
पुरुषबुद्धिमपेक्ष्य यथाक्रमम् ॥ २४३ ॥

ननु सूत्रकारस्यैव परिणामादिदृष्टित्रयसूत्रणे किं मूलमित्याशङ्क्य श्रुतिवचांसीत्यनेन सूचितं सूत्रमूलं विवृण्वन्निगमयति । परिणतिं चेति । सच्च त्यच्चाभवत् इन्द्रो मायाभिः पुरुरूप ईयते अजामेकां लोहितशुक्लकृष्णामित्यादिश्रुतिवाक्यार्थनिर्णयायाद्वैतधीपर्यवसायिदृष्टित्रयं सूत्रयामास सूत्रकार इत्यर्थः ॥ २४३ ॥

यदि परणतिरेषा चिद्विवर्तोऽथ वा स्याद्
भवति ननु तदानीं वेदशास्त्रे विरोधः ॥
न हि खलु कृतकत्वेऽपौरुषेयत्वहेतु-
र्भवितुमलमियं नो मानता स्वप्रयुक्ता ॥२४४॥

ननु नामरूपात्मकप्रपञ्चस्य ब्रह्मपरिणामत्वे तद्विवर्तत्वे वा तन्मध्यपातिश्रुतीनामपि ब्रह्मकार्यत्वेन पौरुषेयत्वापत्तेरप्रामाण्यं स्यात्, ततश्च कुतस्तदर्थनिर्णयाय सूत्रप्रणयनमिति मीमांसकंमन्यः शङ्कते । यदि परिणतिरिति । नन्वित्येतदादौ द्रष्टव्यम्, वेद एव शास्त्रं वेद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रं तत्र विरोधस्तत्प्रामाण्यानुपपत्तिरित्यर्थः । ननु पौरुषेयत्वेऽपि वेदस्य प्रामाण्यं तार्किकैः प्रतिष्ठापितं ततः कथं तदप्रामाण्यापात इत्याशङ्क्य तन्मतस्य निरसिष्यमाणत्वादस्माभिर्वैदिकैरपौरुषेयत्वहेतुका स्वतः-प्रमाणतैव वेदस्यास्थीयते सा न तत्पौरुषेयत्वे घटत इत्याह । न हि खल्विति ॥ २४४ ॥

कणभुगभिमतिर्वा कल्पनीया तदानीं
सुरगुरुमतमेवोपास्यमाहोस्विदुच्चैः ॥
इति निपतति चोद्यं ब्रह्मणो विश्वसृष्टि-
र्यदि भवति न चेद्वो नित्यमायाति विश्वम् ॥२४५॥

ननु सूत्रकारेणैव ब्रह्मणः शास्त्रयोनित्वाभिधाना-द्वेदस्य तत्कार्यत्वमपरिहार्यमित्याशङ्क्य तर्हि परतः प्रामाण्यापाताद्वैशेषिकादिमतप्रवेशः स्यादित्याह । कणभुगिति । तन्मते वेदवाक्यरचनामूलभूतप्रमाणानि-रूपणात्तदपि नाङ्गीक्रियत इत्याशङ्क्य तर्हि वेदाप्रामाण्यापत्तेर्लोकायतादिमतप्रवेशः स्यादित्याह । सुरगुरुमतमिति । बृहस्पतिना राजपुत्राणां विमोहनाय कामशास्त्रस्य रचितत्वात्सुरगुरुमतमित्युक्तम् । नामरूपात्मकप्रपञ्चस्य ब्रह्मकार्यत्वे वेदस्य पौरुषेयत्वचोद्यं निगमयति । इतीति । तर्हि वेदस्य ब्रह्मकार्यत्वमेव त्यज्यत इत्याशङ्क्य तदा वेदतत्प्रतिपाद्ययोर्नित्यत्वापातात्सर्गप्रलयादि न स्यादित्याशयेनाह । न चेदिति २४५


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सदृशमिदं वश्चोद्यमस्मासु कस्माद्
विनिहितमुभयेषां पूर्वमीमांसकानाम् ।
अवगतिकृतमेतद् वाचकत्वं पदाना-
मवगतिरियमिष्टा नश्वरी तत्क्षणेन ॥ २४६ ॥

यदि पुरुषनिर्वर्तितत्वमात्रं वेदस्य पौरुषेयत्वं तद्भाट्टानां प्राभाकराणां च तुल्यं ततश्च तदस्मन्मते दोषत्वेन नोद्भावनीयमिति परिहरति । ननु सदृशमिति। नन्विति निश्चये। अनादिपदसंदर्भस्य वेदत्वाङ्गीकारान्मीमांसकमते तस्य कथं पुरुषनिर्वर्तितत्वं तुल्यमित्याशङ्क्याह । अवगतीति । एकस्यानेकस्य वा वर्णमात्रस्य पदत्वायोगाद् वाचकत्वमेव पदत्वं वर्णानाम्, तच्च क्रमविशेषवद्वर्णविशेषेषु व्युत्पत्तिकालेऽवगम्यते, ततश्च क्रमविशेषघटितत्वात्पदत्वस्य वर्णानां नित्यविभूनां स्वतः क्रमायोगात्प्रत्येकवर्णानुभवगतक्रमारोपवतां तेषां पदत्वं वक्तव्यम्, तदारोपस्य चानित्यतया पुरुषनिर्वर्तितत्वात्तद्घटितं पदमपि तथेति न पदानामनादितेत्यर्थः ॥ २४६ ॥

अवगतिगतमेवापेक्ष्य पूर्वापरत्व-
प्रतिनियममियं वो वेदता वेदराशेः ॥
क्षणिकमभवदिस्य वेदशास्त्रं समस्तं
कथमिव तदिदानीं वेदशास्त्रं प्रमाणम् ॥ २४७ ॥

किं च पदसंदर्भमात्रस्यावेदत्वात्क्रमविशेषवत्पदसं-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्भस्यैव वेदत्वं वक्तव्यम्, न च मीमांसकमते पदेषु स्वतः क्रमोऽस्ति तेन प्रत्येकपदगोचरधीगतनियतक्रमारोपगतैव पदानां वेदतेति न वेदस्य नित्यत्वम्, पदेष्वानुपूर्वीविशेषारोपस्यानित्यत्वात्तद्घटितवेदस्यापि तदवश्यम्भावात्तदधीनाप्रामाण्यमपरिहार्यं स्यादित्याह। अवगतिगतमिति। पदावगतिगतमित्यर्थः। पूर्वापरत्वप्रतिनियमं नियतपूर्वापरीभावम्। इयं प्रतिभासमाना। वेदराशेः पदसन्दर्भस्य ॥ २४७ ॥

पुरुषमतिनिवेशो नास्ति वेदप्रमेये<br>
विषय इति यदीष्टा मानता स्वप्रयुक्ता ॥<br>
सदृशमिदमिदानीं कारणं मानतायां<br>
परमपुरुषसृष्टे वेदशास्त्रेऽप्यभीष्टम् ॥ २४८ ॥

उक्तविधया वेदस्यानित्यत्वेऽपि स्वप्रमेयधर्माधर्मादिगोचरमानान्तरानपेक्षत्वात्स्वगतानुपूर्व्यां पुरुषस्वातन्त्र्याभावादनपेक्षत्वमपौरुषेयत्वं चेति तत्प्रामाण्यस्य स्वतस्त्वसिद्धिः, उक्तं च, यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रतेत्याशयेन शङ्कते। पुरुषमतीति। कार्यस्यापि वेदस्य स्वतःप्रामाण्यप्रयोजकतया यदुक्तं स्वार्थप्रवृत्तमानान्तरानपेक्षत्वादि तत्तस्य ब्रह्मकार्यमतेऽपि तुल्यं तदस्य तन्मते तदप्रामाण्यापादनमसङ्गतमित्याह। सदृशमिदमिति। इदानीमविद्यादशायाम् २४८

न हि खलु मतिपूर्वा ब्रह्मणः सृष्टिरिष्टा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निगदितुरिव सृष्टिर्वेदविद्यासु नित्यम् ॥
भवति तु पुनरेषा तस्यनिश्वासकल्पा
श्रुतिवचनमपीदं वस्तु वक्ति स्फुटं नः ॥२४१॥

सदृशमित्येतदेवोपपादयति । न हीति । वेदविद्यासु सृष्टिरिति सम्बन्धः । ब्रह्मण इति पञ्चमी षष्ठी वा, द्वितीये ब्रह्मणो मतिपूर्वेति योजनीयम् । तदनिष्टत्वस्य वादिप्रसिद्धत्वं निपातद्वयार्थः । ब्रह्मणः सर्वज्ञतया वेदार्थाभिज्ञत्वात् तत्कृतावेदसृष्टिः कथं तन्मतिपूर्वा न भवेदित्याशङ्क्य तन्मते तस्य तत्सृष्टावप्रयोजकत्वात्सा न तत्पूर्विकेत्यत्र दृष्टान्तमाह । निगदितुरिति । यथा कस्य चिद्वेदार्थाभिज्ञस्याप्युपाध्यायस्य वेदवाक्योच्चारणं न तदर्थज्ञानाधीनं किं तु पूर्वमधिगतवेदस्मरणमात्राधीनं केवलपाठकेषु तथैव दर्शनादेवं ब्रह्मणोऽपि तदर्थज्ञानं विद्यमानमपि तत्सृष्टावप्रयोजकमित्यर्थः । नित्यं सर्वकल्पेषु । तदीयज्ञानन्तत्र तत्प्रयत्नोऽप्यनुपयुक्त इत्याशयेनाह । भवतीति अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद इत्यादिश्रुतिरुक्तार्थे मानमित्याह । श्रुतिवचनमिति । अनादिनिधना नित्या वागुत्सृष्टास्वयंभुवेत्यादिस्मृतिवचनमप्यर्थः ॥ २४१ ॥

अपि च पुरुषकर्मोद्भूतिकानीन्द्रियाणि
स्फुटमवगमयन्ति स्वंस्वमन्यानपेक्षम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयमिति हि दृष्टं तद्वदिष्टं च तस्मा-

दिह किमपि न चोद्यं वाच्यमेतद्भवद्भिः ॥२५०॥

पुरुषनिर्वर्तितत्वमात्रेण वेदस्य स्वतः प्रामाण्याभावेप-रमतेऽपि तदापत्तिरिति पूर्वमुक्तम्, इमिदानीं मीमांस-कं प्रति तस्य हेतोरिन्द्रियेषु व्यभिचरितत्वेनाभासत्वम-भिप्रेत्येन्द्रियवदेव वेदस्यापि स्वतः प्रामाण्यं दुर्निवा-रमित्याह । अपि चेति । अदृष्टद्वारा पुरुषकृतानि श्रोत्रादीनीन्द्रियाणि शब्दादिरूपं स्वस्वासाधारणविप-यमन्यमानानपेक्षं यथा स्यात्तथाऽवगमयन्तीति कार्य-वशादेव दृष्टं तथा तदिष्टम्, च भवताम्, ततश्च वेद-स्यापि तथा स्वत एव प्रामाण्योपपत्तेर्भवदीयचोद्या-योग इत्यर्थः ॥ २५० ॥

श्रुतिवचनमनेकं वक्ति तस्येक्षितृत्वं

मतिमदिति ततस्तन्नेष्यते कस्य हेतोः ॥

इति यदि मनुषे तन् मैव मंस्थाः कुतश्चेत्

सकलकरणहीनं ब्रह्म नः शास्ति शास्त्रम् ॥ २५१ ॥

तदैक्षत बहु स्यां प्रजायेय सोऽकामयत बहु स्या-मित्यादिश्रुतयो वीक्षणपूर्वकं ब्रह्मणो मानसृष्टिमाच-क्षाणा मानान्तरापेक्षां वेदसृष्टिं सूचयन्ति, मानं वि-नेक्षणानुपपत्तेरिति शङ्कते । श्रुतिवचनमिति । उदा-हृतश्रुतिषु मानाधीनेक्षणाश्रवणात्तन्न शङ्कनीयमित्या-ह । तन्मैवेति । तथापि तस्यानुपपत्त्या मानान्तरा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धीनमीक्षणमित्युक्तत्वात्कुतस्तस्मिन्निषेध इति शङ्कते। कुतश्चेदिति । न तस्य कार्यं करणं च विद्यते अचक्षुष्कमश्रोत्रमवागमनः अप्राणो ह्यमनाः शुभ्रः असङ्गो ह्ययं पुरुष इत्यादिशास्त्राद्ब्रह्मणः कार्यकरणराहित्यप्रतिपत्तेर्मानाधीनमीक्षणं तस्यायुक्तमित्याह । सकलेति ॥ २५१ ॥

चितिगतजडशक्तेराद्य इष्टो विवर्त-
श्चितिनिकटनिवेशाल्लब्धदीप्तिर्जडोऽपि ॥
श्रुतिशिरसि निषण्णैरीक्षणं कथ्यते त-
न्न तु परमपदस्यापीक्षणं बुद्धिवृत्तिः ॥ २५२॥

तर्हि तदैक्षतेत्यादिश्रुतिर्निरालम्बना स्यादित्याशङ्क्य साभासमायावृत्तिरेव तत्रेक्षणं विवक्षितं नास्मदादेरिव मानाधीना बुद्धिवृत्तिस्तस्य बुद्ध्यादिराहित्योक्तेरित्याह । चितिगतेति । मायावृत्तेर्ब्रह्मधर्मत्वं कथमिति वीक्षायामाह । चितिनिकटेति । चित्यध्यासादित्यर्थः ॥ २५२ ॥

ननु च डित्थडवित्थपदादिवत्
सकलमेव तु सामयिकं पदम् ॥
अनुमिमीमहि पूर्वनिदर्शना-
दनुमितिर्भवतीति किमद्भुतम् ॥ २५३ ॥

एवं वेदस्य ब्रह्मजत्वेऽपि स्वार्थगोचरमानान्तरानधीनत्वाद्ब्रह्मणस्तदीयस्वरानुपूर्व्यादौ स्वातन्त्र्याभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वांश्च निरपेक्षत्वापौरुषेयत्वाभ्यां स्वत एव प्रमाणं वेद इति श्रुत्वोपरते मीमांसके तदसहमानस्तार्किकः प्रत्यवतिष्ठते । ननु चेति । करचरणादिमत्पिण्डविशेषमुत्पन्नं दृष्ट्वा तद्व्यवहाराय तज्जनकादिना स्वबुद्धिरचितडित्थादिपदं तत्र सङ्केतितं तदभिधायकं दृष्टम्, ततश्च विवादपदं गोघटादिपदं केन चित्स्वार्थे सङ्केतितं पदत्वाड् डित्थादिपदवदित्यनुमानेन सर्वपदार्थसम्बन्धस्य मानान्तरापेक्षत्वसिद्धौ तादृशपदसंदर्भात्मकवेदस्यापि तदपेक्षा दुर्वारेति कथं तस्य निरपेक्षतालक्षणं प्रामाण्यमित्यर्थः । क्वाचित्कदर्शनमात्रेण कथमेतदनुमानमतिप्रसङ्गादित्याशङ्क्य व्यभिचारादर्शनादिदमनुमानमुक्तदृष्टान्तेन कस्य न भवेदित्याह । पूर्वनिदर्शनादिनि ॥ २५३ ॥

अनादिवृद्धव्यवहारलक्षणे
कथं प्रमाणे परिपन्थिनि स्थिते ॥
गवादिशब्दे समयोऽनुमास्यते
डवित्थशब्दादिवदेतदुच्यताम् ॥ २५४ ॥

डित्थादिपदार्थसम्बन्धस्यागन्तुकत्वमुक्तानुमाने उपाधिः, न च साधनव्यापकता, इदानीं व्यवह्रियमाणगवादिपदार्थसम्बन्धस्यैवानादिवृद्धव्यवहारगोचरत्वेन तस्यानादित्वात्, सर्गाद्यकालीनोऽपि गवादिपदार्थसम्बन्धव्यवहारस्ततः पूर्वकालीनतत्सम्बन्धानुस्मृ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिनिबन्धनो गवादिपदार्थसम्बन्धव्यवहारत्वादिदानींतनतद्व्यवहारवदित्यनुमानात्, ततः कृतयुगस्यादौ ब्रह्मपूतो महयशाः सर्वज्ञो धृतिमान्नृपिः पुनराजायते स्मरन्निती्त्यादिवचनात्सर्गादिभुवां हिरण्यगर्भादीनामीश्वरानुगृहीतानां कल्पान्तरीयपदार्थसम्बन्धानुसन्धानोपपत्तेश्च तत्सम्बन्धस्यानादित्वनिश्चयात्तद्विरोधात्तस्य सर्गकालेऽपि कृतकत्वं वक्तुमशक्यमित्याशयेनाह। अनादिवृद्धेति। वृद्धव्यवहारो लक्षणं लिङ्गं यस्य पदार्थसम्बन्धानादित्वानुमानस्य तत्तथोक्तम् ॥ २५४ ॥

सतः प्रमाणाभिमतेषु पञ्चसु
प्रमाणमक्षादिषु किं चिदाक्ष्यते ॥
नहीह सम्बन्द्धरि तेन तस्य वः
खपुष्पकल्पत्वमभावमानतः ॥ २५५ ॥

किं च सर्वपदानां तदर्थेषु सङ्केतकर्तरि मानाभावाच्च तदसिद्धिः, तथाहि, स न तावत्प्रत्यक्षेण सिद्ध्यति, अननुभवात्, इतरथा तद्विप्रतिपत्त्यनुपपत्तेः, नाप्यनुमानेन, तस्य सोपाधिकत्वेन दूषितत्वात्, उपमानं तु सादृश्यादिव्यवस्थितवस्तुविषयं तत्र न शङ्कनीयम्, नाप्यागमेन सर्वपदार्थसम्बन्धानां केन चित्सङ्केतितत्वप्रतिपादकवचनादर्शनात्, नाप्यर्थापत्त्या तेन विनानुपपद्यमानवस्तुनोऽभावात्, इदानींतनपदार्थसम्बन्धव्यवहारस्यानादिवृद्धव्यवहाराधीनताया उ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पपादितत्वात्, तस्माद्भावसाधकप्रमाणेष्वेकस्याप्यभावात्तत्सद्भावो दुर्लभः, प्रत्युत भावसाधकमानपञ्चकानुदयरूपाभावमानात्तदभाव एवेति निश्चीयत इत्याह। सत इति। भावस्येत्यर्थः। सप्तमी निर्धारणार्था, तेन मानपञ्चकानुदयेन, एतत्त्वभावमानत इत्येतद्विशेषणम्, तृतीयार्थे च तसिः॥ २५५॥

पुरोपलब्धो विषयो न दृश्यते
यदा प्रमाणैरिह भावगोचरैः॥
तदा तु तत्रानुपलब्धिकारणं
किमप्यभावादपरं हि मृग्यते॥ २५६॥

ननु रात्रौ विद्यमानान्यपि कानि चिद्वस्तूनि कथमपि नोपलभ्यन्ते, एवं दिवसेऽपि तारकादीनि, तद्वत्सतोऽपि सङ्केतयितुरनुपलम्भोपपत्तेस्तावता कथं तदभावसिद्धिरित्याशङ्क्य दृष्टान्ते पूर्वं पश्चाद्वोपलम्भेन तदभावायोगात्तदोपलम्भप्रतिबन्धकवशादेव तदनुपलम्भो युक्त इत्याह। पुरोपलब्ध इति। एतच्च पश्चादुपलभ्योपलक्षणम्, अनुपलब्धिकारणं तत्प्रयोजकम्, उपलब्धिप्रतिबन्धकमिति यावत्, किमपि दृष्टमदृष्टं वा॥ २५६॥

अत्यन्तानुपलब्धवस्तुनि पुनर्यः पञ्चकानुद्भव-
स्तस्याभावनिमित्तकः स न पुनस्तत्रापरं कारणम्॥
अन्विच्छन्ति मनीषिणो न हि शशेऽदृष्ट्वा विषाणास्तितां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रादर्शनकारणान्तरपरा हेत्वन्तरान्वेषिणः ॥ २५७॥

सर्वपदसङ्केतकर्तरि तु कदापि भावप्रमाणस्य कस्याप्यनुदयात्तदभावनिश्चयोऽवश्यंभावीति सदृष्टान्तमाह । अत्यन्तेति । तस्यात्यन्तानुपलब्धवस्तुनः समानपञ्चकानुद्भवः, स एव तत्रेति परामृश्यते, अदृष्टेति छेदः, तत्र शशे, अदर्शनस्य शृङ्गादर्शनस्य, कारणान्तरपरा अभावातिरेकिप्रयोजकार्थिनः सन्तस्तज्जिज्ञासवो न हीति सम्बन्धः ॥ २५७ ॥

विषमदुर्गमदेशसहस्रगः
कथमिवैष नरः समयक्रियाम् ॥
सकलशब्दतदर्थनिवेशिनीं
वद विधातुमलं स्वयमेकलः ॥ २५८ ॥

किं चादौ सङ्केतकर्त्रा तानितानि पदानि स्वमुखेनोच्चार्य श्रावयित्वा तेषां तत्तदर्थविशेषेषु स्वकृतसाङ्केतिकसम्बन्धो ज्ञापनीयः, न च विना शरीरमुच्चारणादि सम्भवति, न च सङ्केतकर्तृत्वादेव शरीरमपि तस्यानुमीयत इति वाच्यम्, तथापि नानाशरीरे मानाभावाद्दृष्टानुरोधेन तस्यैकमेव शरीरं भवद्भवेत्, न चैकेन शरीरेण सर्वासु शब्दव्यवहारभूमिष्वतीवोच्चनीचासु गिरिनदीसमुद्रादिभिर्दुर्गमासु युगपत्क्रमेण वा कश्चित्कथं गन्तुमलम्, अगच्छन्वा तत्तद्देशवासिनः स्वकृतं साङ्केतिकं सम्बन्धं ग्राहयेत्, तदग्रहे च ते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पां शाब्दव्यवहारो न स्यादित्यभिप्रेत्याह। विषमेति। नरदृष्टान्तानुमितस्य नरसाम्यमभिप्रेत्यैष नर इत्युक्तम्॥ २५८॥

अपि च किं चिदपि प्रतिपादकं
न हि यदा पदमस्ति जगन्मुखे॥
अनभिधाय पदं न तदा कथं
समयमेष करिष्यति शङ्करः॥ २५९॥

किं च लोके सङ्केतयिता श्रुतेन शब्दान्तरेण कं चिदर्थं निर्दिश्यायं डित्थ इति व्यवहर्तव्य इति सङ्केतं कुरुते, सर्गाद्यकालीनानां जनानां तु स्तनन्धयकल्पानामेकत्रापि पदे व्युत्पत्त्यभावात्तान्प्रति पदान्तरेणार्थविशेषनिर्देशायोगादज्ञाते तस्मिन्पदविशेषस्य सङ्केतोऽशक्यो ग्राहयितुमित्याह। अपि चेति। जगन्मुखे सर्गाद्यकाले। शङ्कर आनुमानिक ईश्वरः॥ २५९॥

अभिनयेन करिष्यति चेदयं
समयमेतदतीव हि दुर्घटम्॥
न हि पदार्थसहस्रविमिश्रिते
गवि तदाऽभिनयात् समयो भवेत्॥ २६०॥

नन्वव्युत्पन्नान्प्रति गोघटादिकमङ्गुल्यादिव्यापारविशेषरूपाभिनयेन निर्दिश्य तत्र गवादिपदानां सङ्केतं ग्राहयिष्यतीश्वर इति शङ्कामनूद्यापवदति। अभिनयेनेत्यादिना। हिशब्दसूचितं हेतुमाह। न हीति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गवादेर्नानाविधावयवगुणक्रियासामान्यादिभिः सङ्कीर्णत्वादभिनयेनाप्येकतरनिर्धारणायोगाद् गवादिपदानामर्थविशेषे सबन्धो दुर्बोधः, शब्दार्थविशेषयोरुपस्थितावपि तयोर्वाच्यवाचकभावरूपसम्बन्धविशेषोऽपि दुरवबोधः, तन्निरूपकाभावादिति भावः ॥ २६० ॥

अपि च लौकिकमानबलाश्रया-
दधिगते विषये समयो भवेत् ॥
अनुपलब्धसतत्त्वकदेवता-
प्रभृतिकार्थगतः समयः कुतः ॥ २६१ ॥

किं च शब्दानुगतेवस्तुनि शब्दसङ्केतस्य परस्पराश्रयापातेन ग्रहीतुमशक्यत्वान्मानान्तराधिगतेऽर्थे तद्ग्रहो वक्तव्यः, तलश्च धर्माधर्मस्वर्गनिरयदेवतादिपदार्थानांमानान्तरायोग्यत्वात्तेषु सङ्केतग्रहासम्भवात्तेषां पदानामबोधकत्वं स्यादित्याह । अपि च लौकिकेति । स्पष्टार्थान्यक्षराणि ॥ २६१ ॥

अपि च कर्तुरनुस्मरणं भवेद्
यदि चकार पुमान् समयं गिराम् ॥
न खलु कर्तृगबुद्धिबलं विना
व्यवहृतिर्भवति व्यवहर्तरि ॥ २६२ ॥

किं च सङ्केताधीनव्यवहारस्य तत्कर्तृस्मरणं व्यापकं दृष्टं गवादिशब्दार्थसम्बन्धव्यवहारे तु तदभावान्नायं सङ्केताधान इत्याह । अपि च कर्तुरिति । तस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापकत्वं विपक्षबाधकप्रदर्शनेनोपपादयति । न खल्विति । सङ्केतकर्तुराप्तत्वस्मरणं तदधीनव्यवहारस्य मूलम्, इतरथा प्रतारकादिकृतत्वाशङ्कया तदधीनव्यवहारो न स्यादित्यर्थः ॥ २६२ ॥

न खलु पाणिनिपिङ्गलसंज्ञया
व्यवहरन्ति तयोः स्मरणं विना ॥
पदपदार्थपरस्परसङ्गतिं
निरमिमीत ततो न जगद्गुरुः ॥ २६३ ॥
मतिमतां प्रवरो वृषभध्वजः
कणभुगादिमुनिप्रवरः प्रभुः ॥
ननु धरादिजगद्रचनाबला-
दनुमितोऽनवखण्डितशक्तिकः ॥ २६४ ॥

उक्तां व्याप्तिमुदाहरणनिष्ठतया विशदयति । न खल्विति । पाणिनिकृता वृद्धिरादैजित्याद्या, पिङ्गलकृता धी श्री स्त्रीमित्याद्या । ननु कार्यलिङ्गकानुमानादेव स्वतः सर्वज्ञः सर्वशक्तिरीश्वरः सिध्यति, स एव स्वेच्छया कायव्यूहं कृत्वोत्तममध्यमवृद्धभावं प्राप्य स्वप्रयुक्तपदेभ्यः स्वकृतसङ्केतानुसारेण व्यवहरति स्म, तत्कालीनास्तद्व्युत्पन्ना जनास्तद्व्यवहारदर्शनादेव तस्मिन्प्रवर्तकज्ञानमनुमाय तत्तद्विषयेषु व्यवह्रियमाणवस्तुषु सामान्यतो विशेषतश्चावापोद्वापाभ्यां पदसम्बन्धं ज्ञात्वा स्वयमपि तथैव व्यवहरन्तोऽन्येष्वपि तद्व्यवहारं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवर्तयन्तीति कल्पयतां पण्डितानां सङ्केतकर्तुरनुस्मरणमिहाप्यस्तीति शङ्कां निराकुर्वन्प्रकृतं निगमयति सार्द्धेन। पदपदार्थेत्यादिना। इदमत्राकूतम्, न तावत्कार्यलिङ्गकानुमानात्सर्वज्ञसिद्धिः, पक्षीकृताङ्कुरादिमात्रगोचरज्ञानवतस्ततः सिद्धावपि तस्य सर्वगोचरज्ञानासिद्धेः, क्षितिगिरिसागरादीनां कार्यत्वमेवासिद्धं कुतस्तत्कर्तृसिद्धिः, न च तेषां सावयवत्वेन कार्यत्वमनुमीयत इति वाच्यम्, अवयवारब्धत्वरूपसावयवत्वस्याप्यसिद्धेः, नापि मध्यमपरिमाणत्वं तत्कार्यत्वे लिङ्गम्, महत्त्वस्येवाप्रयोजकत्वात्, नन्वङ्कुरादिकार्यानुमितं ज्ञानं लाघवादेकं नित्यं च सिध्यद्व विनिगमकाभावात्सर्वगोचरं सिध्यतीति तद्वतः सर्वज्ञत्वसिद्धिरिति चेन्न, लाघवादेव कृतिमात्रवतस्तत्कर्तृत्वसम्भवेन तद्गोचरज्ञानस्यैवासिद्धिप्रसङ्गात्, न च ज्ञानेच्छयोरपि प्रत्येकं कारणत्वेन सिद्धौ तयोर्नित्यत्वसर्वविषयत्वादेरपि लाघवादेव सिद्धेर्नित्यकृत्याश्रयस्य सर्वज्ञत्वादिसिद्धिरिति वाच्यम्, तथा सति शरीरेन्द्रियादेरपि प्रत्येकं कारणत्वेन सिद्धौ तस्यापि नित्यत्वादिप्रसङ्गात्, तस्याप्यङ्गीकारे च न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेर्भोगायतनस्यैव शरीरत्वाच्च तद्वत्त ईश्वरस्य संसारोऽपरिहार्यः स्यात्, न तस्य कार्यं करणं च विद्यते अकायमव्रणमित्यादिश्रुतिविरोधाच्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेश्वरस्य वास्तवशरीराद्यङ्गीकारः कर्तुं शक्यः, शरीरादेस्तत्त्वावच्छेदेनानित्यत्वावधारणात्तद्विरोधान्नित्यशरीराद्यनुमानमशक्यमिति चेन्न, तर्हि ज्ञानेच्छाकृतीनामपि लाघवेन ज्ञानत्वाद्यवच्छेदेनानित्यत्वावधारणात्तद्विरोधात्तन्नित्यत्वमप्यनुमातुं दुर्लभमिति कुतः सर्वज्ञत्वादिसिद्धिः, सुप्तप्रबुद्धन्यायेन कल्पान्तरीयशब्दार्थसम्बन्धव्यवहारप्रवर्तकेषु हिरण्यगर्भादिषु श्रुतिस्मृत्याद्यवगतेषु सत्सु नेश्वरस्य कायव्यूहादिकल्पनया तत्प्रवर्तकत्वकल्पनमुचितम् , तत्कल्पनेऽपि त्वदुक्तरीत्या कल्पान्तरीयशब्दार्थसम्बन्धव्यवहारप्रवर्तकत्वमेवेश्वरस्य कल्प्यतां नापूर्वसङ्केतादिकरणमपि, कल्पनागौरवापातात्, तस्मात्सर्वपदार्थसम्बन्धसङ्केतकर्तरि मानाभावान्मोहमात्रादेव तदभ्युपगम इत्यानुमानिकेश्वरे परपरिकल्पितं जगद्गुरुत्वादि वर्णितरीत्या दुर्घटमित्यभिप्रायेण जगद्गुरुरित्यादीनि तद्विशेषणान्यनूदितानि ॥ २६३ ॥ ॥ २६४ ॥

अपि तु वैदिकवाङ्मनसातिगा-
नुदितलुप्तचिदेकरसात् प्रभोः ॥
अभवदानकदुन्दुभिनन्दना-
दमतिपूर्वमिदं सकलं जगत् ॥ २६५ ॥

सिद्धान्तेऽपि नामरूपात्मकप्रपञ्चस्येश्वरजन्यत्वोपगमात्कथं तन्निराकरणमित्याशङ्क्यास्माभिः कूटस्थसन्नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दानन्दैकरसस्य परमात्मनः शास्त्रवशान्मायया विचित्र-जगदभिव्यक्तिहेतुत्वाङ्गीकारात्तेन मानान्तरेणार्थमुपलभ्य रचितत्वाभावाद्वेदस्यापौरुषेयतया स्वतःप्रामाण्यसिद्धिरित्याशयेनाह । अपि त्विति । वैदिकश्चासौ वाङ्मनसातिगश्चासानुवदितालुप्तचिदेकरसश्च तस्मादिति विग्रहः । तस्यैवावतारित्वप्रख्यापनायानकन्दुदुभिनन्दनादित्युक्तम् । तस्य सर्वज्ञत्वादि यद्यपि श्रुत्यादिसिद्धमस्ति, तथापि वेदाद्यभिव्यक्तौ न तत्प्रयोजकमित्यमतिपूर्वमित्युक्तम् ॥ २६५ ॥

ननु लौकिकवचसां नरमतिपूर्वकरचना
परिदृश्यत इति वैदिकवचसामनुमिनुमः ॥
वचनं श्रुतिशिरसामपि नरधीकृतरचनं
वचनत्वत इव लौकिकजननिर्मितवचनम् ॥ २६६ ॥

कार्यलिङ्गकानुमानात्पराभिमतसर्वज्ञेश्वरासिद्धावप्युपदेशलिङ्गकानुमानात्तत्सिद्धिरिति वदंस्तदङ्गभूतां व्याप्तिं तावद्दर्शयति । नन्वित्यादिना । वैदिकवचसां नरमतिपूर्वकरचनामनुमिनुम इति विपरिणतानुषङ्गः । इदानीं तदनुमानमाह । वचनमित्यादिना । श्रुतिशिरसामिति वेदमात्रस्योपलक्षणम्, वैदिकवचसामित्युपक्रमादिवशब्दोऽन्ते योजनीयः ॥ २६६ ॥

न च मादृशजनधीकृतरचनं श्रुतिवचनं
भवितुं क्षममिति वैदिकरचनावलम्बिपतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुमीयत इह शूलभृदिति चेदिदमशुभं
न हि वैदिकवचसामभिभवनास्पदमनुमा ॥२६७॥

तथाप्यसर्वज्ञमतिपूर्वकत्वमादायार्थान्तरतया न सर्वज्ञेश्वरसिद्धिरित्याशङ्क्य वेदार्थस्य भूतभविष्यदादिरूपस्यापरिमितस्य धर्माधर्मादिरूपस्य च स्वतः सर्वज्ञत्वं विना मानान्तरैर्ज्ञातुमशक्यत्वात्तदधीनजीवधीपूर्वकरचनाया वेदे बाधाद्वाक्यत्वहेतोः पक्षधर्मताबलात्स्वतः सर्वज्ञ एव वेदरचनाकर्तृत्वेन सिध्यतीत्याह । न चमादृशेति । इतिर्हेतौ । अस्मदाद्यशक्यरचनस्यापि वेदस्यानादित्वसम्भवात्कर्त्रपेक्षैव नेत्याशङ्क्याप्तप्रणीतत्वाभावे तदप्रामाण्यशङ्काया दुर्निवारत्वात् तत्प्रामाण्यायाप्तरचितत्वं वक्तव्यमभिप्रेत्याह । वैदिकेति । वैदिकवाक्यरचनासामर्थ्यव्याजेन स्वतः सर्वज्ञादिरूप ईश्वरोऽनुमीयत इत्यर्थः । दूषयति । इदमशुभमिति । अनुमितेश्वरज्ञानस्य मूलाभावेऽप्यनादित्वात्प्रामाण्यं यथोपेयते तद्वत्तस्यापि पूर्वोक्तविधयाऽपौरुषेयस्यानादितयाऽनाप्तप्रणीतत्वादिशङ्काशून्यस्य स्वतःप्रमाणत्वोपपत्तेः कृतं तत्कर्तृसर्वज्ञत्वादि साधयितुम् अलमित्यादिकल्पनयेत्यर्थः । वेदस्यापौरुषेयत्वप्रतिपादकश्रुतिविरुद्धं चेदनुमानं स्वयमेवाप्रमाणं सद्वेदपौरुषेयत्वादि न साधयितुमलमित्याह । न हीति ॥ २६७ ॥

ब्रह्म स्वयम्भु परमात्मपदस्य वेदो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःश्वासकल्प इति चापरमामनन्ति ॥
वाक्यं तदस्य मतिपूर्वकताऽनुमानं
सद्यो निरस्यति न चेदपबाधितं स्यात् ॥२६८॥

कासौ श्रुतिर्वेदस्यापौरुषेयत्वप्रतिपादिकेति वीक्षायामाह । ब्रह्मेति । वेद इत्यर्थः । परमेष्ठिब्रह्मण इति पूर्ववाक्ये हिरण्यगर्भस्यापि वेदादेव विद्याप्राप्तिमभिधाय वेदस्यापि लौकिकवाक्यवन्मानान्तराधीनार्थत्वशङ्कानिरासाय ब्रह्म स्वयम्भु न केन चिद्रचितमिति श्रुतिः स्पष्टमेव वेदापौरुषेयत्वमाह । तथाऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इत्यादिश्रुतिरप्युपक्रमोपसंहाराभ्यां पुरुषनिःश्वासवद्वेदानां मतिपूर्वकतां निराकुर्वती तेषां मतिपूर्वकत्वानुमानं बाधते, तद्बाधे स्वप्रामाण्यायोगादित्यर्थः ॥ २६८ ॥

सृजति रक्षति संहरति प्रभुः
सकलमेव निविश्य नियच्छति ॥
अमतिपूर्वमिति श्रुतिशासने
वद कथं मतिपूर्वकताऽनुमा ॥ २६९ ॥

न केवलमृग्वेदादिरूपशब्दप्रपञ्चस्यैवामतिपूर्विका सृष्टिः, किं तु इष्टं हुतं प्राशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानीति श्रुतेः सर्वस्यैव कार्यजातस्य जन्मादयः सर्वे विकारा निःश्वासवदमतिपूर्वका एव, ततश्च परेषां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यलिङ्गकानुमानमपि श्रुतिविरुद्धार्थत्वादप्रमाणमित्याह । सृजतीत्यादिना । निविश्य चिदाभासद्वारा सम्बन्धं प्राप्य । नियच्छति नियमयति ॥ २६९ ॥

आप्तोक्तत्वप्रत्यये मानभावो
वेदस्यास्य ज्ञायते मानभावे ॥
विज्ञाते सत्याप्तपूर्वत्वसिद्धि-
रित्यन्योन्यापाश्रयत्वप्रसङ्गः ॥ २७० ॥

ननु मन्त्रायुर्वेदवत्तत्प्रामाण्यमाप्तप्रामाण्यादित्युक्तेः कथमाप्तोक्तत्वमन्तरेण वेदप्रामाण्यमित्याशङ्क्य किमाप्तोक्तत्वं तस्यानुमानिकं तद्विधायकश्रुतिगम्यं वा, नाद्यः, तस्य निरस्तत्वादित्यभिप्रेत्य द्वितीये त्वप्रमाणतया शङ्कितश्रुत्या तदसिद्धेस्तत्प्रामाण्यमादौ ज्ञातव्यम् , ततश्च परस्पराश्रयापातादेकमपि न सिध्येदित्याह । आप्तोक्तत्वेति । स्पष्टोऽर्थः ॥ २७० ॥

तस्मादेषा स्वप्रयुक्तप्रमाण-
भावज्ञाना त्रिदविद्याभ्युपेया ॥
प्रामाण्यं स्यात् स्वप्रयुक्तं च तस्या
वस्तुस्थित्या ज्ञप्तिवत्नान्यतस्तत् २७१ ॥

वेदस्याप्तप्रणीतत्वाभावे तदुत्थविद्यायाः कथं प्रामाण्यसिद्धिरित्याशङ्क्य किं सिद्धिशब्दोदिता तज्ज्ञप्तिः पर्यनुयुज्यते तत्सत्ता वा, नाद्यः, वेदस्यापौरुषेयत्वसाधने नानाप्तप्रणीतत्वादिनिबन्धनाप्रामाण्यशङ्कानवकाशा -

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्, तदुत्पन्ना विद्या यदा गृह्यते तदा प्रमाणत्वेनैव गृह्यत इति ज्ञानस्य प्रामाण्यज्ञप्तौ स्वतस्त्वसिद्धेरित्याशयेनाह। तस्मादेषेति। न द्वितीयः, अपौरुषेयवेदस्याप्रामाण्यप्रयोजकाभावात्तदुत्थज्ञानप्रामाण्यस्य ज्ञानजनकमात्रप्रयोज्यत्वेन हेत्वन्तरानपेक्षत्वादुत्पत्तावपि स्वतस्त्वसिद्धेरिति तज्ज्ञप्तिदृष्टान्तेनाह। प्रामाण्यमिति। वस्तुस्थित्या वस्तुस्वभावेन, एतदज्ञानविजृम्भितं तत्प्रामाण्यस्य परतस्त्वकल्पनमिति भावः॥२७१॥

ज्ञप्त्युत्पत्त्योर्यद्वदेवं प्रवृत्ता-
वस्या युक्ता मानता स्वप्रयुक्ता॥
वेदोत्थाया बुद्धिवृत्तेर्न हीय-
मुत्पद्यान्यत् संविदे काङ्क्षतीति॥ २७२॥

एवं वेदोत्थप्रमाया उत्पत्तिज्ञप्त्योः स्वतस्त्वमुक्त्वा तद्वदेव चैतन्याभिव्यक्तिरूपफलेऽपि हेत्वन्तरानपेक्षत्वलक्षणं, स्वतस्त्वमाह। ज्ञप्त्युत्पत्त्योरिति। प्रवृत्तौ फलजन्मनि। विद्योत्पत्तिनान्तरीयकतया तत्फलसिद्धेस्तत्रान्यापेक्षा न घटत इत्याह। न हीति। संविदे अभिव्यक्तचिते॥ २७२।

विश्वं विष्णोरुत्थितं नामरूपं
निःश्वासादिप्रख्यमित्याह वेदः॥
यत्तत्तथ्यं वर्त्मना वर्णितेन
तस्मान्मिथ्या पौरुषेयानुमानम्॥ २७३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु वेदपौरुषेयत्वानुमानविरोधेन तन्निःश्वसितत्वादिश्रुतिरेवान्यथानीयतामित्याशङ्क्य निरपेक्षत्वे सत्युत्तरभावित्वाच्छ्रुतेः प्रबलत्वाद्वर्णितन्यायेन वेदस्य पुरुषमतिपूर्वकत्वासंभवाच्च तदनुमानस्यैवाभासत्वमुपेयमित्युक्तानुवादपूर्वकं निगमयति । विश्वमिति । यदाह वेदस्तत्तथ्यमिति सम्बन्धः ॥ २७३ ॥

परिणामविवर्त्तयोरतः
परिकल्पप्तावपि वेदगोचरः ॥
न च चोद्यलवोऽपि विद्यते
कथितेनैव पथाऽनपेक्षतः ॥ २७४ ॥

एवं वाक्यत्वलिङ्गकानुमानं निराकृत्य वेदस्य ब्रह्मपरिणामत्वे तद्विवर्त्तत्वे वा पौरुषेयत्वेनाऽनपेक्षत्वक्षतिरिति चोद्यस्यापि बुद्धिपूर्वरचितत्वाभावादिनोक्तं परिहारं निगमयति । परिणामेति । अत इत्येतद्विवृणोति । कथितेनेति ॥ २७४ ॥

उपाधिमौपाधिकमान्तरं चि-
दाभासनं चित्प्रतिबिम्बकं च ॥
चिद्बिम्बमेवं चतुरः पदार्थान्
विविच्य जानीहि तदर्थभाजः ॥ २७५ ॥

एवं तत्त्वंपदलक्ष्यशुद्धवस्तुप्रदर्शनाय नामरूपात्मकप्रपञ्चस्य ब्रह्मविवर्त्तत्वमुक्त्वा तत्प्रसङ्गागतां वेदपौरुषेयत्वशङ्कां निराकृत्येदानीं तत्त्वंपदवाच्ययोर्हेयो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादेयविभागप्रदर्शनाय पदद्वयवाच्यार्थान्निर्दिशति द्वयेन । उपाधिमित्यादिना । चिदाभासस्य सत्यत्वं स्फटिकलौहित्यवदुपाधेर्बहिर्भावञ्च व्यावर्त्तयितुमौपाधिकमान्तरमिति विशेषणद्वयम् । तदर्थभाज इत्यत्रार्थशब्दो भावप्रधानः, तत्पदवाच्यत्वलक्ष्यत्वोपेतानित्यर्थः ॥ २७५ ॥

तथा त्वमर्थेऽपि चतुष्टयन्तद्
विवेचनीयं निपुणेन भूत्वा ॥
मतिश्चिदाभासनमेवमस्यां
बिम्बन्तदीयं प्रतिबिम्बकं च ॥ २७६ ॥

यथा तत्पदार्थचातुर्विध्यं तथा त्वमर्थेऽपीत्यर्थः । तदुपाध्यादि रूपम् । विवेचनीयमित्युक्तं विशदयति । मतिरित्यादिना । मतिरन्तःकरणम् ॥ २७६ ॥

उपाधिरज्ञानमनादिसिद्ध-
मस्मिंश्चिदाभासनमीश्वरत्वम् ॥
तदन्विता चित् प्रतिबिम्बकं स्या-
दुदीर्यते शुद्धचिदेव बिम्बम् ॥ २७७ ॥

तत्पदवाच्यत्वेनोक्तोपाध्यादिचतुष्टयस्वरूपं विशेषतो दर्शयति । उपाधिरिति । अज्ञानगतचित्प्रतिबिम्ब एवेश्वर इति मतेनाज्ञानरूपोपाधेरपि तत्पदवाच्यताभिमता, चित्प्रतिबिम्बस्याज्ञानसंसर्गयुक्तजगत्कारणत्वमीश्वरत्वमित्युच्यते, तच्च चित्प्रतिबिम्बे चि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दाभासव्यवहारालम्बनम्, तस्यौपाधिकत्वेन मिथ्यात्वात्, उक्ताभासान्विता च चितिः स्वप्राधान्येन चित्प्रतिबिम्बमिति कथ्यते, वस्तुत उपाधिसंसर्गादिरहिता शुद्धचिदेव बिम्बमित्युच्यत इत्यर्थः ॥ २७७ ॥

उपाधिरन्तःकरणं त्वमर्थे
जीवत्वमाभासनमत्र तद्वत् ॥
तदन्विता चित् प्रतिबिम्बमेव-
मनन्वितां तामिह बिम्बमाहुः ॥ २७८ ॥

त्वंपदवाच्यमप्युपाध्यादिचतुष्टयस्वरूपं विशेषेण दर्शयति। उपाधिरन्तःकरणमिति। प्रमातृत्वादिदशायामेव त्वमित्यभिलापदर्शनात्तस्य चान्तःकरणोपाधिकत्वात्तदपि त्वंपदवाच्यमध्यपातीति भावः। जीवत्वं लिङ्गोपाधिकं कल्पितसंसारित्वं तस्य स्वरूपेणमिथ्यात्वादाभासत्वम्, तद्वत् तत्पदवाच्यनिविष्टेश्वरत्ववत्। तदन्वितेत्याद्युक्तार्थम् ॥ २७८ ॥

उपाधिना सार्द्धमुपाधिजन्य-
मौपाधिकं सर्वमवेहि मिथ्या ॥
भागं मृषा चित्प्रतिबिम्बकेऽपि
बिम्बं पुनः सत्यमशेषमेव ॥ २७९ ॥

एवं पदद्वये वाच्यार्थविभागमुक्त्वा तत्र मिथ्याभूतमर्थं विहाय सत्यभूतेऽर्थे पदद्वयञ्जहदजहल्लक्षणया पर्यवस्यतीत्यभिप्रेत्य तद्गतसत्यमिथ्याविभागमाह। उ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाधिनेति । अद्वितीयासङ्गप्रकाशचिदात्मनि वास्तवाज्ञानासम्भवात्तत्तावन्मिथ्या, एवं तत्कार्यमन्तःकरणं तदुभयोपाधिकमीश्वरत्वञ्जीवत्वं चेत्येतत्सर्वमज्ञानाधीनसत्ताकत्वात्स्वरूपतो मिथ्येति निर्द्धार्यैत्यर्थः । चित्प्रतिबिम्बे ततो विशेषमाह । भागमिति। चित एव चिदाभासविशिष्टतया चित्प्रतिबिम्बपदाभिलप्यत्वात्तत्र विशेषणांशमेवाज्ञानं मिथ्येत्यवेहीत्यनुषङ्गः। बिम्बस्वरूपे तु न भागस्यापि मृषात्वं तस्य निर्भागशुद्धचिन्मात्रत्वात्. प्रतिबिम्बगतसत्यचिद्भागस्यापि तन्मात्रत्वात्तत्स्वरूपमशेषं सत्यमेवावेहीत्याह । बिम्बमिति। एवं च तत्त्वंपदाभ्यां मिथ्याभूतमर्थं विहाय सत्यभूतशुद्धचिन्मात्रमेकदेशलक्षणयोपादाय सामानाधिकरण्यबलेन तदभेदं प्रतिपादयत्तद्वाक्यमखण्डार्थमिति भावः ॥ २७९ ॥

> अप्पात्रमप्पात्रगतत्वमेव-
> मप्पात्रगोऽप्पात्रगताद्बहिश्च ॥
> दिवाकरो दिव्यवतिष्ठमानो
> न शक्यतेऽपोहितुमिद्धतेजाः ॥ २८० ॥

तत्त्वंपदवाच्ययोरुक्तचातुर्विध्यमलौकिकत्वादसम्भवीति शङ्कां निराकुर्वन्नुपाध्यादिचतुष्टयं लोकेऽपि प्रसिद्धमित्याह । अप्पात्रमिति । सजलं शरावादीत्यर्थः । अप्पात्रगतत्वं प्रतिबिम्बे कल्पितधर्मजातोपलक्षणा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थम्। तदन्वयी दिवाकरप्रतिबिम्बोऽप्यात्रगोऽप्यात्र-गताद्बहिस्तदुपाधितद्धर्म संसर्गरहितः, तत्र हेतुर्दिवि आकाशेऽवतिष्ठमानः यथावत्प्रकाशमानः, तत्रापि हेतुरिद्धतेजा इति, तस्याप्यात्रगतत्वादिकल्पितधर्मजातस्याभासपदवेदनीयस्य मिथ्यात्वेन हेयत्वेऽपि स तु स्वरूपेण वस्तुभूतो न हेय इत्यर्थः ॥ २८० ॥

पुरं पुरस्थत्वमथो पुरस्थं
पुराद्बहिः शुद्धमवस्थितञ्च ॥
तथा परं ब्रह्म सुसूक्ष्मयाऽपि
धिया निराकर्त्तुमशक्यमेव ॥ २८१ ॥

ननु दृष्टत्वादेव दिवाकरे भवतूक्तो विभागः, न तु परमात्मनि, तथा दर्शनाभावादित्याशङ्क्य यथा ह्ययं ज्योतिरात्मा विवस्वान् एक एव हि भूतात्मा भूते-भूते व्यवस्थित इत्यादिशास्त्राद्बिम्बप्रतिबिम्बादिदृष्टान्तेनात्मैकत्वप्रतिपादनादुक्तप्रकारेण तदुपपादनीयं न त्वन्यथा कर्तुं शक्यमित्याह। पुरमित्यादिना। अज्ञानमन्तःकरणं च पुरम्, पुरस्थत्वं चिदाभासः, पुरस्थं चित्प्रतिबिम्बम्, तथा पुराद्बहिरवस्थितमतः शुद्धचिद्बिम्बरूपं परं ब्रह्म चोक्तविधया निराकर्तुमशक्यमित्यर्थः ॥ २८१ ॥

न स्थानतोऽप्यस्ति परस्य तस्माद्
विशेषयोगः परमार्थरूपः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वतः पुनर्दूरनिरस्तमेव
परस्य तत्त्वस्य विशेषवत्त्वम् ॥ २८२ ॥

ननूक्तविभागाङ्गीकारे ब्रह्मणो दिवाकरस्येव सद्वय-त्वं सविशेषत्वं च स्यादित्याशङ्क्य तत्रोक्तविभागस्या-निर्वचनीयाज्ञानमूलकत्वेन मिथ्यात्वात्तदपोहेनैव म-हावाक्यप्रमिते शुद्धबिम्बस्वरूपेऽखण्डचिदेकरसे नो-पाधितोऽपि विशेषः सम्भावितो दूरस्थ एव स्वाभाविको विशेष इति परिहरन्नुपपादितं निगमयति । न स्थान-त इति । तस्मादित्यादौ योज्यम् ॥ २८२ ॥

श्रुतेश्च तात्पर्यमखण्डरूपे
परे पुरस्तादुपवर्णितं च ॥
ततोऽपि तस्याद्वयरूपतोऽन्य-
द्रूपान्तरं कल्पयितुं न शक्यम् ॥ २८३ ॥

किं च समन्वयाध्याय एव सकलवेदान्तानामद्वि-तीयाखण्डैकरसे ब्रह्मणि तात्पर्यस्य न्यायतः प्रतिपाद-नात्तद्विरुद्धं वास्तवं सद्वयत्वादिकं तत्र न शङ्कनीयमि-त्याह । श्रुतेश्चेति । रूपान्तरं चेतनमचेतनं च ॥२८३॥

भेदश्रुतिस्त्वन्यपरा समस्ता
समस्तवेदेषु न तत्पराऽसौ ॥
अतत्परा तत्परवेदवाक्यै-
र्विरुद्धमाना गुणवाद एव ॥ २८४ ॥

ब्रह्मणो जगत्कारणत्वनियन्तृत्वादिप्रतिपादकभेद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिविरोधाद्वैपरीत्यं किं न स्यादित्याशङ्क्य तद्दौर्बल्ये हेतुं तावदाह । भेदश्रुतिरिति । अरूपदेव हि तत्प्रधानत्वादिति सूत्रकारेणैव ब्रह्मणो निर्विशेषत्वस्याभेदश्रुतीनां तत्परत्वस्य च निर्धारितत्वाद् भेदस्यान्यतः सिद्धत्वादपुरुषार्थत्वान्निन्दितत्वात्तत्रोपक्रमादितात्पर्यलिङ्गाभावाच्च तच्छ्रुतिरतत्परेत्यर्थः । कल्पितत्वमाह । अतत्परेति । न विधौ परः शब्दार्थ इति न्यायेन तत्परश्रुतेरन्यथा नयनायोगात्तद्विरुद्धाऽतत्परतया दुर्बला भेदश्रुतिरेव लक्षणया ब्रह्मप्रशंसापरा कल्पनीयेत्यर्थः ॥ २८४ ॥

न ह्यर्थवादा विधिभिर्विरुद्धा
विध्यर्थसङ्कोचकरा भवन्ति ॥
किं तु प्रधानानुगुणं यदेषा-
मालम्बनं तत् खलु कल्पनीयम् ॥ २८५ ॥

किं चाभेदश्रुतेः स्वार्थपरत्वेन प्रधानत्वात्तत्सन्निधिपठितभेदश्रुतिस्तद्गुणभूता न तद्बाधिका किं तु तदनुगुणतया सा नेतव्येति वक्तुं दृष्टान्तं तावदाह । न ह्यर्थवादा इति । तर्हि तेषां निरालम्बनत्वं तदपि नेत्याह । किं त्वित्यादिना । प्रधानानुगुणं विधेयप्रशंसारूपम् ॥ २८५ ॥

यथा ह्यजक्षीरविधेः समीपे
यज्जर्तिलादेः परिकीर्तनं तत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रधानसङ्कोचभयादपास्य
स्वमर्थमासीद्‌ गुणवाद एव ॥ २८६ ॥

प्रधानविरोध्यर्थवाद एव नास्ति यो दृष्टान्तो भवेदित्याशङ्क्य तमुदाहृत्य तत्रोक्तमर्थं दर्शयति । यथा हीति । जर्तिलयवाग्वा जुहुयाद्‌ गवीधुग्यवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानित्यनेन प्राणिहिंसारहिततयारण्यतिलादिद्रव्यकोऽपि होमः प्रशस्त इत्युक्त्वा, अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति तन्निन्दापूर्वकमजक्षीरेण जुहोतीति विशिष्टहोमविधानात्तत्परतयेदं सर्वमेकं वाक्यम् , तत्र यद्यर्थवादगतजर्तिलादिद्रव्यं विधेयं स्यात्तदा प्रधानवाक्यविहिताजक्षीरस्य विकल्पापत्त्या तद्विध्यर्थसङ्कोचः स्यात् , तदयुक्तं गुणानुरोधेन प्रधानसङ्कोचायोगात् , तस्मात्सर्वदोषरहिततयाजक्षीरहोमः प्रशस्त इत्येवं तत्स्तुतिं जर्तिलेत्याद्यर्थवादो लक्षणया बोधयतीत्यर्थः ॥ २८६ ॥

एवं सतीहापि विरुध्यमानं
वचो यदद्वैतपरैर्वचोभिः ॥
तदस्तु गौणं यदि वा परस्य
मायाप्रसूतद्वयवादि मुख्यम् ॥ २८७ ॥

उक्तदृष्टान्ते प्रधानानुरोधेनार्थवादस्यान्यथा नयने सतीहाप्यद्वैतब्रह्मप्रकरणे पठ्यमानसृष्ट्यादिवादार्थवादोऽपि प्रधानाविरोधाय लक्षणया ब्रह्मप्रशंसापरो नेय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्याह । एवं सतीति । गौणं गुणकीर्तनपरं स्तावकमिति यावत् । प्रकारान्तरेण तदविरोधमाह । यदि वेति । परस्य मायातत्प्रसूतद्वयवादित्वं सन् मुख्यमस्त्वित्यर्थः ॥ २८७ ॥

भेदश्रुतिः कल्पित मेव भेद-
मालम्ब्य मुख्यार्थवती भवित्री ॥
अतत्परा तत्परवाक्यभङ्ग-
स्त्वितोऽन्यथायाति विना निमित्तम् ॥ २८८ ॥

सृष्ट्यादिवाक्यं हि इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिना समभिव्याहारान्मायिकं सृष्ट्यादि बोधयन्निषेध्यसमर्पणेन निषेधवाक्यशेषभूतमिति तदीयमुख्यार्थस्वीकारेऽपि न वास्तवाद्वैतविरोधिता तस्येति चतुर्थचरणार्थमेव विशदयति । भेदश्रुतिरिति । सृष्ट्यादिवाक्यस्य मायिकद्वैतविषयत्वे कथं तत्त्वावेदनरूपं प्रामाण्यम्, तदभावे वा कथं तत्त्वावेदकब्रह्मवाक्येनैकवाक्यतेत्याशङ्क्य तस्य निष्प्रयोजने स्वार्थे तात्पर्याभावान्निषेध्यसमर्पणेन निषेधवाक्यैकताद्वारेण तात्त्विकाद्वयब्रह्मपरत्वात्तत्र तत्त्वावेदनप्रामाण्योपपत्तिरित्याशयेनाह । अतत्परेति । किमित्येवं प्रनाड्या सृष्ट्यादिवाक्यस्याद्वितीयब्रह्मणि तात्पर्यं कल्प्यते साक्षात्स्वार्थ एव तत्किं न स्यादित्याशङ्क्य तथा सति शेषिविरोधः स्यात्, स चान्याय्यः न प्रधानाद्गुणो यत इति स्थि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेरित्यभिप्रेत्याह । तत्परवाक्येति । आयाति आपते-त् । भेदश्रुतेरभेदश्रुतिवदुपक्रमोपसंहारैकरूप्यादिलि-ङ्गाभावात्तस्यास्तत्परत्वं निर्निमित्तम्, अतत्परश्रुतिवि-रोधात्तत्परश्रुतिभङ्गोऽपि निर्निमित्त इत्याशयेन विना निमित्तमित्युक्तम् ॥ २८८ ॥

यदपि किं चिदुपासननिष्ठिताद्

वचनतः प्रतिभाति परात्मनः ॥

सकलगन्धरसादिमयं वपु-

स्तदपि कल्पितभेदसमाश्रयम् ॥ २८९ ॥

एवमद्वैतप्रकरणगतभेदश्रुतेरतत्परतया मायिकद्वैत-विषयत्वेन वा तदविरोधं तत्पराद्वैतश्रुतेरुपपाद्योपा-सनाप्रकरणगतभेदश्रुतेरप्यतत्परत्वात्कर्मकाण्डवन्मायि-कविषयत्वं वदंस्तद्विरोधोऽपि नेत्यभिप्रेत्याह । यद-पीति । उपासनाप्रकरणपठितमप्युपासनां विधाय म-नोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्यादिनास्य-समर्पणात्तद्वाक्यमुपास्तिविधिपरं न वस्तुपरम्, उपा-सनं च वाचं धेनुमुपासीतेत्यादाविवारोपितोपास्यरू-पमादायाप्युपपद्यत इति निर्गुणश्रुतिबलादुपेयमिति न ततोऽपि वस्तुतः सविशेषत्वमित्यर्थः ॥ २८९ ॥

न खलु निर्गुणवस्तुपरं वचः

सगुणवाक्यविरोधनिमित्ततः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वविषयादपसारयितुं बलाः-
दतिबलिष्ठपदान्वयमिष्यते ॥ २९० ॥

ननु सगुणवाक्यबलान्निर्गुणवाक्यमेव प्रशंसापरतया प्राकृतगुणाभावविषयतया वाऽन्यथा नीयतामित्याशङ्क्य सगुणवाक्यानामुक्तविधयान्यपरत्वेन दौर्बल्यान्निर्गुणवाक्यानां तु स्वार्थपराणां प्रबलत्वाद् दुर्बलानुरोधेन प्रबलस्यान्यथा नयनं न कस्यापि संमतमित्याह । न खल्विति। निमित्ततो बलादिति संबन्धः। न तावन्निर्गुणवाक्यं ब्रह्मप्रशंसापरतया नेतुं शक्यम्, सर्वगुणनिषेधेन स्तोत्रापरपर्यायप्रशंसायाः कर्त्तुमशक्यत्वात्, वस्तुतः सगुणस्य गुणप्रतिषेधे निन्दाया एव प्रतीतेश्च । नापि तत्प्राकृतगुणाभावपरमिति वक्तुं शक्यम्, सर्वेषां गुणानां प्राकृतत्वेन विशेषणायोगात्। न च सर्वगन्धः सर्वरस इत्यादिवचनैरप्राकृतगुणसिद्धेर्विशेषणोपपत्तिरिति वाच्यम् । तत्र गुणानामप्राकृतत्वाप्रतीतेः, पृथिव्यादिगतगन्धादिभिरेव तत्कारणब्रह्मणः सर्वगन्धादिमत्त्वेनोपास्तिविधिसंभवे तदतिरिक्ताप्राकृतगुणकल्पनायोगाच्च, इतरथा सर्वशब्दात्तत्राप्राकृतदुर्गन्धादिरपि भवेत्, तस्मात्केवलो निर्गुणश्चेत्यादिवाक्यमन्यथा नेतुमशक्यम्। तदिदमभिप्रेत्योक्तमतिबलिष्ठपदान्वयमिति ॥ २९० ॥

तस्मात्तत्परवेदवाक्यगतिभिर्न्यायेन चात्मप्रभं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वद्वैतविवर्जितं विगलितध्वान्तं शिवं शाश्वतम् ॥

प्रत्यग्रूपमरूपगन्धरसकं तच्छब्दवाच्यं स्थितं
वाक्यार्थान्वयि लक्षितं भगवतो विष्णोः पदं गृह्यताम्॥२९१

निर्गुणवाक्यानां तत्परत्वादन्यथा नेतुमशक्यत्वाच्च तदनुरोधेन सगुणवाक्यानामारोपितद्वैतविषयत्वे सति तत्पदावच्च्ये भागत्यालक्षणयोपादेयस्वरूपं दर्शयन्पदार्थशोधनमुपसंहरति । तस्मात्तत्परेति । प्रवृत्तिर्गतिशब्दार्थः । उपाधीनामौपाधिकानां च मिथ्यात्वसाधको न्यायो न्यायेनेत्युक्तः, शिवं सुखैकतानम् । तस्य परोक्षत्वं निवारयति । प्रत्यग्रूपमिति । अरूपगन्धरसकमिति शङ्क्यमानसमस्तगुणराहित्योपलक्षणार्थम् । उक्तरूपस्य तत्पदलक्षितत्वे हेतुर्वाक्यार्थान्वयीति ॥ २९१ ॥

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ॥
अनाद्यनन्तं महतः परं ध्रुवं
निचायनीयं पदमीदृशं हरेः ॥ २९२ ॥

निर्गुणवस्तुबोधादेव परपुरुषार्थलाभात्तदेव वेदान्तगम्यमित्यत्र कठश्रुतिं प्रमाणत्वेनोदाहरति । अशब्दमिति । अव्ययम् उपक्षयरहितम् । नित्यं सदा । महतः समष्टिबुद्धिरूपहिरण्यगर्भात् । ध्रुवं कूटस्थम् । निचाय्य तं मृत्युमुखात्प्रमुच्यत इतिमन्त्रगतचतुर्थचरणस्य तात्पर्यार्थमाह । निचायनीयमिति ॥ २९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोक्ता भोज्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥
जीवेशानौ सृज्यमानं जगच्च
शुद्धं ब्रह्मेत्याह वेदान्तवाक्यम् ॥ २९३ ॥

जीवजगदीश्वराणां शुद्धब्रह्ममात्रत्वात्तदेव सत्यमिप्रेत्य तत्र श्वेताश्वतरमन्त्रमुदाहरति । भोक्तेति । द्वितीयार्थे प्रथमा । मत्वा युक्तितोऽसत्यतया निश्चित्य । ब्रह्ममिति च्छान्दसम्, अथ वा मे मया तत्त्रिविधं सर्वं ब्रह्म प्रोक्तमिति मन्त्रदृशो वचनम्। अस्य मन्त्रस्य तात्पर्यार्थमाह । जीवेशानाविति ॥ २९३ ॥

पदार्थबोधेन कृतार्थता न ते
मतिः परोक्षा हि पदार्थगोचरा ॥
अतो महावाक्यनिबन्धनैव धी-
रबोधविच्छेदकरी भविष्यति ॥ २९४ ॥

ननु ब्रह्मविदाप्नोति परमितिवचनात्तत्पदलक्ष्यसत्यज्ञानानन्दानन्तात्मकब्रह्मबोधादेव सत्यादिवाक्यसिद्धान्मोक्षसंभवात्कृतं तत्त्वमादिवाक्यैरिति तत्राह । पदार्थबोधेनेति । अविद्यायामन्तरे वर्तमानाः अनीशया शोचति मुह्यमान इत्यादौ संसारस्यात्मनि ब्रह्मभावाज्ञानाधीनत्वश्रवणात्समूलस्य संसारस्यापरोक्षाध्यासरूपत्वादात्मनो ब्रह्माभेदसाक्षात्कारं विना तन्निवृत्त्ययोगात्सत्यादिवाक्यजनितबोधस्य प्रत्यगभिन्नब्रह्मगोचर-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वाभावेन परोक्षत्वात्तदवगतब्रह्मानन्तत्वस्य वियदादिवज्जीवस्वरूपबाधयाप्युपपत्तेस्तद्बलेनापि तदभेदसाक्षात्कारायोगादात्मानं चेद्विजानीयादयमस्मीति पूरुषः य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीत्यादिश्रुतौ प्रत्यगभिन्नब्रह्मबोधस्यैव मोक्षहेतुत्वश्रवणाच्च तज्जनकमहावाक्यैर्विना कृतार्थत्वायोगात्तद्वैयर्थ्यं न शङ्कनीयमित्यर्थः ॥ २९४ ॥

स्वाध्यायधर्मपठितं निजवेदशाखा-
वेदान्तभूमिगतमादरपालितं च ॥
संन्यासिना परदृशा गुरुणोपदिष्टं
साक्षान्महावचनमेव विमुक्तिहेतुः ॥ २९५ ॥

तथापि समानार्थकमहावाक्यबाहुल्यं वृथेत्याशङ्क्य नियमाध्ययनसंस्कृतमहावाक्यस्यैव फलवत्प्रमितिहेतुत्वमिति विशेषज्ञापनाय सर्वशाखासु महावाक्यानि पठ्यन्त इत्यभिप्रेत्याध्ययननियमसंस्कृतमहावाक्यमेवाप्रतिबद्धसाक्षात्कारहेतुरित्याह । स्वाध्यायेति । ब्रह्मचर्यगुरुशुश्रूषाद्यङ्गानुष्ठानपूर्वकमधीतमित्यर्थः । तत्र नियमाध्ययनप्राप्तये पुनर्विशिनष्टि । निजवेदेति । स्वशाखाध्ययने नियमविधानात्तन्मध्यपातिमहावाक्यमपि तथैवाध्येतव्यमित्यर्थः । नियमेनाधीतमपि विस्मृतं चेन्न फलायेत्याशयेनाह । आदरेति । आचार्यवान् पुरुषो वेदेति वचनात्तत्स्वयमेव विचारितं न फ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लवदित्याशयेनाह । संन्यासिनेति । ब्रह्मनिष्ठायाः संन्यासिन एव संभवादेवमुक्तम् । साक्षाद्विमुक्तिहेतुरित्यन्वयः, विमुच्यतेऽनेनेति विमुक्तिस्तत्त्वसाक्षात्कारः॥२९५॥

नावेदविद्धि मनुते पुरुषं बृहन्त-
मित्याह वेदवचनं कथमन्यथैतत्॥
वाक्यान्तरं च कथमाह पुमांसमेनं
साटोपमौपनिषदत्वविशेषणेन ॥ २९६ ॥

ननु कथं महावाक्यात्तत्त्वसाक्षात्कारोदयः, शब्दस्य परोक्षधीहेतुत्वनियमादित्याशङ्क्य किं मानान्तराधीनस्तत्साक्षात्कार इत्यभिप्रेतमुत महावाक्यात्परोक्षधीमात्रोत्पत्तेस्तत्साक्षात्कार एव नेति विकल्प्याद्यमपवदति। नावेदविदिति। अवेदविदः परमात्मनि मतिनिषेधात्तस्य मानान्तरायोग्यत्वप्रतिपत्तेस्ततस्तत्साक्षात्कारः कथं स्यादित्यर्थः । न द्वितीयः, तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्या पुरुषस्यौपनिषदत्वविशेषणेनोपनिषदेकप्रमाणकत्वावगतेरपरोक्षब्रह्मात्मनि परोक्षज्ञानस्य प्रामाण्यासम्भवाच्छब्दजन्यस्यापि ज्ञानस्यापरोक्षविषयत्वेनापरोक्षत्वसम्भवाच्च तत्रोपनिषद्भिः साक्षात्कार एव युक्तः, इतरथोक्तश्रुतिः कदर्थिता स्यादित्याशयेनाह । वाक्यान्तरमिति । साटोपमौपनिषदात्माभिज्ञेन सह तदनभिज्ञस्य विवादानर्हताप्रकटनमाटोपस्तत्सहितं यथा स्यात्तथेत्यर्थः ॥ २९६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपनिषदिति वेद इत्यपीदं
समभिवदन्ति महावचो महान्तः ॥
फलवदवगतिः स्यादन्तरेणैतदेकं
वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् ॥२९७॥

ननु तावेदविदित्यनेन वेदमात्रस्यौपनिषदमित्यनेन चोपनिषन्मात्रस्य ब्रह्मात्मनि प्रामाण्योक्तेः कथं महावचनमेव विमुक्तिहेतुरित्युक्तमित्याशङ्क्य वेदोपनिषत्पदाभ्यां महावाक्यस्यैवाभिधानान्न विरोध इत्याह। उपनिषदिति। वेदशब्दस्तावद् वेदयतीति व्युत्पत्त्याऽनवगतब्रह्मात्मतत्त्ववेदकमहावाक्यस्यैव वाचकः, योगवृत्त्यैव प्रवृत्तिसंभवे रूढेरकल्प्यत्वात्, उपनिषच्छब्दो यद्यपि वक्ष्यमाणव्युत्पत्त्याऽविद्यानिवर्त्तकतत्त्वधीवाचकस्तथाऽपि तद्धेतुमहावाक्यं लक्षणया तदर्थो न वेदान्तमात्रमिति तत्त्वविदां व्यवहार इत्यर्थः। ननु वेदयतीतिव्युत्पत्तेर्वेदमात्रे संभवात्कथं महावाक्यमेव वेद इति तेषामादर इति तत्राह। फलवदिति। फलवती परमपुरुषार्थहेतुभूताऽवगतिस्तत्त्वसाक्षात्कार एकमेकत्वगोचरमेतद्वचनं महावाक्यमन्तरेणापि स्यादिति वक्तुं न शक्यमिति यस्मात्तस्मात्तेषां महावाक्ये वेद इत्यादर इत्यर्थः। एकस्मिन्नपि श्लोके पूर्वोत्तरार्द्धयोर्भिन्नत्वाच्छन्दोभेदो न दोषाय, तत्त्वनिरूपणचित्तत्वाद्वा छन्दोभेदो नालोचित इति द्रष्टव्यम् ॥२९७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपनिषदिति शब्दो वेदशब्दश्च तस्मा-
च्छ्रुतिशिरसि निविष्टो योज्यतामत्र वाक्ये ॥
अपरमखिलमस्यैवाङ्गभूतत्वहेतो-
रिह समभिनिविष्टं तद्गिरो वाच्यमासीत् ॥२९८॥

वृद्धप्रसिद्ध्या वेदोपनिषत्पदयोर्महावाक्यविषयत्वे सिद्धे फलितमाह। उपनिषदिति शब्द इति। तस्मादित्येतदादौ योज्यम्। श्रुतिशिरसि औपनिषदं पुरुषमिति नावेदविदिति च वाक्ये इत्यर्थः। अत्र वाक्ये प्रकृते महावाक्ये। कथं तर्हि महावाक्यव्यतिरिक्तपदसंदर्भेऽपि लोकवेदयोर्वेदोपनिषत्पदप्रयोग इत्याशङ्क्य तत्र साक्षात्परंपरया वा महावाक्यशेषत्वाच्छेषिणाऽभेदोपचारात्तत्रापि तत्पदप्रवृत्तिरित्याह। अपरमिति। वाच्यं विषय इति यावत्॥ २९८॥

पित्रा तत्त्वमसीतिबोधनमनु स्पष्टं विजज्ञाविति
च्छान्दोग्ये यदवोचदेतदिह नो लिङ्गं भवेज् ज्ञापकम्॥
सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद् ग्राहको
वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः ॥२९९॥

महावाक्यमेव तत्त्वसाक्षात्कारहेतुरित्यत्र श्रौतं लिङ्गमाह। पित्रेति। छान्दोग्ये षष्ठे नवमे पर्याये तत्त्वमसि श्वेतकेतो इत्येतदनन्तरं तद्धास्य विजज्ञावित्यनेनास्य पितुरुपदेशात्तदुपदिष्टं तत्त्वं विजज्ञौ विस्पष्टं साक्षादेव ज्ञातवानित्युक्तत्वान्महावाक्यमेवाविद्यानि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्त्तकबोधहेतुरिति गम्यते, इतरथा तदुक्तिवैयर्थ्यादित्यर्थः । लिङ्गमित्येतद्विवरणं ज्ञापकमिति । महावाक्यानामेव फलवत्त्वमितिहेतुत्वे फलितमाह । सर्वत्रेति । अत इत्यादौ योज्यम् । वेदो वेदशब्दः । अन्यत्र वेदादिपदप्रयोगस्य गतिमुक्तां स्मारयति। अन्यदिति॥२९९॥

उपनिषद्वचसा परमात्मधीः
सहजशक्तिवशेन निगद्यते ॥
तदुपचर्य्य महागिरि वर्त्तते
निकटभावमपेक्ष्य तु मुख्यगीः ॥ ३०० ॥

ननु वार्तिककारैरत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचर इत्युपक्रम्य उपनीयेमम आत्मानं ब्रह्मापास्तद्वयं यतः निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेदित्यादिना ब्रह्मविद्यैवोपनिषत्पदवाच्येत्युक्तत्वात्कथम्महावाक्यं तदर्थ इत्याशङ्क्य तदुक्तमप्यङ्गीकरोति । उपनिषद्वचसेति । अवयवगतशक्तिः सहजशक्तिपदार्थः। कथं तर्हि महावाक्यं तदर्थ स्तत्राह । उपचर्य्येति । महावाक्यस्योपनिषत्पदवाच्यतत्त्वधीहेतुत्वेन तदभेदोपचाराल्लक्षणया वा तदर्थतेत्यर्थः । तर्हि महावाक्यमुपनिषत्पदस्य मुख्योऽर्थ इति कथमुक्तमित्याशङ्क्य तस्य मुख्यार्थभूतधीहेतुतया तदपेक्षया तत्सन्निधानात्तदुक्तिरित्याह । निकटभावमिति॥ ३०० ॥

उपनिषद्वचनाभिहितात्मधी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निकटवर्त्ति महागिरि मुख्यवत् ॥
उपनिषद्वचनं तदवान्तरं
वचसि गौणवदत्र विवक्ष्यते ॥ ३०१ ॥

ननु महावाक्यस्यावान्तरवाक्यस्य चोपनिषत्पद-वाच्यत्वाभावे समाने कथं तत्रोपनिषत्पदस्य मुख्या-मुख्यत्वव्यवस्थेत्याशङ्क्य वाच्यर्थेन साक्षात्संबद्धे म-हावाक्ये मुख्यवदुपस्थापकत्वात् तस्य मुख्यत्वव्यपदे-शोऽन्यत्र तु तदभावादमुख्यत्वव्यपदेश इत्याशयेन नि-कटभावमपेक्ष्येत्युक्तं विवृणोति । उपनिषद्वचनमिति । अत्र लोकवेदयोः ॥ ३०१ ॥

यतो महावाक्यत एव पुत्रो
विजज्ञिवानस्य पितुः सकाशात् ॥
इति श्रुतं तेन स एव वेद-
स्तथा च सैवोपनिषच्च सिद्धा ॥ ३०२ ॥

महावाक्यस्यैव कथं तत्त्वधीनैकट्यमितिशङ्कायां पि-त्रा तत्त्वमसीत्यादिनोक्तं स्मारयन् फलितमाह । यत इति । स सैवेति महावाक्यं परामृश्य विधेयापेक्षया लि-ङ्गान्तरनिर्देशः ॥ ३०२ ॥

विना महावाक्यमतो न कश्चित्
पुमांसमद्वैतमवैति जन्तुः ॥
ततः पदार्थावगमान्न मुक्ति-
र्घटिष्यते तस्य परोक्षभावात् ॥ ३०३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं नावेदवित् तं त्वौपनिषदं पुरुषमिति श्रुतिबलाच्छ्रौतलिङ्गबलाच्च महावाक्यमेव फलवत्त्वमितिहेतुरित्युपपादितमनूद्य फलितं महावाक्यवैयर्थ्यचोद्यनिरासं निगमयति। विना महावाक्यमिति। पुमांसं शोधितत्वमर्थम्। अद्वैतं ब्रह्माभिन्नम्। तस्य केवलपदार्थावगमस्य ॥ ३०३ ॥

पदार्थबोधं परिहृत्य वाक्यं
न शक्तमात्मानुभवावसानाम् ॥
धियं समानेतुमपेक्षितत्वा-
दतः स यत्नेन निरूपितोऽभूत् ॥ ३०४ ॥

ननु तत्त्वमादिमहावाक्यस्यैव मुक्तिहेत्वपरोक्षधीहेतुत्वात्तेनैवालं किं सत्यं ज्ञानमित्याद्यवान्तरवाक्येन परोक्षधीहेतुना, ततस्तदर्थो वृथा निरूपित इति नेत्याह। पदार्थबोधमिति। आत्मानुभवावसानाम् आत्मतत्त्वाभिव्यक्तिफलां साक्षात्काररूपामिति यावत्। पदार्थधियो वाक्यार्थधियो हेतुत्वेनापेक्षितत्वान्न कस्यापि वैयर्थ्यमित्यर्थः ॥ ३०४ ॥

तच्छब्दादवगतमद्वितीयमासीत्
प्रत्यक्त्वं समधिगतं त्वमित्यनेन ॥
प्रत्यक्त्वं न खलु विना द्वितीयमेवं
नाद्वैतं भवितुमलं विना प्रतीचा ॥ ३०५ ॥

तथापि तत्त्वंपदाभ्यामेव तदर्थावगतेः कृतमवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तरवाक्यैरित्याशङ्क्य तन्मात्रेण वाक्यार्थान्वययोग्यार्थासिद्धेस्तदर्थशोधकावान्तरवाक्यापेक्षया ताभ्यां तादृशार्थोपस्थितेर्नावान्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तद्बलावगतौ पदार्थौ निर्दिशति । तच्छब्दादिति । तयोरपि परस्परं भेदे वाक्यार्थेऽनुपयोगं मत्वा युक्तितस्तदभेदं सम्भावयति । प्रत्यक्त्वमिति । अद्वितीयब्रह्मणः सर्वाधिष्ठानतया सर्वान्तरत्वात्तदभेदं विना त्वंपदसर्पितं प्रत्यक्त्वं सर्वान्तरसाक्षिचैतन्यात्मकं न घटते, सर्वान्तराद्बहिर्भूतस्य सर्वान्तरत्वायोगात्, एवं तत्पदसमर्पितमप्यद्वितीयं वर्णितप्रत्यगभेदं विना न घटत इति युक्तितस्तावभिन्नावपि सम्भावितावित्यर्थः ॥३०५॥

तर्कप्रतीतिसमयेऽपि तदद्वितीयं
प्रत्यक् परिस्फुरति तत्प्रतिबिम्बितं सत् ॥
वेदान्तवाक्यजनिताद्वयबुद्धिभूमि-
निष्ठं पुनः स्फुटतरं भवतीति भेदः ॥ ३०६ ॥

नन्ववान्तरवाक्यसिद्धयोः प्रत्यगद्वितीययोरुक्तयुक्त्याऽभेदनिश्चयसम्भवात् किं महावाक्यैरित्याशङ्क्य युक्तेः सम्भावनार्थहेतुतया प्रमाणानुग्राहकत्वेन स्वतो निर्विचिकित्सधीहेतुत्वायोगात्तज्जनितधियस्तदभेदगोचरत्वेऽप्यप्रमाणजन्यतया परोक्षत्वात्तदविद्यानिवृत्त्यक्षमत्वाच्च तन्निवर्त्तकनिर्विचिकित्सापरोक्षधीहेतुभूतमहावाक्यानि भवन्ति तावदर्थवन्तीत्याशयेन यौक्ति-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कप्रतीतितो वाक्यजाऽनुभवस्य विशेषमाह । तर्कप्रतीतीति । तत्प्रतिबिम्बितं प्रत्यक्षवत्तस्यां स्वाकारार्पकं सत् स्फुरति न त्वपरोक्षवदनावृतमित्यर्थः । भेदो विशेषः ॥ ३०६ ॥

अधममध्यमशुद्धिनि दर्पणे
परमशुद्धिनि चाननमात्मनः ॥
तरतमक्रमतः प्रतिभासते
तदिव तत्त्वमिह प्रतिपत्तिषु ॥ ३०७ ॥

नन्वेकमेव शुद्धं वस्तु पदार्थज्ञाने यौक्तिकज्ञाने वाक्यजन्यज्ञाने च प्रतिबिम्बितं सत् स्फुरति चेत् तत्र स्फुटत्वास्फुटत्वविशेषः कुत इत्याशङ्क्य तदभिव्यञ्जकज्ञाननिष्ठयोग्यतारूपस्वाभाव्यतारतम्यनिबन्धनः स इति सदृष्टान्तमाह । अधमेति । दर्पणे शुद्धिर्वैमल्यम् । क्रमतो व्यवस्थातः । तदिव आननवत् । तत्त्वमात्मतत्त्वम् । इह आसु ॥ ३०७ ॥

एकदेशमुपलभ्य धर्मिण-
श्चैकदेशमपरं विजानते ॥
धर्मिधीव्यवधिकारणादतो
नानुमा ह्यनुभवाय वस्तुनः ॥ ३०८ ॥

ननु शोधितयोस्तत्त्वमर्थयोः परस्परावैलक्षण्यलिङ्गेनाभेदानुमानसम्भवात्तस्य प्रमाणत्वेन निश्चायकत्वात्किं महावाक्येनेत्यत आह । एकदेशमिति । धर्मिणः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पक्षस्य व्याप्यविशिष्टरूपैकदेशदर्शनात्तद्व्यापकविशिष्टैकदेशान्तरं सर्वत्रानुमिन्वते, तदुक्तं शबरस्वामिना, एकदेशदर्शनादेकदेशान्तरे बुद्धिरनुमानमिति, ततश्च तदर्थस्य पक्षीभूतस्य परोक्षत्वेन तद्धीद्वारोत्पद्यमानानुमितेरपि तद्विशेषणाभेदगोचरायाः परोक्षत्वेन तदपरोक्षानुभवत्वाभावात्ततस्तदविद्याद्यनिवृत्तेस्तन्निवर्त्तकाखण्डवस्तुसाक्षात्काराय तत्त्वमादिवाक्यमर्थवदित्यर्थः ॥ ३०८ ॥

एवं तावत्तत्त्वमर्थौ विशुद्धौ
बोद्धव्यं चेदन्यदप्यस्ति पृच्छ ॥
यद्यद् बुद्धं तत्तदादाय तिष्ठे-
र्यच्चाबुद्धं तत्र चाधत्स्व चेतः ॥ ३०९ ॥

एवं महावाक्यानामर्थवत्त्वं निरूप्य पदार्थशोधनप्रकरणमुपसंहरति । एवं तावदिति । वाक्ये निर्गुणनिष्ठिते च निखिले न्यायादियत्तामतिरित्यत्र संक्षिप्तं तृतीयपादार्थं प्रपञ्चयितुं तत्प्रश्नायानुमतिं ददाति । बोद्धव्यमिति । यद्यदित्याद्युक्तार्थम् ॥ ३०९ ॥

बुध्वा तत्त्वंपदार्थावनुभवविषयं कर्त्तुकामस्तदैक्यं
वाक्याद्वाक्यार्थनिष्ठाच्छ्रुतिशिरसि गतादञ्जसा तत्त्वमादेः
तच्छेषापन्नमस्मिन् छ्रुतिशिरसि वचो जातमन्यद्यदस्ति
तस्येयत्ताबुभुत्साकुलितनिजमतिः पृच्छति स्मैष भूयः ३१०

यद्यपि द्वैतसत्यत्वादिनिरासेनाद्वयं वस्तु तत्पदल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्ष्यं निरूपितं त्वंपदलक्ष्यमपि सर्वोपप्लवरहितं विज्ञानघनरूपं प्रत्यङ्मात्रमित्युक्तम्, तथापि तदुभयवाचकपदानां नानाशाखागतानामेकत्रोपसंहारेण तल्लक्ष्येयत्तानिर्द्धारणं विनाऽभेदरूपवाक्यार्थे सर्वतो निर्विचिकित्सानुभवायोगात्तत्त्वमादिवाक्यात्तादृशानुभवाय तद्गतपदार्थवाचकजातेयत्ताबुभुत्सया शिष्यप्रश्नमवतारयति । बुद्ध्वा तत्त्वमित्यादिना ॥ ३१० ॥

अद्याप्यवान्तरवचःपरिमाणबोध-
वैकल्यमस्ति मम तेन महावचोऽपि ॥
वाक्यार्थबुद्धिमनुभूतिफलावसानां
नोत्पादयत्यहरहः श्रुतमप्यशक्तेः ॥ ३११ ॥

प्रतिपित्सितेऽवगते भूयः कथं प्रश्न इत्याशङ्क्य तद्बीजं सकारणं दर्शयति । अद्यापीति । अशक्तेरुक्तकारणेन शक्तिप्रतिबन्धादित्यर्थः ॥ ३११ ॥

विधिमुखेन परस्य निवेदकं
वचनजातमवान्तरसंज्ञितम् ॥
यदपि भेदनिषेधमुखेन त-
त्परिमितिं प्रतिपादय मे प्रभो ॥ ३१२ ॥

इदानीं प्रश्नस्वरूपं प्रकटयति । विधिमुखेनेति । ज्ञानानन्दादिभावस्वरूपसमर्पणेनेत्यर्थः, यदित्येतदत्रापि योजनीयम् । निषेधमुखेन परस्य निवेदकमित्यनुषङ्गः । तत्परिमितिं तदुभयेयत्ताम् ॥ ३१२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलवेदशिरःसु परात्मधी-
परवचःसु परापरबोधतः ॥
अपुनरुक्तपदान्युपसंहरन्
परिमितिं स्वयमेव तु वेत्स्यसि ॥ ३१३ ॥

कर्मवद्ब्रह्मणोऽपि सर्ववेदान्तप्रत्ययत्वात्तेषु वेदान्तेषु सगुणनिर्गुणपरत्वविभागं कृत्वा निर्गुणपरेषुतेष्वानन्दादयः प्रधानस्येत्यादिनोक्तन्यायात्स्वशाखागतनिर्गुणवाक्येष्वश्रूयमाणान् परशाखागतेषु तेषुतेषु श्रूयमाणानानन्दनित्यसर्वगतविभुपूर्णामृताभयसर्वज्ञेश्वरान्तर्याम्यादिशब्दान् स्वशाखगतसत्यज्ञानानन्तादिवाक्येषूपसंहरंस्तदियत्तां स्वयमेव ज्ञास्यसीत्याहाचार्यः। सकलेति। सकलवेदशिरस्सु परापरबोधतः सगुणनिर्गुणपरत्वविवेकेन परात्मधीपरवचःसु अपुनरुक्तपदानीति संबन्धः ॥ ३१३ ॥

अपुनरुक्तपदानि विना यतो
न परिपुष्कलबुद्धिसमुद्भवः ॥
अपुनरुक्तपदानि ततस्तत-
स्त्वमुपसंहर तत्त्वबुभुत्सया ॥ ३१४ ॥

ननु यत् सत्यादिवाक्यावगतं वस्तु तदेव किमुपसंहृतानन्दादिपदसमभिव्याहारात् प्रतीयते किं वा ततोऽर्थान्तरमपि, आद्ये तदुपसंहारवैयर्थ्यम्, द्वितीये त्वखण्डार्थत्वं तस्य न स्यात्, उपसंहृतपदार्थवैशि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टरस्य ततः प्रतीतेरित्याशङ्क्याह । अपुनरुक्तेति । अपुनरुक्तानन्दादिपदलक्षितानन्दादिव्यक्त्यभिन्नब्रह्मधीः परिपुष्कलबुद्धिशब्दार्थः, सेव हि तस्मिन् तद्विपरीताकारसंशयादिविरोधिनी.ततश्च न पदान्तरोपसंहारवैयर्थ्यम् , नाप्यखण्डार्थत्वहानिः, ब्रह्मणि सत्यादिपदलक्ष्यभेदबाधेऽपि विशिष्टार्थाबोधकत्वेन तदुपपत्तेरिति भावः ॥ ३१४ ॥

कुरु परापरवाक्यविवेचनं
तदनु शब्दसमाहरणं कुरु ॥
प्रियशिरःप्रभृतीनि च यत्नत्रा-
नुपचितापचितानि परित्यज ॥ ३१५ ॥

नन्वेवं सति भाववस्तुपरप्रकरणे तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मेति प्रियादीनां शिरआद्यवयवात्मत्वश्रुतेस्तेषामप्यन्यशाखागतब्रह्मवाक्येषूपसंहारः स्यादित्याशङ्क्य तन्निवारणाय मुख्यामुख्यब्रह्मवाक्यविवेकं कृत्वा तत्र मुख्यब्रह्मवाक्यगतपदानामेवोपसंहारः कार्य इति तावदाह । कुरु परापरेति । एवं चानन्दमयस्याब्रह्मत्वात्तद्वाक्यगतप्रियशिरस्त्वादीनां मुख्यब्रह्मवाक्येषूपसंहारो न कर्त्तव्य इत्याह । प्रियशिर इति । तेषामब्रह्मधर्मत्वे लिङ्गं चाह । उपचितेति । तत्र प्रियं नामेष्टवस्तुदर्शनमात्राद्य ईषत्संतोषः, तस्य स्वत्वेन प्राप्तौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततोपीषदधिकः स मोदः, तदुपभोगेन ततोऽप्यधिकः स प्रमोदः, तस्मात्सामान्यमात्रमानन्द इति ॥ ३१५ ॥

उपचितापचितानि न निर्गुणे
प्रियशिरःप्रभृतीनि कदा चन ॥
निपुणधीरपि कश्चन योजये-
दपि तु कोशगुणाः कथिता ह्यमी ॥ ३१६ ॥

तेषामुपचितादिरूपत्वेऽपि ब्रह्मधर्मत्वं किं न स्यादित्याशङ्क्यामुपचयापचयौ हि भेदइति सूत्रावयवावष्टम्भेन परिहरति । उपचितापचितानि न निर्गुण इति । निर्गुणे वस्तुनि स्वाभाविकगुणगुणिभावायोगान्न तद्धर्मतेत्यर्थः । तर्हि तेषां केवलाचेतनेऽप्यसंभवान्निराश्रयत्वापत्तिरित्याशङ्क्य तेषां साभासबुद्धिधर्मत्वात्तदभेदात्तत्कारणानन्दमयकोशे ते कथिता इत्याह । अपि त्विति ॥ ३१६ ॥

इति वचःपरिमाणमुदीरितं
विधिवचःसु निषेधगिरां शृणु ॥
वहु निषेध्यममूष्वपि तेन ता-
स्वपि समाहर पूर्ववदेव तत् ॥ ३१७ ॥

निरूपितमुपसंहरन् वक्ष्यमाणं प्रस्तौति । इतीति । विधिमुखेन वस्तुबोधवाक्येषूपसंहार्यपदेयत्तोक्तेत्यर्थः । निषेधगिरां परिमाणमित्यनुषङ्गः । निषेधस्य नञर्थस्यैकरूपत्वात्तदुपसंहारो वृथेत्याशङ्क्य निषेधप्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगिभेदेन तद्भेदात्तदियत्तानिरूपणं कार्यमित्याह । वहु निषेध्यमिति । तन्निषेध्यम् ॥ ३१७ ॥

अपुनरुक्तनिषेध्यनिषेधक-
द्बहुपदाहरणं कुरु तास्वपि ॥
यदि पुनर्न समाहरणं भवेत्
परिमितप्रतिषेधनमायतेत् ॥ ३१८ ॥

निषेध्योपसंहारो वृथेत्याशङ्क्य तदुक्त्यभिप्रेतं विवृणोति । अपुनरुक्तेति । ननु प्रतिषेधानामात्मस्वरूपत्वाभावात्तदुपसंहरणं वृथेत्याशङ्क्य स्थूलादिप्रतिषेधाभावे तत्तदात्मत्वशङ्काया दुर्निवारत्वाच्छाखान्तरगतापुनरुक्तप्रतिषेधानुपसंहारे च तन्निषेध्यात्मत्वशङ्काया अनिराकरणाच्च सर्वप्रतिषेधोपसंहार आवश्यक इत्याशयेनाह । यदि पुनरिति ॥ ३१८ ॥

विधिवचस्युभयं तु पदेपदे
भवति संग्रहवर्जनरूपकम् ॥
स्वकवपुःपरिकल्पितरूपया-
नं तु निषेधवचःसु तथा मतम् ॥ ३१९ ॥

ननु सत्यादिवाक्यस्थपदानामप्यनृतादिव्यावृत्तिधीहेतुत्वात् स्थूलादिनिषेधवाक्यस्थपदानामपि निर्विशेषवस्तुबोधित्वात्कुतो विधिनिषेधविभाग इत्याशङ्क्य विधिवाक्यस्थपदानां साक्षाल्लक्षितभावरूपस्वार्थसमर्पणमर्थात्तद्विरोधिकल्पितरूपव्यावर्त्तनं चेति कृ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यद्वयमस्ति निषेधवाक्यस्थपदानां तन्नेति वैषम्यात्त-
द्विभागोपपत्तिरित्यभिप्रेत्याह । विधिवचसीति । पदे-
पदे प्रतिपदम् , स्वकवपुः साक्षात् स्वसमर्पितसच्चिदा-
नन्दादिभावात्मकवस्तुस्वरूपम्, तस्य तत्र कल्पितात्म-
जड़ादिरूपस्य च यथाक्रमं संग्रहादिरूपं द्वयं भवतीति
सम्बन्धः ॥ ३१८ ॥

यदिह किं चिदबोधसमुद्भवं-
तदखिलं प्रतिषेधति केवलम् ॥
न तु किमप्युपगृह्य परे पदे
भगवतो निविशेत निषेधगीः ॥ ३१९ ॥

चतुर्थचरणार्थमेव विवृणोति। यदिहेति। प्रतिषेधती-
त्यत्र निषेधगीरिति योजनीयम् , किमप्युपगृह्य भा-
वात्मकं किमपि स्वरूपं समर्प्य, भगवतः परे पदे शो-
धिततदर्थे कल्पितनिषेधमात्रेणाधिष्ठाने भावरूपविशे-
षानवगमादिति ॥ ३१९ ॥

इति विशेष इह प्रतिपादितो
विधिनिषेधगिरोरुभयोरपि ॥
अपुनरुक्तपदाहरणं पुन-
र्विधिनिषेधवचःस्वविशेषतः ॥ ३२० ॥

विधिनिषेधयोरुक्तवैषम्यमुपसंहरन् केन चिदंशेन
साम्यमप्याह। इति विशेष इत्यादिना। स्पष्टोऽर्थः॥३२०॥

श्रुतपदैरुपसंहृतिशालिभि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदवशिष्टनिषेध्यनिषेधनम् ॥
तदपि पूर्यमिहाभिमतं श्रुतेः
श्रुतपदान्युपलक्षणमेव हि ॥ ३२१ ॥

सर्वेषां निषेधपदानामेकवाक्यत्वमापन्नानां दृश्यमात्रनिषेधपराणामजहल्लक्षणया श्रुताश्रुतविषयत्वं विधिपदानां तु श्रुतार्थमात्रस्वरूपं समर्पयतां तदभाव इति वैषम्यान्तरमाह द्वयेन श्रुतपदैरित्यादिना। पूर्यं समुच्चेतव्यम् । इह श्रुतनिषेधसमूहे। तदुपस्थापकाभावमाशङ्क्याह । श्रुतपदानीति । यद्यपि नेह नानास्ति किं चनेत्यादिना सामान्येन दृश्यमात्रनिषेधः श्रुतः, तथापि तं कर्णौ पिधायाशृण्वतेव कतिपयविशेषनिषेधकैरस्थूलादिपदैरेव कल्पितसर्वनिषेध उक्तरीत्योपपादित इति द्रष्टव्यम् । अथ वा नेतिनेत्यादेरपि लोकप्रसिद्धदृश्यमात्रनिषेधकत्वादवशिष्टपरीक्षककल्पितप्रधानमहदहङ्कारपरमाणुद्व्यणुकविशेषसमवायादिप्रतिषेधसंग्रहार्थं श्रुतपदान्युपलक्षणमित्युक्तमित्यविरोधः ३२१

समुपसंहृतशब्दसमन्वितैः
श्रुतपदैर्विधिवाक्यगतैः पुनः ॥
समुपलक्ष्यतया न परात्मनः
किमपि रूपमिहाभ्यधिकं मतम् ॥ ३२२ ॥

सत्यादिपदानामपि लक्षकत्वं तुल्यमित्याशङ्क्य तेषां स्वार्थैकदेशलक्षकत्वेऽपि श्रुतार्थापरित्यागेनाश्रुत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षकत्वं नेति वैषम्यमाह । समुपसंहृतेति । स्पष्टोऽक्षरार्थः ॥ ३२२ ॥

न खलु संश्रुतसंहृतशब्दयो-
रविषयः परमात्मन इष्यते ॥
किमपि रूपममुत्र हि नास्ति नः
किमपि मानमतो न तदस्ति नः ॥ ३२३ ॥

ननु निषेधकपदैरवशिष्टनिषेधोपलक्षणवद्विधिपदैरप्यवशिष्टब्रह्मरूपमुपलक्ष्यतामित्याशङ्क्यावशिष्टरूपस्यैवाभावान्नैवमित्याह । न खल्विति । तस्य निष्प्रमाणत्वे तत्साधकमानाभावे हेतुमाह । अमुत्रेति । तस्मिन् रूप इत्यर्थः । किमपि शास्त्रं प्रत्यक्षादि वेत्यर्थः । रूपान्तराभावं निगमयति । अत इति । अश्रुतप्रतिषेध्यप्राप्तिमात्रेण तत्प्रतिषेधसंभवात्तदुपलक्षकत्वं प्रतिषेधकपदानां युक्तम्, पारमार्थिकब्रह्मरूपस्य तु वेदैकवेद्यतया मानान्तरात्तदसिद्धेस्तत्परवेदवाक्यानां च श्रुतस्वरूपबोधनेनैव निराकाङ्क्षत्वान्न तदुपलक्ष्यं रूपान्तरमस्तीति भावः ॥ ३२३ ॥

गुणतया हि पदानि परात्मनो
विधिनिषेधवचःस्ववतस्थिरे ॥
गुणगणी गुणितन्त्रतया गुणी
भवति यत्र हि तत्र भवत्यसौ ॥ ३२४ ॥

ननु कर्मकाण्डे प्रधानपरतन्त्रत्वादितिकर्त्तव्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तानां नानाशाखागतानां तत्प्रयुक्तिबलादुपसंहारो युक्तः, ब्रह्मणि तु विधिनिषेधपदानामनितिकर्त्तव्यत्वात्कथं तदुपसंसारसिद्धिरित्याशङ्क्य तथापि तेषां परमात्मप्रतिपत्तिप्रयोजनकत्वेन प्रत्येतव्ये तस्मिन् प्रधाने गुणभूतत्वाद्ध गुणनां च गुणिपरतन्त्रत्वात् स गुणी प्रधानभूतो यत्रयत्र श्रुतो भवति तत्रतत्र गुणभूतपदजातं पुष्कलतत्प्रतिपत्तिप्रयुक्तोपसंहार्यं भवतीत्याशयेनाह । गुणतयेति । यत्र गुणी भवति तत्रासौ गुणगणो गुणितन्त्रतया भवतीति सम्बन्धः ॥ ३२४ ॥

विधिनिषेधवचः परिमाणत-
स्तव मया कथितं नयवर्त्मना ॥
यदपरं तव वस्तु बुभुत्सितं
तदिह नः पुरतः प्रकटीकुरु ॥ ३२५ ॥

उपसंहारप्रकारमुपसंहरन् पुनः शिष्यं प्रति प्रश्नायानुमतिं ददाति । विधिनिषेधेति । वचः कथितमिति सम्बन्धः । प्रकटीकुरु प्रश्नेनेति शेषः ॥ ३२५ ॥

अन्तरङ्गबहिरङ्गसाधने
भेदतः कथय तद्बुभुत्सितम् ॥
ज्ञानजन्मन इदं जिघृक्षितं
हेयमेतदिति चोपपत्तिभिः ॥ ३२६ ॥

सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञतेत्युक्तचतुर्थपादार्थं प्रपञ्चयितुं तद्विषयप्रश्नमवतारयति । अन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रङ्गेति । ज्ञानजन्मन इत्येतत्प्रथमं च योज्यम् । तदन्तरङ्गादिसाधनम् । तद्बुभुत्सा निष्प्रयोजनेति शङ्कां निवारयति । ज्ञानजन्मन इति । जिघृक्षितं ग्रहीतुमिष्टमनुष्ठेयमिति यावत् । इति यन्मयापाततोऽवगतं तच्चोपपत्तिभिः कथयेत्यर्थः ॥ ३२६ ॥

अन्तरङ्गमपवर्गकाङ्क्षिभिः
कार्यमेव यतिभिः प्रयत्नतः ॥
त्याज्यमेव बहिरङ्गसाधनं
यत्नतः पत्तनभीरुभिर्भवेत् ॥ ३२७ ॥

किं त्वया कार्यत्वेन साधनमवगतमिति वीक्षायां तदेव विशदयति । अन्तरङ्गमिति । अपवर्गो ज्ञानम् ॥ ३२७ ॥

उच्यते शृणु विविच्य साधनं
ज्ञानजन्मनि यदूचिवान् गुरुः ॥
अन्तरङ्गबहिरङ्गभेदतः
शब्दशक्तिमनुसृत्य वैदिकीम् ॥ ३२८ ॥

पृष्टं साधनजातं श्रुतिन्यायानुसारेणैवोच्यते त्वयापि श्रद्धया श्रोतव्यमितिगु रुराह । उच्यत इति । गुरुः सूत्रकारः ॥ ३२८ ॥

यच्छ्रुतं विविदिषोदयाय तत्
सर्वमेव बहिरङ्गसाधनम् ॥
अन्तरङ्गमवगच्छ तत् पुन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत् परावगतिसाधनं श्रुतम् ॥ ३२९ ॥

वैदिकीं शब्दशक्तिमनुसृत्यैतद्विवृण्वन् लक्षणभेदेन पृष्टं साधनभेदं दर्शयति । यच्छ्रुतमिति । यत्परमात्मनो विविदिषासाधनत्वेन विहितं तत्तत्वज्ञानं प्रति बहिरङ्गसाधनम्, तच्च तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेतिश्रुतिविहितं नित्यं वेदानुवचनादि, तस्येह जन्मन्यतीतजन्मनि वा विविदिषार्थतया प्राग्भावित्वेन ज्ञानं प्रति विप्रकर्षाद्बहिरङ्गत्वम्, यत्तु परमात्मसाक्षात्कारोद्देशेनैव विहितं तदन्तरङ्गसाधनम्, तच्च तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति दर्शनोद्देशेन विहितं शमादि श्रोतव्य इत्यादिश्रुतिविहितं श्रवणादि च, तस्य विविदिषानन्तरमेव ज्ञानोदयपर्यन्तमनुष्ठेयत्वेन प्रत्यासन्नत्वादन्तरङ्गत्वम्, तदुभयं चोक्तश्रुतिप्रमाणकमित्यर्थः ॥३२९॥

यद्धि कारकतयाऽवगम्यते
दूरतस्तदिह साधनं धियः ॥
अन्तरङ्गमखिलं तु तत् पुन-
र्व्यञ्जकं भवति यत् परात्मनः ॥ ३३० ॥

विविदिषावाक्येन सर्वेषामपि कर्मणां संयोगपृथक्त्वेन विविदिषासाधनत्वं विधीयत इति मते तयोर्लक्षणान्तरं वदन् बहिरङ्गत्वादि स्पष्टयति । यद्धीति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदृष्टद्वारेणैव फलोत्पादकं कारकम्, जन्मान्तरीयमपि यज्ञादि तद्द्वारा विविदिषामुत्पादयद्धीहेतुरिति दूरस्थत्वात्तद्बहिरङ्गम्, दृष्टद्वारेण तु तत्त्वधीहेतुरभिव्यञ्जकम्, शमादिकं श्रवणादिकं च दृष्टप्रतिबन्धनिवृत्तिद्वारा तद्धेतुरिति तत्परात्मनो व्यञ्जकं तच्च तद्धियो निकटभावित्वादन्तरङ्गमित्यर्थः ॥ ३३० ॥

कारकस्य करणेन तत्क्षणाद्
भिक्षुरेष पतितो भवेद् यथा ॥
व्यञ्जकस्य परिवर्जनात्तथा
सद्य एव पतितो भवेदसौ ॥ ३३१ ॥

एवमन्तरङ्गबहिरङ्गविवेकमुक्त्वा यदुक्तं यतिभिरन्तरङ्गमवश्यं कार्यं बहिरङ्गन्तु त्याज्यमिति तद्विपक्षबाधकमुखेनोपपादयति । कारकस्येति । यज्ञादिरूपस्य, तस्याग्निपत्नीवित्तादिसापेक्षत्वात् संन्यासिनश्च तद्भूतस्य तु नातद्भाव इत्यादिनोक्तन्यायेन तत्संग्रहे पातित्यं यथाऽवश्यंभावि, एवं व्यञ्जकश्रवणाद्यकरणेऽपि तस्य तत्तुल्यम्, अरुन्मुखान् यतीन् त्वंपदार्थविवेकायेत्यादिवचनप्रामाण्यादित्यर्थः ॥ ३३१ ॥

प्रत्ययार्थविषयं हि कर्मणामुच्यते विविदिषेयुरित्यतः ॥
न प्रकृत्यभिहितार्थवेदने
वेदवाचि विनियोगशासनम् ॥ ३३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु विविदिषन्तीत्यत्रेष्यमाणतया वेदनमेव प्रधानं प्रतीयते, ततश्च यज्ञादिकर्मणां तत्रैव विनियोगस्तस्मिन्वाक्ये विधीयते न विविदिषायामप्रधानभूतायां तथा सति तेषु प्रथमोक्तबहिरङ्गलक्षणाभावाच्छमादिवदन्तरङ्गलक्षणभावाच्चोक्तान्तरङ्गादिविभागानुपपत्तिरिति तत्राह। प्रत्ययार्थेति। वेदवाचि विविदिषन्ति यज्ञेनेत्यादिवेदवाक्ये कर्मणां यागादीनां प्रत्ययार्थविषयं सन्प्रत्ययार्थेच्छाविषयं विनियोगशासनं विविदिषेयुरित्यत उच्यते कथ्यते न प्रकृत्यभिहितार्थवेदने तदुच्यत इति सम्बन्धः। विविदिषन्तीत्यस्यापूर्वार्थत्वाद्विधौ परिणतं रूपं विविदिषेयुरित्युक्तम्। हिशब्दो वक्ष्यमाणन्यायसूचनार्थः॥ ३३२॥

न प्रधानमहाय वेदने-
नान्वयं व्रजति कर्म साधनम्॥
सङ्गतिर्भवति वेदनेच्छया
वेदनेन न तु कर्मणां क्व चित्॥ ३३३॥

तत्सूचितं न्यायमेव दर्शयति। न प्रधानमिति। यद्यपि वेदनस्येष्यमाणतयाऽर्थतः प्राधान्यमस्ति, तथापि विविदिषन्ति वेदितुमिच्छन्तीति शब्दतः प्रकृत्यर्थवेदनस्य विशेषणतया प्रत्ययार्थेच्छायाश्च विशेष्यतया तयोर्गुणप्रधानभावप्रतीतेस्तत्र प्रधानतयाऽवगतेच्छां विहाय गुणतयाऽवगतवेदनेन यज्ञादि कर्म

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साधनतयाऽन्वयं न प्राप्नोति, किं तु तस्य प्रधानभूत-वेदनेच्छयैव तथा संगतिर्भवितुं युक्ता, यथा राजपुरुष-मानयेत्युक्ते शब्दतः प्रधानतयावगतपुरुषेणैवान्वेत्या-नयनक्रिया न त्वर्थतः प्रधानेनापि राज्ञा तद्वत्प्रकृते-ऽपि यज्ञादिकर्मणां शब्दतः प्रधानभूतेच्छयैवान्वयो न गुणभूतवेदनेनेत्यर्थः ॥ ३३३ ॥

न प्रधानमिह वेदनं भवेत्
प्रत्ययार्थविषयां प्रधानताम् ॥
उत्ससर्ज भगवान्निरङ्कुशं
येन पाणिनिरलङ्घ्यशासनः ॥ ३३४ ॥

ननु शाब्दं प्राधान्यं वेदनेऽपि तुल्यमिति नेत्याह । न प्रधानमिहेति । तत्र गमकमाह । प्रत्ययार्थविषयामि-ति । तन्निष्ठामित्यर्थः । उत्ससर्ज उत्सर्गतः सर्वप्र-त्ययार्थेषु ज्ञापितवान् । येन पाणिनिः प्रत्ययार्थप्रधान-तामुत्ससर्ज तेन वेदनं न प्रधानमिति सम्बन्धः । स हि सर्वत्र प्रकृतेरुपरि प्रत्ययमर्थविशेषे विदधानस्तद-र्थस्य प्रकृत्यर्थापेक्षया प्राधान्यं सूचयति । उक्तं च कात्यायनेन, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधा-न्येनेति । ततो वेदनस्य न शाब्दं प्राधान्यमित्यर्थः॥३३४॥

प्रत्यये सति न चापवादकं
किं चिदप्युदितवानसौ मुनिः ॥
येन तत्र गुणभावमुद्वहेत्


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्ययाभिहितमर्थवस्तु नः ॥ ३३५ ॥

तथापि तस्योत्सर्गस्य सन्प्रत्ययार्थेऽपवादादन्यथात्वमित्याशङ्क्य निरङ्कुशमित्यनेन सूचितमपवादाभावं विशदयति । प्रत्ययं सनीति । तदर्थ इत्यर्थः । तत्र विविदिषन्तीतिपदे । प्रत्ययाभिहितं सन्प्रत्ययोक्तमर्थवस्त्विच्छारूपं वस्तु नोऽस्मान् प्रति मुनिरपवादकं न चोदितवानिति सम्बन्धः ॥ ३३५ ॥

धातोः कर्मण इत्युवाच भगवान् यत् पाणिनिस्तत् पुनर्धात्वर्थस्य न वेदयत्यभिमतं प्राधान्यमायुष्मतः ॥
किं त्वार्थं न तु शब्दगम्यमवदत्तेनापि तद्दु योक्ष्यते नोत्सर्गस्य विना निमित्तमपरं संकोचनं युज्यते ॥३३६॥

ननु धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रे धात्वर्थस्य सनर्थं प्रति कर्मत्वेन प्राधान्योक्तेरपवादानुक्तिरसिद्धेत्याशङ्क्याह । धातोः कर्मण इति । आयुष्मतस्तवाभिमतमितरान्वयप्रयोजकत्वेनेष्टं धात्वर्थस्य वेदनस्य प्राधान्यं न वेदयतीति सम्बन्धः । ननु कर्मत्वविशेषणात्तत्प्राधान्यं प्रतीयते प्रधानेन चेतरान्वयो युक्त इत्याशङ्क्य शब्दप्राधान्यस्यान्वयप्रयोजकत्वादत्र तदभावान्मैवमित्याशयेनाह । किं त्विति । आर्थमिष्यमाणत्वसामर्थ्यलभ्यम् । ननु प्रतीयते चेत्तत्प्राधान्यं शाब्दमेव किं न स्यादित्याशङ्क्य तत्प्रतीतेरन्यथोपपत्तौ सत्यां विनापवादकं प्रत्ययार्थप्राधान्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयोत्सर्गस्य सङ्कोचायोगात्तस्य शाब्दत्वं न कल्पनीयमित्यभिप्रेत्याह । तेनापीति । आर्थिकप्राधान्येनापीत्यर्थः । तत्कर्मत्वप्रयुक्तप्राधान्यम्, योक्ष्यते युक्तं भविष्यतीत्यर्थः ॥ ३३६ ॥

धातोः कर्मण इत्युदीरणमिदं साधारणं दृश्यते
शाब्दार्थत्वविशेषसूचकतया न ह्यत्र सूत्रे पदम् ॥
धात्वर्थस्य तु कर्मतावचनमत्रोच्चारितं केवलं
तत्त्वार्थेऽप्युपपद्यमानमधुना नोत्सर्गपीडाकरम् ॥३३७ ॥

ननु सूत्रगतकर्मपदेन धात्वर्थस्य शाब्दत्वरूपमेव प्राधान्यं प्रतीयते कर्मत्वस्येप्सिततमत्वस्य प्राधान्यार्थत्वादित्याशङ्क्य तस्य शाब्दत्वरूपविशेषसूचकस्यात्राभावान्नैवमित्याह । धातोः कर्मण इत्युदीरणमिति । तस्यार्थत्वरूपविशेषसूचकाभावोक्तिर्दृष्टान्तार्था । सूचकपदाभावमेव विशदयति । धात्वर्थस्येति । तथापि तस्यार्थिकत्वाभ्युपगमः किंनिबन्धन इत्याशङ्क्य प्रत्ययार्थप्राधान्यविषयोत्सर्गपीडापरिहाराय तथाभ्युपगम इत्याह । तत्त्वेति ॥ ३३७ ॥

इच्छायामितिसूत्रकारवचनं प्रधान्यपक्षे भवेदिच्छार्थस्य समञ्जसं न खलु तत् सन्प्रत्ययार्थे गुणे ॥
धात्वर्थे ननु सन् भवेदिति वदेदिच्छा गुणश्चेद् भवेदिच्छायामिति वक्ति तेन वदति प्राधान्यमिच्छागतम्३३८

तर्हीच्छाप्राधान्यमपि न शाब्दं गमकाभावादित्याश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ङ्गोत्सर्गतस्तत्सिद्धिमभिप्रेत्यात्रापि तद्‌गमकमस्तीत्याह। इच्छायामितीति। इच्छार्थस्यैच्छारूपप्रत्ययार्थस्य प्राधान्यपक्षे इच्छायामितिसूत्रकारवचनं भवेत्, सन्प्रत्ययार्थे तस्मिन् गुणे सति तद्वचनं न खलु समञ्जसमिति सम्बन्धः। इच्छायामिति सप्तम्या तस्याः सन्प्रत्ययविषयत्वनिर्द्देशात्तस्या एव प्राधान्येन तदभिधेयतेति गम्यत इत्यर्थः। यदीच्छागुणकधात्वर्थ एव प्राधान्येन विवक्षितः स्यात्तदा सूत्रमन्यथा स्यादित्याह। धात्वर्थ इति। इष्टापत्तिशङ्कां परिहरन्निगमयति। इच्छायामिति ॥ ३३८ ॥

तस्मात् कर्म समस्तमेव तु भवेदिच्छाजनेः साधनं
शास्त्रेणोक्तमतः समस्तमपि तद् यत्नेन हेयं यतेः॥
द्रष्टव्यत्वमनूद्य साधनतया यत्तत् प्रतीचः श्रुतं
वेदान्तश्रवणादिकं भवति तत्कर्त्तव्यमावश्यकम् ॥३३९॥

इच्छाप्राधान्यस्य श्रौतत्वसाधनफलमाह। तस्मादिति। विविदिषन्तीत्यत्र प्रत्ययार्थेच्छायाः प्राधान्येन श्रवणात्प्रधानपदार्थशेषतया चेतरपदार्थानामन्वयाद् वेदानुवचनादिकं समस्तं शास्त्रीयं कर्म विविदिषामात्रसाधनं न त्विष्यमाणवेदनसाधनमित्येतद्वचनबलात् सिद्धमित्यर्थः। एवं च विवेकवैराग्यादिसंपन्नस्योत्पन्नविविदिषाकस्य यतेः प्रयोजनाभावात्प्रत्यवायहेतुत्वाच्च तद्बहिरङ्गसाधनं सर्वात्मना हेयमिति फलित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्याह । अत इति । किं तर्हि तेन कर्त्तव्यमिति वीक्षायां पूर्वोक्तमन्तरङ्गसाधनमेवावश्यकत्वात्तदभिलषितसाधनत्वाच्चानुष्ठेयमित्याह । द्रष्टव्यत्वमिति । प्रतीच इत्यस्यानेनान्वयः । श्रुतं श्रोतव्यादिवाक्याच्छमादिवाक्याच्चेति शेषः ॥ ३३९ ॥

वेदान्तवाक्यमिह कारणमात्मबोधे
हेत्वन्तराणि परिपन्थिनिबर्हणानि ॥
यज्ञादिकानि दुरितं क्षपयन्ति बुद्धे-
स्तत्त्वंपदार्थविषयं तम उत्तराणि ॥ ३४० ॥

ननु वेदान्तविज्ञानसुनिश्चितार्था इत्यादिवचनादात्मतत्त्वनिश्चये वेदान्तानां हेतुत्वावगमात्तेषां चाकर्त्तव्यत्वात्स्वतः प्रमाणत्वाच्चेतिकर्त्तव्यानपेक्षत्वाद्यज्ञादीनां शमादिसहितश्रवणादीनां च तद्धेतुकधीसाधनत्वमेव नास्ति तत्र कुतोऽन्तरङ्गत्वादिविभागसिद्धिरित्याशङ्क्य सत्यं वेदान्तवाक्यमेव निरपेक्षं तत्कारणं तथाऽपि प्रतिबन्धनिरासितया एतेषामपि तत्रोपयोगात्साधनत्वादिव्यपदेश इत्याह । वेदान्तेति । तथापि कथं तेष्वन्तरङ्गत्वादिविभाग इत्याशङ्क्य तत्र विशेषमाह । यज्ञादिकानीति । बुद्धेर्दुरितमिति संबन्धः । कर्मणां विविदिषार्थत्वश्रवणात्तस्याश्च विषयसौन्दर्यलभ्यायाः साक्षात्तज्जन्यत्वायोगात्तत्प्रतिबन्धकदुरितध्वंसविवेकवैराग्यद्वारा तेषां विविदिषायामुपयोगाद्बहिरङ्गत्वम् , वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्टाधिकारिकर्त्तृकश्रवणादेस्तु विविदिषान्तरभाविनस्तत्त्वंपदार्थाज्ञाननिवृत्तिद्वारेष्यमाणाज्ञान एवोपयोगादन्तरङ्गत्वमित्यर्थः ॥ ३४० ॥

तत्त्वंपदार्थविषयं तम इत्यपीद-
मर्वागवस्थजनदृष्टिमपेक्ष्य गीतम् ॥
अज्ञानमुत्तमदृशां पुनरेकमेव
संसारमूलमपवर्गफला च विद्या ॥ ३४१ ॥

नन्वज्ञानमेकमेव तच्च शुद्धप्रत्यगभिन्नाद्वितीयब्रह्मगोचरं वाक्यार्थबोधादेव च तन्निवृत्तिरिति प्रागुक्तम्, ततश्च तत्त्वंपदार्थाज्ञाननिवृत्तिः श्रवणादिसाध्येत्येतदयुक्तमित्याशङ्क्य नानाऽविद्याकल्पकमन्दप्रज्ञजनदृष्ट्यनुरोधेनेदमुक्तम्, वस्तुतस्त्वविद्या पूर्णब्रह्मगोचरैकैव तन्निवर्त्तिका विद्याऽप्येकैवेति प्रकृष्टप्रज्ञानां संमतमित्याह। तत्त्वंपदार्थेति। विद्या चैकैवेति योजनीयम्॥३४१॥

अज्ञानसंशयविपर्ययरूपकाणि
ब्रह्मात्मबुद्धिजननप्रतिबन्धकानि ॥
तत्त्वंपदार्थविषयाणि निवर्त्तयन्ति
ह्यावृत्तिमन्ति मननश्रवणादिकानि ॥ ३४२ ॥

किं तर्ह्यस्मिन्मते श्रवणादिकृत्यमित्याशङ्क्याह । अज्ञानसंशयेति । विशेषदर्शनाभावोऽज्ञानशब्दार्थः । श्रवणं वेदान्ततात्पर्यगोचराज्ञानसंशयादिप्रतिबन्धं निवर्त्तयति, मननं तु मतान्तरादिविरोधधीप्रयुक्तप्रमे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यासंभावनादिरूपं प्रतिबन्धं निवर्त्तयति, निदिध्यासनं तु चित्तचाञ्चल्यादिरूपं प्रतिबन्धं निवर्त्तयतीति विशेषो द्रष्टव्यः । दृष्टफलत्वादेव तेषामवहननादिवद्यावत्फलोदयमावृत्तिरपि कार्यैत्यभिप्रेत्यावृत्तिमन्तीत्युक्तम् ॥ ३४२ ॥

शब्दशक्तिविषयं निरूपणं
युक्तितः श्रवणमुच्यते बुधैः ॥
वस्तुवृत्तविषयं निरूपणं
युक्तितो मननमित्युदीर्यते ॥३ ४३ ॥

श्रवणादेरुक्तप्रतिबन्धनिवर्त्तकत्वयोग्यतामर्थाज्ज्ञापयंस्तत्स्वरूपमाह । सार्द्धेन शब्दशक्तीत्यादिना । शक्तिशब्देनात्राधिकारिजिज्ञासितवस्तुबोधनसामर्थ्यरूपतात्पर्यं वाक्यगतमभिधीयते, पदगतशक्तीनां लोकत एवावगमाद्युक्तितो निरूपणानपेक्षत्वात्तत्सार्थक्यायापौरुषेये वेदे पुरुषाभिप्रायरूपतात्पर्यनिरासाय च तत्र शक्तिशब्दस्तादृशतात्पर्यविषयः प्रयुक्तः, तद्विषयं निरूपणं तन्निर्णयानुकूलो मानसव्यापार उपक्रमोपसंहारादिविषयस्तर्कसहितः श्रवणमित्युच्यत इत्यर्थः । तथा च तस्य तात्पर्यनिर्णयद्वारा तदज्ञानसंशयादिनिवर्तकत्वसंभव इति भावः । तत्त्वंपदलक्ष्यं वस्तु, तदैक्ययाथात्म्यं वस्तुवृत्तम्, युक्तितस्तद्विषयं निरूपणं भेदादिप्रपञ्चमिथ्याविषयदृश्यत्वाद्यनुपपत्तिरूपयुक्तिभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तदद्वितीयत्वसंभावनार्थाहेतुभूतमानसव्यापारो मननम्, तच्च तदसंभावनादिनिवर्त्तकमित्यर्थः ॥ ३४३ ॥

चेतसस्तु चितिमात्रशेषता
ध्यानमित्यभिवदन्ति वैदिकाः ॥
अन्तरङ्गमिदमित्थमीरितं
तत् कुरुष्व परमात्मवुद्धये ॥ ३४४ ॥

निदिध्यासनस्वरूपमाह । चेतस इति । समस्तजडविषयाकारत्वत्यागेन चेतसश्चिदेकरसात्माकारतयाऽवस्थानं ध्यानन्तदेव निदिध्यासनम्, तेन च चित्तस्य तत्त्वसाक्षात्कारायोग्यतारूपश्चित्तचाञ्चल्यप्रयुक्तप्रतिवन्धो निवर्त्तते, ततश्च तेषां पूर्वोक्तप्रतिवन्धनिवर्तकत्वं युक्तमिति भावः। एवं श्रवणादीनां फलवत्त्वं प्रसाध्य तन्निरूपणमुपसंहरन् फलितमाह । अन्तरङ्गमिति । प्रतिवन्धनिवृत्तिं विना परमात्मतत्त्वसाक्षात्कारायोगात्तन्निवर्तकश्रवणादि तदर्थिनावश्यमनुयष्टेमित्यर्थः॥३४४॥

श्रवणमननवुद्ध्योर्जातयोर्यत् फलं
तन्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ॥
अनुभवनविहीनायैवमेवेतिवुद्धिः
श्रुतमननसमाप्तौ तन्निदिध्यासनं हि ॥ ३४५ ॥

पूर्वं श्रवणादिवदनुष्टेयं निदिध्यासनपदाभिधेयमुक्तमिदानीं वार्तिककारैरुक्तमर्थान्तरमाह । श्रवणेति । आदरेण निरन्तरं श्रवणमननात्मकवुद्धेरादर्शनाय जात-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योस्तदुद्देशेनानुष्ठितयोर्यदान्तरालिकं फलं तन्निपुण-मतिभिर्वार्तिककारैरुक्तं स्तात्पर्येण निदिध्यासनमुच्यते इति संबन्धः। तदेवान्तरालिकं फलं विशदयति। अनुभवनेति। उक्तरीत्या श्रुतमननसमाप्तौ तदुत्कर्षे सत्यनुभवनविहीना ब्रह्मात्मत्वापरोक्ष्यरहिताहं ब्रह्मैवे-त्येवमाकारनिर्विचिकित्सा या बुद्धिः सा तत्फलं तन्निदि-ध्यासनमित्यर्थः। हिशब्दस्तदुक्तयुक्तिसूचनार्थः। सा चे-यम्, आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-सितव्य इत्युक्तान्येव दर्शनादीन्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेत्यत्रानूद्यन्ते तत्र च निदिध्या-सनस्य विज्ञानपदेनानुवादान्न तद्ध्यानं किन्तूक्तात्म-निर्णयज्ञानमेव, विज्ञानपदस्य निर्णयज्ञाने रूढत्वान्नि-दिध्यासनपदस्यान्यत्र ध्याने प्रयोगादर्शनेन तत्र तस्य रूढिकल्पकाभावात्, प्रकृतवाक्ये तु विज्ञानपदेनानुवा-दबलात्प्रसिद्धविज्ञानमेव निदिध्यासनमिति निश्चीयत इति ॥ ३४५ ॥

पूर्वाण्यदृष्टपरिपन्थिनिबर्हणानि
दृष्टं हरन्ति च विरोधिनमुत्तराणि ॥
वाक्यं निरस्तसकलप्रतिबन्धकं स-
दात्मानमद्वयमखण्डमबुद्धमाह ॥ ३४६ ॥

तथापि ओमित्येवं ध्यायथ आत्मानं तस्याभिध्या-नाद्योजनादित्यादिश्रुत्या ध्यानमप्यात्मसाक्षात्कारा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यानुष्ठेयमित्यभिप्रेत्य वेदान्तवाक्यमिह कारणमात्मबोध इत्यादिनोक्तमुपसंहरति । पूर्वाणीति । यज्ञादीनीत्यर्थः । विविदिषाप्रतिबन्धकं दुरितमदृष्टम् । प्रमाणप्रमेयासंभावनादिकं दृष्टम् । उत्तराणि श्रवणादीनि । वाक्यं तत्त्वमादिमहावाक्यम् ॥ ३४६ ॥

यज्ञादिक्षपितसमस्तकल्मषाणां
पुत्रादित्रयगतसंगवर्जितानाम् ॥
संशुद्धे पदयुगलार्थतत्त्वमार्गे
प्रायेणोद्भवति हि जन्मनीह विद्या ॥ ३४७ ॥

ननु यज्ञाद्यनुष्ठितवतामपि केषां चिद्विविदिषा न जायते ततश्च व्यभिचारात्सा न तत्साध्येत्याशङ्क्याह । यज्ञादीति । तेषां सर्वात्मना प्रतिबन्धककल्मषनिवृत्त्यभावात्तदनुदयेऽपि समस्तप्रतिबन्धककल्मषक्षये तदुदयो भवेदेव, कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्यादिवचनादित्यर्थः । सत्यामपि विविदिषायां पुत्रवित्तलोकैषणाविक्षिप्तचित्तानां परिपक्वविद्योदयायोगात्तदर्थमेषणात्रयसंत्यागोऽपि कार्य इत्याशयेनाह । पुत्रादीति । तावताप्युक्तविद्योदयायोगात्मानमेयविचारेण तत्त्वंपदार्थावपि संशोधनीयावित्याह । संशुद्ध इति । तत्त्वज्ञानोपायत्वं मार्गशब्दार्थः । वर्णितपुष्कलसाधनसंपन्नस्य शोधिततत्त्वंपदार्थस्याधिकारिणः किमस्मिन्नेव जन्मनि मुक्तिहेतुर्विद्योदेति किं वा ज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्मान्तर इति शङ्कायामनियम इत्याह । प्रायेणेति । ऐहिकमप्यप्रस्तुतप्रतिबन्ध इतिसूत्रोक्तन्यायसूचको हिशब्दः ॥ ३४७ ॥

अत्रैव जन्मनि भवेदपवर्गदायि
वाक्यप्रसूतमनुभूतिफलावसानम् ॥
ज्ञानं निवारकनिमित्तवशादमुष्मिन्
जन्मन्यपीति वचनादवगम्यते हि ॥ ३४८ ॥

न्यायसिद्धार्थमेव विशदयति । अत्रैव जन्मनीति । अनुभूतिः साक्षात्कारस्तत्फलमविद्यानिवृत्तिस्तदवसानं तत्पर्यवसायि साक्षात्काररूपमिति यावत्, निवारकमिह जन्मनि ज्ञानजन्मप्रतिबन्धकं निमित्तं जन्मान्तरस्य तद्वशात्तत्प्राबल्यादित्यर्थः । जन्मान्तरकृतश्रवणादिना जन्मान्तरे ज्ञानजन्म भवतीत्यत्र मानमाह । वचनादिति । स्मृतिवचनाच्छ्रौतलिङ्गाच्चेति हिशब्दार्थः ॥ ३४८ ॥

ज्ञानोत्पत्तिं वामदेवस्य गर्भे
श्रुत्वा विद्वः साधनं प्राच्यमस्य ॥
योगभ्रष्टस्मृत्यवष्टम्भतोऽपि
ज्ञातव्यं तत् साधनं प्राच्यमस्य ॥ ३४९ ॥

तत्र श्रौतं लिङ्गं दर्शयति । ज्ञानोत्पत्तिमिति । गर्भे एव शयानो वामदेव एवमुवाचेत्यादिना वामदेवस्य गर्भे एव ज्ञानोत्पत्तिः श्रूयते, न च तस्य तदा श्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वणादि संभवति, ततो जन्मान्तरीयाच्छ्रवणादेस्तस्य गर्भे ज्ञानोदय इति गम्यते, न च तस्य पूर्वजन्मन्येव सर्वात्मकब्रह्मभावानुभवो जातस्तत्स्मरणादेव पुनर्गर्भेऽपि तस्य सर्वात्मभावोक्तिरिति वाच्यम्, तत्त्वसाक्षात्कारे जाते पुनर्गर्भवासायोगात्, न च तस्याधिकारित्वे किं चिद्बन्धकमस्ति, तस्माद्वामदेववदन्यस्यापि संन्यासिनः पुष्कलसाधनानुष्ठानवतो यदि जन्मान्तरप्रापकं प्रबलं कर्मास्ति तदा नेह ज्ञानजन्म किं तु जन्मान्तरे भविष्यति, यस्य तु तादृशं कर्म नास्ति तस्यात्रैव ज्ञानजन्मेत्युत्सर्गत ऐहिकमेव ज्ञानं भवतीत्यर्थः। स्मृतिवचनं दर्शयति। योगभ्रष्टेति। अनुष्ठितसाधनस्यानुत्पन्नसाक्षात्कारस्यैव देहपाते सति तस्य अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छतीत्यर्जुनेन प्राप्तव्यगतिप्रश्ने कृते भगवता शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत इति तस्य पुनर्जन्मोक्त्वा तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकमिति विद्याप्राप्त्यभिधानात्कस्य चित् प्राचीनसाधनाज्जन्मान्तरेऽपि विद्योदयो भवेदित्यर्थः ॥ ३४९ ॥

चित्रादिवद्भवति साधनजातमस्य
ज्ञानप्रसूतिकरमित्यवगच्छ सर्वम् ॥
अभ्यग्रशुध्यदखिलौषधिकस्य पुंसो
वृष्टिप्रदोष्टिरधिकारवशादिहैव ॥ ३५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु श्रवणादेर्दृष्टफलत्वात्कारीर्यादेरिवैहिकमेव तत्फलं युक्तं न त्वामुष्मिकमपीत्याशङ्क्य दृष्टफलत्वेऽप्यैहिकफलकत्वनियमो नेति सदृष्टान्तमाह । चित्रादिवदिति । चित्रया यजेत पशुकामः संग्रहण्या यजेत ग्रामकाम इत्यादिना दृष्टपश्वादिसाधनत्वेन विहितचित्रायागस्य पश्वादिफलप्रापकत्वमसति प्रतिबन्धेऽस्मिन्नेव जन्मनि स्यात् , अत्र तस्यानुपलम्भे तु प्रतिबन्धकवशादिहाप्राप्तिर्जन्मान्तरे च प्राप्तिरिति यथा कल्प्यते साङ्गस्य कर्मणोऽनुष्ठितस्य फलावश्यंभावनियमात्, तथा दृष्टफलस्यापि श्रवणादेरिह वामुत्र वा विद्याप्रसूतिकरत्वं युक्तमित्यर्थः । तर्हि कारीर्यादिफलभूतं वृष्ट्यादिकमप्येवमेव स्यात्तस्यापीहानुपलम्भे सत्यामुष्मिकत्वकल्पनादिति नेत्याह । अभ्यग्रेति । सन्निहितो वर्त्तमान इष्ट्यारम्भसमयोऽभ्यग्रशब्दार्थः । पुंसो या इष्टिः साऽधिकारवशादिहैव वृष्टिप्रदेति संबन्धः । अधिक्रियते अनेनेत्यधिकारो विधिपुरुषसंबन्धनिमित्तं शुष्यदोषधिसंजीवनकामना तत्काले शुष्यदोषधीनां जन्मान्तरभाविवृष्ट्या जीवनासंभवात्तदर्था वृष्टिरिहैव स्यात्, तदनुपलम्भे त्वङ्गवैकल्यं कल्पनीयमिति भावः॥३५०॥

वहिरङ्गसाधनमशेषगुरोः
परमेश्वरस्य चरणाम्बुजयोः ॥
नियमात् समर्पितमशेषमघं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिहन्ति बुद्धिनिलयं सुमहत् ॥ ३५१ ॥

नन्वन्तरङ्गसाधनानुष्ठानस्येह वाऽमुत्र वा विद्याहेतुत्वनियमवद्बहिरङ्गसाधनानुष्ठानस्यापि नियतं विविदिषाहेतुत्वं वक्तव्यम्, न चैतदस्ति, अनादिभवपरंपरायां केषु चिज्जन्मसु सर्वेषां वेदानुवचनाद्यनुष्ठानवतामपि विविदिषाभावादित्याशङ्क्य सर्वेषां समस्तप्रतिबन्धकदुरितनिवर्त्तकानुष्ठानविशेषाभावाद्विविदिषाभाव इत्यभिप्रेत्य तन्निवर्तकं तदनुष्ठानविशेषमाह। बहिरङ्गेति। मत्तः स्मृतिर्ज्ञानमपोहनं चेति भगवद्वचनात्स एव सर्वगुरुः, ततश्च तत्प्रीणनमवश्यं कार्यमित्यभिप्रेत्याशेषगुरोरित्युक्तम्। क्रियमाणमात्रविषयत्वं समर्पणस्य नियमादित्युक्तम् ॥ ३५१ ॥

न तथान्तरङ्गमुपलब्धिजने-
रुपकारकं शमदमप्रभृति ॥
तदनुष्ठितं परमहंसजनैः
परमात्मतत्त्वमुपलम्भयति ॥ ३५२ ॥

तर्ह्यन्तरङ्गसाधनानामप्यनुष्ठेयत्वाविशेषादीश्वरार्पणं कार्यमिति नेत्याह। न तथेति। तथा बहिरङ्गवदीश्वरे समर्पणेनेत्यर्थः। अत्र च स्वयमेव नियामकं वक्ष्यति। तथाप्यनधिकारिणानुष्ठितं श्रवणादि न तदुपकारकं किं तु विवेकवैराग्यादिपूर्वकं त्यक्तैषणात्रयाधिकारिणानुष्ठितं सदात्मतत्त्वसाक्षात्कारकरमित्याह।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदनुष्ठितमिति ॥ ३५२ ॥

भगवाननन्तादिनिधनः कृपया
हरिरेतदाह जगदेकहितः ॥
सकलं समर्प्य मयि युक्तमनाः
कुरु कर्म शुद्धिकरमित्यसकृत् ॥ ३५३ ॥

कर्मणामीश्वरेऽर्पितानां चित्तशुद्ध्यादिद्वारा ज्ञानहेतुत्वमित्यत्र मानमाह । भगवानिति । यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् , यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् , शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः, संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि, यज्ञायाचरतः कर्म समग्रं प्रविलीयत इत्यादिभगवद्वचनमुक्तार्थे मानमित्यर्थः । तेषां वचनानामुक्तार्थे तात्पर्यवत्त्वज्ञापनायासकृदित्युक्तम् ॥ ३५३ ॥

न तथान्तरङ्गफलसंन्यसनं
क्व चिदूचिवानत इदं विदितम् ॥
अनपेक्ष्य तत्फलपरित्यजनं
परमात्मनिश्चयफलं तदिति ॥ ३५४ ॥

अन्तरङ्गसाधनानामीश्वरार्पणं कार्यमित्यत्र मानाभावात्तेषां तेन विनापि तत्त्वधीहेतुत्वं युक्तमिति वैषम्यमाह । न तथान्तरङ्गफलेति । इदमुक्तं विवृणोति । अनपेक्ष्येति । तच्छब्दद्वयमन्तरङ्गसाधनविषयमितीदं विदितमिति सम्बन्धः ॥ ३५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च बन्धनहेतुतया श्रुतं
सकलमीक्षणकौशलशालिनः ॥
भवति शुद्धिकरं न च बन्धकृद्
भवति कर्म तथा घटते हि तत् ॥ ३५५ ॥

उक्तविभागे नियामिकां युक्तिमप्याह । अपि चेति । सकलं कर्मेति सम्बन्धः । पाठान्तरे ब्रह्मार्पणबुद्ध्यानुष्ठानं समसमीक्षणकौशलम् । यद्यपि कर्मणां स्वभावतो बन्धफलत्वं पुण्यः पुण्येन कर्मणा भवति पापः पापेन धर्मरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदध इत्यादिवचनादवगतम्, तथापि तानीश्वरे समर्पितानि बन्धहेतुत्वं विहाय चित्तशुद्धिकराणि भवन्ति, उक्तं हि, एवं क्रियायोगपथा सर्वे संसृतिहेतवः, त एव ह्यात्मनाशाय कल्पन्ते कल्पिताः पर इति, भगवताप्युक्तम्, यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबन्धनः तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचरेति, तस्मादुक्तविचाराधीनेक्षणकौशलवतस्तथैवानुष्ठितं कर्म न बन्धकृद्भवति किं तु चित्तशुद्धिकरमेव भवतीति तथैव तदनुष्ठेयमित्यर्थः । ननु स्वभावतो बन्धहेतोः कर्मणः कथमीश्वरे समर्पणेऽपि विपरीतकार्यहेतुत्वं शक्तिविपर्ययायोगादित्याशङ्क्याह । तथा घटत इति । हिशब्दो दृष्टान्तप्रदर्शनार्थः । यथा दधिविषादेः केवलस्य स्वभावतो ज्वरमरणादिहेतोरपि मधुमन्त्रादियुक्तस्य पु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टिजीवनादिहेतुत्वं तथैतदपि घटत इत्यर्थः ॥ ३५५ ॥

यदिह साधनमात्मधियः श्रुतं
न च फलान्तरहेतुतया श्रुतम् ॥
शमदमादिकमत्र तु कौशलं
किमपि काङ्क्षितमस्ति न सिद्धये ॥ ३५६ ॥

एवं बहिरङ्गसाधनस्य यज्ञादेः स्वतो बन्धहेतोरपि विविदिषायां पर्यवसानायेश्वरार्पणबुद्ध्यानुष्ठानं कार्यमित्युक्तम्, इदानीमन्तरङ्गसाधनस्य तत्त्वधीजननाय न तदपेक्षेति युक्तितो दर्शयति । यदिहेति । यच्छमदमादीति सम्बन्धः । इह शास्त्रे । न चेतयस्मात्प्राक् तदित्यध्याहार्यम् चोऽवधारणे । शुद्धिः फलान्तरपदार्थः । अत्र शमदमाद्यनुष्ठाने । शमादिमदनुष्ठितश्रवणादीनां स्वतः फलान्तरहेतुत्वे मानाभावात्तद्विघटनायेश्वरे समर्पणस्यानपेक्षितत्वात्तदनुष्ठानमात्रमेव तत्त्वज्ञानायोपकरोतीत्यर्थः ॥ ३५६ ॥

उक्तं साधनजातमत्र सकलं विद्यासमुत्पत्तये
यस्मिन् कर्मणि वैदिकेन विधिना नुन्नः परिव्राजकः॥
कर्तृत्वाद्युपमर्दनेन भवता विद्यानुकूलात्मना
कर्त्तव्यं तदशेषतस्तदनु ते विद्या विपाकं व्रजेत् ॥३५७॥

संक्षेपविस्तराभ्यामुक्तमध्यायार्थमुपसंहरति । उक्तमिति । तत्रान्तरङ्गसाधनेष्वधिकारिविशेषमाह । यस्मिन्निति । वैदिकेनेति । एतमेव प्रव्राजिनो लोकमि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छन्तः प्रव्रजन्तीत्युक्तेन विविदिषोः संन्यासविधिने-त्यर्थः । एतदुपलक्षणं परित्यज्यात्मानमन्विच्छेदिति स्मार्तविधेरपि। नुन्नः प्रेरितः । ततः स एव तत्राधिका-रीति भावः । तत्कर्तृकश्रवणाद्यनुष्ठाने कर्मानुष्ठाना-पेक्षया प्रकारविशेषमाह । कर्तृत्वादीति । अकर्त्रादिरू-पात्मानुभवस्योद्देश्यत्वात्तदर्थश्रवणादिकर्तृत्वाद्युपमर्दे-नानुष्ठितं तदनुकूलं भवति, कर्तृत्वाद्यभिनिवेशेन तद-नुष्ठाने तु तेनैव विद्याप्रतिबन्धो भवेदिति युक्तिभिः कर्तृत्वादि बाधमानेनैव श्रवणाद्यनुष्ठेयं ततस्तत्त्वसा-क्षात्कारप्रतिबन्धो न भवेदित्यर्थः ॥ ३५७ ॥

वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः
कर्मव्यध्वनिषेवितं भवति वै जन्मान्तरे पाचकम् ॥
विद्यायाः श्रवणादिलक्षणमिदं न ह्येतदेषां क्व चि-
च्छास्त्रेण प्रतिषिद्धमीक्षितमिदं शूद्रस्य दृष्टं यथा ॥३५८॥

ननु श्रवणादावन्तरङ्गसाधने प्रव्राजकश्चेदधिका-री तर्ह्यन्येषां गृहस्थादीनां तत्र प्रवृत्तिर्न स्यात्तत्र ते-षामधिकाराभावेन तदधीनफलभाक्त्वायोगादित्याश-ङ्क्य श्रवणादेर्दृष्टफलत्वाद् दृष्टफले च कर्मणि सति सा-मर्थ्ये प्रतिषेधाभावे च सत्यधिकारस्य निरपवादत्वा-द् गृहस्थादीनामप्यावश्यककर्मकालावशिष्टसमयेषु श्र-वणाद्यनुष्ठानसंभवात् शूद्रो यज्ञेऽनवक्लृप्त इतिवत्प्रतिषे-धाभावाच्च तेषामपि तत्राधिकारोऽस्त्येव परं तु तेषां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तस्मिन् जन्मनि परिपक्वज्ञानं ततो भवति किं तु जन्मान्तर इत्याह । वानप्रस्थेति । अन्यैः परिव्राजकातिरिक्तैर्वर्णाश्रमैर्वर्णधर्ममात्रनिष्ठैराश्रमधर्मनिष्ठैश्च त्रैवर्णिकैः कर्मस्वव्यध्वेषु कर्मच्छिद्रेषु आवश्यककर्मरहितावकाशेषु निषेवितमनुष्ठितं श्रवणादिलक्षणमिदमन्तरङ्गसाधनं जन्मान्तरे विद्यायाः पाचकं भवतीति सम्बन्धः । उक्तार्थसाधकन्यायसूचको वैशब्दः । तमेवाह । न हीति । एतच्छ्रवणादि । क्व चित् श्रुतौ स्मृतौ वा । इदं प्रतिषेधनम् । अपशूद्राधिकरणे हि शूद्रस्य वेदवाक्यश्रवणोच्चारणधारणप्रतिषेधनबलात्सर्ववैदिकविद्यास्वधिकारप्रतिषेधो निरूपितः, तद्वत्परिव्राजकातिरिक्तत्रैवर्णिकानामधीतवेदानां वेदान्तश्रवणादिप्रतिषेधो न दृष्ट इत्यर्थः ॥ ३५८ ॥

सर्वश्रुतिस्मृतिवचोभिरयं परिव्राड्<br>
मुण्डः शुचिः परमहंस इति प्रसिद्धः ॥<br>
ज्ञानाय साधनधनेषु नियुज्यमानः<br>
प्रायेण बुद्धिपरिपाकमवाप्स्यतीह ॥ ३५९ ॥

ननु गृहस्थादीनामपि श्रवणादावधिकारोऽस्ति चेत्कथं तज्जन्मान्तरे पाचकमित्युक्तम्, दृष्टफले तस्मिंस्तद्योगादितरथा परिव्राजकानुष्ठितश्रवणादेरपि तथात्वापातादित्याशङ्क्याह । सर्वश्रुतीति । अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मभूयाय भवतीत्यादिषु मुण्डत्वादिविशेषणवान्परमहंस इति प्रसिद्धोऽयं परिव्राड् वक्ष्यमाणसर्वश्रुतिस्मृतिवचोभिर्ज्ञानाय तत्साधनभूतश्रवणादिरूपधनेषु वित्तेषु स्वाभीष्टहेतुषु नियुज्यमानस्तान्यनुतिष्ठन् प्रायेणेह जन्मनि बुद्धिपरिपाकमवाप्स्यतीति सम्बन्धः। तस्यापि सति प्रतिबन्धे जन्मान्तरे तत्प्राप्तिरिति सूचनाय प्रायेणेत्युक्तम्। इदमुक्तं भवति, बह्वीषु श्रुतिस्मृतिषु परमहंससन्यासस्य ज्ञानपरिपाकाङ्गत्वेन विधानात् परमहंसस्य कृत्यान्तराभावेनानन्यचित्ततया श्रवणादिपुष्कलसाधनस्य सम्यगनुष्ठाने शक्तत्वाच्च तस्य तस्मिन्नेव जन्मन्यसति प्रतिबन्धे दृष्टफलरूपस्वात्मसाक्षात्कारो भवत्येव, गृहस्थादीनां त्वधिकारे सत्यप्यावश्यककर्मानुष्ठानविक्षिप्तचित्ततया सम्यक्साधनकलापानुष्ठानायोगात्साक्षात्काराङ्गसंन्यासाभावाच्च न तस्मिन् जन्मनि तत्त्वज्ञानपरिपाको भवति किं तु जन्मान्तरे सति संन्यासेऽल्पयत्नादेव सम्भवतीति निश्चीयते, इतरथा संन्यासविधिवैयर्थ्यापातात्। न चैवं सति देवादीनां संन्यासाभावात्तत्त्वसाक्षात्कारो न स्यादिति वाच्यम्। कर्माधिकारिणामेव प्राप्तकर्मसंन्यासस्य दृष्टादृष्टद्वारा ज्ञानपरिपाकाङ्गत्वेन विधानात्, देवादीनां विनापि संन्यासं श्रवणादितस्तत्त्वसाक्षात्कारोपपत्तिरिति ॥ ३५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जन्मान्तरेषु यदि साधनजातमासीत्
संन्यासपूर्वकमिदं श्रवणादिरूपम् ॥
त्विद्यामवाप्स्यति जनः सकलोऽपि यत्र-
तत्राश्रमादिषु वसन्न निवारयामः ॥ ३६० ॥

ननु मनुष्याणामेव जनकादीनामाश्रमान्तरे वर्त्त-मानानामेव मोक्षहेतुबोधोदय इतिहासपुराणादिषु प्रतिपाद्यते ततश्च कथं संन्यासस्य ज्ञानपरिपाकाङ्गत्वं कथं वा गृहस्थादीनां सत्यपि श्रवणादौ तस्मिन् जन्मनि तत्त्वसाक्षात्कारानुदयनियम इत्याशङ्क्याह । जन्मान्तरेष्विति । योगभ्रष्टोक्तन्यायेन तेषां प्राचीनभवे संन्यासश्रवणाद्यनुष्ठानं कार्यबलात् संन्यासविधिबलाच्च कल्प्यते, जन्मान्तरीयसंन्यासस्याप्यदृष्टद्वारा संस्कारद्वारा च जन्मान्तरीयज्ञानपरिपाकाङ्गत्वोपपत्तेस्तादृशानामाश्रमान्तरस्थानामपि तत्त्वसाक्षात्कारं न निवारयामः, किं तु जन्मान्तरीयोक्तसाधनरहितानामेव तेषां तन्निवारयाम इत्यविरोध इत्यर्थः ॥ ३६० ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥ ३६१ ॥

सर्वश्रुतिस्मृतिवचोभिरित्युक्तानि संन्यासस्य ज्ञानाङ्गत्वविषयाणि वचनानि दर्शयति वेदान्तविज्ञानेत्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिना ॥ ३६१ ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ॥
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३६२ ॥

नैतादृशमिति । वित्तं हितसाधनम् , एकता निस्सहायता, समता समदर्शिता, सत्यता सत्यभाषिता, शीलं शुभाचारः, स्थितिः मर्यादानतिक्रमः, दण्डनिधानं हिंसानिवृत्तिः, आर्ज्जवमकौटिल्यम्. सर्वक्रियोपरमः फलम् ॥ ३६२ ॥

यतोयतो निवर्त्तते
ततस्ततो विमुच्यते ॥
निवर्त्तनाद्धि सर्वतो
न वेत्ति दुःखमण्वपि ॥ ३६३ ॥

यत इति । निवृत्तिरेव सर्वदुःखोपरमोपाय इत्यर्थः ॥ ३६३ ॥

किं ते धनेन किमु बन्धुभिरेव वा ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ॥
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ ३६४ ॥

किं ते धनेनेत्यस्यार्थः । अनित्यधनपुत्रादिकं त्यक्त्वा नित्यात्मान्वेषणमेव हितमिति ॥ ३६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अर्थस्य मूलं निकृतिः क्षमा च
कामस्य रूपं च वयो वपुश्च ॥
धर्मस्य यागादि दया दमश्च
मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ ३६५ ॥

इति सर्वज्ञात्ममुनिविरचिते संक्षेपशारीरके साधनलक्षणं नाम तृतीयोऽध्यायः ॥ ३ ॥

अर्थस्येति। निकृतिः शाठ्यम्, क्षमा सहिष्णुता ॥३६४॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपाद-शिष्यश्रीमधुसूदनसरस्वतीकृतायां संक्षेपशारीरकव्याख्यान-रूपसारसंग्रहदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

उक्तसाधनसमुद्भवा सती
किं प्रयच्छति फलं मुमुक्षवे ॥
प्रत्यगात्ममतिरत्र मे मन-
स्यर्थिता समुपजायतेऽधुना ॥ १ ॥

साधने ज्ञानस्वरूपे विषयनिरूपणेन करणनिरूपणेन च त्रिभिरध्यायैर्निरूपितेऽनन्तरं तत्फलमोक्षरूपविचारः प्रस्तूयते, तत्र यद्यपि फलमनित्यं स्वर्गादि कर्मजमुपासनाजं च हेयमेव कैवल्यं तु धीफलं नित्यमात्मस्वरूपमानन्दघनमविद्यातिरोधाननिवृत्तिमात्रेणोपादेयमेवेति प्रथम एव सूत्रे विनिर्णीतम्, तथापि ज्ञानफले मोक्षे वादिविप्रतिपत्तेः संदिहानस्य शिष्यस्य स्वरूपतः साधनतश्च तदवान्तरविशेषे निर्णयं गुरुमुखेन तत्तद्वादिविप्रतिपत्तिनिरासेन द्रढयितुकामस्य प्रश्नमवतारयति । उक्तसाधनेति । उक्तं यत् साधनं तिश्चितशक्तितात्पर्यकमपुनरुक्तसाकाङ्क्षपदपूरणेन सर्वाशङ्कोच्छेदि वेदान्तमहावाक्यं तदेव सम्यगसम्भावनादिनिवृत्त्योद्भवः कारणं यस्यास्तथा सती निर्दोषा अदुष्टकारणत्वेनाबाधितविषयत्वेन च परीक्षितप्रामाण्या प्रत्यगात्ममतिस्तत्त्वंपदार्थलक्ष्यांशोपस्थितिपूर्विका प्रत्यगखण्डब्रह्माकारनिर्विकल्पकसाक्षात्काररूपा मतिर्वे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दान्तप्रमाणकरणिका मनोवृत्तिर्मुमुक्षवे आत्यन्तिकीं बन्धनिवृत्तिमिच्छतेऽनात्यन्तिकनिखिलफलनिस्पृहाय साधकाय किं फलं प्रयच्छति। किं जन्यमैश्वर्यात्मकम्। किंवा नित्यमविद्यानिवृत्त्युपलक्षितकूटस्थचैतन्यानन्दात्मकम्। आद्ये तस्य स्वर्गविशेषत्वेन बन्धत्वाद्बन्धनिवृत्तिकामफलत्वानुपपत्तिः, नास्त्यकृतः कृतेनेतिश्रुतेश्च। अन्त्ये त्वनिष्पाद्यत्वेन फलत्वानुपपत्तिः, बन्धमोक्षयोरविशेषापत्तिश्च। अविद्यानिवृत्त्या विशेष इति चेत्तस्या अपि जन्यत्वाजन्यत्वयोर्दोषसाम्यात्। तस्मादुभयथाप्यनुपपत्तिदर्शनादत्र ज्ञानफलमोक्षस्वरूपनिर्णये मे मम साक्षिणो मनसि स्वतादात्म्येनाध्यस्तेऽन्तःकरणेऽर्थितेच्छा सम्यक् फलाव्यभिचारेणोपजायते। अधुना समन्वयाविरोधसाधननिरूपणानन्तरं फलनिरूपणावसरे। कामः सङ्कल्प इत्यादिश्रुतेरिच्छा द्वेषः सुखं दुःखमित्यादिस्मृतेश्चार्थिता मनसीत्यनिदमंशात्साक्षिणो निकृष्टस्य कर्तृत्वादिसर्वानर्थबीजस्येदमंशस्याहङ्कारस्य निर्देशः। म इत्यहङ्कारान्निष्कृष्टस्य साक्षिणो भेदेन निर्देशः। अत्र सतीत्यनेनादुष्टकरणजत्वेन समन्वयः प्रथमाध्यायार्थः, अबाधितविषयत्वेनाविरोधो द्वितीयाध्यायार्थः, उक्तसाधनसमुद्भवेति साधनं तृतीयाध्यायार्थो दर्शितः। किं फलमिति चतुर्थाध्यायार्थः प्रस्तुतः। मुमुक्षव इत्येकवचनादेकमुमुक्षुकजगद्द्रष्टव्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्था दर्शिता। प्रत्यगात्ममतिरित्यनेन ध्यानविलक्ष-
णा प्रमारूपा वृत्तिर्दर्शिता। किं फलं प्रयच्छतीति सि-
द्धस्यैव सम्बन्धापादनं कृतं न तु जनयतीत्यसिद्धस-
म्बन्धकथनम्, नित्यत्वानित्यत्वसन्देहे नित्यत्वांशस्यो-
त्कटत्वात्। एवं सिद्धान्तमादाय प्रश्नबीजमुक्तम्। वा-
दिविप्रतिपत्तयश्चात्र बहुविधाः सन्ति। तथाहि। मा-
ध्यमिकास्तावच्छून्यमात्रमात्मानमुपयन्तो निखिलमि-
दं शून्यमेव विपर्यासदर्शनेन तु सदात्मकमवभासते
परमार्थतस्तु न किं चिदपि तत्त्वमस्तीति शून्यभाव-
नाप्रकर्षपर्यन्तात्तत्त्वज्ञानाच्छून्यभाव एवापवर्ग इत्या-
हुः। योगाचारास्तु क्षणिकं विज्ञानस्कन्धमात्मत्वेन म-
न्यमानाः स्वलक्षणभावनया क्षणिकभावनया दुःख-
भावनया शून्यभावनया च चतुर्विधया सत्याभिधया
तस्य सोपप्लवविज्ञानसन्तानस्य प्रदीपनिर्वाणवदत्य-
न्तोपरमं वा निरुपप्लवविज्ञानसन्तानोदयं वा सर्वज्ञस-
न्तानान्तर्भावं वाऽपवर्गमिच्छन्ति। आर्हतास्तु स्थिरं
विज्ञानं देहपरिमाणं संकोचविकाशशीलं परिणामिन-
मात्मानमभ्युपगम्य तस्य पुर्यष्टकपरिवेष्टितस्यार्हतशा-
स्त्रोक्तेन तपसात्मैकाकारसमाधिप्रकर्षेण चाष्टविधक-
र्मबन्धप्रध्वंसे सति सुखैकतानस्य निरावरणज्ञानस्य
सततोर्ध्वगमनमलोकाकाशगमनं वा मोक्षमाचक्षते,
पञ्जरभञ्जन इव पञ्जरस्थस्य शुकस्य स्वातन्त्र्यम्, इदमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च स्वातन्त्र्यं मोक्ष इति प्रसिद्धम्। काणादास्तु विभु-
मात्मानं नवविशेषगुणाश्रयं कल्पयन्तो जल्पन्ति, द्रव्य-
गुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां
साधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पूर्वकादात्मतत्त्वसा-
क्षात्कारादीश्वरोपासनासहितान्नवानां वैशेषिकगुणानां
प्रागभावासहवृत्तिप्रध्वंस आत्मनः कैवल्यमिति। नै-
यायिकास्तु प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता-
वयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजाति-
निग्रहस्थानानामुद्देशलक्षणपरीक्षाभिरात्मशरीरेन्द्रि-
यार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाख्य-
द्वादशविधप्रमेयनिष्कर्षेण स्वात्मपरमात्मसाक्षात्का-
राच्छ्रवणमननिदिध्यासनपूर्वकात् सवासनमिथ्या-
ज्ञाननिवृत्तौ तत्कार्याणां दोषाणां रागद्वेषमोहाख्यानां
निवृत्तिः, ततस्तत्कार्ययोः प्रवृत्तिपूर्वकयोर्धर्माधर्मयोर्नि-
वृत्तिः,ततः पूर्वार्जितकर्मणां कायव्यूहपूर्वकभोगेन क्षया-
च्छरीरान्तरानारम्भः, ततो वासनालक्षणस्यैकविंशतिप्र-
भेददुःखस्यात्यन्तविमोक्षोऽपवर्ग इति कल्पयन्ति। अ-
परे त्वेकभविकन्यायेनात्मज्ञानमन्तरेणापि सकलक-
र्मोच्छेदलक्षणोऽपवर्गो निषिद्धकाम्ययोरननुष्ठानेन नि-
त्यानामनुष्ठानेन चागामिसुकृतदुष्कृतयोरनुत्पादाद्व-
र्तमानयोश्चोपभोगेन क्षयाद्गैरिकरक्ताः किंशुका इति
न्यायेन तदात्मगतसर्वप्रागभावनिवृत्त्या स्वयमेव भव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीत्याहुः । प्राभाकरा अपि वैदिककर्मानुष्ठानाद्विहिता-
त्मज्ञानपूर्वकाद्द देहेन्द्रियादिसंबन्धस्य समूलधर्माधर्म-
परिक्षयनिमित्तमात्यन्तिकोच्छेदलक्षणं मोक्षं मन्यन्ते।
भट्टास्तु ज्ञानकर्मसमुच्चयादेवात्मनो जडबोधात्मकस्य
नित्यज्ञानं नित्यसुखं चोदेति, ततश्च विषयविशेषानपे-
क्षया नित्यज्ञानेन नित्यसुखाभिव्यक्तिर्मुक्तिरित्याहुः।
मानसज्ञानेन नित्यसुखाभिव्यक्तिर्वा, तार्किकवद्द दुःखा-
भावमात्रमेव वा मुक्तिरित्यपि तदीयाः केचित्। सां-
ख्यास्तु प्रकृतिपुरुषविवेकादनाद्यविवेकनिवृत्तौ तं पु-
रुषं प्रति निवृत्ताधिकारायाः प्रकृतेर्न पुनस्तद्भोगार्था
प्रवृत्तिरिति त्रिविधदुःखस्यैकान्तात्यन्तनिरोध एव स्व-
भावतः केवलस्य पुरुषस्य कैवल्यमिति । पातञ्जलास्तु
प्रकृतिपुरुषविवेकेनाभ्यासवैराग्यपरिपाकाद्द यमनि-
यमासनप्राणायामप्रत्याहारधारणाध्यानसंप्रज्ञातसमा-
धिपूर्वकात् परमेश्वरप्रसादजात्पञ्चविधानां चित्तवृत्ती-
नां निरोधादेव धर्ममेघशब्दितादसंप्रज्ञातसमाधेः कै-
वल्यमिति कल्पयन्ति। त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदा-
भेदमभ्युपेत्य ज्ञानकर्मसमुच्चयाभ्यासादेव कारणात्मक-
ब्रह्मणि कार्यात्मकजीवस्य कर्मवासनासहितभेदांशनि-
वृत्तिरूपलयो मुक्तिरिति वदन्ति । ब्राह्मेण परमैश्वर्येण
योग इत्यन्ये । सत्तरङ्गनिस्तरङ्गभेदेन समुद्रद्वैविध्यवत्
सविकारनिर्विकाररूपेणावस्थाद्वयं ब्रह्मणः परिकल्प्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानकर्मसमुच्चयाभ्यासादेव सविकारावस्थापरित्यागेन निर्विकारावस्थाप्राप्तिरेव मोक्ष इत्यपरे। पाशुपतास्तु यथोक्तपाशुपतधर्माचरणात् पशुपाशविमोक्षणेन पशुपतिसमीपगमनमेव पुनरावृत्तिरहितं मोक्ष इत्याहुः। एवं यथोक्तविष्णुभक्तधर्माचरणजनिताद्विष्णुप्रसादाद्विष्णुलोकगमनमेव मोक्ष इति वैष्णवाः। पञ्चाग्निविद्याद्युपासनैरर्चिराद्दिमार्गेण हिरण्यगर्भप्राप्तिरेव मोक्ष इति हैरण्यगर्भाः। औपनिषदास्तु निरतिशयाद्वयानन्दबोधरूप आत्मैवानाद्यविद्यानिवृत्त्युपलक्षितो मोक्ष इत्याचक्षते। अविद्यायाश्च दुःखजड़ानृतरूपनिखिलद्वैतोपादानत्वादात्मतत्त्वसाक्षात्कारेण निवृत्तायां तस्यां तदुपादानकस्य निखिलद्वैतप्रपञ्चस्य नाशादनादेश्च तस्याः पुनरुत्पत्त्यापादनस्याशक्यत्वादात्यन्तिकनिखिलदुःख - निवृत्तिरप्युपपद्यते। तस्यच स्वरूपे साधनानपेक्षत्वेऽपि व्यञ्जकतयाऽनाद्यविद्यावरणापनयेन वेदान्तमहावाक्यकरणकस्तत्स्वरूपसाक्षात्कार एव प्रतिबन्धचतुष्टयरहितःसाधनम्। विषयभोगवासना प्रमाणगतासंभावना प्रमेयगतासंभावना प्रमितिगतासंभावना चेति प्रतिबन्धचतुष्टयम्। तत्र विषयभोगवासनायाः श्रवणाङ्गभूताः शमादयो निवर्त्तकाः, प्रमाणगतासंभावनायाः श्रवणं निवर्त्तकम्, प्रमेयगतासंभावनाया निवर्त्तकं मननम्, प्रमितिगतासम्भावनायाश्च साक्षात्करोमीत्येवंविधव्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वहारविरोधिन्या निदिध्यासनं निवर्त्तकमिति शमादिसहितेन मुमुक्षुणा गुरुमुपसृत्य मोक्षसाधनब्रह्मात्मैक्यसाक्षात्कारप्रतिबन्धासंभावनादिनिवृत्तये च चतुर्लक्षण्या मीमांसया वेदान्तवाक्यविचारः साङ्गः प्रतिबन्धनिवृत्तिपर्यन्तमावर्त्तनीयः। इति। एवंविधवादिविप्रतिपत्तिव्याकुलस्य ममेतरमतनिराकरणेनौपनिषदमतमेव सम्यगुपपत्त्या ज्ञापयेति शिष्याभिप्रायः॥१॥

किं निरस्तसहकारिकारणा
केवलैव फलमर्पयेन्मतिः॥
बाह्यसाधनसहायसंपदा
वाऽन्विता फलविधायिनी भवेत्॥ २॥

ब्रह्मविद्यायाः कर्मानङ्गत्वेन मोक्षसाधनत्वेऽपि सा किं पापक्षयकामस्य सेतुदृष्टिरिवादृष्टद्वारेण सहायान्तरसापेक्षा तं साधयति, किं वा रज्ज्वां सर्पतया गृहीतायां दोषापायेन रज्जुदृष्टिरिवाधिष्ठानाज्ञाननिवृत्तिद्वारेण दृष्टेनैवाज्ञानोपादानां भ्रान्तिं निवर्त्तयन्ती तं साधयतीति संदिहानस्य प्रश्नान्तरमवतारयति। किं निरस्तेति। केवलेत्यस्य व्याख्या निरस्तेति, अथ वा केवला कर्मप्रयोगानन्तर्भूता, प्रत्यगात्ममतेः प्रमाणवृत्तित्वेनोद्गीथादिध्यानरूपवृत्तिवैलक्षण्येऽप्याज्यावेक्षणादिवत्कर्माङ्गत्वप्राप्तत्विदमुक्तम्, केवलेति। कर्मानङ्गभूतैव प्रत्यगात्ममतिर्बाह्यया स्वप्रामाण्यानुपयोगिन्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सहायसंपदा परिपुष्कलेन यज्ञादिना समुच्चिता मोक्ष-मदृष्टद्वारेण विधत्ते, किं वा निरस्तबाह्यसहाया दृष्ट-द्वारेणैव फलमर्पयेदिति शङ्कार्थः। बाह्येतिविशेषणा-च्छुक्तिज्ञानस्येव प्रामाण्योपयोगिविचाररूपपरीक्षापे-क्षणेऽपि न दोषः ॥ २ ॥

एतदप्यहमवैतुमुत्सहे
निर्णयं कुरु कृपाविधेयधीः ॥
एतदेव हि दयालुलक्षणं
यद्विनेयजनबुद्धिवर्द्धनम् ॥ ३ ॥

एवं साधनविशेषगतं संशयमुपन्यस्य तन्निरासाय स्वप्रयत्नं ज्ञापयन् गुरुं प्रार्थयते। एतदिति। एतत्सा-धनमपिशब्दात् फलं चावैतुं सन्देहनिरासेनावधारयि-तुमहमुत्सहे प्रयते इच्छामीति वा, हे गुरो त्वं निर्णयं संशयोच्छेदकं निश्चयं कुरु ममोत्पादय नाज्ञापयामि किं तु प्रार्थये, यतस्त्वं कृपया मद्विषयया विधेयधीर्व-शीकृतचित्तः। ननु दयावशात्तवाशिष आशास्या न त्वया सह वाग्व्यापारः कार्य इत्याशङ्क्य गुरुं स्तुवन्न-ङ्गीकरोति। एतदेवेति। दयालोर्गुरोरेतदेव लक्षणं स्वभावो यद्विनेयजनस्य मद्विधस्य बुद्धिवर्द्धनं सर्वसं-शयोच्छेदेन निर्विचिकित्सतत्तत्पूर्वाज्ञातविशेषज्ञानो-त्पादनम्। तस्मात्स्वदयास्वभावप्रयुक्त एव त्वमा-यासं सोढ्वाऽपि ममानन्यशरणस्य ज्ञानमुत्पादयितुमर्ह-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीत्यभिप्रायः ॥ ३ ॥

उच्यते न तमसो निवृत्तितः
किं चिदस्ति परमात्मधीफलम् ॥
अन्यदल्पमपि साधनान्तरं
न व्यपेक्ष्य फलदायिनी च धीः ॥ ४ ॥

एवं स्तुतिपूर्वकप्रश्नेन परितुष्टः प्रश्नद्वयस्याप्युत्तरं गुरुः प्रतिजानीते । उच्यत इति । तमसोऽनाद्यज्ञानस्य निवृत्तितोऽन्यदल्पमपि फलं प्राकट्यादि परमात्मप्रमितेर्नास्ति, अज्ञाननिवृत्तिरेव सर्वत्र धीफलम्, अज्ञानकार्यनिवृत्तिस्तु कारणनिवृत्तेरिति प्रथमप्रश्ने निर्णयः, धीरधिष्ठानप्रमाऽन्यदल्पमपि साधनमपेक्ष्य फलदायिनी न भवत्यनपेक्ष्यैव तथेत्यर्थः । अपिशब्दस्य भूरि नापेक्षित एवेत्यर्थः । अन्यशब्देनैव भेदे लब्धेऽन्तरशब्दोऽतिवैलक्षण्यप्रतिपादनाय, तेनातिविलक्षणमन्यत्साधनप्रामाण्यानुपयोगि कर्म वा प्रसङ्ख्यानं वा नापेक्ष्यते, प्रामाण्योपयोगि तु परीक्षणमसंभावनादिप्रतिबन्धनिवृत्तयेऽपेक्ष्यत एवेति भावः । तेन प्रामाण्यपरीक्षणादुपबृंहितत्वेनासम्भावनादिप्रतिबन्धशून्या परमात्मधीः शुक्तिधीरिव दृष्टेनैव द्वारेण स्वविषयाज्ञानमुत्सारयन्ती तत्कार्यं प्रपञ्चं रजतमिव समुत्सारयतीति न यज्ञादिसमुच्चिता सेति द्वितीयप्रश्ने निर्णयः ॥ ४ ॥

शुक्तिकाविषयबुद्धिजन्मनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुक्तिकागततमोनिवृत्तितः ॥
नापरं किमपि दृश्यते फलं
नापरं च सहकारि कारणम् ॥ ५ ॥

ज्ञानस्याविद्यानिवृत्तिरेव फलं तत्र च न कर्मादिसहकार्यपेक्षेत्युभयत्रार्थे स्वानुभवमनुमानं च प्रमाणयितुं दृष्टान्तमाह । शुक्तिकेति । शुक्तिकाकाराया बुद्धेर्जाताया: शुक्तिकावच्छिन्नचैतन्यगताज्ञाननिवृत्तिमन्तरेणापरं किमपि फलं न दृश्यते, सहकारि कारणं चापरं गङ्गास्नानगायत्रीजपादिरूपं तत्र न दृश्यते । बुद्धेरिति वक्तव्ये जन्मन इत्यधिकमुक्तं जन्मातिरिक्तव्यापाराभावकथनार्थम् । शुक्तिकागततम इति तदवच्छिन्नचैतन्याभिप्रायम्, जडेष्वावरणाभावस्य प्रतिपादितत्वात् । एवं च यद्विद्याफलं तदविद्यानिवृत्तिमात्रं सहकारिनिरपेक्षं चेत्युभयत्रापि व्याप्तिः सिद्धेत्यर्थः ॥ ५ ॥

एवमात्मनि तमोनिवृत्तितो
नान्यदस्ति परमात्मधीफलम् ॥
नाप्यपेक्ष्य सहकारि कारणं
किं चिदात्ममतिरर्पयेत् फलम् ॥ ६ ॥

एवं व्याप्तौ सिद्धायां शुक्तिविद्यादृष्टान्तेनात्मविद्यायामपि तदुभयमनुमीयत इत्याह । एवमात्मनीति । आत्मनि निर्विभागचैतन्ये यत्तमस्तदाश्रितं तद्विषयं च यदज्ञानं तन्निवृत्तितोऽन्यत्परमात्मधियोऽखण्डवा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्यार्थबुद्धेः फलं नास्ति । उत्तरार्द्धं स्पष्टम् । अत्रोभयत्रापि साध्ये मतित्वमेव हेतुर्द्रष्टव्यः । तथा चात्मतत्त्वमतिः साधनान्तरमनपेक्ष्यैव स्वविषयाज्ञाननिवृत्तिमात्रफला तत्त्वमतित्वाच्छुक्तितत्त्वमतिवदित्यनुमानं सूचितम् । हेत्वनुपन्यासाद्विद्वदनुभवोऽपि सूचितः, यथेयं शुक्तिर्भवति तद्रूपेण च भातीति तदनुभवस्तथाऽहं ब्रह्म भवामि तद्रूपेण च भामीत्यसत्त्वाभानावरणविरोधिनो विद्वदनुभवस्य साक्षिसिद्धत्वात् ॥ ६ ॥

ब्रह्मज्ञानं प्रमाणं भवति दृढमिदं नात्र कश्चिद्विवादो
ब्रह्मात्मा चैकरूपो न च बहुरसकस्तत्परत्वाच्छ्रुतीनाम् ॥
एवं सत्यद्वयात्मप्रमितिफलमिह द्वैतमूलापनुत्ति-
र्न ह्यज्ञानापनुत्तेरधिकमपि फलं किंचिदस्ति प्रमाणात् ॥७

ननु तत्त्वमतित्वं तत्त्वविषयकमनःपरिणामत्वम्, सर्वेषां च मनःपरिणामानामात्मचैतन्यक्रोडीकारेण तत्त्वविषयत्वाव्यभिचारान्मतित्वमात्रं हेतुः, स चासौ वाव लोको गौतमाग्निरित्यादिवाक्योत्थमतावुपासनरूपायां व्यभिचारी, तस्या आवर्त्यमानाया देवयानेन पथा कार्यब्रह्मलोकप्राप्तिहेतुत्वेनाज्ञानानिवर्त्तकत्वादावृत्तिसापेक्षत्वाच्च, न च प्रमितित्वं हेतुस्तथा च न व्यभिचार इति वाच्यम्, तद्धि अज्ञाननिवर्त्तकवृत्तित्वं वा प्रमाणकरणकवृत्तित्वं वा, आद्ये साध्याविशेषादसिद्धिः, द्वितीये तु लोकाग्न्यादिबुद्धौ वेदकरणिकायां व्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिचारः, किं च ब्रह्मविद्या नाज्ञाननिवृत्तिफला शास्त्रीयविद्यात्वात् लोकाग्निविद्यावदिति प्रतिरोधः, शुक्त्यादिविद्यायां च शास्त्रीयत्वाभावान्न व्यभिचारः, न च प्रमात्वाभाव उपाधिः, तस्यापि तेनैव हेतुना पक्षे साधनात्, शास्त्रीयविद्यानां सर्वासामपि शाण्डिल्यदहरादिसमाख्यानां प्रमात्वाभावनियमात्, तथा ब्रह्मविद्याऽर्चिरादिमार्गप्राप्तिपूर्वकैश्वर्यफला शास्त्रीयविद्यात्वात्पञ्चाग्निविद्यावदित्यनुमानबाधश्च, तस्मान्नोक्तसिद्धिरित्याशङ्क्य लोकाग्न्यादिविद्यातो ब्रह्मविद्याया वैलक्षण्यप्रतिपादनेन समाधत्ते। ब्रह्मज्ञानमिति। न तावद् ब्रह्मविद्या न प्रमितिः शास्त्रीयविद्यात्वाल्लोकाग्न्यादिविद्यावदित्यनुमानं साधु, यतो ब्रह्मज्ञानं प्रमाणं भवति, अदुष्टकरणजत्वेनाबाधितविषयत्वेन च परीक्षणात्, दृढमप्रामाण्यशङ्कानर्हमिदं नात्र कश्चिद्विवादोऽस्ति, प्रथमद्वितीयाध्याययोर्महता प्रबन्धेन परिहृतत्वात्, लोकाग्न्यादिविद्या तु नादुष्टवेदकरणिका किंतु पुंप्रयत्नकरणिका बाधितविषया च, लोकमग्नित्वेन चिन्तयेदिति तु धीर्वेदकरणिका प्रमितिरेव, तथा च प्रमाणकरणकवृत्तित्वं वा अबाधितविषयवृत्तित्वं वा अज्ञातविषयवृत्तित्वं वा अतत्त्वाविषयकवृत्तित्वं वा प्रयत्नाजन्ययथार्थवृत्तित्वं वा प्रमितित्वं हेतुरिति न व्यभिचारः। श्रुतौ धीसंकल्पयोर्भेदनिर्देशाज् ज्ञा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापेक्षया मानसकर्मणश्चोदनाधीनपुंप्रयत्नसाध्यत्वेन वैलक्षण्यादनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनेन ज्ञानस्य वस्तुपरतन्त्रत्वेन पुंप्रयत्नानपेक्षत्त्वादतो ध्याने मतित्वाभावेऽपि भ्रमे व्यभिचारवारणाय तत्त्वपदमतत्त्वाविषयत्वपरम्, यथार्थत्वपरं वा। यदि तु भ्रमस्याविद्यावृत्तित्वेन मनोवृत्तित्वरूपं मतित्वं तत्र नास्तीत्युच्येत तदा तत्त्वपदमनादेयमेव, स्मरणस्याप्यविद्यावृत्तित्वान्न मतित्वमिति न व्यभिचारः। न शास्त्रीयविद्यात्वेन साध्याभावसाधनं युक्तम्, शास्त्रीयत्वं यदि शास्त्रविहितत्वं तदसिद्धं पक्षे ब्रह्मविद्यायां प्रयत्नासाध्यत्वाच्छुक्तिविद्यायामिव, यदि शास्त्रकरणकत्वं तत्तु ज्योतिष्टोमादिविधिजन्यज्ञानस्येव प्रामाण्यप्रयोजकत्वाद्विरुद्धम्, अत एव प्रमात्वाभावसाधनमप्यपास्तम्। न च शास्त्रीयविद्यात्वेनैश्वर्यफलत्वानुमानं युक्तम्। शास्त्रविहितत्वस्यासिद्धेः, शास्त्रकरणकत्वस्य च ज्योतिष्टोमादिज्ञाने व्यभिचारादित्युक्तत्वात्। तस्माद्ब्रह्मविद्या साधनान्तरानपेक्षा- अज्ञाननिवृत्तिमात्रफला च प्रमितित्वादिति युक्तमनुमानम्। तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः, तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते, तरत्यविद्यां विततां हृदि यस्मिन्निवेशित इत्यादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिस्मृतिभ्यश्च । नन्वहमुक्थमस्मीति विद्यादितिवद्-हं ब्रह्मास्मीत्यपि मानसी क्रियोपासनैवास्तु न प्रमिति-रन्यास्मिन्नन्यदृष्टिक्षेपत्वात्, जीवब्रह्मणोरत्यन्तभिन्न-त्वात्, भिन्नाभिन्नत्वाद्वा, तथा च ब्रह्मविद्या नावि-द्यानिवृत्तिफला संपद्रूपत्वादहमुक्थमस्मीत्यादिसंपद्व-दिति चेन्नेत्याह । ब्रह्मात्मा चेति । ब्रह्मैवात्मा जीव-स्तत्त्वंपदाभ्यां लक्ष्यः शुद्धो वाक्यार्थो ब्रह्मात्मा स चै-करूपो नैव भिन्नः किं त्वभिन्नः । भेदांशोऽपि तत्र स्यादिति नेत्याह । न च बहुरसक इति । नात्यन्तभि-न्नो नापि भिन्नाभिन्न इत्यर्थः । उभयत्र हेतुमाह । त-त्परत्वाच्छ्रुतीनामिति । बहुवचनं गतिसामान्यप्रदर्श-नार्थम्, तत्प्रमितिशेषत्वं तत्परत्वम्, तच्चोपक्रमादि-लिङ्गैर्गतिसामान्येन च प्रथमाध्याये निर्णीतम् । एवं सति जीवब्रह्मणोरत्यन्तभिन्नत्वभिन्नाभिन्नत्वयोरभावे सति अद्वयात्मप्रमितेर्वेदान्तवाक्यकरणिकाया विचार-परिपाकदूरीकृतप्रतिबन्धाया अहं ब्रह्मास्मीत्यखण्डवा-क्यार्थबुद्धेरधिष्ठान-प्रमात्वेन इहात्मनि कल्पितद्वैतमू-लस्याज्ञानस्यापनुत्तिरुच्छेदोऽत्यन्तबाध एव फलं दृष्ट-द्वारा शुक्तिज्ञानस्येव तदज्ञानापनुत्तिः, यदज्ञानस्य यो विषयस्तदाकारप्रमा तदज्ञानं निवर्त्तयतीति सर्वत्र व्याप्तेः, तदुक्तम्, यतो ज्ञानमज्ञानस्यैव निवर्त्तकमि-ति । ननु सेतुदर्शनरूपायाः प्रमितेस्तदज्ञाननिवृत्तिवि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणं पापनिवृत्तिरेव फलम्, तद्वदत्राप्यज्ञानकल्पित-प्रपञ्चनिवृत्तिः फलं किं न स्यादित्यत आह । न हीति । सेतुप्रमाया हि स्वेन रूपेण सेत्वज्ञाननिवृत्तिरेव दृष्टं फलम्, पापनिवृत्तिस्तु पापोत्कीर्त्तनादिनियमकलापसहितायास्तस्या विहितक्रियात्वेनादृष्टं फलम्, अत एव तन्न दृष्टफलवत् सर्वसाधारणम्, किं तु कस्यचिदेवाधिकारिणः, ब्रह्मज्ञानफलं च शुक्तिज्ञानफलवत्साधारणम्, तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति श्रुतेः, विहितक्रियात्वेन तत्फलस्यासाधारणत्वे तु देवानां तन्न स्यात्, विहितक्रियानधिकारित्वात्तेषाम्, तद्धैतत्पश्यनृषिर्वामदेवः प्रतिपेद इति च गर्भस्थस्य कर्मानधिकारिणो वामदेवस्य तच्छ्रुतेः, अत एवाक्षपादाचार्यः, तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्त्वा तददृष्टद्वारा दृष्टद्वारा वेति सन्देहे मिथ्याज्ञाननिवृत्तिरूपदृष्टद्वारैव शुक्तिज्ञानस्येवात्मतत्त्वज्ञानस्यापि निःश्रेयसं फलमित्याह दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति, सेतुदर्शनानन्तरं तदज्ञाननिवृत्तेरधिकमपि यत्फलं पापक्षयरूपं किं चिदस्ति तत्प्रमाणान्न भवति किं त्वदृष्टद्वारा ॥ ७ ॥

निरभिसंधि समर्पितमच्युते
विहितमिष्टफलादपि निर्गतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदपि कर्म तदप्यवधीरितं
यदि धिया न तया परमर्थ्यते ॥ ८ ॥

किं च स्वर्गपितृलोकादिफलमनपेक्ष्यैवानुष्ठितं परमेश्वरे च समर्पितमत एव तत्फलात्प्रचलितं यद्विशिष्टं शास्त्रीयं कर्म तत्किं ब्रह्मधिया मोक्षायापेक्ष्यत इत्युच्यते किं वा तदतिरिक्तमिति विकल्प्याद्यं यज्ञेन विविदिषन्ति कषायपक्तिः कर्माणि सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इत्यादिवचनविरोधेन निराकुर्वन् कैमुतिकन्यायेन द्वितीयमपि निराकरोति। निरभिसंधीति। फलाभिलाषरहितमित्यर्थः। अवधीरितमुपेक्षितमनपेक्षितमिति यावत् ॥ ८ ॥

समविषमसमुच्चयो न युक्तो
न हि जगदस्ति धियः प्रसूतिकाले ॥
क्व नु वत विहितः क्रियासमूहः
कथमिव तत्र समुच्चयोपपत्तिः ॥ ९ ॥

ज्ञानकर्मणोः पञ्चयागवत्समप्राधान्येन मोक्षसाधनत्वेन समुच्चय इत्येकः पक्षः, तत्र कर्मैव प्रधानं ज्ञानं गुणभूतं प्रयाजाज्यावेक्षणादिवदित्यपरः पक्षः, ज्ञानमेव प्रधानं कर्म गुणभूतं सेतुदर्शनादिवदित्यन्यः पक्षः, स सर्वोऽप्यसंभवीति प्रतिजानीते। समविषमेति। हेतुं व्याचष्टे। न हीति। यत्र त्वस्य सर्वमात्मैवाभूत् भिद्यते हृदयग्रन्थिरित्यादिश्रुतेः सर्वद्वैतप्रपञ्चस्य त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्त्वधीबाध्यत्वप्रतीतेस्तत्त्वधीकाले त्वदभिमतकर्मणां स्थितिरेव नास्ति कुतस्तेषां ज्ञानेन समुच्चितानां मुक्तिहेतुतेत्यर्थः ॥ ९ ॥

अपि च परमहंसस्त्यक्तसर्वैषणः स-
न्ननुभवफलविद्यां साधनैर्यद्यवाप ॥
कथमिव पुनरत्र प्राप्तिरस्ति क्रियाया
भवतु तदपवर्गो विद्ययैवैकयाऽस्य ॥ १० ॥

किं च बहिरङ्गसाधनानि परित्यक्तवतः परमहंसस्यैवान्तरङ्गसाधनैरविद्यानिवर्त्तकविद्योदयस्य श्रुतिन्यायाभ्यामुपपादितत्वात्त्यक्तसर्वैषणस्य च तस्याग्निहोत्रादिकर्मासंभवात्तस्य मोक्षसाधनत्वसंभावनैव नास्ति तत्र ज्ञानेन समुच्चयस्तु दूरापास्त इत्याशयेनाह । अपि चेति । अनुभवोऽभिव्यक्तानन्दप्रकाशस्तत्फलां विद्यां साक्षात्काररूपामिति यावत् । अत्र विद्याफले । प्राप्तिः साधनत्वसंभावना । समुच्चयासंभवे फलितमाह । भवत्विति । अस्य परमहंसस्य ॥ १० ॥

यस्य प्रयोगविधिरस्ति परिग्रहीता
द्वारैदमर्थ्यविनिवेदकमस्य सर्वम् ॥
श्रुत्यादि मानमिह नास्ति तदात्मबुद्धौ
तस्मादियं भवतु नः पुरुषार्थभूता ॥ ११ ॥

ननु सर्वत्र शास्त्रीयज्ञानस्याज्यावेक्षणादेः पुरुषार्थहेतुभूतकर्माङ्गसंस्कारकतया तदङ्गत्वदर्शनादात्मज्ञानस्यापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रीयस्य तथैव तादृशकर्माङ्गत्वमेव कल्पयितुमुचितम्, ततश्च संस्कारकर्मफलश्रुतेरर्थवादत्वात्तस्य मोक्षहेतुत्वमेव नास्ति कुतस्तस्य नैरपेक्ष्यमित्याशङ्क्यात्मज्ञानस्य कर्माङ्गत्वावेदकप्रमाणाभावान्मैवमित्याह । यस्येति । अपूर्वपर्यवसायिशेषशेषिभावस्य मानान्तरायोग्यत्वात्तत्र श्रुतिलिङ्गादीनामन्यतमं प्रमाणं वक्तव्यम्, तदपि न निरपेक्षं शेषित्वं साधयति किं तु ग्राहकग्रहणमपेक्ष्य, साङ्गे कर्मण्यधिकारिणः प्रेरकः प्रयोगविधिरेव फलं प्रति प्रत्यासन्नत्वेन प्राधान्याद् ग्राहक इत्युच्यते, तेन मत्प्रकरणेपठिताः सर्वे मदर्था इति सामान्येन येषां तच्छेषत्वग्रहणं प्रथमं भवति पुनः साक्षात्तच्छेषत्वेऽनुपपन्ने तेषामेव तत्र द्वारभूतोपकारशेषत्वरूपद्वारैदमर्थ्यं श्रुतिलिङ्गादि निवेदयतीति स्थितिः, तथा चौपनिषदात्मज्ञानस्य प्रयोगविधिप्रकारणाभावाद्विध्ययोग्यत्वाच्च तत्परिगृहीतत्वमेव नास्ति कुतस्तच्छेषत्वेनापि तस्य द्वारैदमर्थ्यावेदकं श्रुत्यादि प्रमाणमस्ति, या तु यदेव विद्यया करोतीति तृतीया श्रुतिः सा प्रकृतोद्गीथविद्यायाः कर्मफलसमृद्धिहेतुत्वपरा न तु ब्रह्मविद्याविषया, यद्यपि पारलौकिककर्मप्रवृत्तेर्देहातिरिक्तात्मज्ञानं विनानुपपत्तेर्देहातिरिक्तात्ममात्रज्ञानस्य तत्र सामर्थ्यलक्षणं लिङ्गमस्ति, तथापि न देहातिरिक्तत्वमात्रेणात्मोपनिषत्प्रतिपाद्यः, किं त्वशनाया-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्व्यतीतापेतब्रह्मक्षत्रादिभावेनाद्वयब्रह्मात्मनाप्युपनिषद्भिस्तात्पर्य्येण प्रतिपाद्यते, तज्ज्ञानं च न कर्म प्रत्युपयोगि प्रत्युत तद्विरोधीति न सामर्थ्यंरूपमपि लिङ्गमस्ति, नाप्युक्तरूपात्मधियः कर्मणा जुह्वादिवदव्यभिचरितसम्बन्धोऽस्ति येन वाक्येन पर्णतावदात्मज्ञानं कर्माङ्गं स्यात्, तस्मादुक्तरूपात्मधियः कर्मशेषत्वाभावात्तत्फलश्रुतेरभूतार्थवादत्वायोगात्सास्माकं परमपुरुषार्थहेतुत्वात्सर्वशेषिभूतैवेत्यर्थः ॥ ११ ॥

सदसत्सदसद्विकल्पित-
प्रतिपक्षैकवपुर्निवर्त्तनम् ॥
तमसोऽभ्युपगम्यतेऽन्यथा-
नुपपत्त्यापतनैकहेतुतः ॥ १२ ॥

ननु कोऽयं तत्त्वधीसाध्यः पुरुषार्थः, परमानन्दस्वरूपाच्छादकाखिलानर्थनिदानाज्ञाननिवृत्तिरेवेति चेत सा तर्हि निवृत्तिः सती वा स्यादसती वा सदसद्रूपा वा अनिर्वचनीया वा स्यात्, नाद्यद्वितीयौ सत्त्वेऽसत्त्वे च ब्रह्मवत् खपुष्पवच्च साध्यत्वायोगात्, अनिर्वचनीयाज्ञाने सत्त्वस्यासत्त्वस्याभावेन तत्प्रतियोगिकनिवृत्तौ तदसम्भवाच्च, न तृतीयः, सदसदात्मकत्वस्यैकत्र विरोधेनासम्भवात्, पूर्वोक्तदोषापरिहाराच्च, न चतुर्थः, अज्ञानातिरिक्तानिर्वचनीयस्याज्ञानाधीनसत्ताकतयाऽज्ञानस्थितिं विना तन्निवृत्तेरनिर्वचनीयत्वायोगात्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितौ च तन्निवृत्तिव्याघातात्, तस्मादज्ञाननिवृत्तेरेवानिरूपणात्तस्यास्तत्त्वधीफलत्वं दुर्घटमित्याशङ्क्योक्तपक्षचतुष्टयातिरिक्तपक्षान्तरस्वीकारान्नैवमित्याह । सदसदिति । सत्पक्षस्यासत्पक्षस्य सदसत्पक्षस्य विकल्पितपदाभिलप्यानिर्वचनीयपक्षस्य च प्रतिपक्षं तद्विरुद्धमेकमसंकीर्णं वपुः स्वरूपं यस्य तत्तथोक्तम् । निवर्त्तनं निवृत्तिः । यथा प्रमाणबलात् कस्य चित्सत्त्वमसत्त्वं सदसत्त्वमनिर्वचनीयत्वं वा स्वीक्रियते तथाऽविद्यानिवृत्तेरप्युक्तपक्षचतुष्टयानुपपत्त्या पञ्चमप्रकारोऽभ्युपेय इत्याशयेन हेतुमाह । अन्यथेति । पक्षचतुष्टयानुपपत्त्या पञ्चमप्रकारस्यापतनं प्राप्तिः स एको मुख्यो हेतुस्तत इत्यर्थः ॥ १२ ॥

सदसत्सदसद्विकल्पित-<br>
प्रतिबद्धा न भवन्ति वर्णिते ॥<br>
परमात्मतमो निवर्त्तनेऽ-<br>
नुपपत्तिप्रतिभासवृत्तयः ॥ १३ ॥

पञ्चमप्रकारायामप्यविद्यानिवृत्तावनुपपत्तेः प्रतिभासात्सोऽपि पक्षो हेय इत्याशङ्क्य किं सदसदादिपक्षचतुष्टयनिबन्धनानुपपत्तय एव पञ्चमप्रकारायां तस्यां भासन्त इत्युच्यते किं वाऽन्या अनुपपत्तय इति विकल्प्याद्यं निराकरोति । सदसत्सदसद्विकल्पितप्रतिबद्धा इति । अस्य पदस्यान्तिमपदेनान्वयः । व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थितें पञ्चमप्रकारेऽनुपपत्तिप्रतिभासवृत्तयः पञ्चमप्रकारेऽविद्यास्तमये सत्त्वादिपक्षचतुष्टयाप्राप्तेस्तन्निबन्धना अनुपपत्तिप्रतिभासा नैव संभवन्तीत्यर्थः ॥ १३॥

चितिभेदमभेदमेव वा
द्वयरूपत्वमथो मृषात्मताम् ॥
परिहृत्य तमोनिवर्त्तनं
प्रथयन्ते खलु मुक्तिकोविदाः ॥ १४ ॥

ननु पञ्चमप्रकाराप्यविद्यानिवृत्तिरात्मनो भिन्ना चेत् द्वैतापत्तिः, अभिन्ना चेत्तस्या आत्ममात्रत्वे तस्यानादित्वात्तत्त्वज्ञानवैयर्थ्यापत्तिः, आत्मनस्तन्मात्रत्वे च तत्त्वज्ञानात्प्रगात्मनोऽभावप्रसङ्गेन निराश्रयाऽविद्यानुपपत्तौ तन्निवृत्तेरप्यनुपपत्तेः, भेदाभेदौ विरोधादेवानुपपन्नौ, नापि भेदाभेदाभ्यामनिर्वचनीया सा, अविद्यां विना तदनुपपत्तेर्दर्शितत्वात्, तस्मात्पञ्चमप्रकारायामपि तस्यामन्या अनुपपत्तयः सन्तीति द्वितीयकल्पमाशङ्क्यात्रापि पञ्चमप्रकाराङ्गीकाराद्भेदादिपक्षचतुष्टयनिबन्धना अनुपपत्तयोऽपि निरवकाशा इत्याह । चितिभेदमिति । चितेर्भेदमित्यर्थः । मुक्तिकोविदाः इष्टसिद्धिकाराः ॥ १४ ॥

अथ वा चितिरेव केवला
वचनोत्पादितबुद्धिवर्त्मना ॥
परमात्मतमो निवृत्तिगी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयत्वं समुपैत्युपाधिना ॥ १५ ॥

अविद्याधिष्ठनभूतात्मैव तन्निवृत्तिः, कल्पितानामधिष्ठानातिरिक्ताभावानिरूपणात्, ततश्च सा सद्रूपैवेति सिद्धान्तरहस्यमाह। अथ वेति। केवला केन चिदविशेषिता। तर्हि विद्योदयात्प्रागपि तस्या अविद्यानिवृत्तिव्यवहारभाक्त्वं स्यादित्याशङ्क्य तद्गोचरविद्योदयस्य तत्र तद्व्यवहारप्रवृत्तिद्वारस्य स्वीकृतत्वात्तस्य चास्मिन्नुपाधौ सत्येव पश्चात्तन्निमित्तव्यवहारस्य प्रवृत्तिरित्याह। वचनेति। न चैतावता विद्याया अपि तमोनिवृत्तिशब्दार्थत्वं तस्या वक्ष्यमाणदृष्टान्तेन तच्छब्दप्रयोगोपाधितया तटस्थत्वादित्यभिप्रेत्योपाधिनेत्युक्तम्। एतदुक्तं भवति, तत्त्वमादिवाक्यादण्डैकरसब्रह्मसाक्षात्कारे सत्यनिर्वचनीयाऽविद्यातत्कार्यात्मकजडप्रपञ्चस्यान्वयव्यतिरेकाभावपरिहारेणाधिष्ठानचिन्मात्ररूपेण परिशेपात्सैव तन्निवृत्तिरित्युच्यते, न चैवं सति तमोनिवृत्तेरधिष्ठानात्मरूपाया विद्यासाध्यत्वायोगात्तत्फलत्वानुपपत्तिरिति वाच्यम्, वस्तुतस्तस्याः साध्यत्वाभावेऽपि कूपाकाशादिवत्साध्यत्वभ्रमात्तत्साधनज्ञानसिद्धये मुमुक्षुप्रवृत्त्युपपत्तेः, अत एव मोक्षशास्त्रस्याप्यविद्वद्विषयत्वमुक्तमाचार्यैः, अथ वा यस्मिन् सति यस्यानन्तरं सत्त्वं यदभावाद्यदभावस्तदेव तत्साध्यमिति स्थितिः, न तु साध्यस्य प्रागसत्त्वमपि साध्यत्वोपयोगि,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असतः कार्यत्वनिराकरणात्, तथा च तत्त्वसाक्षात्कारे सत्यनन्तरमविद्यानिवृत्तिरूपाद्वितीयचिदात्मनः सत्त्वात्ततः प्रागुक्तनिवृत्त्यभावरूपाया अविद्याया अपि सत्त्वात्तत्त्वधीसाध्यत्वोपपत्तेस्तत्फलत्वमनपवादमिति ॥ १५ ॥

शुक्तिकाविषयबुद्धिजन्मना
प्रत्यगात्मचितिरेव केवला ॥
शुक्तिकागततमोनिवृत्तिरि-
त्युच्यते दृतिहरिः पशुर्यथा ॥ १६ ॥

ननु शुक्तिकादौ यथाऽधिष्ठानातिरिक्तस्तमोनिवृत्तिशब्दार्थस्तथात्मन्यपि किन्न स्यादित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या परिहरति । शुक्तिकाविषयेति । शुक्त्यादेरपि जडतया कल्पितत्वेन रजताद्यधिष्ठानत्वायोगात्तदुपहिता प्रत्यक्चितिरेव तदधिष्ठानमिति सैव केवला शुक्त्याद्यविशिष्टा तत्तमःस्थित्तिविरोधिन्यां शुक्त्यादिगोचरप्रमायामुदितायां तामुपाधिमपेक्ष्य तत्तमोनिवृत्तिरित्युच्यत इत्यर्थः । तच्छब्दप्रवृत्त्युपाधेस्तद्वाच्यत्वे दृष्टान्तमाह । दृतिहरिरिति ॥ १६ ॥

वाचको हरणकर्त्तुरिष्यते
शब्द एष हि दृतेर्मनीषिभिः ॥
केवलं तु पशुता निमित्ततां
बाह्यतः स्थितवती व्रजेदियम् ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टान्तं विवृणोति । वाचक इति । एष शब्दो दृतिहरिशब्दो दृतेश्चर्मभस्त्रिकाया हरणकर्त्तुर्वाच्यस्य वाचको मनीषिभिरिष्यते, इयं पशुता तु केवलं निमित्ततां व्रजेदिति सम्बन्धः । केवलमित्यस्य विवरणं बाह्यतः स्थितवतीति । दृतिहरिशब्दवाच्याद्बहिर्भूता तदवाच्यैवेति यावत् । पशुताया दृतिहरिशब्दवाच्यतायामुपाधित्वे युक्तिमग्रे वक्ष्यति ॥ १७ ॥

एवमेव तु तमोनिवृत्तिगीः
शुक्तिकाविषयबुद्धिजन्मना ॥
बाह्यतः स्थितवतैव हेतुना
प्रत्यगात्मचिति वर्त्ततेऽञ्जसा ॥ १८ ॥

दृतिहरिः पशुर्यथेति यत्र दृष्टान्त उक्तस्तं दार्ष्टान्तिकं प्रपञ्चयति । एवमेवेति । तमोनिवृत्तिगीः शुक्त्यादाविति शेषः । अञ्जसा मुख्यवृत्त्या, योगस्यापि मुख्यवृत्तित्वात् ॥ १८ ॥

उत्पन्नशुक्तिमतिरात्मचितिर्यथैव
शुक्तेस्तमोहतिरिति प्रतिपन्नमेवम् ॥
आत्मापि जातनिजबुद्धिरबोधहानि-
रुच्येत केवलचिदेकरसो न पूर्वम् ॥ १९ ॥

एवं शुक्त्यादावज्ञाननिवृत्तेरधिष्ठानचिन्मात्ररूपत्वेऽपि तत्र तन्निवृत्तिव्यवहारो दृतिहरिदृष्टान्तेन शुक्त्यादिगोचरप्रमोपाधिकस्तदनन्तरमेव तत्र भवतीत्युप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाद्य तद्दृष्टान्तेन संसारमूलात्मतत्त्वाज्ञाननिवृत्तिरधिष्ठानचिन्मात्ररूपा तत्प्रमितिरूपोपाधिमपेक्ष्य तद्व्यवहारविषयो भवति न प्रागित्याह। उत्पन्नेति। उत्पन्ना शुक्तिगोचरा मतिः प्रमितिरूपोपाधिर्यस्याः सा तथोक्ता। एवं केवलचिदेकरस आत्मापीति सम्बन्धः। जाता निजबुद्धिः स्वयाथात्म्यगोचरा धीरुपाधिरूपा यस्य स तथोक्तः॥ १९॥

द्युतिहरणकरत्वं पुंसि चान्यत्र चेदं
द्युतिहरिरिति लोके नोच्यते वर्त्तमानम्॥
अनधिकविकलं सत् कथ्यते तत् पशुस्थं
द्युतिहरिरिति शिष्टैर्बाह्यहेतोः पशुत्वात्॥ २०॥

पशुतायां द्युतिहरिशब्दप्रयोगोपाधित्वे युक्तिं वक्ष्यतीत्यवादिष्म तामिदानीमाह। द्युतिहरणेति। पुंसि मनुष्येऽन्यत्र शकटादौ वर्त्तमानं द्युतिहरणकरत्वं लोके वृद्धव्यवहारे द्युतिहरिरिति नोच्यत इति सम्बन्धः। तर्हि द्युतिहरणकर्तृत्वादधिको न्यूनो वा तदर्थोऽस्तु नेत्याह। अनधिकेति। हरतेर्द्युतिनाथयोः पशाविति पाणिनीयवचनार्थाभिज्ञाः शिष्टाः। पशुस्थं चेत्कथ्यते पशुत्वमपि तद्वाच्यं स्यादित्याशङ्क्योक्तं बाह्यहेतोरिति। पशुत्वरूपाद्बाह्यहेतोः शब्दशक्त्यविषयात् तत्प्रवृत्तिनिमित्तात्पशुस्थं कथ्यत इति सम्बन्धः। तस्यापि वाच्यत्वे तत्रावयवशक्त्यभावाच्छक्त्यन्तरं कल्पनीयं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्, तस्मात्तद्वाच्यमेवोपाधितया तटस्थं सत् पश्चा-
देव द्वुतिवाहके तच्छब्दप्रवृत्तिनिमित्तं भवतीत्यर्थः ॥२०॥

अयमपि परमात्मा प्रत्यगात्मस्वभावो
वचनजनितबुद्धेः प्राक् स्वरूपे स्थितोऽपि ॥
न खलु विषयभावं ध्वान्तविच्छेदवाचो
व्रजति हि तदुपाधेर्बुद्धिवृत्तेरभावात् ॥ २१ ॥

ननु प्रत्यगभिन्नपरमात्मरूपाऽविद्यानिवृत्तेरेकत्वा-
दन्यत्र तद्वाचकशब्दाप्रसक्तेस्तन्नियमाय तत्त्वज्ञानरूपो-
पाधिवर्णनं वृथेत्याशङ्क्य विद्योदयात्प्रागात्मनि तद्व्य-
वहाराभावात्तदुपपादनायोक्तोपाधिवर्णनमर्थवदित्या-
शयेनाह अयमपीति । खलुशब्दो लौकिकप्रसिद्ध्यर्थः।
हिशब्दो वैदिकप्रसिद्ध्यर्थः ॥ २१ ॥

अज्ञानदाह इति नैकपदं समासात् ॥
पूर्वोत्तरे खलु पदे पदतामुपेतः ॥
ज्ञानोदयं तटगतं समुपाददानस्त-
स्मात्तमोहतिरवोऽत्र चिति प्रवृत्तः ॥ २२ ॥

नन्वज्ञानदाहे ज्ञाननाशोऽज्ञाननिवृत्तिरित्यादिशब्देषु
दाहादिपदानामभाववाचकत्वात्कथं तेषां भावरूपे चि-
दात्मनि प्रवृत्तिरित्याशङ्क्याभाववाचकस्यापि पदस्या-
न्येन समस्तस्यावयवार्थं विहाय लक्षणया ब्रह्मण्यध-
र्मादिपदवद्भावरूपचिदात्मनि प्रवृत्तिसंभवात्तत्रापि त-
त्त्वबोधात्प्राक् तद्व्यवहाराभावात्तदुदयं तटस्थमुपाधिम-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पेक्ष्याज्ञानदाहादिशब्दाश्चिदात्मन्येव प्रवर्त्तन्ते इत्याह। अज्ञानदाह इति। नैकपदम्, एकत्र रूढं पदं नेत्यर्थः। समासेनैकपद्ये फलितमाह। तस्मादिति। तमोहतिरवो ज्ञानोदयं तटगतं समुपाददान इति योजनीयम्। अत्र लोकवेदयोः ॥ २२ ॥

अत्राप्यसौ द्रुतिहरिः पशुरित्यखण्डः
शब्दो न खल्वभिमतोऽवयवार्थयोगात्॥
धातुश्च वाचकतया हरतिः प्रसिद्धो
हीन्प्रत्ययश्च हरतेः परतः प्रसिद्धः ॥ २३ ॥

द्रुतिहरिशब्दस्य समासादैकपद्यमापन्नस्य यथा पशौ रूढिस्तथाऽज्ञाननाशादिशब्दस्यापि यत्र वृत्तिस्तत्र रूढिरेव किं न स्यादित्याशङ्क्य दृष्टान्त एवासंप्रतिपन्न इति द्रुतिहरिशब्दस्यापि पशौ क्लृप्तावयवार्थयोगादेव प्रवृत्त्युपपत्तेर्यौगिकार्थस्य मनुष्यादिसाधारणत्वेऽपि पशुत्वोपाधिना तत्पदप्रवृत्तेः पशावेव नियमितत्वेनातिप्रसङ्गाभावादित्यभिप्रेत्याह। अत्रापीति। पशावपीत्यर्थः। अत्राप्यवयवार्थयोगादित्यनेन सम्बन्धः। अवयवार्थावेव विविच्य दर्शयति। धातुरिति। वाचकतया हरणस्येति शेषः। हरतेः परत इन् प्रत्ययः कर्तुर्वाचकतया प्रसिद्ध इति शेषः ॥ २३ ॥

उद्यन्निरस्यति तमश्च तदुद्भवं च
वेदावसानवचनादथ चोदितः सन् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐकात्म्यवस्तुविषयोऽनुभवोऽत एव
कं चित् सहायमनपेक्ष्य निवर्त्तकोऽसौ ॥ २४ ॥

एवं तत्त्वबोधोदयमपेक्ष्यात्मैवाविद्यातत्कार्यनिवृत्तिरित्युच्यत इत्युक्तम्, तत्र तत्त्वबोधस्य घटादिवदविद्याद्यविरोधित्वे तन्निवृत्तिव्यवहारे तदपेक्षैव न स्यात्ततस्तस्य तद्विरोधित्वं वक्तव्यम्, न चाविद्यादिप्रतियोगिकप्रतियोग्यसत्त्वापादकागन्तुकध्वंसजनकत्वं विना तस्य तद्विरोधित्वमुपपद्यते, आत्मरूपाऽविद्यानिवृत्तिर्ज्ञानादिकालेऽविद्यादिना सह वर्त्तमानत्वान्न तदसत्त्वापादिका, तस्मादात्मातिरिक्त आगन्तुकस्तत्त्वधीसाध्योऽविद्यादिध्वंसः स्वीकर्त्तव्यः, स एव च तद्बाहादिपदाभिलप्य इति चेन्न, आगन्तुकध्वंसस्य प्रतियोग्यसत्त्वापादकतायाः सत्कार्यवादिनां कुत्राप्यसंप्रतिपन्नत्वात्, तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादितः तरत्यविद्यां विततां हृदि यस्मिन्निवेशित इत्यादिवचनादद्वितीयाखण्डैकरसात्मविद्यैव साक्षादविद्यातत्कार्ययोरसत्त्वापादिकेति नागन्तुकध्वंसेन कृत्यमस्तीत्यभिप्रेत्य तथापि किं विद्या वेदान्तवाक्यादुत्पद्यमानैवाविद्यादि बाधत उतोत्पन्नेति वीक्षायां किमनेन विचारेण, उभयथापि विद्याबाधिताऽविद्यादेरनन्तरं स्थित्ययोगात् तया तद्बाधे यत्नान्तरानपेक्षणाच्च सर्वत्र तथा दर्शनादित्याह । उद्यन्निति । ऐकात्म्यवस्तु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयोऽनुभवो वेदावसानवचनाद्भवन्नुदितः सन्निति सम्बन्धः। अत एव ततस्तद्बाधे विलम्बाभावादेव। कं चित् कर्मादिरूपम्। असावनुभवः। उद्यन्नेव निरस्यतीति तत्त्वम्। असत्कार्यवादानभ्युपगमादन्यानपेक्षत्वाच्चेति द्रष्टव्यम् ॥ २४ ॥

दीपस्तमस्तिरयतीह भवन्नुत स्विद्
भूत्वा क्षणव्यवधिमात्रमपेक्ष्य नात्र
कश्चिद् विवादपदवीमुपयाति वादी
तद्वत् प्रतीच्यवगतौ तमसोऽपहन्त्र्याम् ॥ २५ ॥

विद्याया अविद्यादिबाधे नैरपेक्ष्याविलम्बौ विवादानर्हाविति दृष्टान्तेन स्पष्टयति। दीपस्तम इति। तिरयति निवर्तयति। इह तमस्विदेशे। भवन्नुत्पद्यमानः क्षणव्यवधिमात्रमपेक्ष्य भूत्वा वा तिरयतीति सम्बन्धः। उत्पत्तिक्षणानन्तरक्षणः क्षणशब्दार्थः। मात्रचा तृतीयादिक्षणापेक्षा निरस्यते। अत्र अन्यानपेक्षत्वे। प्रतीच्यवगताविति व्यधिकरणे सप्तम्यौ, प्रत्यग्विषयावगतावित्यर्थः। तमसोऽज्ञानस्यापहन्त्र्यां बाधिकायां विवादो न कार्य इति शेषः ॥ २५ ॥

उत्पत्तिरेव हि धिया स्वफलं प्रदातुमाकाङ्क्षिता न च ततोऽपरमर्थनीयम् ॥
यत् कारकं तदिह काङ्क्षति जन्ममात्रा-
दन्यन्न धीः किमपि काङ्क्षति जन्म लब्ध्वा ॥२६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उद्यन्निरस्यतीत्ययमेव पक्षः साधुरित्यभिप्रेत्यात्म-
तत्त्वज्ञानं स्वोत्पत्त्यतिरिक्तानपेक्षमेव तदविद्यादुरपम-
र्दकं तत्त्वापरोक्षज्ञानत्वात् शुक्त्यादितत्त्वज्ञानवदिति
ज्ञानकर्मसमुच्चयपक्षमपि प्रतिक्षिपति । उत्पत्तिरेवेति।
विमतं स्वफले स्वजन्मातिरिक्तापेक्षं साधनत्वात् का-
ष्ठादिवदित्याशङ्क्य तत्र कारकत्वमुपाधिः, न च साधन-
व्यापकत्वम्, तत्त्वज्ञानस्य व्यञ्जकत्वेन कारकत्वाभावात्,
कारकत्वं हि स्वविषयस्योत्पत्त्याद्यन्यतमानुकूलक्रिया-
हेतुत्वम् , व्यञ्जकत्वं तु स्वविषयेऽस्ति प्रकाशत इ-
त्यादिव्यवहारप्रतिबन्धकमात्रापनेतृत्वमिति तयोर्भेद
इत्याशयवानाह । यत्कारकमिति ॥ २६ ॥

प्रत्यक्षसूत्र इदमेव निवेदयिष्य-
न्न्यायेन जैमिनिरुवाच विदग्धबुद्धिः ॥
सत्संप्रयोग इति तत्र हि बुद्धिजन्म-
शब्दस्य नान्यदिह किं चन कृत्यमस्ति ॥२७॥

प्रमाणज्ञानं स्वफले स्वजन्मातिरिक्तानपेक्षमित्यत्र प्र-
त्यक्षलक्षणपरजैमिनीयसूत्रस्थजन्मपदसामर्थ्यं लिङ्गमि-
त्याह । प्रत्यक्षसूत्र इति। इदं स्वफले जन्मातिरिक्तान-
पेक्षत्वम् । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म त-
त्प्रत्यक्षमिति सूत्रम् , अत्रेन्द्रियाणां सता विद्यमानेन
विषयेण संप्रयोगे सति निर्दोषसंप्रयोगे सतीति वा पु-
रुषस्य यद् बुद्धिजन्म तत्प्रत्यक्षमित्यत्र जन्मपदस्य ल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षणेऽनुपयोगाद्वैयर्थ्यायोगाच्च तेन प्रमाणं स्वफले ज-न्मैवापेक्षते नान्यदिति ज्ञाप्यत इत्यर्थः ॥ २७ ॥

वेदान्तवाक्यजनिता मतिवृत्तिरेव-
मुत्पत्तितः सकलमेव भवार्णवाम्बु ॥
पीत्वा स्वयं च खलु शाम्यति दग्धलोह-
पीतं यथाम्बु चितिमेव तु शेषयित्वा ॥२८॥

उत्पत्तिमात्रेण विद्याया अविद्यातत्कार्यबाधकत्वेऽपि स्वबाधकत्वायोगात्तस्या बाधकान्तरं वाच्यम्, तस्या अबाध्यत्वे च द्वैतापत्तेः, ततश्चानवस्थेत्याशङ्क्य स्वस्या अप्यविद्याकार्यत्वात्स्वयमेव बाधिका तत्तश्चाधिष्ठानचैतन्यमात्रपरिशेषान्न द्वैतापत्तिर्न वाऽनवस्थेत्यभिप्रेत्याह । वेदान्तवाक्येति । स्वपरविरोधित्वे वस्तुपरिशेषे च दृष्टान्तमाह । दग्धलोहेति । दग्धलोहे सिक्तमम्बु दाहं शमयत् स्वयं च शाम्यति लोहं तु परिशिष्यते तद्वदित्यर्थः ॥ २८ ॥

कूटस्थनित्यैव तु मुक्तिरेषा
विद्याफलत्वादिह यद्यदेवम् ॥
तत्तत्तथा दृष्टमशेषमेव
यथा हि शुक्त्यादिपदार्थसंवित् ॥ २९ ॥

एवमविद्यानिवृत्तेः पञ्चमप्रकारत्वे चिदात्ममात्रत्वे च विद्योदयमात्राधीनत्वप्रतिपादनेन मुक्तौ ज्ञानकर्मसमुच्चयो निराकृतः, इदानीं ब्रह्म वेद ब्रह्मैव भवती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यादिशास्त्रसिद्धब्रह्मात्मतालक्षणमुक्तावपि चतुर्विध-
क्रियाफलासम्भवात्कर्माननुप्रवेशेन समुच्चयायोग इ-
त्यभिप्रेत्य तस्याः कूटस्थनित्यतामनुमानेन साधयति।
कूटस्थनित्येति। सदा समस्तविकारायोग्येत्यर्थः।
विद्याया उद्देश्यफलत्वादिति हेत्वर्थः। ततश्च पञ्चम-
प्रकाराऽविद्यानिवृत्तौ न व्यभिचारः, शुक्तिरशनादिप-
दार्थाकारापरोक्षान्तःकरणवृत्तिरूपाया विद्यायाः शु-
क्त्याद्यवच्छिन्नात्मरूपसंविदेवाभिव्यक्ता फलं न तु स्व-
त उत्पत्त्यादिमज्जडं स्वप्रकाशं वा तत्फलं निरूपयि-
तुं शक्यमिति प्रतिकर्मव्यवस्थादौ निरूपितम्, ततो न
दृष्टान्ते साध्यवैकल्यशङ्केति भावः ॥ २९ ॥

जन्मादिषड्भावविकारहीना
शुक्त्यादिवस्तूपनिविष्टसंवित् ॥
न प्रागभावाद्यनुभूतिरस्याः
स्वतः प्रमाणादपि युज्यते हि ॥ ३० ॥

किं च प्रमाणफलभूतायाः संविदः स्वाभाविकज-
न्मादिविकारसाधकाभावाच्च सा कूटस्थनित्येत्याह।
जन्मादीति किं संवित्स्वयमेव स्वजन्मादिविकारसा-
धिका किं वा मानान्तरं तस्यास्तत्साधकं नोभयथा-
पीत्याह। न प्रागभावेति। अभूत्वा भवनरूपं जन्म
प्रागभावपदार्थः। न तावत्संविदैव स्वजन्मसिद्धिः, अ-
भूत्वा भवनरूपजन्मनः प्रागभवनग्रहं विना ग्रहीतुम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्यत्वात् तदा च तस्या असत्त्वादेव तया प्रागभावस्य ग्रहणायोगात्तद्घटितस्वजन्मप्रग्रहासंभवात्, नापि स्वध्वंसस्यापि सा साधिका, ध्वंसकाले स्वस्या असत्त्वात्, स्वकाले च ध्वंसासत्त्वात्तया तद्ग्रहणासंभवात्, संविदो जन्मनाशयोरसिद्धौ तद्व्याप्यत्वादान्तरालिकविकाराणां तदभावोऽपि सिद्ध एव, नापि मानान्तरं स्वप्रकाशसंविदो जन्मादिविकारवत्त्वेन साधयितुमलम् तस्यास्तदयोग्यत्वादिति हिशब्दार्थः ॥ ३० ॥

अबुद्ध्यमानो न हि संविदं त-
त्संबन्धि किं चित् प्रतिपत्तुमीशः ॥
न बुद्ध्यमानोऽपि तथा तदा हि
न संविदेषा विषयत्वहेतोः ॥ ३१ ॥

सर्वसाक्षिभूतात्मैव संविज्जन्मादिसाधक इत्याशङ्क्य किमज्ञामजानन्नेव तदीयजन्मादि साधयति उत जानन्, नाद्यः, धर्म्यग्रहे तत्र धर्म्यवैशिष्ट्यग्रहायोगादित्याह । अबुध्यमान इति । किं चिज्जन्मादि । द्वितीये संविदोऽपि घटादिवद् दृश्यत्वेऽसंवित्त्वप्रसङ्गान्न साक्षिगम्या संवित् किं तु स्वयमेव कूटस्थाऽद्वितीया साक्षिभूता नातिरिक्तेत्यभिप्रेत्याह । न बुध्यमानोऽपीति । संविदं बुध्यमानोऽपि तत्सम्बन्धि प्रतिपत्तुमीश इति तथाशब्दार्थः । तत्र हेतुः तदा हीति ॥ ३१ ॥

जंन्या न मुक्तिर्घटते कुतश्चिद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्याफलत्वादिति पूर्वहेतोः ॥
यद्यद्धि जन्यं जगति प्रसिद्धं
तत्तन्न विद्याफलमम्बरादि ॥ ३२ ॥

एवं स्वसिद्धान्तसिद्धान्वयदृष्टान्तेन मुक्तेः कूटस्थनित्यत्वं प्रसाध्योक्तप्रतिज्ञाहेत्वनुवादेन व्यतिरेकदृष्टान्तेनापि तत्साधयति । जन्या न मुक्तिरिति । स्पष्टोऽक्षरार्थः ॥ ३२ ॥

मोक्षस्वरूपो विफलक्रियोऽसौ
विद्याफलत्वादिह यद्यदेवम् ॥
तत्तत्तथा दृष्टमशेषमेव
यथैव रज्ज्वादितमोनिवृत्तिः ॥ ३३ ॥

एवं ब्रह्मभावलक्षणमोक्षस्य कूटस्थनित्यत्वं प्रसाध्य तत्र कर्मणामनुपयोगमर्थसिद्धमपि तेनैव हेतुना साक्षात्साधयति ज्ञानकर्मसमुच्चयविघटनाय । मोक्ष इति । असौ ब्रह्मभावरूपः । मोक्षसाधनविद्यायां कर्मणामुपयोगाङ्गीकारात्स्वरूप इत्युक्तम् ॥ ३३ ॥

सायुज्यादि विवादगोचरपदं निःश्रेयसं नो भवेत्
कार्यत्वादिह यद्यदीदृशमदो निःश्रेयसं नेक्षितम् ॥
यद्वत् कुम्भघटादि तादृशमिदं तस्मादिदं तादृशं
युक्तं कल्पयितुं न तद्धि सदृशं तादृङ् न दृष्टं यतः ॥३४॥

ननु यस्यैते अष्टाचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीत्यादिस्मृतेः सायुज्यादिरू-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पमोक्षस्य कर्मफलत्वप्रतिपत्तेस्तद्बाधितविषयत्वादुक्तानुमानमप्रमाणमित्याशङ्क्याह । सायुज्यादीति । किं ब्रह्मभाव एव सायुज्यं किं वा तच्छरीरैकत्वं शरीरित्वम् सत्समानशरीरत्वं वा । नाद्यः, पूर्वरूपे स्थिते नष्टे वा वस्तुतोऽन्यस्यान्यात्मत्वासम्भवेन तस्य कर्मसहस्रेणापि साधयितुमशक्यत्वात्, कर्मसाध्यस्यानित्यत्वनियमेन तस्य मुक्तित्वानुपपत्तेश्च, अनादित्वे तु ब्रह्मभावस्य ब्रह्मवदेव न कर्मसाध्यत्वं सम्भवति। न च कर्मणां नित्यसिद्धब्रह्मभावाभिव्यञ्जकत्वात्तस्य कर्मजन्यस्यानित्यत्वनियमेन मुक्तित्वानुपपत्तेश्चानादिफले हेतुत्वमिति वाच्यम्। तदभिव्यक्तेरनिर्वचनीयाविद्यानिवृत्तिरूपाया विद्यैकसाध्यत्वेन कर्मणां तदभिव्यञ्जकत्वासम्भवात्। तस्मान्नित्यसिद्धब्रह्मभावाभिव्यञ्जकविद्याप्रनाड्या कर्मणां ब्रह्मभावरूपसायुज्योपयोगित्वमुक्तस्मृत्या विवक्षितम्, अत एव तत्र कर्मसु संस्कारशब्दः प्रयुक्तः, फलसाधनाङ्गगतातिशयहेतुकर्मण्येव संस्कारशब्दप्रयोगान्न स्मृत्यनुमानयोर्विरोधः । नापि द्वितीयः, न तस्य कार्यं करणं च विद्यते अकायमव्रणम् अस्थूलमनणु नेतिनेतीत्यादिश्रुतिविरोधेन ब्रह्मणो वास्तवशरीरासम्भवेन तदेकशरीरत्वरूपसायुज्यायोगात्, सशरीरमुक्तेर्निराकृतत्वाच्च । अतएव न तृतीयः, समानशरीरत्वस्यैव सायुज्यरूपत्वे तस्य सारूप्यरूपमु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तेर्विशेषाभावप्रसङ्गाच्च । किं च नित्यसिद्धब्रह्मभावातिरिक्तसायुज्यादेः कार्यत्वावश्यंभावेनानित्यत्वध्रौव्यान्न तन्निःश्रेयसमिति तात्पर्यार्थः । अक्षरार्थस्तु विवादगोचर इति पदं विशेषणतया विद्यतेऽस्येति तथोक्तम् । एतच्च विशेषणं नित्यसिद्धब्रह्मभावरूपसायुज्यव्यावृत्त्यर्थम् । नो भवेत् न भवेत् । इह लोकवेदयोः । ईदृशं कार्यं तादृशमिति द्विरुक्तिरुपनयनिगमनार्था । तद्विसदृशं कल्पयितुं न युक्तमित्यनुषङ्गः । तादृक् निःश्रेयसरूपं कार्यमिति शेषः ॥ ३४ ॥

सदसदुद्भवनं न विमुक्तता
सदसदुद्भवनानुपपत्तितः ॥
सदसतोर्नशनं न विमुक्तता
सदसतोर्नशनानुपपत्तितः ॥ ३५ ॥

किं च कर्मसाध्या मुक्तिः कस्य चिद्भावस्योत्पत्तिरूपा किं वा कस्य चिन्नाशरूपा अनिर्वचनीयवस्तुरूपा वा, नाद्यः उत्पत्तेः प्राक् कार्यस्य सत्त्वेऽसत्त्वे वोत्पत्त्यसम्भवस्योक्तत्वादित्याशयेनाह । सदसदुद्भवनमिति । न द्वितीयः, नाशात्पूर्वं सतोऽसतो वा नाशासम्भवस्याप्युपपादितत्वादित्याह । सदसतोरिति ॥ ३५ ॥

न च तमोमयजन्म विमुक्तता
न हि तदिष्टमनिष्टतरं हि तत् ॥
न खलु कल्पितजन्म विमुक्तता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुपगच्छति तद्वितथं यतः ॥ ३६ ॥

न तृतीयः, अनिष्टत्वादनुपपन्नत्वाच्चेत्याह । न च तमोमयेति । आविद्यकस्य तत्त्वधीबाध्यत्वेन मिथ्यात्वात्तद्रूपाया मुक्तेः केनाप्यनङ्गीकारादिति । हेतुमाह । न खल्विति ॥ ३६ ॥

अथ तमोमयविश्वविकल्पना-
विलयनात्मकमभ्युपगम्यते ॥
सकलदूषणजातविवर्जितं
तदिह मोक्षपदं न निवार्यते ॥ ३७ ॥

सतोऽसतो वा विनाशासम्भवेऽप्याविद्यकानिर्वचनीयबन्धस्यात्यन्तिकनाशो मुक्तिरिति निरुद्धगतिकस्य शङ्कामनुवदति । अथेति । मोक्षपदं मोक्षस्वरूपम्, अस्य विलयनात्मकमित्यनेन सम्बन्धः । अस्मिन्पक्षे प्रत्यगात्मनो ब्रह्मभावस्य नित्यसिद्धत्वादाविद्यकबन्धनिवृत्तेश्च तत्त्वज्ञानमात्राधीनत्वात्कर्मणामनुपयोगात् समुच्चयासिद्धिरित्यभिप्रेत्य तन्मुक्तिरूपमङ्गीकरोति । तदिति । इहासमुच्चयमते ॥ ३७ ॥

सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं
सद्यो वस्तुबलप्रवर्त्तनमरुद्व्यापारसन्दीपितः ॥
निर्लेपेन हि दन्दहीति न मनागप्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा ॥३८॥

ननु न तत्त्वज्ञानमात्राद्बन्धनिवृत्तिः संभवति तत्त्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदामपि शरीरादिबन्धदर्शनादित्याशङ्क्य तथा विद्वान्नामरूपाद्विमुक्तः एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीत्यादिशास्त्रप्रामाण्याल्लोके विद्याया अविद्यानिवृत्तौ निरपेक्षसाधनत्वाच्च तत्त्वसाक्षात्कारवतः सद्य एव विदेहकैवल्यं भवति यस्य तु देहादिबन्धो दृश्यते स न तत्त्वसाक्षात्कारवानिति निश्चीयते इत्याशयेन सद्योमुक्तिमतं दर्शयति । सम्यग्ज्ञानेति । सद्यो दन्दहीतीति सम्बन्धः । वस्तु विषयभूतं परमार्थसद्ब्रह्म तदेव बलं तदेव वृत्तिज्ञानस्याविद्यादिदाहकत्वे प्रयोजकत्वात् प्रवर्त्तनमरुत् तद्व्यापारो वृत्तौ प्रतिफलनं तेन सन्दीपितः प्रज्वलित इत्यर्थः । शिनष्टि शेषयति ॥ ३८ ॥

जीवन्मुक्तिप्रत्ययं शास्त्रजातं
जीवन्मुक्ते कल्पिते योजनीयम् ॥
तावन्मात्रेणार्थवत्त्वोपपत्तेः
सद्यो मुक्तिः सम्यगेतस्य हेतोः ॥ ३९ ॥

ननु तत्त्वविदः सद्योविदेहकैवल्योपगमे तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये, प्रजहाति यदा कामान्सर्वान् पार्थ मनोगतान्, आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते इत्यादिजीवन्मुक्तिप्रतिपादकशास्त्रं निर्विषयं स्यादित्याशङ्क्य तस्यार्थवादतया शुकवामदेवादिमुक्तिशास्त्रवत्प्रकृष्टप्राज्ञकल्पितजीवन्मु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्यनुवादेन ब्रह्मविद्यास्तुतिपरत्वान्न तद्विरोध इत्यभिप्रेत्याह । जीवन्मुक्तीति । जीवन्मुक्तेः प्रत्ययो येन तत्तथोक्तम् । अर्थवत्त्वोपपत्तेः स्तुतिरूपप्रयोजनवत्त्वोपपत्तेः । एतस्य हेतोरेस्माद्धेतोः जीवन्मुक्तिशास्त्रस्यान्यविषयत्वाद्धेतोरिति यावत् ॥ ३९ ॥

यद्वा विद्वद्गोचरं योजनीयं
तस्याविद्यालेशवत्त्वोपपत्तेः ॥
तस्याभीष्टा निर्निमित्ता निवृत्ति-
र्यद्वा विद्यासन्ततिर्हेतुलेशम् ॥ ४० ॥

जीवन्मुक्तिशास्त्रस्यार्थवादत्वेऽपि तदर्थस्य मानान्तराविरुद्धत्वेन भूतार्थवादत्वोपपत्तेस्तत्सिद्धा जीवन्मुक्तिर्न शक्याऽपलपितुम्, न च विद्यासामर्थ्यान्निःशेषाविद्यानिवृत्तौ तदनुपपत्तिरिति वाच्यम् । अनारब्धकार्ये एव तु पूर्वे तदवधेरितिसूत्रोक्तन्यायेन विद्याया आरब्धफलकपुण्यपापनिवर्त्तकत्वायोगेन तत्स्थितिनिमित्ततया कल्पिताविद्यालेशवशेन विदुषोऽपि यावत्प्रारब्धकर्मक्षयं शरीरादिधारणोपपत्तेरिति मतान्तरमाह । यद्वेति । योजनीयं जीवन्मुक्तिशास्त्रमिति शेषः । तर्हि विद्याया अविद्यालेशनिवर्त्तकत्वाभावात्स न निवर्त्तेतेत्याशङ्क्य प्रारब्धकर्मणां भोगादेव क्षये सति प्रयोजनाभावात् स स्वयमेव निवर्त्तत इत्याह । तस्येति । अविद्यालेशनिवृत्तेरपि निवर्त्याति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिक्तं निमित्तं वाच्यम्, अन्यथा तस्य लेशस्य क्षणिकत्वापत्तेरित्याशङ्क्याह । यद्वेति । वृत्तिसाक्षात्काराभिव्यक्तस्वरूपचैतन्यमेवानुवर्त्तमानं विद्यासन्ततिः, सैव प्रतिबन्धककर्मणां भोगेन क्षये जीवन्मुक्तिहेतुभूतमविद्यालेशं निवर्त्तयतीत्यर्थः ॥ ४० ॥

जीवन्मुक्तिव्यापृतेः प्रापको य-
स्तस्याविद्यालेशगन्धादिभाषाः ॥
नाविद्याया नापि भागस्य तस्या-
स्तस्मिन् पक्षे दुर्घटत्वाद् विमुक्तेः ॥ ४१ ॥

ननु विद्यया चिदात्मनि ब्रह्मात्मनाभिव्यक्ते तत्राविद्यालेशस्याप्यसम्भवात्कथं तदधीना जीवन्मुक्तिर्घटेत, किं च कैश्चिदविद्यागन्धस्य अन्यैरविद्याछायाया अपरैरविद्यासंस्कारस्य जीवन्मुक्तिघटकत्वमुच्यते, तद्विरोधादपि नाविद्यालेशाधीनजीवन्मुक्तिरिति तत्राह । जीवन्मुक्तिव्यापृतेति । अनृतेन हि प्रत्यूढाः अनीशया शोचति मुह्यमान इत्यादिश्रुतेरविद्याया आवरणविक्षेपलक्षणकार्यद्वयानुरोधेनावरणशक्तिमदविद्यांशनाशेऽपि जीवन्मुक्तसम्बन्धिकार्यकरणव्यापारप्रापकविक्षेपशक्तिमदविद्यांशस्य बलवत्प्रारब्धकर्मसहितस्य जीवन्मुक्तिप्रयोजकत्वात्स एव सर्वैर्लेशगन्धादिशब्दैरभिलप्यते । ततश्च जीवन्मुक्तस्यात्मस्वरूपेऽभिव्यक्तेऽपि विक्षेपकाविद्यालेशानुवृत्तिर्युज्यते प्रार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यनुवादेन ब्रह्मविद्यास्तुतिपरत्वान्न तद्विरोध इत्यभिप्रेत्याह । जीवन्मुक्तीति । जीवन्मुक्तेः प्रत्ययो येन तत्तथोक्तम् । अर्थवत्त्वोपपत्तेः स्तुतिरूपप्रयोजनवत्त्वोपपत्तेः । एतस्य हेतोरेस्माद्धेतोः जीवन्मुक्तिशास्त्रस्यान्यविषयत्वाद्धेतोरिति यावत् ॥ ३९ ॥

यद्वा विद्वद्गोचरं योजनीयं
तस्याविद्यालेशवत्त्वोपपत्तेः ॥
तस्याभीष्टा निर्निमित्ता निवृत्ति-
र्यद्वा विद्यासन्ततिर्हेतुलेशम् ॥ ४० ॥

जीवन्मुक्तिशास्त्रस्यार्थवादत्वेऽपि तदर्थस्य मानान्तराविरुद्धत्वेन भूतार्थवादत्वोपपत्तेस्तत्सिद्धा जीवन्मुक्तिर्न शक्याऽपलपितुम्, न च विद्यासामर्थ्यान्निःशेषाविद्यानिवृत्तौ तदनुपपत्तिरिति वाच्यम् । अनारब्धकार्ये एव तु पूर्वे तदवधेरितिसूत्रोक्तन्यायेन विद्याया आरब्धफलकपुण्यपापनिवर्त्तकत्वायोगेन तत्स्थितिनिमित्ततया कल्पिताविद्यालेशवशेन विदुषोऽपि यावत्प्रारब्धकर्मक्षयं शरीरादिधारणोपपत्तेरिति मतान्तरमाह । यद्वेति । योजनीयं जीवन्मुक्तिशास्त्रमिति शेषः । तर्हि विद्याया अविद्यालेशनिवर्त्तकत्वाभावात्स न निवर्त्तेतेत्याशङ्क्य प्रारब्धकर्मणां भोगादेव क्षये सति प्रयोजनाभावात् स स्वयमेव निवर्त्तत इत्याह । तस्येति । अविद्यालेशनिवृत्तेरपि निवर्त्याति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिक्तं निमित्तं वाच्यम्, अन्यथा तस्य लेशस्य क्षणिकत्वापत्तेरित्याशङ्क्याह । यद्वेति । वृत्तिसाक्षात्काराभिव्यक्तस्वरूपचैतन्यमेवानुवर्त्तमानं विद्यासन्ततिः, सैव प्रतिबन्धककर्मणां भोगेन क्षये जीवन्मुक्तिहेतुभूतमविद्यालेशं निवर्त्तयतीत्यर्थः ॥ ४० ॥

जीवन्मुक्तिव्यापृतेः प्रापको य-
स्तस्याविद्यालेशगन्धादिभाषाः ॥
नाविद्याया नापि भागस्य तस्या-
स्तस्मिन् पक्षे दुर्घटत्वाद् विमुक्तेः ॥ ४१ ॥

ननु विद्यया चिदात्मनि ब्रह्मात्मनाभिव्यक्ते तत्राविद्यालेशस्याप्यसम्भवात्कथं तदधीना जीवन्मुक्तिर्घटेत, किं च कैश्चिदविद्यागन्धस्य अन्यैरविद्याछायाया अपरैरविद्यासंस्कारस्य जीवन्मुक्तिघटकत्वमुच्यते, तद्विरोधादपि नाविद्यालेशाधीनजीवन्मुक्तिरिति तत्राह । जीवन्मुक्तिव्यापृतेति । अनृतेन हि प्रत्यूढाः अनीशया शोचति मुह्यमान इत्यादिश्रुतेरविद्याया आवरणविक्षेपलक्षणकार्यद्वयानुरोधेनावरणशक्तिमदविद्यांशनाशेऽपि जीवन्मुक्तसम्बन्धिकार्यकरणव्यापारप्रापकविक्षेपशक्तिमदविद्यांशस्य बलवत्प्रारब्धकर्मसहितस्य जीवन्मुक्तिप्रयोजकत्वात्स एव सर्वैर्लेशगन्धादिशब्दैरभिलप्यते । ततश्च जीवन्मुक्तस्यात्मस्वरूपेऽभिव्यक्तेऽपि विक्षेपकाविद्यालेशानुवृत्तिर्युज्यते प्रार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्धकर्मक्षयावधिकेति तस्य जीवन्मुक्तिघटकत्वे न कोऽपि दोष इति भावः। ननु समग्रैवाविद्या तदीयावरणशक्तिमद्भागो वा लेशादिशब्दैरभिधीयताम्, नेत्याह। नाविद्याया इति। विमुक्तेः पूर्वावस्थातो विशेषाभावात्तदा जीवतो मुक्तिरेव दुर्घटा स्यादित्यर्थः॥ ४१॥

गन्धच्छायालेशसंस्कारभाषा
विज्ञातव्या भाष्यकारीयतन्त्रे ॥
स्वाविद्याया बाधितायाः प्रतीतिः ॥
पौर्वापर्येणार्थमालोच्य बुद्ध्या ॥ ४२ ॥

ननु भाष्यकारादिभिरविद्यादेर्बाधितानुवृत्त्या जीवन्मुक्तव्यापृतिरिति क्व चित् क्व चित् कथ्यते सा किं गन्धच्छायादिपदाभिलप्यलेशपक्षादर्थान्तरम्, नेत्याह। गन्धच्छायेति। अस्मिन्पदे बहुव्रीहिर्द्रष्टव्यः। प्रतीतिरनुवृत्तिस्तस्याः प्रतिभासमात्रशरीरत्वाद्द बाधितानुवृत्तेरपि निर्निमित्ताया असंभवात् तन्निमित्ततयोक्ताविद्यालेशोऽवश्यमुपेयः, ततश्च स एव प्रातिभासिकविक्षेपरूपेणानुवर्त्तमानस्तथा कथ्यत इत्यर्थः॥ ४२॥

जीवन्मुक्तिस्तावदस्ति प्रतीते-
र्द्वैतच्छाया तत्र चास्ति प्रतीतेः ॥
द्वैतच्छायारक्षणायास्ति लेश-
स्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् ॥ ४३ ॥

ननु विदुषोऽपि द्वैतदर्शने तदधीनभयशोकादिरूप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बन्धस्यावश्यकत्वात्कुतो जीवन्मुक्तिः, जीवत एव मुक्तौ वा कुतो द्वैतदर्शनमित्याशङ्क्योभयस्यापि विद्वदनुभवसिद्धत्वाददविरोध इत्याह । जीवन्मुक्तिरिति । तत्रोपपत्तिमप्याह । द्वैतच्छायारक्षणायेति । प्रातिभासिकविक्षेपशक्तिमदविद्यांशो लेशशब्दार्थः । तत्र विद्वदनुभवं प्रमाणयति । तस्मिन्निति ॥ ४३ ॥

ब्रह्मात्मत्वं सान्तरायं पुरस्ताद्
बोधोत्पत्तौ ध्वस्तमोहान्तरायम् ॥
यद्यप्येवं द्वैतलेशानुवृत्तेः
प्रत्यक्षत्वान्मोहलेशोऽभ्युपेयः ॥ ४४ ॥

ननु विदुषोऽप्यज्ञानलेशश्चेदस्ति तदा पूर्ववद्ब्रह्म नास्ति न प्रकाशते चेति व्यवहारः स्यादित्याशङ्क्य तस्य पूर्वमविद्याकृतावरणप्रयुक्तत्वादावरकांशस्य च तत्त्वज्ञानेन नाशादनन्तरं तदयोगादहं ब्रह्मास्मीत्येव व्यवहारो युज्यते, तथापि मुक्तावस्थायामहमिदं ममेदमित्यपि व्यवहारदर्शनात्तदुपपत्तये विक्षेपशक्तिमदविद्यालेशः स्वीकार्य इत्याह । ब्रह्मात्मत्वमिति । स्पष्टोऽक्षरार्थः ॥ ४४ ॥

तस्माज्जीवन्मुक्तरूपेण विद्वा-
नारब्धानां कर्मणां भोगसिद्धै ॥
स्थित्वा भोगं ध्वान्तगन्धप्रसूतं
भुक्त्वाऽत्यन्तं याति कैवल्यमन्ते ॥ ४५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदुषोऽप्यहमिदमित्यादिव्यवहारोपगमे तन्नि-मित्तपुण्यपापान्तरारम्भसम्भवात्तदधीनदेहान्तरस्याव-श्यकत्वाद्विदेहकैवल्यानुपपत्तिरिति शङ्कां निराकुर्वन् जीवन्मुक्तिमुपसंहरति। तस्मादिति। प्रारब्धकर्मप्रतिब-द्धविद्ययाऽविद्यालेशाक्षयादित्यर्थः। प्रारब्धकर्मक्षय-मात्रमपेक्ष्य व्यवहरता विदुषा कर्मान्तरानारम्भात् कर्मबलाद्भवतो व्यवहारस्यापि स्वप्नवदात्मानुभवेन प्रतिक्षणम्बाध्यमानस्यादृष्टाजनकत्वाद् भोगेन प्रारब्ध-कर्मनाशेऽप्रतिबद्धविद्ययाऽविद्यालेशस्यापि नाशाच्च वि-दुषो देहान्तरानुपपत्तेर्वर्त्तमानदेहपातानन्तरं विदेहकै-वल्यसिद्धिरिति भावः ॥ ४५ ॥

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः ॥
तस्याभिध्यानाद्योजनात्तत्त्वभावाद्
भूयश्चान्ते विश्वमायानिवृत्तिः ॥ ४६ ॥

वर्णितोभयविधमुक्तौ श्वेताश्वतराणां श्रुतिं प्रमाण-यति। क्षरम्प्रधानमिति। प्रधीयतेऽस्मिन् जगदिति प्रधानमव्याकृतम्। तस्य नित्यतां निवारयति। क्षरमि-ति। तर्हि नित्यवस्त्वेव नास्तीति शङ्कायामाह। अमृ-ताक्षरमिति। सर्वकार्यसंहर्त्तुर्हरस्य संहारे कारणाभा-वात्स एव मरणापक्षयादिरहितं वस्त्वित्यर्थः। तर्हि प्रधानपुरुषौ तत्संहर्त्तारौ भवेतामित्याशङ्क्य तयोस्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नियम्यत्वेन तत्पारतन्त्र्यान्मैवमित्याशयेनाह । क्षरात्मानाविति । ईशते ईष्टे इति एकवचनत्वेन परिणेतव्यम् तर्हि द्वैतापत्तिरित्याशङ्क्य हरगोचरतत्त्वज्ञानात्प्रधानपदाभिलप्यमायायाः सकार्याया बाध्यत्वात् पुरुषस्य च हरस्वरूपेणैवावस्थानाच्चाद्वैतमेव वस्तु परिशिष्यत इत्यभिप्रेत्याह । तस्याभिध्यानादिति । तस्य हरशब्दोदितब्रह्मण आभिमुख्येनाहं ब्रह्मास्मीत्येवंरूपाद्ध्यानादादरेण निरन्तरं दीर्घकालचिन्तनाद्द्वैतसत्यत्वभ्रमहेतुभूतमायालेशो निवर्त्तते, ततो ध्यानपरिपाकसाक्षात्कारायोजनाद्द्वैते व्यावहारिकसत्त्वभ्रमहेतुभूतमायालेशो निवर्त्तते, भूयश्च तत्त्वभावादनावृतपूर्णब्रह्मात्मत्वरूपस्वभावादन्ते प्रारब्धकर्मणां भोगेन क्षये द्वैते प्रातिभासिकत्वभ्रमहेतुभूतमायालेशस्यावशिष्टस्य निवृत्तिरित्येवं विश्वमायानिवृत्तिस्तत्त्वबोधाद्भवतीत्यर्थः । अत्रान्ते प्रारब्धकर्मावसाने विश्वमायानिवृत्तिरित्युक्तत्वात् प्रागपि सावशेषमायानिवृत्तिः प्रतीयत इतीयं श्रुतिरुभयविधमुक्तौ मानमिति भावः ॥ ४६ ॥

ब्रह्मादीनामस्ति मुक्तिः श्रुतिभ्य-
स्तेषामेषा नार्च्चिराद्या गतिर्वः ॥
तस्मादस्या निर्गुणब्रह्मविद्या-
सम्बन्धित्वं नैषितव्यं भवद्भिः ॥ ४७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इत्यादिशास्त्राद्विदुषामप्यर्चिरादिमार्गेणोद्गतानामेव मुक्तिभाक्त्वात्कथं जीवतो विदुषो मुक्तिरिति तत्राह । ब्रह्मादीनामिति । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे, परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिवचनेभ्यो ब्रह्मलोकवासिनां ब्रह्मादीनामपि परब्रह्मविद्यावतां मुक्तिरस्त्येव, न च तेषां मुक्तिप्राप्तावर्चिराद्या गतिर्भवतामपीष्टा, ब्रह्मलोकादर्वागेवार्चिरादीनां स्थितत्वात्, तस्मादस्या अर्चिरादिगतेर्निर्गुणब्रह्मविद्यासम्बन्धित्वं तत्फलप्राप्तिद्वारत्वं भवद्भिर्मनुष्येष्वपि नैषितव्यं किं तु कार्यं बादरिरस्य गत्युपपत्तेरित्युक्तन्यायेन सगुणविद्याफलभूतकार्यब्रह्मप्राप्तिद्वारत्वमेव तस्या एषितव्यम्, एवं च सूर्यद्वारेणेत्यादिवचनमपि सगुणविद्यावद्विषयमुपेयमिति भावः ॥ ४७ ॥

प्राणोत्क्रान्तिर्नास्ति मूर्द्धन्ययैषां
नाड्या तस्माद् यत्रयत्रैव विद्या ॥
तत्रैव स्यान् मुक्तिरित्यभ्युपेयं
गत्युत्क्रान्ती तेन विद्यान्तरेषु ॥ ४८ ॥

ननु तयोर्द्ध्वमायन्नमृतत्वमेतीति मूर्द्धन्यनाडीद्वारोद्र्ध्वगमनस्यामृतत्वप्राप्त्युपायत्वश्रवणान्मनुष्याणामू-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वर्ध्वगमनं विना नामृतत्वप्राप्तिरित्याशङ्क्याह। प्राणोत्क्रा-न्तिरिति। स्वतोऽपरिच्छिन्नस्यात्मनो वस्तुतः सुषुम्ना-नाड़ीद्वारोर्द्ध्वगमनायोगात् प्राणात्मकलिङ्गगमनोपा-धिकं गमनं वाच्यम्, न च तत्परब्रह्मविद उपपद्यते, न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रु-त्या विदुषः प्राणोत्क्रान्तिप्रतिषेधेन तदुपाधिकोत्क्रा-न्त्यादेरसम्भवात्, प्राप्तव्यब्रह्मणः परिपूर्णत्वेन तत्प्रा-प्तिरूपामृतत्वस्योत्क्रान्त्याद्यनपेक्षत्वाच्च, ततश्च यत्रयत्र देशे काले च विद्या जायते तत्रतत्रैव जीवत्येव देहे मुक्तिरत्र ब्रह्म समश्नुत इति श्रुतेरभ्युपेयेत्यर्थः। तर्हि तयोर्द्ध्वमायन्नित्यादिश्रुतेरानर्थक्यम्, नेत्याह। गत्युत्क्रान्तीति। तेन परब्रह्मविद्यायामुत्क्रान्तिप्रति-षेधेन ॥ ४८ ॥

देवादीनां नास्ति कर्माधिकारो
विद्या तेषां केवला मुक्तिहेतुः ॥
पारंपर्यात् कर्मणामुक्तहेतो-
र्विद्याङ्गत्वं सर्ववर्णाश्रमाणाम् ॥ ४९ ॥

एवमर्चिरादिमार्गानपेक्षां मुक्तेः प्रसाध्य कर्मापे-क्षामपि निराकुर्वन् तस्याः केवलविद्याधीनत्वमाह। देवादीनामिति। तथापि मनुष्याणां कर्मण्यधिकृता-नां कर्मापेक्षा मुक्तिर्भविष्यति, इतरथा सर्वापेक्षा च यज्ञादिश्रुतेरितिसूत्रविरोधः स्यादित्यत आह। पारं-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्यादिति । मनुष्याणामपि ज्ञानपरिपाकाङ्गत्वेन संन्यासस्यावश्यकत्वात्सति ज्ञाने कर्माधिकारबाधान्न कर्मणेत्यादिश्रुतिविरोधाच्च न साक्षात्कर्मणां मुक्तिहेतुत्वं घटते तदिदमुक्तमुक्तहेतोरिति । सूत्रं तु सर्ववर्णाश्रमविहितकर्मणां साक्षान्मोक्षहेतुभूतविद्यां प्रति परंपरया साधनत्वपरम्, इतरथा अत एव चाग्नीन्धनाद्यनपेक्षेति पूर्वसूत्रेण विरोधापत्तेरित्यर्थः ॥ ४९ ॥

पारंपर्यं शुद्धिहेतुत्वहेतो-
र्यज्ञादीनां श्रूयते स्मर्यते च ॥
साक्षादेषां मोक्षहेतुत्वमेव-
मन्विच्छन्तोऽप्यागमान्न प्रतीमः ॥ ५० ॥

केन द्वारेण पारंपर्यमिति वीक्षायामाह । पारंपर्यमिति । शुद्धिपदं विविदिषोपलक्षणम् । तत्र प्रमाणमाह । श्रूयत इति । येन केन चन यजेतापि दर्विहोमेनानुपहतमना एव भवति, तमेतं वेदानुवचनेनेत्यादिश्रुतियोगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये, कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्यादिस्मृतिश्चोक्तपारंपर्ये मानमित्यर्थः । उक्तविधया कर्मणां पारंपर्येण मुक्तावुपयोग इव साक्षादुपयोगे मानाभावान्न समुच्चयसिद्धिरित्यभिप्रेत्याह । साक्षादिति ॥ ५० ॥

इति बहुश्रुतभाषितमुच्चकैः
श्रुतिशिरोवचनानगतं महत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुपदिष्टमिदं कृपया मया
प्रियमतीव हितं च मुमुक्षवे ॥ ५१ ॥

निरूपितप्रमेयजातस्य स्वकपोलकल्पितत्वाप्रामाणिकत्वशङ्कां ख्यातिलाभार्थमेतद्ग्रन्थकरणमितिमतिं च निराकुर्वन् प्रकरणार्थमुपसंहरति। इति बहुश्रुतेति। सूत्रभाष्यटीकावार्त्तिककारा बहुश्रुतास्तैरुच्चकैस्तात्पर्येण निरूपितमित्यर्थः। महत्त्रिविधपरिच्छेदशून्यं प्रत्यगभिन्नं ब्रह्म। अतीव प्रियं निरतिशयानन्दरूपत्वात्। अतीव हितं समस्तानर्थासंस्पर्शित्वात् ॥ ५१ ॥

एवं समन्वयविरोधनिरासविद्या-
निष्पत्तिसाधनफलानि गुरोः क्रमेण ॥
विज्ञाय वेदफलमात्मनि सर्वमेव
पश्यन्नुवाच कृतकृत्यमतिः स शिष्यः ॥ ५२ ॥

नन्वत्र ब्रह्मैव न निरूपितं समन्वयादेरपि निरूपितत्वादित्याशङ्क्य तन्निरूपणस्य ब्रह्मप्रमित्यर्थत्वाद् ब्रह्मैव प्राधान्येन निरूपितमित्यभिप्रेत्य तत्प्रमितेः सद्योमुक्तिफलत्वं मुख्याधिकारिशिष्यानुभवसिद्धमिति वदन् स्वानुभवख्यापकं तद्वचनमवतारयति। एवं समन्वयेति। वेदो वेदनं तत्फलं मोक्षं सर्वद्वैतबाधसुखदुःखप्राप्तिपरिहाररूपम् ॥ ५२ ॥

विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा-
मुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोशात् कारणकार्यरूपविकृतात् पश्यामि निःसंशयं
क्वासीदस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः॥५३॥

तदुक्तीरेव दर्शयति षड्भिः । विद्याविग्रहमिति । स्वप्रकाशचिदेकरसमित्यर्थः। उत्तमपुरुषस्य परमात्मनः प्रतीचो भिन्नत्वादेवानवभासो नाविद्यापिहितत्वादितिशङ्कानिरासायोक्तं प्रत्यञ्चमिति । उच्चैस्तरामित्यस्य पिहितमित्यनेन सम्बन्धः । पिधानस्योच्चैस्तरत्वं यत्नसहस्रैरभेद्यत्वम् । मुनिधिया श्रुत्यनुकूलमनननिशितविवेकधिया । मुञ्जात् ईषीकाच्छादकवाह्यत्वच.। कोशादन्नमयाद्यानन्दमयान्तात् । कारणकार्यरूपेणान्तर्बहिर्भावेन विकृताद्विविधतया कृतादुत्कृष्येति सम्बन्धः । कोशपञ्चकाद्विविक्तात्मनो ब्रह्मभावेन दर्शनफलं प्रकटयति । क्वासीदिति ॥ ५३ ॥

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ॥
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥ ५४ ॥

तथापि द्वैताभासस्यासम्भावितस्यापि प्रतीतेर्जीवत एव मुक्तिरनुभवसिद्धेत्याह । पश्यामीति । प्रतिभासमानद्वैतस्यार्थक्रियासामर्थ्यं निवारयति । दग्धेति ॥५४॥

अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं च जीवनमिव प्रतिभासमानं
निःश्रेयसोऽधिगमनं च मम प्रसिद्धम् ॥ ५५ ॥

नन्वद्वैतदर्शने सति कथं तद्विरुद्धद्वैतदर्शनानुवृत्तिस्तदभावे वा कथं जीवन्मुक्तिरित्याशङ्क्याद्वैतस्य वास्तवत्वेन द्वैतस्यात्रावास्तवत्वेनानुभूयमानत्वान्न किं चिदनुपपन्नमित्याह। अद्वैतमिति। अद्वैतं साक्षादनुभवतः कदा चिद्भासमानमपि द्वैतं न पूर्ववद्भातीत्यत्र निदर्शनमाह। अहिनिर्ल्वयनीवेति। अहिनिर्मोको हि त्यागात् पूर्वमहिनाऽहमित्येव प्रतिपन्नस्त्यागानन्तरं तदभिमानरहित एव प्रतीयते, तथा शरीरादिरूपे द्वैते पूर्ववदहंममाभिमानं विहाय मिथ्यैवेदं भातीति पश्यामीत्यर्थः। मिथ्यात्वेन निश्चितद्वैतदर्शनानुवृत्तौ फलितमाह। एवं चेति ॥ ५५ ॥

अद्वैतबाधकमभून् मम यद् द्वितीय-
मद्वैतमस्य बत बाधकमेव जातम् ॥
मोहाद् द्वितीयमपबाधकमस्य विद्या-
सामर्थ्यतोऽद्वयनिबर्हणमद्वितीयम् ॥ ५६ ॥

विद्यामहिम्ना मदपकारकं निर्मूलमेवोच्छिन्नमिति तां प्रशंसति। अद्वैतबाधकमिति। इदानीमपि पूर्ववदेव द्वैतमेवाद्वैतबाधकं किन्न स्यादित्याशङ्क्य द्वैतस्यालीकमोहबलावष्टम्भेनाद्वैतबाधकस्य दुर्बलत्वाददद्वैतस्य तु परमार्थवस्तुत्वगाहिविद्यासामर्थ्यावष्टम्भेन बलव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वान्मैवमित्याशयेनाह। मोहादिति। अस्य अद्वैतस्य॥५६॥

आश्चर्यमद्य मम भाति कथं द्वितीयं
नित्ये निरस्तनिखिलाशिवचित्प्रकाशे॥
आसीत् पुरेति किमिमाः श्रुतयो न पूर्वं
येन द्वितीयमभवत्तिमिरप्रसूतम्॥ ५७॥

निर्मुक्तमात्मानं दृष्ट्वा पूर्वमनुभूतसंसारं स्मरन् तत्र स्वस्योत्पन्नामाश्चर्यधियं प्रकटयति। आश्चर्यमिति। किमत्राश्चर्यं वस्तुत उक्तरूपे परात्मन्यज्ञानाद् द्वैतरूपानर्थोपपत्तेरित्याशङ्क्याज्ञाननिवर्त्तकतत्त्वधीजनने निरपेक्षकारणेषु वेदान्तवाक्येष्वनादिसिद्धेषु ज्ञानाभावादज्ञानानुवृत्त्या द्वैतानुवृत्तिरित्येतदप्याश्चर्यमेवेत्याह। किमिमा इति॥ ५७॥

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुरासीत्॥
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः॥५८॥

इदानीं पूर्वं श्रुतिवाक्येषु सत्स्वप्यन्वयव्यतिरेकाभ्यां तत्त्वबोधाभावे कारणं निश्चित्याज्ञानादि सम्भावयन्नाश्चर्यधियं त्यजति। त्वत्पादपङ्कजेति। पूर्वं संसारे निर्वेदपूर्वकं त्वादृशगुरूपसत्त्यभावात्सत्स्वपि वेदान्तवाक्येषु गुरूपदेशाधीनतत्त्वबोधाभावादज्ञानाधीनद्वैताभिनिवेशेनाद्वैतं परमार्थं सदप्यसत्कल्पमभूत्, इदानीं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु गुरुप्रसादलब्धतत्त्वबोधेनाद्वैतात्मतत्त्वमेव सदास्ति, भ्रान्तिमात्रसिद्धं तु द्वैतं कालत्रयेऽप्यसदिति निश्चित-मित्यर्थः ॥ ५८ ॥

यस्मात् कृपापरवशो मम दुश्चिकित्सं
संसाररोगमपनेतुमसि प्रवृत्तः ॥
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे ॥ ५९ ॥

आत्मलाभात्परस्य लाभस्याभावात्तं प्रापितवतो गुरोस्तदनुरूपप्रत्युपकाराभावाद्भक्तिपुरःसरं गुरूपास-नमेव यावदायुर्मया कार्यम्, तावतापि तत्तोषो भवेदि-त्यभिप्रेत्याह । यस्मात्कृपेति ॥ ५९ ॥

संक्षेपशारीरकमेवमेतत्
कृतं परिव्राजकमुक्तिहेतुः ॥
गुरुप्रसादात् परिलभ्य तत्त्वं
त्रयीशिरस्तत्त्वनिवेदनाय ॥ ६० ॥

साधिकारिविषयप्रयोजनां स्वकृतिमुपसंहरन् तस्या मुमुक्षुभिरुपादेयतां सूचयन् तस्याः सान्वयसंज्ञामाह । संक्षेपेति ॥ ६० ॥

अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या
चरणकमलधूलिग्राहिणी भारतीयम् ॥
घनतरमुपघातं श्रेयसः श्रोतृसंघात्
सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥ ६१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां कृतिं गङ्गासाम्येन स्तुवन् तस्या मङ्गलं प्रार्थयते। अविरलेति। नानावृत्तात्मकत्वाद्बहुविधपदविन्यासक्रमवतीत्यर्थः। पद्मनाभस्य चरणकमलयोर्धूलिग्राहिणी श्रोतृसंघात् श्रेयस उपसंघातं मा भ्रुदित्यन्वयः॥ ६१॥

श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम्॥
चक्रे सज्जनबुद्धिवर्द्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति॥६२॥

ग्रन्थस्य साम्प्रदायिकत्वं दर्शयितुं गुरोः स्वस्य च नाम निर्दिशन्ग्रन्थोत्पत्तिकालं दर्शयति।श्रीदेवेश्वरेति॥६२॥

भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने॥
तुरङ्गमाङ्गभेदिनेनमो रथाङ्गधारिणे॥ ६३॥

इति श्रीसर्वज्ञात्ममुनिविरचिते संक्षेपशारीरके फललक्षणं नाम चतुर्थोऽध्यायः॥ ४॥

अन्तेऽपि भगवन्नमस्काररूपं मङ्गलमाचरति। भुजङ्गमाङ्गेति॥ ६३॥

इह योऽस्ति विमोहयन्मनः परमानन्दघनः सनातनः।
गुणदोषभृदेष एव नस्तृणतुल्यो यदयं स्वयं जनः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीकृतायां संक्षेपशारीरकटीकायां चतुर्थोऽध्यायः॥

समाप्तश्चायं ग्रन्थः। शुभमस्तु सर्वजगताम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

